# सहस्रमन्त्रसारसंग्रहः

## ( प्रथमो भागः )

# Sahasra Mantra Sara Sangrahah

( A Collection of one thousand Manthras Pertaining to all deities )

PART I

श्री सि.वि. सीताराम अय्यर् महाभागैः
वहुमन्त्रशास्त्र ग्रन्थेभ्यः सङ्कलितः

Compiled by
Sri C. V. Seetharama Iyer
(From various books on mantra sastra)

हैदराबाद् नगर स्थित मन्त्रशास्त्रसारसंग्रह समित्या प्रकाशितः

published by
Mantra Sastra Sara Sangraha Samithi
HYDERABAD
1985

First edition
1000 Copies

**Published with the financial assistance**
given by sri Tirumala Tirupati Devasthanam
TIRUPATI
and by
the Central Govenment

मूल्यम् चत्वारिंशत् रूप्यकाणि

Price Rs. 45/-

Copies available at
1. Mantra Sastra Sara Sangraha Samithi C/o S. Rajam
2-2-647/185/10 A Bagh Amber peta
HYDERABAD-13
and
**Divakarla Publications.**
6-3-609/18 Ananda nagar
HYDERABAD-4

# SAHASRA MANTRA SARA SANGRAHA SAMITHI

COMMITTEE MEMBERS :

Organiser and Compiler : Guruji and Vidya Vachaspati
Sri Vidyopasaka Mantra Sastra Praveena
**Shri C. V. Seetharama Iyer**
of Kadamba Kurichi, Tamil Nadu-639 113.

President : Vidya Vachaspathi Kalaprapoorna
**Shri Dr. Divakarla Venkatavadhani**
M.A. (Hons), Ph.D.
18 - 4 R.T. Barkatpura, Hyderabad - 500 027.

Secretary : **Shri P. Jeer**
B.Com., AMRIT. M B.A., AICWA., AMBIM. A.H.A.
Chief Auditor, A.P.S.R.T.C.
Musheerabad, Hyderabad.

Joint Treasurers :

1) **Shri Muddu Krishna**
Retd. Accounts Officer
A.P.S.R.T.C. Musheerabad, Hyderabad.

2) **Shri S. Rajan,** B Com.,
Retd, Personnel Officer
A.P.S.R.T.C. Central Excise Colony,
Hyderabad - 500 013.

COMMITTEE MEMBERS :

1) Shri R. A. TRIVEDI
Kandivilli, Bombay.
2) Shri G. S. RAMAMURTHY and
Smt. VIJAYALAXMI
Kamalanagar, Dilsukhnagar, Hyderabad.
3) Shri A. KESHAVABHAI PATEL
Shri Shanker Vijay Saw Mills, Gulbarga.
4) Shri P. R. V. SIDHANTHI
Mallepally, Hyderabad.
5) Shri V. D. KODANDARAMAN
Senior Personnel Officer,
S. C. Railway, Bhoiguda, Secunderabad.
6) Shri M. S. VENKATESH SHARMA
Retd. Superintending Engineer,
Malleswaram, Bangalore City.

# भूमिका

श्रीगुरुभ्यो नमः । श्रीगणेशाय नमः । श्रीपरदेवतायै नमः ।

श्रीमद्भिः कदम्बनकुर्चि वास्तव्यैः श्रीरामानन्द दीक्षानाम विभूषितैः सि. वो. सीतारामार्य महोदयैः संगृहितः मन्त्रसंग्रहाख्यो ग्रन्थः मया समालोडितः । तत्र च ग्रन्थे सप्त शताधिकाः भिन्न भिन्नदेवताकाः मन्त्राः तेषां ऋष्यादयः, न्यासविशेषाः, परिवार देवता मन्त्राः तेषां च मन्त्राणां दीक्षा ग्रहणकाल विशेषादयश्च महता प्रयत्नेन बहून् मन्त्रशास्त्रग्रन्थान् समालोड्य संग्रथिता वर्तन्ते ॥

एक एव परमात्मा स्वकीय विभूति महिम्ना लोकरक्षार्थं योगक्षेम निर्वहणार्थं च–मतदेवता–कुलदेवत आत्मदेवता–इष्टदेवता–गृहदेवता–ग्रामदेवता–लोकदेवता–इत्यादि भेदेन बहुरूपतया स्थितः ॥

एकधा बहुधा चैव दृश्यते जलचन्द्रवत्–रूपं रूपं प्रतिरूपो बभूव, इत्यादि श्रुतेः । अतश्च तत्तद्देवतानां रूपाणि स्थानानि–परिवाराः तत्तन्मन्त्राश्च विभिद्यन्ते । एकस्या अपि देवतायाः तत्तन्मन्त्रार्थभेदेन नामानि ध्यानानि मन्त्राश्च बहुध भिद्यन्ते । यथा अस्मिन् ग्रन्थे महागणपतेः दशाधिकाः भेदाः। एवं दुर्गायाः–अग्निदुर्गा वनदुर्गा, इत्यादयो बहवो भेदाः । एवं अष्टलक्ष्मी भेदाः तत्तन्मन्त्रेऽपि कार्य भेदेन भेदाः बहवः भवन्ति यथा–मेधादक्षिणा मूर्तिः, ज्ञान दक्षिणा मूर्तिः, वीणा दक्षिणा मूर्तिः इत्यादि मन्त्राश्च भिन्न भिन्नाः नैक सख्याकाः । सात्विक राजस–तामस भेदेन, शान्तिक पौष्टिक-तत्तदिष्ट फलसाधकत्वादि भेदेनापि मन्त्र भेदाः तत्तत्प्रयोग भेदाश्च बहुधा भिद्यन्ते ।

तत्रैवं सति पूर्वोक्त सप्तविध देवता भेदेषु, आदित्यश्चाम्बिका विष्णुः गणनाथो महेश्वरः इतिप्रसिद्धाः पञ्चायतन देवताः पञ्चैव मतदेवता इत्युच्यन्ते । स्यात् परमेश्वरस्यापि इच्छावशात् मायामयं शरीरं साधकानुग्रहार्थं, इति श्री मच्छङ्कर भगवत्पादोक्त रीत्या मायामयेषु भगवदाकारेषु–शिव शक्ति–रवि-विष्णु–गणेश स्वरूपाणि पूर्णपरब्रह्म स्वरूपाण्येवेति तत्तदुपनिषत्सु समुद्घोषितो विषयः तज्ज्ञानां सुविदित एव, पञ्चाथर्वशीर्षोपनिषत्सु च सुस्पष्टमेतेषां सर्वात्मकत्वं–सर्वज्ञत्वं,–सर्वशक्तत्वं–सर्वगतत्वं परमात्माभिन्न रूपत्वंच, तथैव–श्रीरुद्रे

भगवतो महदेवस्य परमेश्वरस्य, सर्वनियामकत्व, सर्वान्तर्यामित्व–सर्वेश्वरत्व–सर्वात्मकत्व–सर्वक्लेश परिहारकत्व-सर्वाभीष्टप्रदातृत्वादिकं जगत्प्रसिद्धमवगम्यते तथा इतरास्तु देवताः एतासाम् एवावतार भूताः, अंशावतार–आवेशावतार पूर्णावतारादिरूपाः ।

तत्र पूर्णब्रह्मस्वरूपाणां, शिव-विष्णु-शक्त्यादीनां पञ्चदेवतारूपाणामन्यतमं दैवतं सच्चिदानन्दात्मकं निर्गुणपरंब्रह्मैवेति, इतराणि तत्वार्थभूतानि रूपान्तराणीति भावयन्तः तदुपासनातत्पराः, क्रमेण शैवाः शाक्ताः वैष्णवाः, गाणापत्याः, सौराश्चेति शब्दैः प्रसिद्धया व्यवह्रियन्ते । सर्वेऽप्येते पञ्चस्वेतेषु समबुद्धयो वैषम्यगन्धेनापि रहिताः । ता एता एव देवताः मतदेवतात्वेन प्रसिद्धाः ।

एतेषां च गणेशादीनां परब्रह्माभिन्नस्वरूपबोधकाः तत्तदुपनिषत्प्रतिपादिताः, तन्त्र शास्त्र प्रतिपादिताश्च मन्त्राः, एकाक्षर मन्त्र प्रभृति पञ्चाक्षर-अष्टादशाक्षर-द्वादशाक्षर-पञ्चदशाक्षर-षोडशाक्षरमन्त्र, अष्टाविंशत्यक्षर-द्वात्रिंशदक्षरात्मकाः परस्सहस्रसंख्याका दृश्यन्ते, तत्तत्परिवारदेवतामन्त्राश्चाऽसंख्याकाः । अतएव सप्तकोटि महामन्त्र पारायण फलप्रदम् इति श्रूयते । यद्यपि प्रणव मन्त्रस्य सर्वोत्तमत्वं परब्रह्मावबोधकत्वं चास्ति, "तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् । एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् इत्यदि श्रुति प्रामाण्यात् । तथापि केवल प्रणवजपे यतीनामेवाधिकारदर्शनात्, त्रैवर्णिक गृहस्थानां सप्रणवा मन्त्रा एवाचार्यैरुप दिश्यन्ते इति हृदयम् ततश्च शिव गणपत्यादि पञ्चदैवत्याः मन्त्राः "मतदेवता मन्त्राः" इति बोध्यम् तथाच ज्ञानसारे–

मतानामपि पञ्चानां तात्पर्यं निर्गुणं परम् ।
ब्रह्मबुद्ध्यैव पूज्यन्तेह्युपास्यन्ते च पञ्च ते ॥
"मन्त्राणां जपहोमाद्यैः स्तूयमाना हि देवता ।
प्रसन्ना निखिलान् भोगान् पुरुषार्थाश्च यच्छति ॥" इति

भोगसारेऽपि–एवं वै गणनाथश्च पुरुषश्च परः शिवः ।
शक्तिर्नारायणश्चैव ज्योतीरूप समन्विताः ।
ब्रह्मत्वेनैव प्रोच्यन्ते वेदादिष्वपि षट्सु च ॥
पञ्चभ्यश्चैव प्रोच्यन्ते सृष्ट्याद्याः काल भेदतः ।
एकमेव परंब्रह्म पञ्चधा परिकीर्तनम् ॥ इति ॥

एताश्चा पंचदेवा पंचभूतानां पथिव्यादीनामधिदेवताः ॥ 'तदुक्तम्'

"आकाशस्याधिपो विष्णुः अग्नेश्चैव महेश्वरी ।
वायोः सूर्यं क्षितेरीशः जीवनस्य गणाधिपः ॥"

मन्त्रयोग संहितायामपि–

"मानवानां प्रकृत्यः पञ्चधा परिकीर्तिताः ।
यतो निरूप्यते सर्गः पञ्च भूतात्मको बुधैः ।
भिन्ना यद्यपि भूतानां प्रकृतिः प्रकृतेर्वशात् ।
तथापि पञ्चतत्वानामनुसारेण तत्ववित् ।
प्रत्येक तत्व प्राचुर्य विमृश्य विधि पूर्वकम् ।
उपासनाधिकारस्य-पञ्चभेदानवर्णयत् ।" इति ॥

अयमभिप्रायः–क्षितेरीशोधिपतिः । जलस्य गणेशः । तेजसः शक्तिः । वायोः सूर्यः । आकाशस्य विष्णुः चाभिमानी–तेषां च सगुणस्वरूपेणोपासनेन पञ्चभूतानामानुकूल्यं सिद्ध्यति । निर्गुण ब्रह्मोपासनायामशक्तानां सगुणोपासानं कैवल्याद्युपनिषत्सु सुविशदं निरूपितम् । निर्विशेषं परंब्रह्मसाक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणै रिति ॥

एवमुक्तानामेव गणेशादीनां पञ्चानां देवतानां पूर्णावतारमूर्तयो वल्लभगणेश सूर्यनारायण-सोमस्कन्द परमेश्वर लक्ष्मीनारायणाद्याः कार्य ब्रह्मात्मिका इति । तत्स्वरूप तत्वबोधकाः मन्त्राः–"आत्मदेवतामन्त्राः"– इत्युच्यन्ते ।

स्वाभीप्सितैहिकामुष्मिक सकलेष्ट सिध्यर्थ मुपास्यमानादेवता "इष्ट देवता" तन्मन्त्राश्च इष्टदेवता-मन्त्राः । एताश्च पूर्वोक्त पञ्च देवतास्वन्यतमा एव ॥

स्वकुले सम्भाव्यमान सकलानिष्टनिवृत्त्यर्थं, योगक्षेमादि सकल श्रेयोऽभिवृध्यर्थं च, स्वकुलपरम्परया आराध्यमाना देवता–"कुलदेवता ।"

स्वकुलदुरितनिवृत्त्यर्थं सर्वमङ्गलावाप्त्यर्थं च गृहेषु अवश्यपूजनीयत्वेनाभिहिताः "बृन्द ।द्याः गृहदेवताः ॥

ग्रामेषु सम्भाव्यमान मारी-चोराऽग्निबाधादिभ्यो ग्रामीणजन द्विपाच्चतुष्पादाक्षिकाः–हरिहरपुत्रकालीः चण्डिका-दुर्गामार्याद्याः ग्रामदेवताः ॥

ब्रह्मा प्रजापतयः लोकपालाः नवग्रहाः वसुरुद्रादित्याः आजानदेवाः कर्मदेवाः देवर्षयो ब्रह्मर्षयो देवयोनिविशेषाश्च 'लोकदेवताः' । तन्मन्त्राश्च लोकदेवता मन्त्राः इत्युच्यन्ते । वैश्वदेवादिकमेव च लोकदेवताराधनमिति कीत्यते ॥

एवमुक्तानां देवताभेदानामुपासनं च तत्तन्मन्त्रविशेषैरेव यथोचितमनुष्ठेयमिति श्रुत्याद्याशयः ।

तदुपासना मार्गश्च वैदिकः तान्त्रिकश्चेति द्विधा । वैदिकोपि कर्मज्ञानोभयात्मकः, केवल कर्मात्मक-श्चेति द्विधा भवति । तान्त्रिकस्तु—तान्त्रिकः—वामः पाषण्डश्चेतित्रिधाभिद्यते । तत्र वेदोदितमार्गावलम्बिन आद्याः वैदिकाः ॥ तन्त्रोक्तमार्गानुसारिणो द्वितीयास्तान्त्रिकाः ।

श्रुत्यादिविहितकर्मानुष्ठान पूर्वकं श्रीमच्छङ्करभगवत्पादादिभिः स्थापितेष्वन्यतमं स्वाभीप्सितंमतं मुख्यतयाऽवलम्ब्य सद्गुरूपदेशलब्धैः स्वेष्टदेवता मन्त्रैः तां तां देवतां जपहोमपूजनाद्यैः प्रत्यहमाराधयन्तः श्रुति स्मृति—इतिहास पुराणाद्यैः देवता स्वरूप तत्वविचारपराः, परब्रह्मावबोधक-प्रस्थानत्रयोपनिषदभ्यासपराश्च परंब्रह्म स्वाभिन्नत्वेन ध्यायन्तः मनन निदिध्यासनादिपराश्च वैदिकोपासकाः इति व्यवह्रियन्ते ॥

अत्र च कर्मज्ञानात्मक द्विविधोपासनपरमा एते वैदिकोपासकाः स्वसत्कर्म निर्धूतनिखिल कल्मषाः स्वोपास्यदेवतानुग्रहासादित-तत्वावबोधाः योगाभ्यासबल लब्धनिखिल समाधि सिद्धिमन्त्राः ब्रह्मविदो ब्रह्म-निष्ठाश्च प्रारब्धकर्मक्षये ब्रह्मीभूता भवन्तीति "ब्रह्मविद्ब्रह्मैव भवति" इत्यादि श्रुतिभिरुपदिश्यन्ते । अतः अद्वैत भाषापादकं ज्ञानावलम्बनं मन्त्ररङ्गोपासनमिति, मन्त्र, जप पूजनादि बाह्यकरण व्यापारात्मक कर्मावलम्बनं बाह्योपासनमिति च श्रीमच्छङ्कर भगवत्पादद्यैः प्राचार्यैः बहुधा प्रापञ्चि ।

नहि निर्गुणं, निराकारं निरवयवं च, किञ्चिदुपासनाविषयं भवितुमर्हति । अतः सगुणोपासनमेव तत्तन्मन्त्रपुरश्चरणपूर्वकं जप-पूजा-ध्यानादिपुरःसरं अनुष्ठेयम् । तदुक्तं सूतसंहितादिषु:—

वेदवाक्यैर्न लभ्योहं नशास्त्रैः नापि चेतसा ।
ध्यानेन वृणते यो मां सर्वदाहम् वृणोमि तम् ।
अमूर्तस्य शिवस्यापि मूर्तिर्ध्येयाह्युपासकैः ।
उमार्ध विग्रहा शुक्ला चन्द्रार्धकृतशेखरा ।
स्वस्वरूपानुसन्धानप्रमोदादेव केवलात् ।
महाताण्डवसंयुक्ता या मूर्तिः श्रुतिदर्शिता ॥

पराशरश्चाह—"मूर्ति ध्यानं विना विद्या परा नैवोपजायते ।
निष्कलेतु परे तत्वे निरालम्बे निरञ्जने ॥
किः करोति जनः क्षुद्रः, तस्मात्तन्नित्यमाश्रयेत् ॥
ज्ञानावलम्बन भ्रान्त्या मनुष्याः मन्दबुद्धयः ।
मूर्त्युपेक्षां प्रकुर्वन्ति ज्ञानं तेषां न जायते ।
तस्माच्छ्रुत्युक्त सगुण ब्रह्मसाक्षात्कृतिस्तु
या-सा नित्यं सकलश्रेयस्साधनेषूत्तमा मता ॥"

कैवल्योपनिषद्यपि–"उमासहायं परमेश्वरं प्रभुं ।
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात् । इत्युक्तम् ।

अन्यत्रापि–

तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः ।
अद्वैत वासना पुंसा माविर्भवति नान्यथा ।
अनुग्रहश्च देवस्य देव्या चिद्रूपया सह ।
यथावत्तं परिज्ञाय ध्यायद्भिः समवाप्यते ।" इत्युक्तम् ॥

पातञ्जलसूत्रेऽपि–"इश्वर प्रणिधानाद्वा । तस्य वाचकः प्रणवः । तज्जपस्तदर्थभावनम् ।" इत्युक्तम् तथाच निर्गुण ब्रह्मज्ञानानधिकारिभिः सगुणोपासनमेव कर्तव्यम् । तच्च, तत्तन्मन्त्र-जप ध्यानादिरूपमेव । यतः उपासनायां उपास्य-उपासक-उपासनाख्यं त्रिपुरीभानमपेक्षितम् भवति । अतो ममुक्षोरपि आदितः सगुणं, साकारं सावयवं, शिव-विष्णु-शक्ति-गणेशादि रूपं ब्रह्मैवोपासनाविषयं भवितुमर्हति । तदेवं वैदिकोपासनास्वरूप भेदादिक मुक्तं भवति ।

द्वितीयस्तान्त्रिकोपासना मार्गश्च–(१) तान्त्रिकः, (२) वामः (३) पाषण्डः इति त्रिधा भवति । अतः तत्तच्छीलाः तैस्तैरेव शब्दैरभिधीयन्ते ॥

१. श्रुत्यदिविहित कर्मानुष्ठान सदाचार विहीनाः देवतास्वरूपतत्त्वज्ञान रहिताः अति नश्वर फलमा कामनया मन्त्र जपादि क्रियामात्रपराः 'तान्त्रिकाः'

२. श्रुत्यादि निषिद्धैः दोषापादकैः मधुमांसादिभि देवता तोषण पराः "वामाः"

३. स्वशरीरोत्कर्तनाद्यैः उपलब्ध मांसादिभिः, बाह्यैश्च हिंसात्मक अतिनिन्दित जीवबलिदानादिभिः देवता तर्पण शीलाः "पाषण्डाः" ॥ इति कीर्त्यन्ते ।

तत्र वाम पाषण्डमर्गौ द्वौ निन्द्यौ निरयप्रदौ चेति निषिद्धौ सन्मार्गगामिनाम् । केवल तान्त्रिक मार्गस्तु-अवैदिकोपि मन्दाधिकारिणामादौ तत्तत्कामनाफलप्रदः, निष्कामिनां तु-निःश्रेयः साधनत्वाभावेऽपि देवताप्रसाद जनकत्वात् नातितरां निन्द्यो भवति ॥ इत्यलम् प्रकृत प्रसञ्जनेन ॥

तदेतादृशेषु देवता भेदेषु उपासना भेदेषु च, एकैकस्यापि देवस्य पूजनाद्यर्थं यन्त्राणि तत्र पूज्यानां तत्तत्परिवाराणां च पृथक् पृथक् मालाः नाना भेदाः नानासिद्धिकराश्च तन्त्रादिग्रन्थेषु सुप्रसिद्धाः ।

यथा गणपतिः, लक्ष्मीगणपतिः, शक्ति गणपति रित्यादयो मूर्ति भेदाः ।

एकाक्षर-षडक्षराष्टाक्षर-अष्टाविंशत्यक्षरादि तत्तन्मन्त्र संख्याकाः ।

एवं ईश्वरस्य–दक्षिणामूर्तेः, दुर्गायाः, महालक्ष्म्याः, भैरवस्य, गुहस्य इत्यादिरीत्या प्रतिदेवतं रूपभेदाः तत्तन्मन्त्र भेदाः ध्यान-पूजादि प्रकार भेदाश्च बहुविस्तृताः प्रसिद्धाः ।

श्रीललिता महात्रिपुर सुन्दर्याश्च बाला भुवनेश्वर्यादि रूपायाः पूजायन्त्रं श्रीयन्त्रमिति विश्रुतम् । तत्परिवार-मन्त्राश्च, षडाम्नाय मन्त्राः चतुष्पञ्चशताधिकाः, तत्तत्पूजाप्रकाराश्च नैकेषु तन्त्रग्रन्थेषु गौडपादीय-परशुराम-कलासूत्रादिषु च नानाप्रकारेण सप्रपञ्चं प्रपञ्चिताः ।

तदेतेषां बहुविध देवता स्वरूपपराणां प्रायः, सप्तशताधिकानां मन्त्राणां नैकेभ्यो मन्त्रशास्त्र ग्रन्थेभ्यः सुपरिश्रमेण संग्रहं कृत्वा, तेषां ऋष्यादीन्यङ्गानि च सङ्गृह्य, महता बुद्धि परिश्रमेण श्रीसीतारामार्य महाभागाः, ग्रन्थरूपेण सर्वमेकीकृत्य, लोके सुबहूनां जनानामुपकाराय ग्रथितवन्तः ।

यद्यपि "पुस्तके लिखितान् मन्त्रानवलोक्य जपेत्तु यः स जीवन्नेव शूद्रत्व माशु गच्छति सान्वयः । तस्मै प्रकुपिता देवाः महानर्थप्रदा ध्रुवम् ।" इत्युक्तत्वात् पुस्तकावलोकनेन मन्त्रं नोपासनं कर्तुमुचितम् । यतः "मत्रि गुप्तपरिभाषणे" इति धातुपाठात्, गुप्तार्थ बोधकात्, "मत्रि" धातोः निष्पन्नो मन्त्रशब्दः गोप्यार्थवाचकः । गोप्यश्चार्थो नप्रकटनार्हः, प्रत्युत तत्प्रकटनं महानर्थकरं, पापं रूपं चेति राजकीय, विषयेषु लोकेऽपि प्रसिद्धमेव–

तथाप्येतादृश सिद्धिकराः महामन्त्राः सन्तीति परिज्ञाने, तदभिज्ञेभ्यो महापुरुषेभ्यः विधिपूर्वक उपदेशेन प्राप्तमन्त्राणां उपासन सुकरं स्यादिति मन्वानैः एतैः महाशयैः महता प्रयासेन इदं कार्यमनुष्ठितमिति, रहस्यार्थप्रकाशनदोषो न स्यदिति मन्तव्यम् ।

अत्र च तन्त्रशास्त्र प्रसिद्धानां वश्याकर्षणोच्चाटन भूत–प्रेतपिशाचादि बाधा शत्रु कृताभिचारादि बाधा–निरसन चोरापहृतद्रव्यप्राप्तिकरण प्रतिवादि मुख स्तम्भनादि षटकर्मणां साधकारतत्तद्देवताकाः मन्त्राः विषा–पहारक गरुडादि मन्त्राः इन्द्रजाल प्रदर्शनयोगि मन्त्राः, इत्येवमादयः तत्तद्देवताकाः–सात्विकाः राजसास्तामसा–श्चानेकशतसंख्याकाः मन्त्राः सविस्तरं संगृहीताः ।।

परन्तु एतेषां साधनं सर्वेषां सुकरं न स्यात् तत्तन्मन्त्र रहस्याभिज्ञेभ्यः सदाचार संप्रदायनिष्ठेभ्यः सदगुरुभ्यो विधिवदुपदेशं प्राप्य विधिवत् तत्पुरश्चरणादिना वीर्यवत्तां संपाद्य, अनन्तरं तत्प्रयोगकरणं सफलं स्यात् । अन्यथा विपरीतफलं देवताप्रकोपश्च स्यादित्यतः तत्तत्फलार्थिनो जनाः सद्गुरूपदेशंविना पुस्तकस्थान् मन्त्रानालोक्य पठन्तो देवता प्रकोप भाजनं मा भवेयुः । विधिवदनुष्ठानेन सफलास्सुखिनो भवेयुरिति पुनरवबोध–यामः ।

अत्र चैतेषां मन्त्राणां साधन प्रकारो वैदिकस्तान्त्रिको मिश्रश्चेति त्रिविधः । तान्त्रिकोपि दक्षिण–वाम भेदात् द्विविधः । तदेतत् पूर्वमेव देवता भेद प्रतिपादनावसरे किञ्चिद्विश्रुतमिति नेह प्रतन्यते ।। गुरू–पदेशद्वारा प्राप्तमन्त्राणां भक्ति श्रद्धा पुरस्सरं नियमेन जपे–पूजा ध्यानाद्यभ्यासैः देवता प्रसादः सुलभसाध्यः निर्दुष्टश्चेति सर्वैः साधकैः ज्ञेयम् ।

एवं महता परिश्रमेण विविध ग्रन्थानालोड्य साङ्गोपाङ्ग निर्वाह संगृहीतवतां श्री सीतारामार्य महाभागानां मुद्रणादिभिः तत्प्रकाशने बहूपकृतवतां महाशयानां च सर्वान्तर्यामी भगवान् परिपूर्णमनुग्रहं करोत्वित्याशास्य विरमति

पण्डितप्रवरः । पण्डितभूषणम् । विद्याभूषणं–शृङ्गेरी आस्थान विद्वान्–

पूर्वोत्तर मीमांसा सांख्ययोग–साहित्य वेदभाष्य विद्वान निवृत्ताद्वैत वेदान्ता ध्याध्यापकः ।

के. पी. शंकरशास्त्री, बेङ्गलूर ।

# Introduction

The word Mantra is derived from the root man (to meditate) and means that which protects the person that meditates. Some hold that the letters ma and tra are symbols respectively for mind (Manas) and intelligence (Buddhi) and the union of both is mantra. There are other derivations also for it but we can conclude that it means chanting some letters keeping the mind steady on a certain deity and that letter or group of letters is mantra. The Sastra that indicates the rishi, chandas, deity and the application of the Mantra is Mantrasastra. The source of Mantras is the Veda and it is said that the Atharva Veda contains many Mantras, their practice and withdrawal.

The person who wants to practise the Mantra should be pure internally and externally, utter the Samkalpa, pay obeisance to the Guru and perform Anganyasa and Karanyasa. Nyasa means "assignment of the various parts of the body to different deities which is usually accompanied with Prayer and corresponding gesticulations". Then he has to meditate upon the deity closing the eyes and chanting the slokas that describe the form of the deity. This is called Dhyana. Afterwards he has to offer Gandha, Pushpas, Dhoopa, Dipa and Naivedya uttering the Bija letters lam, ham, yain, ram and sam which belong respectively to the five elements, earth etc. He must use the Akshamala made of Rudrakshas, or Padma-bijas or Tulasi beeds for counting the number of chantings but should not display it. The efficacy of japa is so great that it is said that it removes all sins. There are many Mantras but a person should select the Mantra that is related to the deity whom he worships. There is a saying that there is no Mantra greater than Gayatri (that which protects the person who utters it) and therefore one should perform Sandhya along with Gayatri first and then chant any other Mantra which does not fulfil the desired object without it.

Scholars say that there are ten Angas for each Mantra. They are (1) Patala (2) Paddhati (3) Varma (4) Sahasranama (5) Stotra (6) japa (7) Homa (8) Tarpana (9) Marjana and (10) Viprabhojana. There are others who state them differently. Seven Angas only are stated by some others. They are (1) Rishi (2) Chandas (3) Bija (4) Kilaka (5) Sakti (6) Anganyasa and (7) Dhyana. After performing these seven, the worshipper should leave some water with flowers and Akshatas in a plate or on the yantra thinking as if he is leaving it in the right hand of the deity or in the left hand if the deity happens to be a female. The yantra is of three kinds viz. (1) Poojayantra (2) Sthapana yantra and (3) Dharanayantra.

Here it is very important to note that the yantra should be perfect and done very carefully. Otherwise adverse effects may occur. Yanrra is said to be the body of (Deha) the deity by some and as the abode (Geha) of the deity by some others. There are ten Angas for the yantra namely (1) Bija (2) Pranabija (3) Saktibija (4) Drishtibijas (5) Vasyadi (6) Gayatri yantra (7) Gayatri mantra (8) Pranasthana (9) Bhutabijas and (10) Dikpalabijas.

Sri C. V. Seetharama Iyer who bears the Dikshanama; Ramananda of Kadambakurichi (Tamil Nadu) is an old scholar aged above 80 years and has taken immense pains in collecting about thousand mantras from all the Mantrasastra books in all the Libraries of the country. He brought the Manuscript to Hyderabad where he has several disciples and wanted to get it printed in Devanagari so that the book may be useful to all the people living not only in all the provinces of India but also in other countries. A committee has been formed by name Mantra Sastra Publishing Society to devise ways and means for publishing it. Unfortunately I was compelled to be the President of the Society which position I do not deserve as I am entirely ignorant of Mantrasastra. With the greatest difficulty the first part is now published and the second part is in the press. Several institutions and persons have given financial assistance for publishing this volume and the Society is highly grateful to them for their generous and timely help.

The manuscript given to us is very old and unintelligible in some places. Sri Iyer is too old to live at Hyderabad where the printing work is going on and I, too, am not in a position to go through the proofs, due to age and defective vision. We had therefore to depend entirely upon others esp. Dr. K. Rajanna Sastry, M.A., M.O.L., Ph.D. to whom we express our grateful thanks. Our thanks are also due to Sri C. Satyanarayana, the Press Proprietor, who could decipher the manuscript. We could not interfere with it as it is Mantrasastra which does not give room for correction or imagination. We did not venture to do so and followed the manuscript as it is. We are taking greatercare in the printing of the second volume which will be completed in two months. I request the readers and scholars to correct the mistakes and let us know them.

We offer our Pranamas to Jagadguru Sri Sankaracharya of Sringeri Sarada Pitha for his blessings and to Sri K. P. Sankara Sastry, the erudite scholar and Asthana Vidwan of Sringeri Pitha for his scholarly Bhoomika.

D. VENKATAVADHANI.

# श्रीः

श्री जगद्गुरु श्री शंकराचार्य दक्षिणाम्नाय श्री शृंगेरी शाखामठ श्री शिवगङ्गा संस्थानम्

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावारपारीण यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठागरिष्ठ तपश्चर्कवर्त्यनाद्यविच्छिन्न गुरुपरंपराप्राप्त षड्दर्शनस्थापनाचार्य व्याख्यान सिंहासनाधीश्वर सकलवेदार्थप्रकाशक सांख्यत्रयीप्रतिपादक सकलनिगमागमसारहृदय वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादिराजधानी श्रीमद्विद्यानगर महाराजधानी कर्णाटकसिंहासन प्रतिष्ठापनाचार्य श्रीमद्राजाधिराजगुरु भूमण्डलाचार्य तुङ्गभद्रातीरवासि ऋष्यशृङ्गपुरवराधीश्वर श्री शृंगेरी श्रीमद्विद्याशङ्करपादपद्माराधक श्री शृंगेरी श्री शिवगङ्गा **श्री सच्चिदानन्दाभिनव सुब्रह्मण्यभारती स्वामिनां** कर कमल संजात **श्री श्रीविश्वेश्वरानद भारती स्वामिभिः**

**सीताराम शास्त्रि** विषये

नारायण स्मरण पूर्वक शुभाशिष स्समुल्लसंतु ।

भवद्भिः संग्रहित **"सहस्र मन्त्र कल्प"** विषयं श्रुत्वा परं मोदामहे । इदानीं नास्तिकानां बाहुळय काले गुरुमुखेन मन्त्रा नुपास्य देवतानुग्रहं प्राप्नुयेयुः । मन्त्र संग्रहण विषये श्रमं प्रसह्य यूयं निष्णाता भवंति । युष्माकं श्रमं परांबिका प्रत्यक्षतः वीक्ष्य इतोधिकं इहपरश्रेयांसि दद्यादि त्याशास्महे ।

श्रीः

## प्रथम ग्रन्थस्थविषयाः

हरिः ॐ

# । सहस्रमन्त्रसारसंग्रहः ।

## ।। आसनविधिः ।।

श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो नमः ।

आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य, अमुककर्म पूजां वा करिष्ये । इति संकल्पः ।
तत्रादौ शरीरादिशुद्धये भूशुद्धिं भूतशुद्धिं आत्मप्राणप्रतिष्ठां अन्तर्मातृकां बहिर्मातृकां च करिष्ये ।

उत्पतन्तीह भूतानि पृथिव्यन्तरवासिनः ।
आसनादौ नमस्कृत्य ब्रह्मकर्म समारभे ॥
अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यम् अनुज्ञां दातुमर्हसि ॥

इति वामपादपार्ष्णिणा भूमिं त्रिः ताडयेत् । भैरवाज्ञां च लब्ध्वा ॥

समुद्रवसने देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि ! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

पृथिवीरिति मन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलच्छन्दः, कूर्मो देवता, आसने विनियोगः ।

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

ॐ अनन्तासनाय विमलासनाय योगासनाय कूर्मासनाय आधारशक्तये च नमः । इति आसनं संपूज्य ।
ॐ भूर्भुवः स्वः ।

अङ्गुष्ठाग्रे तु गोविन्दं तर्जन्यां तु महीधरम् ।
मध्यमायां हृषीकेशम् अनामिकायां त्रिविक्रमम् ॥
कनिष्ठिकायां न्यसेद्विष्णुं करमध्ये तु माधवम् ।
एवं च करविन्यासं सर्वपापप्रणाशनम् ॥

ॐ भूः पादाभ्याम् । भुवः जानुभ्याम् । स्वः कटिभ्याम् । महः नाभ्यौ । जनः हृदयाय । तपः कण्ठाय । सत्यं ललाटाय । परब्रह्म शिरसे स्वाहा । स्वशिरसि गुं गुरुभ्यो । पं परमगुरुभ्यो । पं परमेष्ठिगुरुभ्यो । दक्षिणभुजे गं गणपतये । वामभुजे दुं दुर्गायै । दक्षिणजानुनि क्षं क्षेत्रपालाय । वामजानुनि सं सरस्वत्यै । हृदये अं आत्मनि । सर्वत्र आदौ ॐ अन्ते नमश्चेत्युच्चारयेत् ।

नमोऽस्त्वनन्ताय नमोऽस्तु वेधसे ।
नमो वसिष्ठाय नमोस्तु शक्तये ।
पराशराय च नमोऽस्तु सात्वते
नमोऽस्तु ते सत्यवतीसुताय ॥
नमो गुरुभ्यो गुरुपादुकाभ्यो
नमः परेभ्यः परपादुकाभ्यः ।
आचार्यसिद्धेश्वरपादुकाभ्यो
नमोऽस्तु लक्ष्मीपतिपादुकाभ्यः ॥

सर्वभूतनिवारणाय सशराय, न्हः सशार्ङ्गाय, सुदर्शनायास्त्रराजाय, हुं फट् इति छोटिकया द्विग्बन्धं कृत्वा उदकोपस्पर्शः प्राणायामश्च । तत आत्मशुद्धिः –

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणां रक्तश्मश्रुविलोचनम् ॥
अधोमुखं कृष्णवर्णमङ्गुष्ठपरिमाणकम् ।
खड्गचर्मधरं पापं वामकुक्षौ विचिन्तयेत् ॥

एवं पुरुषं वामकुक्षौ विचिन्त्य, ‘ यं ’ इति षोडशवारं इडया वायुमापूर्य संकोचशरीरं “ शोषय शोषय स्वाहा ” इति शरीरं शोषितं भावयित्वा पिङ्गलया रेचयेत् ।

‘ रं ’ इति चतुष्षष्टिवारं पिङ्गलया पूरयित्वा शोषितशरीरं “ दह दह पच पच स्वाहा ” इति प्लुतं भस्मीकृतं च विभाव्य इडया रेचयेत् । पुनः ‘ यं ’ इति द्वात्रिंशत्वारं इडया पूरयित्वा तद्भस्मं पिंगलया रेचयत् ।

‘ वं ’ इति इडया पूरयित्वा “ परमशिवामृतं वर्षय वर्षय स्वाहा ” इति तद्भस्म सहस्रारेन्दुमण्डलविगलदमृतरसेन सिक्तं च विभाव्य पिंगलया रेचयेत् ।

'लं' इति षोडशवारं पिङ्गलया पूरयित्वा "शांभवं शरीरं उत्पादय उत्पादय स्वाहा" इति दिव्यशरीरमुत्पन्नं विभाव्य इडया रेचयेत् ।

"हंसः सोऽहं" इति इडया पूरयित्वा "अवतर अवतर शिवपदात् जीवसुषुम्ना पथेन प्रविश्य मूलशृङ्गाटकं उल्लसोल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोऽहं स्वाहा" इति परमशिवेन एकीकृतं जीवं सुषुम्ना वर्त्मना मूलाधारे स्थापितं चिन्तयेत् । **इति भूशुद्धिः ॥**

अथ भूतशुद्धिः । पादादिजानुपर्यन्तं पृथिवीस्थानं चतुरस्रं चतुर्दिक्षु लांछितं तन्मध्ये पीतवर्णं 'लं' बीजयुक्तं ध्यायेत् ।

ॐ स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ।

'लं' भूम्यै नमः इति संप्रार्थ्य, जान्वादिनाभिपर्यन्तम् अपास्थानं धनुराकारम् उभयोः कटयोः श्वेतपद्मलांछितं तन्मध्ये श्वेतवर्णं 'वं' बीजयुक्तं ध्यायेत् ।

ॐ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ।

'वं' अद्भ्यो नमः । नाभ्यादिहृदयपर्यन्तम् अग्निस्थानं त्रिकोणं स्वस्तिकलांछितं तन्मध्ये रक्तबीजं 'रं' बीजयुक्तं ध्यायेत् ।

ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ।

'रं' अग्नये नमः । हृदयादिभ्रूमध्यपर्यन्तं वायुस्थानं, षट्कोणं षड्बिन्दुलांछितं तन्मध्ये धूम्रवर्णं 'यं' बीजयुक्तं ध्यायेत् ।

ॐ वायो शतं हरीणां युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आ यातु पाजसा ॥

'यं' वायवे नमः । भ्रूमध्यादिब्रह्मरन्ध्रपर्यन्तं आकाशस्थानं वृत्ताकारं ध्वजलांछितं नीलवर्णं 'हं' बीजं ध्यायेत् ।

ॐ आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ।

'हं' आकाशाय नमः ।

पृथिवीं पञ्चगुणां लं बीजेन षडुद्घातप्रयोगेणाप्सु लं लं लं लं लं लं प्रविलापयामि । चतुर्गुणा आपः वं बीजेन पञ्चोद्घातप्रयोगेणाग्नौ वं वं वं वं वं त्रिगुणं वह्निं, रं बीजेन चतुरुद्घातप्रयोगेण वायौ रं रं रं रं द्विगुणं वायुं; यं बीजेन त्रिरुद्घातप्रयोगेण आकाशे यं यं यं एकगुणं आकाशं प्रविलापयामि । हं बीजेन द्विरुद्घातप्रयोगेण वायौ हं हं प्रविलापयामि । तमहंकारं प्रकृतौ प्रविलापयामि । तन्महत्तत्त्वं प्रकृतौ प्रविलापयामि । तां प्रकृतिं परब्रह्मणि प्रविलापयामि इति प्रविलाप्य शुद्धोऽहं मुक्तोऽहं सच्चिदानन्दस्वरूपोहं ब्रह्माऽहमस्मीति चिरं भावयेत् । तस्मात् सर्वज्ञात् सर्वशक्तेः परब्रह्मणः सकाशात् प्रकृतिः प्रकृतेर्महान् । महतोऽहंकारः । अहंकारादाकाशः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नाद्रेतः । रेतसः पुरुषः । स वा एष पुरुषोऽन्नरसमयः इति देहोत्पत्तिं विभाव्य पुनर्जीवात्मानं 'हंसः' इति मन्त्रेण अङ्कुशमुद्रया सुषुम्नानाडिमार्गेण ब्रह्मरन्ध्रादानीय हृदि प्रतिष्ठापयेत् । हंसः सोऽहमिति ।

**॥ इति भूतशुद्धिः ॥**

## ।। गुरुध्यान–श्लोकाः ।।

श्रीगुरुभ्यो नमः ।

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवम् ।
सिद्धौघं बटुकत्रयं पदयुगं दूतिक्रमं मण्डलम् ।
वीरान् ह्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनि मन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥१॥

सत्यं भानविवर्जितं श्रुतिगिरामाद्यं जगत्कारणम् ।
व्याप्तं स्थावरजङ्गमं मुनिवरैर्ध्यातं निरुद्धेन्द्रियैः ।
अर्काग्नीन्दुमयं शताक्षरवपुस्तारात्मकं संततम् ।
नित्यानन्दगुणालयं गुणपरं वन्दामहे तन्महः ॥२॥

यं ब्रह्मेति वेदान्तिनो वदन्ति, परं प्रधानं पुरुषं तथा मे ।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्ननिवारणाय ॥३॥

नित्यानन्दं परमसुखदं केवलं ज्ञानमूर्तिम् ।
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतम् ।
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥४॥

आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजभावयुक्तं ।
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं संततमानतोऽस्मि ॥५॥

हंसाभ्यां परिवृत्तपत्रकमलैर्दिव्यैर्जगत्कारणम् ।
विश्वोत्कीर्णमनेकदेहनिलयं स्वच्छन्दमानन्दकम् ।
आद्यन्तैकमखण्डचिद्घनरसं पूर्णं ह्यनन्तं शुभम् ।
प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद्विभुं शाश्वतम् ॥६॥

विश्वं व्यापितमादिदेवममलं नित्यं परं निष्कलं ।
नित्योद्बुद्धसहस्रपत्रकमलं लुप्ताक्षरे मण्डपे ।
नित्यानन्दमयं सुखैकनिलयं नित्यं शिवं स्वप्रभम् ।
ध्यायेद्धंसं परात्परतरं स्वच्छन्दसर्वागमम् ॥७॥

ऊर्ध्वाम्नायगुरोः पदं त्रिभुवनोंकाराख्यसिंहासनम् ।
सिद्धाचारसमस्तवेदपठितं षट्चक्रसंचारिणम् ।
अद्वैतस्फुरदग्निमेकममलं पूर्णप्रभाशोभितम् ।
शान्तं श्रीगुरुपङ्कजं भज मनश्चैतन्यचन्द्रोदयम् ॥८॥

नमामि सद्गुरुं शान्तं प्रत्यक्षशिवरूपिणम् ।
शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धिदम् ॥ ९॥

प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम् ।
वराभयकरं शान्तं स्मरेत् तन्नामपूर्वकम् ॥ १०॥

प्रसन्नवदनाक्षं च सर्वदेवस्वरूपिणम् ।
तत्पादोदकजां धारां निपतन्तीं स्वमूर्धनि ॥ ११ ॥

तया संक्षालयेत् देहे ह्यन्तर्बाह्यगतं मलम् ।
तत्क्षणाद्विरजो मन्त्री जायते स्फटिकोपमः ॥ १२ ॥

तीर्थानि दक्षिणपदे वेदास्तन्मुखमाश्रिताः ।
पूजयेदार्चितं तं तु तदभिध्यानपूर्वकम् ॥ १३ ॥

सहस्रदलपङ्कजे सकलशीतरश्मिप्रभम् ।
वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणम् ।
स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥ १४ ॥

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ १५ ॥

निधये सर्वविद्यानां भिषजे भवरोगिणाम् ।
गुरवे सर्वलोकानां श्रीदक्षिणामूर्तये नमः ॥ १६ ॥

शंकररूपेण मच्चित्तमङ्गीकृतमभूत्यया ।
किंकरी यस्य सा माया शंकराचार्यमाश्रये ॥ १७ ॥

अविद्यारण्यकान्तारे भ्रमतां प्राणिनां सदा ।
विद्यामार्गोपदेष्टारं विद्याख्यगुरुमाश्रये ॥ १८ ॥

श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारत्यपि तान् यतीन्द्रान् ।
विद्यानिधीन् तन्त्रनिधीन् सदात्मनिष्ठान् भजे मानवशंभुरूपान् ॥ १९ ॥

सदात्मध्याननिरतं विषयेभ्यः पराङ्मुखम् ।
नौमि शास्त्रेषु निष्णातं चन्द्रशेखरभारतीम् ॥ २० ॥

विद्यातीर्थाभिधाचार्यो ह्यद्याभिनवपूर्वकः ।
शृङ्गाद्रिशारदापीठे विराजति जगद्गुरुः ॥ २१ ॥

## गुरुयन्त्रं देवताश्च ।

बिन्दुत्रिकोणवसुकोणबिम्बम् । वृत्ताष्टपत्रं शिखिवृत्तयुक्तम् ।
धरागृहं वह्नितुटीभिरीड्यम् । यन्त्रं गुरोर्देवि मया प्रदिष्टम् ॥

सिन्दूरेण विलिख्यातः पूजयेच्चक्रमीश्वरि ।
गणेशधर्मवरुणाः कुबेरसहिताः शिवे ॥

पूज्याः द्वारैः सुपुष्पैस्तु गन्धाक्षतपुरःसरैः ।
असिताङ्गोरुरुश्चण्डो क्रोधेशोन्मत्तभैरवौ ॥

कपाली भीषणो देवि संहारोऽर्च्यष्टपत्रके।
परमानन्दनाथं च प्रकाशानन्दनायकम् ॥

श्रीभोगानन्दनाथं च समयानन्दनायकम् ।
सुभगानन्दनाथं च सुमनानन्दनायकम् ॥

गगनानन्दनाथं च श्रीविश्वानन्दनायकम् ।
अष्टौ कुलगुरून् देवि पूजयेद्वसुपत्रके ॥

मदनानन्दनाथं च श्रीलीलानन्दनायकम् ।
महेश्वरानन्दनाथं च पूजयेद्वै त्रिकोणके ॥

बिन्दौ गुरुं च संपूज्य गन्धाक्षतप्रसूनकैः ।
तत्र बिन्दौ गुरुं देवि स्थापयेद्भक्तिपूर्वकम् ॥

संपूजयेत् स्वमूलेन दक्षिणां कालिकां यजेत् ।
महाकालं यजेत् तत्र कामं कामेश्वरीं तथा ॥

गुरुं च परमं देवि परात्परगुरुं तथा ।
परमेष्ठिगुरुं चैव स्वगुरोर्मूर्ध्नि पूजयेत् ॥

संपूज्य विविधैः पुष्पैः माल्यैराभरणोत्तमैः ।
दक्षिणाभिर्महेशानि भक्ष्यैर्भोज्यैश्च लेह्यकैः ॥

चोष्यैः पेयैश्च खाद्यैश्च बलिं दत्त्वा च तर्पयेत् ।
आनन्दरससंपूर्णं गुरुं बुद्ध्या महेश्वरि ॥

ततो देवि गुरून् नत्वा प्रार्थयेत् स्वमनोरथम् ।
य एवं पूजयेद्देवि स्वगुरुं पुण्यवासरे ॥

स एव भैरवः साक्षाद्विचरेत् भुवनत्रये ।
गुरुरेव परो मन्त्रो गुरुरेव परो जपः ॥

गुरुरेव परा विद्या नास्ति किंचित् गुरुं विना ।
यस्य तुष्टो गुरुर्देवि तस्य तुष्टा महेश्वरी ॥

येन संतोषितो देवि गुरुः स हि सदाशिवः ।
यत्र दृष्ट्यापि वै ब्रूयाद् गुरुस्तत्र समाचरेत् ॥

पुण्यं वाऽपुण्यमीशानि त्याज्यं ग्राह्यं कुलार्चिते ।
गुरुर्वदति यत् सद्यस्तत् कुर्यात् साधको बुधः ॥

विना गुरूपदेशेन न सिद्ध्यति कलौ मनुः ।
तस्माद्गुरुं भजेद्भक्त्या तोषयेत् सततं गुरुम् ।

गुरोर्यत्र परीवादो निन्दा यत्र प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ नो वा दूरं पलायनम् ॥

गुरुर्देवि परो धर्मो गुरुरेव परा गतिः ।
गुरुमभ्यर्चयेन्नित्यं दुर्गा येन प्रसीदति ॥

इतीदं दशमीतत्त्वं सर्वागमरहस्यकम् ।
सारासारतरं देवि गोपनीयं मुमुक्षुभिः ॥

## ।। मन्त्रारम्भदीक्षाकालनिर्णयः ।।

मन्त्रस्यारम्भणं मेषे धनधान्यप्रदं भवेत् ।
कर्कटे सर्वसिद्धिः स्यात् कन्या लक्ष्मीप्रदा नृणाम् ॥
तुलायां सर्वसिद्धिः स्यात् सर्वलाभश्च वृश्चिके ।
मकरं पुत्रदं प्राहुः कुम्भो धनसमृद्धिदः ॥
शुक्लपक्षे शुभां दीक्षां कृष्णोऽप्या पञ्चमीदिनात् ।
भूतिकामैः सिते पक्षे मुक्तिकामैः सितेतरे ॥
वैशाखे सिद्धिदा दीक्षा श्रवणे वृद्धिदा नृणाम् ।
आश्विने सर्वसिद्धिः स्यात् कार्तिके ज्ञानवृद्धिदा ॥
शुभदा मार्गशीर्षे च माघे स्वर्णफलप्रदा ।
फाल्गुने सर्वसिद्धिः स्यादन्येऽनिष्टफलप्रदाः ॥
रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत् किल ।
बुधे सौन्दर्यमाप्नोति ज्ञानं स्यात् तु बृहस्पतौ ॥
शुक्रे सौभाग्यमाप्नोति शेषा अरिष्टफलप्रदाः ।
द्वितीयायां भवेत् ज्ञानं तृतीयायां भवेच्छुचिः ॥
पञ्चम्यां बुद्धिवृद्धिः स्यात् सौख्यं स्यात् सप्तमीदिने ।
दशम्यां राजसौभाग्यं एकादश्यां शुचिर्भवेत् ॥
द्वादश्यां सर्वसिद्धिः स्यात् पूर्णिमा सर्वसिद्धिदा ।
आश्विन्यां सुखमाप्नोति रोहिण्यां वाक्पतिर्भवेत् ॥
पुनर्वसौ धनाढ्यः स्यात् पुष्ये शत्रुविनाशनम् ।
मघायां दुःखहानिः स्यात् रूपदा पूर्वफल्गुनी ॥
ज्ञानं चोत्तरफल्गुन्यां हस्तायां च बली भवेत् ।
चित्रायां ज्ञानसिद्धिः स्यात् स्वात्यां शत्रुविनाशनम् ॥
अनुराधा बुद्धिवृद्ध्यै कीर्त्यै स्यातां ततः परे ।
मूलं सर्वसमृद्धिकृत् पूर्वाषाढोत्तराषाढे सर्वसंपत्तिदायके ॥
वृद्धिः शतभिषायां स्यात् पूर्वाभाद्रे सुखी भवेत् ।
सौख्यं चोत्तरभाद्रायां रेवत्यां कीर्तिवर्धनम् ॥
योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः शुभः ।
सुकर्मा च धृतिर्वृद्धिः ध्रुवः सिद्धिश्च हर्षणः ॥
वरीयांश्च शिवः सिद्धो ब्रह्मा चैन्द्रोऽप्यमी शुभाः ।
बवादिवणिजान्तानि करणानि शुभाप्तये ॥

त्रिषडायगताः पापाः शुभकेन्द्रत्रिकोणगाः ।
दीक्षायां तु शुभाः सर्वरन्ध्रस्थाः सर्वनाशकाः ॥
विषुवेऽप्ययनद्वन्द्वे संक्रान्त्याः [1]दमनोत्सवे ।
दीक्षा कार्या त्वकालेऽपि [2]पवित्रे [3]गुरुपर्वणि ॥

## ।। रत्नावलीकुलोड्डीशयामलाद्यर्थसंग्रहे ।।

सत्तीर्थेऽर्कविधुग्रासे पुण्यारण्ये वनेषु च ।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत् ।।
सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः ।
यस्मिन्नहनि संतुष्टो गुरुः सर्वे शुभावहाः ॥
संतुष्टे च गुरौ तस्य संतुष्टाः सर्वदेवताः ।
गुरुं संतोषयेत् भक्त्या ह्ययमेव तदा भवेत् ॥
मुमुक्षूणां सदा कालः स्त्रीणां कालस्तु सर्वदा ॥

## ।। परशुरामकल्पतन्त्रे ।।

कार्तिकाश्विनवैशाखमाघेऽथ मार्गशीर्षके ।
फाल्गुने श्रावणे मन्त्रपुरश्चर्या प्रशस्यते ॥
मन्त्रारम्भे रवौ शुक्रे बुधे जीवे विशेषतः ।
शनौ मृत्युः क्षयो भौमे सोमे मध्यफलं स्मृतम् ॥
स्थिरलग्नं विष्णुमन्त्रे शिवमन्त्रे चरं ध्रुवम् ।
द्विस्वभावगतं लग्नं शाक्तिमन्त्रे प्रशस्यते ॥

## ।। पुरश्चरणकालः ।।

पर्वताग्रे नदीतीरे बिल्वमूले जलाशये ।
गोष्ठे देवालयेऽश्वत्थे उद्याने तुलसीवने ॥
पुण्यक्षेत्रे गुरोः चित्तैकाग्र्यस्थलेपि वा ।
पुरश्चरणकृन्मन्त्री सिध्यत्येव न संशयः ॥

---

१. दमनोत्सवः – चैत्रपूर्णिमादिषु दमनकरणकदेवीपूजादिनेषु इत्यर्थः ।
२. पवित्रे – श्रावणपूर्णिमादिषु देव्याः पवित्रारोपणदिवसेषु ।
३. गुरुपर्वणि – गुरोः जन्मव्याप्तिदिनयोः ।

ज्येष्ठाषाढौ भाद्रपदं पौषं तु मलमासकम् ।
अङ्गारं शनिवारं च व्यतिपातं च वैधृतिम् ॥

अष्टमीं नवमीं षष्ठीं चतुर्थीं च त्रयोदशीम् ।
चतुर्दशीममावास्यां प्रदोषं च तथा निशाम् ॥

यमाग्निरुद्रसर्पेन्द्रवसुश्रवणजन्मभम् ।
मेषकर्कतुलाकुम्भान् मकरं चैव वर्जयेत् ॥

सर्वाण्येतानि वर्ज्यानि पुरश्चरणकर्मणि ।
चन्द्रतारानुकूले च शुक्लपक्षे विशेषतः ॥

पुरश्चरणकं कुर्यान्मन्त्रसिद्धिः प्रजायते ।
प्रत्यङ्मुखः शिवस्थाने द्विजश्चान्यतमे जपेत् ॥

आरम्भदिनमारभ्य समाप्तिदिवसावधि ।
न न्यूनं नातिरिक्तं च जपं कुर्याद्दिने दिने ॥

## ।। देवीपर्वाणि ।।

( वैशम्पायन संहितायाम् )

षष्ठी भाद्रपदे मासि कृष्णाश्विनचतुर्दशी ।
कार्तिके नवमी शुक्ला मार्गे कृष्णा च पञ्चमी ॥

पौषे च पूर्णिमा देवि माघे चैव चतुर्थिका ।
फाल्गुनैकादशी कृष्णा चैत्रे मासि त्रयोदशी ॥

वैशाखेऽक्षय्यतृतीया ज्येष्ठे तु दहरा स्मृता ।
आषाढे द्वादशी कृष्णा अमावास्या च श्रावणी ॥
इमानि देवीपर्वाणि कोटियज्ञफलानि वै ॥

[ इति सौभाग्यचन्द्रोदये ]

अमान्तचान्द्रमासेषु चैत्रशुक्लत्रयोदशी ।
चतुर्दश्यपि शुक्लाऽथ वैशाखे शुक्लपक्षगाः ॥

तृतीयैकादशीपूर्णमास्यः कृष्णचतुर्दशी ।
ज्येष्ठे तु शुक्ले दशमी राका कृष्णचतुर्दशी ॥

आषाढे शुक्लपक्षस्थे पञ्चमी च त्रयोदशी ।
श्रावणे मासि शुक्लैकादशी शुक्लचतुर्दशी ॥

कृष्णा पञ्चम्यष्टमी च रोहिणी सहिता यदि ।
नवमी चाथ भाद्रस्य कृष्णा षष्ठी तथाष्टमी ॥
रोहिणीसहिता चेत् स्यादाश्विने सप्तमी सिते ।
अष्टमी च सिता कृष्णपक्षस्था च चतुर्दशी ॥
कार्तिके शुक्लपक्षस्थे नवमी द्वादशी तिथी ।
मार्गशीर्षे तृतीया च षष्ठी धवलपक्षगे ॥
पौषे चतुर्थीनवमीचतुर्दश्यः सिता मताः ।
दशमी त्वासिता माघे चतुर्थ्यैकादशी सिते ॥
चतुर्दश्यसिता चाथ फाल्गुने शुक्लपक्षगे ।
षष्ठीनवम्यौ कृष्णा च भवेदेकादशीति च ॥

## ॥ मन्त्राणां दश संस्काराः ॥

शोधने मन्त्रिभिर्ग्राह्यं प्रसिद्धं जन्मना मता ।
दत्तः संशोधितो मन्त्रो भवेच्छिष्येऽष्टसिद्धये ॥
*छिन्नत्वादिकदोषा ये पञ्चाशन्मन्त्रसंस्थिताः ।
तैर्दोषैः सकला व्याप्ता मनवः सप्तकोटयः ॥
अतस्तद्दोषशान्त्यर्थं संस्कारदशकं चरेत ।
भूर्जपत्रे लिखेत् सम्यक् त्रिकोणं रोचनादिभिः ॥
वारुणं कोणमारभ्य सप्तधा विभजेत् समम् ।
एवमीशाग्निकोणाभ्यां जायन्ते तत्र योनयः ॥
नववेदमितास्तत्र विलिखेन्मातृकां क्रमात् ।
अकारादि-हकारान्तात् ईशादि वरुणावधि ॥

---

***मन्त्राणां छिन्नत्वादिदोषाः–**

(१) छिन्नः । (२) रुद्धः । (३) शक्तिहीनः । (४) पराङ्मुखः । (५) बधिरः । (६) नेत्रहीनः ॥ (७) कीलितः । (८) स्ताम्भितः । (९) दग्धः । (१०) त्रस्तः । (११) भीतः । (१२) मलिनः । (१३) तिरस्कृतः । (१४) भेदितः । (१५) सुषुप्तः । (१६) मदोन्मत्तः । (१७) मूर्छितः । (१८) हतवीर्यः (१९) हीनः । (२०) प्रध्वस्तः । (२१) बालकः । (२२) कुमारः। (२३) युवा। (२४) प्रौढः। (२५) वृद्धः । (२६) निस्त्रिंशकः । (२७) निर्बीजः । (२८) सिद्धिहीनः । (२९) मन्दः । (३०) कूटः । (३१) निरंशः । (३२) सत्त्वहीनः । (३३) केकरः । (३४) बीजहीनकः । (३५) धूमितः । (३६) आलिङ्गितः । (३७) मोहितः । (३८) क्षुधातुरः । (३९) अतिदृप्तः । (४०) अङ्गहीनः । (४१) अतिक्रुद्धः । (४२) समीरितः । (४३) अतिक्रूरः (४४) सव्रीडः । (४५) शान्तमानसः । (४६) स्थानभ्रष्टः । (४७) विकलः । (४८) अतिवृद्धः । (४९) निस्नेहः ॥ (५०) पीडितः ॥

देवीं तत्र समावाह्य पूजयेच्चन्दनादिभिः ।
ततः समुद्धरेन्मन्त्रं जननं तदुदीरितम् ॥

## ॥ अथ मन्त्रजननयन्त्रम् ॥




## ॥ इति मन्त्रजननयन्त्रम् ॥

**दीपनम्** – हंसः * मूलं नमः सोऽहम् [ इति सहस्रजपः ] ।
**बोधनम्** – हूं मूलं नमः हूं [ इति सहस्रजपः ]
**ताडनम्** – – फट् मूलं नमः फट् [ इति सहस्रजपः ]
**अभिषेचनम्** – ऐं हंसः ॐ । इति सहस्राभिमन्त्रितैर्जलैः तेनैव मन्त्रेण ताडपत्रोपरि लिखितमन्त्रे अभिषेकं कुर्यात् ।
**विमलीकरणम्** – ॐ त्रों वषट् मूलं नमः वषट् त्रों ॐ [ इति सहस्रजपः ]
**जीवनम्** – स्वधा वषट् मूलं नमः वषट् स्वधा [ इति सहस्रजपः ]
**तर्पणम्** – दुग्धघृतोदकैः तेनैव मन्त्रेण तस्मिन्नेव शतं तर्पयेत् ।
**गोपनम्** – ह्रीं मूलं नमः ह्रीं । [ इति सहस्रजपः । ]
**आप्यायनम्** – ह्सौः मूलं नमः ह्सौः । [ इति सहस्रजपः । ]

* 'मूलम्' इति संस्कार्यमन्त्रः ।

## ।। प्रणवोद्धारः ।।

( प्रपञ्चसार-तन्त्रे । )

अस्य बिन्दोः समुत्पत्त्या तदन्तः सोऽहमुच्यते ।
स हुङ्कारः पुमान् प्रोक्तः स इति प्रकृतिः स्मृता ।।

बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता ।
'पुं' प्रकृत्यात्मको हंसस्तदात्मकमिदं जगत् ।।

पुंरूपं सा विदित्वा स्वां सोऽहंभावमुपागतः ।
स एष परमात्माख्यो मनुरस्य महामनोः ।।

सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।
सन्धिं वै पूर्वरूपाख्यां ततोऽसौ प्रणवो भवेत् ।।

## ।। प्रणवोत्पत्तिः ।।

बिन्दोर्हम्, विसर्गात् सः । पुं प्रकृत्यात्मकाविति नाम काल्पनिकम् । तद्यतो बिन्दुविसर्गाविव अन्नादौ अकारे निपाते योजिते अहमित्यात्माभिनयः । नित्यं तमेव पुरुषमाश्रिता प्रकृतिरविद्या ब्रह्माभिन्नकत्वेन जीवकल्पकत्वात्तदभिन्नेव विलोमीकृता अजपा सोऽहं भवति । प्रकृतिपुरुषयोरभेदात् परमात्मैवाऽहमिति तद्भावमाप्नोतीत्यर्थः । लोपयित्वेति व्यञ्जनयोः कल्पितत्वादेव सकारहकारयोर्लोपः । 'एङः पदान्तादति' ( पा ६.१.१०५ ) इत्यनेन पूर्वरूपे कृते प्रणवः सिध्यति ।

## ।। प्रणवमहामन्त्रः ।।

अस्य प्रणवमहामन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । अग्निर्देवता । अकारो बीजम् । उकारः शक्तिः । मकारः कीलकम् । सायुज्यसिध्यर्थे जपे विनियोगः ।

अनुलोमविलोममन्त्रार्णत्रयेण न्यासः ।

ध्यानम्– द्यौर्मूर्धानं यस्य वेदा वदन्ति ।
खं वै नाभिं चन्द्रसूर्यौ च नेत्रे ।।
दिशः श्रोत्रे यस्य पादौ क्षितिं च ।
ध्यातव्यो नः सर्वभूतान्तरात्मा ।।

मनुः ।। ॐ ।।

## ।। महावाक्यानि ।।

अस्य महावाक्यमन्त्रस्य हंसः ऋषिः । अव्यक्ता गायत्री छन्दः । परमहंसो देवता । हं बीजम् । सः शक्तिः । सोऽहम् कीलकम् । नित्यं ज्ञानमनन्तं ब्रह्म । नित्यानन्दं ब्रह्म । नित्यानन्दमयं ब्रह्म । यो वै भूमा । यो वै भूमाधिपतिः । एकमेवाद्वितीयं ब्रह्म । इति षडङ्गन्यासः ।

ध्यानम्— ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिम् ।
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ॥
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतम् ।
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥

मनुः । ॐ प्रज्ञानं ब्रह्म । अहं ब्रह्मास्मि । तत्त्वमसि । अयमात्मा ब्रह्म ॥

## ॥ तारत्रयमन्त्रः ॥

अस्य तारत्रयमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीदुर्गा देवता । ऐं बीजम् । ह्रीं शक्तिः । श्रीं कीलकम् । अनुलोमविलोममूलेन न्यासः ।

संसारोत्तारिणीं दुर्गां सामगानविनोदिनीम् ।
संध्यारागांशुकां वन्दे साम्राज्यैकनिदर्शिनीम् ॥

मनुः ॥ ऐं ह्रीं श्रीम् ॥

## ॥ हंसमन्त्रः ॥

अस्य हंसमन्त्रस्य हंस ऋषिः । अव्यक्तगायत्री छन्दः । परमहंसो देवता । हंसः बीजम्, सोऽहं शक्तिः । ब्रह्मबीजं, मायाशक्तिः । जीवो बीजं, बुद्धिः शक्तिः । उदानो बीजं, सुषुम्ना शक्तिः । सर्वमन्त्राङ्गत्वे जपे विनियोगः । ॐ सूर्याय स्वाहा । ॐ सोमाय स्वाहा । ॐ निरञ्जनाय स्वाहा । ॐ निराभासाय स्वाहा । ॐ अतनतनुसूक्ष्मतनु (नेत्रत्रयं) प्रचोदयात् । अस्त्राय ॥ मनुः ॥ ॐ हंसः सोऽहम् ॐ ॥ अग्नीषोमाभ्यां वौषट् ॥ अनेन सर्वाङ्गव्यापकत्वेन अङ्गुष्ठादिन्यासेन कूर्परादि-करतलान्तम् न्यसेत् ।

अथ ध्यानम् ।

अग्नीषोमौ पक्षौ । ॐ कारशक्तिं बिन्दुत्रिनेत्रं मुखं रुद्रः रुद्रो इन्द्राणी चरणौ । कालश्चाग्निश्च उभे पार्श्वे सोऽहं हंसः परमहंसो भानुकोटिसहस्रप्रकाशात् येनेदं व्याप्तम् ॥
इत्यनेन ध्यात्वा ततो वासनामयं पापपुरुषं कृष्णभीमम् इति वामकुक्षौ विचिन्त्य पूरकेण वायुबीजम् ।
ॐ यं हुं फट् इति षोडशवारं ध्यात्वा शोषयेत् ।
ॐ वं हुं फट् इति षोडशवारं पूरकेण ध्यात्वा प्लावयेत् !
ॐ रं हुं फट् इति कुम्भकेन चतुष्षष्टिवारं ध्यात्वा पापं दग्धमिति विचिन्त्य,
ॐ यं हुं फट् इति द्वात्रिंशद्वारं ध्यात्वा तेन वायुना
तद्भस्म रेचकेन दक्षिणनाड्या बहिर्निर्गतं विचिन्त्य—
ॐ वं हुं फट् इत्यमृतबीजं मस्तके ध्यात्वा अमृतधारासंजीविनीं विचिन्त्य—
ॐ लं हुं फट् इति पृथ्वीबीजेन तेन देहपिण्डं विचिन्त्य—

ॐ हं हुं फट् इत्याकाशबीजम्, तेन देहाकारानवयवान् ध्यात्वा हृदये च स्वजीवनकलां "ह्रीं सोऽहं हंसः" इति मन्त्रेण स्वदेहोपविष्टं ध्यात्वा— .

श्रीमहालक्ष्मीरूपा ब्रह्मणः प्रकृतिः । प्रकृतेर्महत् । महतोऽहंकारः । अहंकारादाकाशः । आकाशद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नाद्रेतः । रेतसः पुरुषः । इति क्रमाद्देहादिरूपेण परमात्मरूपेण श्रीमहालक्ष्मीरूपोऽहमिति ध्यायेत् ।

एतेभ्यः पञ्चमहाभूतेभ्यः सकाशात् स्वशरीरं तेजोमयं पुण्यात्मकं सर्वरूपार्थसाधनं देवताराधनं स्वपरामुत्पन्नमिति । उक्तं च–" आकाशाद्वायुरिति " श्रुतिः ।

॥ ततः प्राणप्रतिष्ठा । द्वाचत्वारिंशद्वारं पुटं पश्य ॥

## ॥ अजपा-गायत्रीसमर्पणं जपविधानं च ॥

पूर्वेद्युः सूर्योदयमारभ्य अद्य सूर्योदयपर्यन्तम् षट्शताधिकैकविंशतिसहस्रसंख्याकमुच्छ्वासनिश्वासात्मकमजपागायत्री-जपं मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धिराज्ञाब्रह्मरन्ध्रमण्डपस्थितेभ्यो गणेशब्रह्मविष्णुरुद्रजीवात्मपरमात्मगुरुभ्यो यथाभागं निवेदयामि ।

**षट्शतं तु गणेशस्य षट्सहस्रं प्रजापतेः ।**
**षट्सहस्रं महाविष्णोः षट्सहस्रं पिनाकिनः ॥**

**जीवात्मनः सहस्रं तु सहस्रं परमात्मनः ।**
**गुरोरपि सहस्रं तु सर्वं ब्रह्मार्पणं भवेत् ॥**

(१) मूलाधारमण्डपमध्ये चतुर्दलपद्मस्थिताय कुङ्कुमवर्णाय पुष्टिशक्तिसहिताय श्रीगणाधिपतये नमः । षट्शतमजपा गायत्रीं निवेदयामि ।

ॐ गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ॥
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥
तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥

(२) स्वाधिष्ठानमण्डपमध्ये षड्दलपद्मस्थिताय सिन्दूरवर्णाय सरस्वतीसमेताय श्रीब्रह्मणे नमः । षट्सहस्रमजपा-गायत्रीं निवेदयामि ।

ॐ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ॥
श्येनो गृध्राणां स्वधितिर्वनानाम् । सोमः पवित्रमत्येति रेभन् ॥

(३) मणिपूरकमण्डपमध्ये दशदलपद्मस्थिताय नीलवर्णाय लक्ष्मीसमेताय श्रीविष्णवे नमः ॥ षट्सहस्रमजपागायत्रीं निवेदयामि ।

ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥
नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ।

(४) अनाहतमण्डपमध्ये द्वादशदलपद्मस्थिताय हेमवर्णाय श्रीपार्वतीसहिताय शिवाय नमः । षट्सहस्रमजपागायत्रीं निवेदयामि ।

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ।
ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥
तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।

(५) विशुद्धिमण्डपमध्ये षोडशदलपद्मस्थिताय शुद्धस्फटिकसंकाशाय प्राणशक्तिसहिताय जीवात्मने नमः । सहस्रमजपागायत्रीं निवेदयामि ।

ॐ असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् ॥
ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्ति ॥
हंसहंसाय विद्महे परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् ॥

(६) आज्ञामण्डपमध्ये द्विदलपद्मस्थिताय विद्युद्वर्णाय इच्छाशक्तिसहिताय श्रीपरमात्मने नमः । सहस्रमजपागायत्रीं निवेदयामि ।

ॐ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥
हंसहंसाय विद्महे परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् ।

(७) ब्रह्मरन्ध्रे सहस्रदलमण्डपमध्ये सहस्रदलपद्मस्थिताय नानावर्णाय मोक्षशक्तिसहिताय श्रीगुरवे नमः । सहस्रमजपागायत्रीं निवेदयामि ।

ॐ नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा ।
तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ॥

हंसहंसाय परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् । परमेश्वराय विद्महे परतत्त्वाय धीमहि । तन्नो ब्रह्म प्रचोदयात् ।

अद्य सूर्योदयमारभ्य श्वः सूर्योदयपर्यन्तं अजपागायत्रीजपमहं करिष्ये ॥

अस्य श्री अजपागायत्रीमहामन्त्रस्य । परमहंसऋषिः । अव्यक्तगायत्री छन्दः । परमहंसो देवता । हं बीजम् । सः शक्तिः । सोऽहं कीलकम् । परमहंसजपागायत्रीप्रसादसिद्ध्यर्थे जपे विनियोगः । हंसहंसाय विद्महे परमहंसाय धीमहि । तन्नो हंसः प्रचोदयात् । इति न्यासम् ।

ध्यानम्– अग्नीषोमगरुद्वयं प्रणवकं बिन्दुत्रिनेत्रोज्ज्वलम् ।
भास्वद्रुद्रमुखं शिवाङ्घ्रियुगलं कालाग्निबाहुद्वयम् ॥
उद्यद्भास्करकोटिकोटिसदृशं हंसं जगद्व्यापकम् ।
नादब्रह्ममयं हृदम्बुजपुटे नीडे सदा भावये ॥
हंसो गणेशो विधिरेष हंसः ।
हंसो हरिः शम्भुमयोऽपि हंसः ।
जीवोपि हंसो गुरुरेव हंसः ।
आत्मापि हंसः परमात्महंसः ।

पञ्चपूजा–
हंसहंसाय विद्महे परमहंसाय धीमहि ।
तन्नो हंसः प्रचोदयात् ॥
हंसः इति शतवारं जपेन ॥

## ॥ परब्रह्मोपासनम् ॥

अस्य श्रीपरब्रह्ममहामन्त्रस्य । सदाशिवऋषिः । अनुष्टुप् छन्दः । सर्वान्तर्यामि निर्गुणं परमं ब्रह्म देवता । धर्मार्थकाममोक्षज्ञानवैराग्यसिद्ध्यर्थे जपे विनियोगः ।

ॐ अङ्गुष्ठाभ्यां नमः । एकम् अनामिकाभ्यां हुम् । सत् तर्जनीभ्यां स्वाहा । ब्रह्मकनिष्ठिकाभ्यां वौषट् । चित् मध्यमाभ्यां वषट् । ॐ सच्चिदेकं ब्रह्म करतलकरपृष्ठाभ्यां फट् ।

ध्यानम्– हृदयकमलमध्ये निर्विशेषं निरीहम् ।
हरिहरविधिवेद्यं योगिभिर्ध्यानगम्यम् ॥
जननमरणभीतिभ्रंशिसच्चित्स्वरूपम् ।
सकलभुवनबीजं ब्रह्मचैतन्यमीडे ।

जपविधानम्—

दक्षहस्तस्य मध्यमाऽनामिकाभ्यां वामनासापुटं धृत्वा साधकः अष्टमितं मूलं जपन् सन्, दक्षिणनासापुटेन वायु पूरयेत् । ततः वामनासापुटं अङ्गुष्ठेन धृत्वा द्वात्रिंशतावृत्या मूलं जपेत् । ततः षोडशधा मनुं जपन् सन् दक्षिणनासापुटेनैव शनैः शनैः वायुः त्यजेत् । पुनः वामनासापुटेन पूर्ववत् पूरककुम्भकरेचकं कुर्यात् । क्रमेणैवाकृष्टं निश्चलं विमुक्तश्च श्वासं विदध्यात् ।

पञ्चपूजा—

हृत्कमलमध्ये स्थितं चैतन्यं चेतनं ब्रह्माहमीडे, ध्यायामि इत्यर्थः ॥

॥ ब्रह्मार्पणमिति समर्पणम् ॥

## ।। परब्रह्मबाह्यपूजा ।।

उपस्थितानि द्रव्याणि गन्धपुष्पादिकानि च ।
वस्त्रालंकरणादीनि भक्ष्यपेयानि यानि च ॥१॥
मन्त्रेणानेन संशोध्य ध्यात्वा ब्रह्म सनातनम् ।
निमील्य नेत्रे मतिमान् अर्पयेत् परमात्मने ॥२॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥३॥
ततो नेत्रे समुन्मील्य जप्त्वा मूलं स्वशक्तितः ।
तज्जपं ब्रह्मसात् कृत्वा स्तोत्रं च कवचं वदेत् ॥४॥
स्तोत्रं शृणु महेशानि ब्रह्मणः परमात्मनः ।
यत् श्रुत्वा साधको देवि ब्रह्मसायुज्यमश्नुते ॥५॥
नमस्ते सते सर्वलोकाश्रयाय । नमस्ते चिते विश्वरूपात्मकाय ।
नमोऽद्वैततत्त्वाय मुक्तिप्रदाय । नमो ब्रह्मणे व्यापिने निर्गुणाय ॥६॥
त्वमेकं शरण्यं त्वमेकं वरेण्यम् । त्वमेकं जगत्कारणं विश्वरूपम् ।
त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ त्वमेकं परं निश्चलं निर्विकल्पम् ॥७॥
भयानां भयं भीषणं भीषणानाम् । गतिः प्राणिनां पावनं पावनानाम् ।
महोच्चैःपदानां नियन्तृत्वमेकम् । परेषां परं रक्षकं रक्षकाणाम् ॥८॥
परेश प्रभो सर्वरूपप्रकाशिन् । अनिर्देश्य सर्वेन्द्रियागम्यसत्य ।
अचिन्त्याक्षरव्यापकाव्यक्ततत्त्व । जगद्भासकाधीश पायादपायात् ॥९॥
तदेकं स्मरामस्तदेकं जपामः । तदेकं जगत्साक्षिरूपं नमामः ।
तदेकं निधानं निरालम्बमीशम् । भवाम्भोधिपोतं शरण्यं व्रजामः ॥१०॥
पञ्चरत्नमिदं स्तोत्रं ब्रह्मणः परमात्मनः ।
यः पठेत् प्रयतो भूत्वा ब्रह्मसायुज्यमाप्नुयात् ॥११॥
प्रदोषेऽतः पठेन्नित्यं सोमवारे विशेषतः ।
श्रावयेद्बोधयेत् प्राज्ञो ब्रह्मनिष्ठान् स्वबान्धवान् ॥१२॥

## ।। अथ परब्रह्मकवचम् ।।

अस्य श्री-परब्रह्मकवचस्य चार्वङ्गि-सदाशिवः ऋषिः अनुष्टुप् छन्दः ।

कवचं शृणु चार्वङ्गि जगन्मङ्गलनामकम् ।
पठनाद्धारणाद्यस्य ब्रह्मज्ञो जायते ध्रुवम् ॥

परमात्मा शिरः पातु हृदयं पातु महेश्वरः ।
कण्ठं पातु जगत्पालः वदनं सर्वदृग्विभुः ॥
करौ मे पातु विश्वात्मा पादौ रक्षतु चिन्मयः ।
सर्वाङ्गं सर्वदा पातु परं ब्रह्म सनातनम् ॥
यः पठेद्ब्रह्मकवचं ऋषिन्यासपुरःसरम् ।
स ब्रह्मज्ञानमासाद्य साक्षाद्ब्रह्ममयो भवेत् ॥
भूर्जे विलिख्य गुटिकां स्वर्णस्थां धारयेद्यदि ।
कण्ठे वा दक्षिणे बाहौ सर्वसिद्धीश्वरो भवेत् ॥
इत्येतत्परब्रह्मकवचं ते प्रकाशितम् ।
दद्यात् प्रियाय शिष्याय गुरुभक्ताय धीमते ॥
पठित्वा स्तोत्रकवचं प्रणमेत् साधकाग्रणीः ॥
नमस्ते परमं ब्रह्म नमस्ते परमात्मने ।
निर्गुणाय नमस्तुभ्यं सद्रूपाय नमो नमः ॥

ब्रह्मगायत्री :–परमेश्वराय विद्महे परतत्त्वाय धीमहि । तन्नो ब्रह्म प्रचोदयात् ॥

[ परतत्त्वमाप्तुं यत् तद्ब्रह्म वयं मन्यामहे चिन्तयामश्चेति । अस्मान् प्रेरयेत् । धर्मार्थकाममोक्षेषु विनियोजयेत् इत्यर्थः । ]

इयं श्रीब्रह्मगायत्री चतुर्वर्गप्रदायिनी ।
पूजनं यजनं चैव स्नानं पानं च भोजनम् ॥
यद्यत्कर्म प्रकुर्वीत ब्रह्ममन्त्रेण साधयेत् ।
ब्राह्मे मुहूर्ते चोत्थाय प्रणम्य ब्रह्मदं गुरुम् ॥
ध्यात्वा च परमं ब्रह्म यथाशक्तिमनुस्मरेत् ।
पूर्ववत् प्रणमेद् ब्रह्म प्रातःकृत्यमिदं स्मृतम् ॥
द्वात्रिंशता सहस्रेण जपेनास्य पुरस्क्रिया ।
तद्दशांशेन हवनं तर्पणं तद्दशांशतः ॥
स चैनं तद्दशांशेन तद्दशांशेन सुन्दरि ।
ब्राह्मणान् योजयेन्मन्त्री पुरश्चरणकर्मणि ॥
भक्ष्याभक्ष्यविचारोऽत्र त्याज्यं ग्राह्यं न विद्यते ।
न कालशुद्धिनियमो न वा स्थाननिरूपणम् ॥
अमुक्तो वापि मुक्तो वा स्नातो वाऽस्नात एव वा ।
साधयेत् परमं मन्त्रं स्वेच्छाचारेण साधकः ॥

विनाऽऽयासं विना क्लेशं स्तोत्रं च कवचं विना ।
विना न्यासं विना मुद्रां विना सेतुं वरानने ॥
विना चौरगणेशादि जपं च कुल्लुकां विना ।
अकस्मात् परब्रह्मसाक्षात्कारो भवेद्ध्रुवम् ॥
साधने ब्रह्ममन्त्रस्य भावशुद्धिर्विधीयते ।
सर्वं ब्रह्ममयं देवि भावयेत् ब्रह्मसाधकः ॥
न चाऽस्य प्रत्यवायोऽस्ति नाङ्गवैगुण्यमेव च ।
महामनाः साधने तु व्यङ्गं साङ्गायते ध्रुवम् ॥
इत्यादि त्रिपञ्चाशतोत्तरशता श्लोका वर्तन्ते ।

इति श्रीमहानिर्वाणतन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णयसारे श्रीमदाद्यासदाशिवसंवादे जीवनिस्तारोपायप्रश्ने परब्रह्मोपदेशकथनं नाम तृतीयोल्लासः ॥

## ॥ अथप्राणप्रतिष्ठा ॥

श्रीः ॥ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य । ब्रह्माविष्णुमहेश्वरा ऋषयः । ऋग्यजुःसामाथर्वाणि छन्दांसि । परा प्राणशक्तिर्देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । सर्वाङ्गे स्वशरीरे मूर्तौ वा प्राणप्रतिष्ठापने विनियोगः । तत्र ऋष्यादिन्यासः—

ब्रह्माविष्णुमहेश्वरऋषिभ्यो नमः । शिरसि । ऋग्यजुःसामाथर्वछन्दोभ्यो नमः । मुखे । पराप्राणशक्तिदेवतायै नमः । हृदये । आं बीजाय नमः । गुह्ये । ह्रीं शक्त्यै नमः । पादयोः । क्रों कीलकाय नमः । सर्वाङ्गे । प्राणप्रतिष्ठापने विनियोगः । ॐ आं ह्रीं क्रों अं कं खं गं घं ङं आं ॐ क्रों ह्रीं आं पृथिव्यप्तेजोवाय्वाकाशात्मने अङ्गुष्ठाभ्यां नमः हृदयाय नमः ।

ॐ आं ह्रीं क्रों इं चं छं जं झं ञं ईं क्रों ह्रीं आं शब्दस्पर्शरूपरसगन्धात्मने तर्जनीभ्यां नमः शिरसे स्वाहा ।

ॐ आं ह्रीं क्रों उं टं ठं डं ढं णं ऊं क्रों ह्रीं आं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने मध्यमाभ्यां नमः शिखायै वषट् ।

ॐ आं ह्रीं क्रो एं तं थं दं धं नं ऐं क्रों ह्रीं आं वाक्पाणिपादपायूपस्थात्मने अनामिकाभ्यां नमः कवचाय हुम् ।

ॐ आं ह्रीं क्रों ओं पं फं बं भं मं औं क्रों ह्रीं आं वक्तव्यादानगमनविसर्गानन्दात्मने कनिष्ठिकाभ्यां नमः नेत्रत्रयाय वौषट् ।

ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं मनोबुद्ध्यहंकारविज्ञानात्मने करतलकरपृष्ठाभ्यां नमः अस्त्राय फट् ।

एवं हृदयादि ।

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः ।
पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्चबाणान् ।

**बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या ।**
**देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ।**

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

इति जप्त्वा

ॐ लं पृथिव्यात्मकं प्राणशक्त्यै गन्धं कल्पयामि ।
ॐ हं आकाशात्मकं प्राणशक्त्यै पुष्पं कल्पयामि ।
ॐ यं वाय्वात्मकं प्राणशक्त्यै पुष्पं कल्पयामि ।
ॐ रं वह्न्यात्मकं प्राणशक्त्यै धूपं दर्शयामि ।
ॐ वं अमृतात्मकं प्राणशक्त्यै नैवेद्यं कल्पयामि ।
ॐ सं सर्वात्मकान् प्राणशक्त्यै सर्वोपचारान् कल्पयामि ।

इत्येवं पञ्चपूजां कृत्वा

ॐ आं ह्री क्रों अं यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं हंसः सोऽहम् । मम प्राणा इह प्राणाः ।
ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं हंसः सोऽहम् । मम जीव इह स्थितः ।
ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं हंसः सोऽहम् । मम सर्वेन्द्रियाणि ।
ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं हंसः सोऽहम् । मम वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य स्वस्तये सुखेन सुचिरं तिष्ठन्तु स्वाहा इति शिरसि हृदि वा करं दत्वा त्रिः सकृद्वा जप्त्वा ॥

ॐ असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम् ।
ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृळया नः स्वस्तिः ॥

गर्भाधानादिपञ्चदशसंस्कारसिद्ध्यर्थं पञ्चदशप्रणवावृत्तीः करिष्ये । ॐकारं पञ्चदशवारं जपेत्

॥ इति प्राणप्रतिष्ठा ॥

## ॥ अन्तर्मातृकान्यासः ॥

अस्य श्रीअन्तर्मातृकासरस्वतीमन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । अन्तर्मातृका सरस्वतीदेवता । हलो बीजानि । स्वराः शक्तयः । बिन्दवः कीलकम् । मातृकान्यासे विनियोगः ॥

तत्र ऋष्यादिन्यासः ॥

ब्रह्मर्षये नमः शिरसि । गायत्रीछन्दसे नमो मुखे । अन्तर्मातृकासरस्वतीदेवतायै नमो हृदये । हल्बीजेभ्यो नमो गुह्ये । स्वरशक्तिभ्यो नमः पादयोः । बिन्दुकीलकाय नमः सर्वाङ्गे । इति ॥

ॐ अं कं खं गं घं ङं आम् अङ्गुष्ठाभ्यां नमः ।
ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः ।
ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः ।
ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः ।
ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः ।
ॐ अं यं रं लं वं शं षं सं हं क्षं अः करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिन्यासः ।

**ध्यानम्–** आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे ।
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के ।
वासान्ते बालमध्ये ड-फ-क-ठसहिते कण्ठदेशे स्वराणाम् ।
हंसं तत्त्वार्थयुक्तं सकलबुधनुतं वर्णचक्रं नमामि ॥

ॐ च॒त्वारि॒ वाक् परि॑मिता प॒दानि॒ तानि॑ विदुर्ब्राह्म॒णा ये म॑नी॒षिण॑ ।
गुहा॒ त्रीणि॒ निहि॑ता॒ नेङ्ग॑यन्ति तु॒रीयं॑ वा॒चो म॑नु॒ष्या॑ वदन्ति ॥

अग्रे सर्वत्रादौ प्रणवः अन्ते हंसः सोऽहम् एवं सर्वत्र। यथा–
ॐ अं नमः हंसः सोऽहम् । आं नमः हंसः सोऽहम् ।

इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः । एतांस्तत्त्वार्थयुक्तान् षोडशस्वरान् कण्ठस्थानपद्मे षोडशदलेषु विन्यसामि ।

कं नमः खं गं घं ङं चं छं जं झं ञं टं ठं एतांस्तत्त्वार्थयुक्तान् द्वादशवर्णान् हृदयस्थानगतपद्मे द्वादशदलेषु विन्यसामि ।

डं ढं णं तं थं दं धं नं पं फं एतांस्तत्त्वार्थयुक्तान् दशवर्णान् नाभिस्थानगतपद्मे दशदलेषु विन्यसामि ।
बं भं मं यं रं लं एतांस्तत्त्वार्थमध्यान् षड्वर्णान् लिंगस्थानगतपद्मे षड्दलेषु विन्यसामि ।
वं शं षं सं एतांस्तत्त्वार्थयुक्तान् चतुर्वर्णान् आधारस्थानगतपद्मे चतुर्दलेषु विन्यसामि ।
हं क्षं एतत्तत्त्वार्थयुक्तं वर्णद्वयं भ्रूमध्यगतपद्मे द्विदलयोर्न्यसामि ।

॥ इत्यन्तर्मातृकान्यासः ॥

## ॥ अथ बहिर्मातृकान्यासः ॥

अस्य श्रीबहिर्मातृकासरस्वतीमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । बहिर्मातृका सरस्वती देवता । हलो बीजानि । स्वराः शक्तयः । बिन्दवः कीलकम् । बहिर्मातृकान्यासे विनियोगः ॥

तत्र ऋष्यादिन्यासः ।

ब्रह्मर्षये नमः शिरसि । गायत्रीछन्दसे नमो मुखे । बहिर्मातृकासरस्वतीदेवतायै नमो हृदि । हल्बीजेभ्यो नमो गुह्ये । स्वरशक्तिभ्यो नमः पादयोः । बिन्दुकीलकाय नमः सर्वाङ्गे । इति बहिर्मातृकान्यासे विनियोगः ।

ॐ अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः ।
ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः ।
ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः ।
ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः ।
ॐ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः ।
ॐ अं यं रं लं वं शं षं सं हं क्षं अः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः ।

**अथ ध्यानम् ।**

**पञ्चाशद्वर्णभेदैर्विहितवदनदोः पादहृत्कुक्षिवक्षो ।**
**देशान्भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।**
**अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थाम् ।**
**अच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥**

इति ध्यानम् ।

ॐ चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

ॐ अं नमः शिरसि । ॐ आं नमो मुखे । ॐ इं नमो दक्षिणनेत्रे । ॐ ईं नमो वामनेत्रे । ॐ उं नमो दक्षिणकर्णे । ॐ ऊं नमो वामकर्णे । ॐ ऋं नमो दक्षनासापुटे । ॐ ॠं नमो वामनासापुटे । ॐ ऌं नमो दक्षकपोले । ॐ ॡं नमो वामकपोले । ॐ एं नमो ऊर्ध्वोष्ठे । ॐ ऐं नमो अधरोष्ठे । ॐ ओं नमो ऊर्ध्वदन्तपङ्क्तौ । ॐ औं नमो अधोदन्तपङ्क्तौ ।

ॐ अं नमो जिह्वायाम् । ॐ अः नमः कण्ठे ।
ॐ कं खं गं घं ङं दक्षिणहस्तसन्ध्यग्रेषु ॥
ॐ चं छं जं झं ञं वामहस्तसन्ध्यग्रेषु ॥
ॐ टं ठं डं ढं णं दक्षिणपादसन्ध्यग्रेषु ॥
ॐ तं थं दं धं नं वामपादसन्ध्यग्रेषु ॥

ॐ पं नमो दक्षिणकुक्षौ । ॐ फं नमो वामकुक्षौ । ॐ बं नमः पृष्ठे । ॐ भं नमो नाभौ । ॐ मं नमो उदरे । ॐ यं नमो हृदि । ॐ रं नमः कण्ठे । ॐ लं नमः ककुदि । ॐ वं नमः स्कन्धयोः । ॐ शं नमः हृदादिदक्षिणकरे । ॐ षं नमः हृदादिवामकरे । ॐ सं नमः हृदादिदक्षिणपादे । ॐ हं नपः हृदादिवामपादे । ॐ ळं क्षं नमो व्यापकं ॥

॥ इति बहिर्मातृकान्यासः ॥

## ॥ अथ पुरुषसूक्तविधानपूजा ॥

( बृहत्पराशरसंहितायाम् )

यथार्चा क्रियते तस्य स्वदेहे चिन्तयेत्तथा ।
आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् ॥
यथा देवे तथा देहे न्यासं कुर्याद्विधानतः ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चैव तृतीयया ॥
अर्घ्यश्चतुर्थ्या दातव्यः पञ्चम्याऽचमनं तथा ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकम् ॥
यज्ञोपवीतं चाष्टम्या नवम्या गन्धमेव च ।
पुष्पं देयं दशम्या तु एकादश्या च धूपकम् ॥
द्वादश्या दीपकं दद्यात् त्रयोदश्या निवेदनम् ।
चतुर्दश्या नमस्कारं पञ्चदश्या प्रदक्षिणाः ॥
षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् ।
तच्च सर्वं जपेद् भूयः पौरुषं सूक्तमेव च ॥

॥ इति पुरुषसूक्तविधानपूजा ॥

## ॥ अथ श्रीपुरुषसूक्तन्यासाः ॥

अस्य श्रीपुरुषसूक्तन्यासमहामन्त्रस्य अन्तर्यामी भगवान् नारायण ऋषिः । आद्यस्य पञ्चदशर्चस्य अनुष्टुप् छन्दः, अन्त्या त्रिष्टुप् । श्रीभूमिसमेतश्रीमहाविष्णुर्देवता । पुरुष एवेति बीजम् । नान्यः पन्था इति शक्तिः । एतावानस्येति कीलकम् । श्रीप्रीत्यर्थे पुरुषसूक्तन्यासमहामन्त्रजपे विनियोगः ।

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्त धामभिः ।
ॐ भूः पुरुषाय अङ्गुष्ठाभ्यां नमः ।
इदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम् ।
समूढमस्य पांसुरे ।
ॐ भुवः महापुरुषाय तर्जनीभ्यां नमः ।
त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ।
ॐ सुवः ब्रह्मपुरुषाय मध्यमाभ्यां नमः ।
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे ।
इन्द्रस्य युज्यः सखा ।

**ॐ महः विष्णुपुरुषाय अनामिकाभ्यां नमः ।**
तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ।
**ॐ जनः रुद्रपुरुषाय कनिष्ठिकाभ्यां नमः ।**
तद् विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ।
**ॐ तपः सत्यं सर्वपुरुषाय करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि ।**

॥ इति श्रीपुरुषसूक्तन्यासाः ॥

## ॥ अथ श्रीपुरुषसूक्तन्यासः ॥

सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य, नारायणपुरुषोऽनुष्टुबन्त्या त्रिष्टुप् छन्दः ।

ॐ सहस्रशीर्षा......दशाङ्गुलम् । वामकरे ।
ॐ पुरुष एवेदं......नातिरोहति । दक्षिणकरे ।
ॐ एतावानस्य......अमृतं दिवि । वामपादे ।
ॐ त्रिपादूर्ध्व......साशनानशने अभि । दक्षिणपादे ।
ॐ तस्माद्विराड......भूमिमथो पुरः । वामजानुनि ।
ॐ यत्पुरुषेण......शरद्धविः । दक्षिणजानुनि ।
ॐ तं यज्ञं... ...ऋषयश्च ये । वामकट्याम् ।
ॐ तस्माद्यज्ञात्......ग्राम्याश्च ये । दक्षिणकट्याम् ।
ॐ तस्माद्यज्ञात्... ...अजायत । नाभ्याम् ।
ॐ तस्मादश्वा......अजावयः । हृदये ।
ॐ यत्पुरुषं... ...पादावुच्येते । कण्ठे ।
ॐ ब्राह्मणोऽस्य... ...शूद्रो अजायत । वामभुजे ।
ॐ चन्द्रमा......वायुरजायत । दक्षभुजे ।
ॐ नाभ्या आसीत्......अकल्पयन् । मुखे ।
ॐ सप्तास्यासन्... ...पुरुषं पशुम् । नेत्रयोः ।
ॐ यज्ञेन यज्ञं... ...सन्ति देवाः । शिरसि ।

॥ इति पुरुषसूक्तन्यासः ॥

## ॥ अथ पञ्चाङ्गन्यासः ॥

ॐ ब्राह्मणोऽस्य......शूद्रो अजायत । हृदयाय नमः ।
ॐ चन्द्रमा......वायुरजायत । शिरसे स्वाहा ।
ॐ नाभ्या आसीत्... ...अकल्पयन् । शिखायै वषट् ।

ॐ सप्तास्यासन्......पुरुषं पशुम्। कवचाय हुम्।
ॐ यज्ञेन यज्ञ......सन्ति देवाः। अस्त्राय फट्।

॥ इति पञ्चाङ्गन्यासः ॥

ध्यानम्।

**गोक्षीराभं पुण्डरीकायताक्षं चक्राब्जाभ्यां शङ्खकौमोदकीभ्याम्।**
**श्रीभूमिभ्यामर्चितं योगपीठे ध्यायेद्देवं पूजयेत् पौरुषेण॥**

इति पञ्चपूजा।

## ॥ अथ पुरुषसूक्तम् ॥

(तैत्तिरीयशाखानुसारि)

सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वा। अत्यतिष्ठद्दशाङ्गुलम्॥ १॥
पुरुष एवेदꣳ सर्वम्। यद्भूतं यच्च भव्यम्।
उतामृतत्वस्येशानः। यदन्नेनातिरोहति॥ २॥
एतावानस्य महिमा। अतो ज्यायाꣳश्च पूरुषः।
पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि॥ ३॥
त्रिपादूर्ध्व उदैत् पुरुषः। पादोऽस्येहाभवात् पुनः।
ततो विश्वङ्व्यक्रामत्। साशनानशने अभि॥ ४॥
तस्माद्विराडजायत। विराजो अधि पूरुषः।
स जातो अत्यरिच्यत। पश्चाद्भूमिमथो पुरः॥ ५॥
यत् पुरुषेण हविषा। देवा यज्ञमतन्वत।
वसन्तो अस्यासीदाज्यम्। ग्रीष्म इध्मः शरद्धविः॥ ६॥
सप्तास्यासन् परिधयः। त्रिःसप्त समिधः कृताः।
देवा यद्यज्ञं तन्वानाः। अबध्नन् पुरुषं पशुम्॥ ७॥
तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥ ८॥
तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।
पशूꣳस्ताꣳश्चक्रे वायव्यान्। आरण्यान् ग्राम्याश्च ये॥ ९॥

तस्माद्यज्ञात् सर्वहुतः । ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ १० ॥
तस्मादश्वा अजायन्त । ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः ॥ ११ ॥
यत् पुरुषं व्यदधुः । कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते ॥ १२ ॥
ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः । पद्भ्यां शूद्रो अजायत ॥ १३ ॥
चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥ १४ ॥
नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकां अकल्पयन् ॥ १५ ॥
वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन् यदाऽऽस्ते ॥१६॥
धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥१७॥
यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥१८॥

॥ इति पुरुषसूक्तम् ॥

## पुरुषसूक्तस्य अङ्गन्यासाः पूजा च

| अङ्गन्यासाः | पूजा |
|---|---|
| १ वामहस्ते | आवाहनम् |
| २ दक्षहस्ते | आसनम् |
| ३ वामपादे | पाद्यम् |
| ४ दक्षपादे | अर्घ्यम् |
| ५ वामजानुनि | आचमनम् |
| ६ दक्षजानुनि | स्नानम् |
| ७ मर्मे | वस्त्रम् |

| अङ्गन्यासाः | पूजा |
|---|---|
| ८ नाभौ | उपवीतम् |
| ९ हृदये | गन्धः |
| १० कण्ठे | अक्षताः |
| ११ वामभुजे | पुष्पम् |
| १२ दक्षभुजे | धूपः |
| १३ मुखे | दीपः |
| १४ वामश्रोत्रे | नैवेद्यः |
| १५ दक्षश्रोत्रे | ताम्बूलम् |
| १६ वामनेत्रे | नीराजनम् |
| १७ दक्षनेत्रे | प्रदक्षिणाः |
| १८ शिरसि | नमस्काराः सर्वोपचार पूजा |

## ॥ अथ षोडशोपचारपूजा ॥

षोडशोपचाराः ।

( १ ) आवाहनम् ( २ ) आसनम् ( ३ ) पाद्यम् ( ४ ) अर्घ्यम् ( ५ ) आचमनीयम् ( ६ ) स्नानम् ( ७ ) वस्त्रम् ( ८ ) यज्ञोपवीतम् ( ९ ) गन्धः ( १० ) पुष्पाणि ( ११ ) धूपः ( १२ ) दीपः ( १३ ) नैवेद्यम् ( १४ ) नमस्कारः ( १५ ) प्रदक्षिणाः ( १६ ) पुष्पाञ्जलिः

**स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं तथा ।**

चकाराद्यज्ञोपवीतान्तेऽपि दद्यात् । तथा च ताम्बूलं दक्षिणां नीराजनं च कुर्यात् ।

**स्नाने धूपे च दीपे च घण्टादेः नादमाचरेत् ।**

॥ इति षोडशोपचारपूजा ॥

## ॥ अथ ऋग्वेदोक्तपुरुषसूक्तत्रिविधन्यासाः ॥

| सूक्तऋक् | संहारः | सृष्टिः | स्थितिः |
|---|---|---|---|
| ॐ सहस्रशीर्षा......दशाङ्गुलम् । | वामकरे । | शिरसि । | नाभौ । |
| ॐ पुरुष एवेदं......नातिरोहति । | दक्षिणकरे । | अक्ष्णोः । | दक्षिणोरौ । |
| ॐ एतावानस्य......अमृतं दिवि । | वामचरणे । | वदने । | वामोरौ । |
| ॐ त्रिपादूर्ध्व......साशनानशने अभि । | दक्षिणचरणे । | दक्षांसे । | दक्षिणजानुनि । |
| ॐ तस्माद्विराड......भूमिमथो पुरः । | वामजानुनि । | वामांसे । | वामजानुनि । |
| ॐ यत्पुरुषेण......शरद्धविः । | दक्षिणजानुनि । | कण्ठे । | दक्षिणचरणे । |

| सूक्तऋक् | संहारः | सृष्टिः | स्थितिः |
|---|---|---|---|
| ॐ तं यज्ञं......ऋषयश्च ये । | वामोरौ । | हृदये । | वामचरणे । |
| ॐ तस्माद्यज्ञात्......ग्राम्याश्च ये । | दक्षिणोरौ । | नाभौ | दक्षिणकरे । |
| ॐ तस्माद्यज्ञात्......अजायत । | नाभौ । | दक्षिणोरौ । | वामकरे । |
| ॐ तस्मादश्वा......अजावयः । | हृदये । | वामोरौ । | शिरसि । |
| ॐ यत्पुरुषं......पादावुच्येते । | कण्ठे । | दक्षिणजानुनि । | अक्ष्णोः । |
| ब्राह्मणोऽस्य......अजायत | वामांसे | वामजानुनि | वदने |
| चन्द्रमा......चक्षुरजायत | दक्षांसे | दक्षचरणे | दक्षांसे |
| नाभ्या आसीत्... अकल्पयन् | वदने | वामचरणे | वामांसे |
| सप्तास्यासन्.......पुरुषं पशुम् | अक्ष्णोः | दक्षकरे | कण्ठे |
| यज्ञेन यज्ञं...... सन्ति देवाः | शिरसि | वामकरे | हृदये |

## ।। अथ श्रीसूक्तषडङ्गन्यासः ।।

प्रथमं बीजसहितेन प्रणवेन त्रिः करौ संमृज्य । ॐ हिरण्यवर्णाम्, अङ्गुष्ठाभ्यां नमः । ॐ सुवर्णायै, तर्जनीभ्य नमः । ॐ रजतस्रजां मध्यमाभ्यां नमः । ॐ चन्द्रां हिरण्मयीम्, अनामिकाभ्यां नमः । ॐ लक्ष्मीं कनिष्ठिकाभ्यां नमः । ॐ जातवेदो म आवह करतलकरपृष्ठाभ्यां नमः । इति ।

।। इति श्रीसूक्तषडङ्गन्यासः ।।

## ।। अथ श्रीसूक्तन्यासः ।।

हिरण्यवर्णामिति पञ्चदशर्चस्य सूक्तस्य आनन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः । श्रीरग्निश्चेत्युभे देवते आद्यास्तिस्रोऽनुष्टुभः, चतुर्थी बृहती, पञ्चमीषष्ठ्यौ त्रिष्टुभौ, ततोऽष्टावनुष्टुभः, अन्त्या प्रस्तारपङ्क्तिः, छन्दः बीजानि स्वराः शक्तयः, बिन्दवः कीलकम् । श्रीसूक्तन्यासे विनियोगः ।

**ध्यानम्–** **अरुणकमलसंस्था तद्रजःपुञ्जवर्णा**
**करकमलधृतेष्टाभीतियुग्माम्बुजा च ।**
**मणिमुकुटविचित्रालंकृताकल्पजातै–**
**र्भवतु भुवनमाता संततं श्रीः श्रियै वः ।।**

लं इत्यादि पञ्चपूजा ।

हरिः ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ।। मूर्ध्नि ।

ॐ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ नेत्रयोः ।
ॐ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥ कर्णयोः ।
ॐ कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ नासिकायाम् ।
ॐ चन्द्रां प्रभासां यशसाज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ मुखे ।
ॐ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरायाश्चबाह्या अलक्ष्मीः ॥ कण्ठे ।
ॐ उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ बाह्वोः ।
ॐ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ हृदये ।
ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ नाभौ ।
ॐ मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ गुह्ये ।
ॐ कर्दमेन प्रजाभूता मयि संभव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ अपाने ।
ॐ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥ ऊर्वोः ।
ॐ आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ जान्वोः ।
ॐ आर्द्रां यष्करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ जङ्घयोः ।

ॐ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ।। पादयोः।

ॐ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ।। सर्वाङ्गे ।

।। इति श्रीसूक्तन्यासः ।।

## श्रीसूक्तस्य अङ्गन्यासाः पूजा च

| न्यासाः | पूजा |
|---|---|
| १ शिरसि | आवाहनम् |
| २ नेत्रयोः | आसनम् |
| ३ कर्णयोः | पाद्यम् |
| ४ नासि | अर्घ्यम् |
| ५ मुखे | आचमनम् |
| ६ कण्ठे | स्नानम् |
| ७ भुजयोः | वस्त्रम् |
| ८ हृदये | उपवीतम् |
| ९ नाभौ | गन्धः |
| १० मर्मे | अक्षताः |
| ११ गुदे | पुष्पम् |
| १२ उरौ | धूपः |
| १३ जान्वोः | दीपः |
| १४ जङ्घयोः | नैवेद्यः |
| १५ पादयोः | ताम्बूलम् |
| १६ सर्वाङ्गे | नीराञ्जनं, प्रदक्षिणाः नमस्काराः |

## ।। अथ यन्त्रलक्षणम् ।।

बीजं प्राणं च शक्तिं च दृष्टिश्रोत्राधिकं ततः ।
गायत्रीयन्त्रमन्त्रश्च प्राणस्थापनमेव च ।।
भूतदिक्पालबीजानि यन्त्रस्याङ्गानि वै दश ।।
एकरेखास्तु दारिद्र्यं द्विरेखा धनसंपदम् ।

त्रिरेखा मोक्षदायिन्यो इत्थं यन्त्रस्य लक्षणम् ॥
सीसं षाण्मासवीर्यं तु ताम्रं वत्सरमेव च ।
त्रिलोहं वत्सरार्धं तु रजतं तु त्रिवत्सरम् ॥
भूर्जपत्रं चतुर्वर्षं पञ्चार्धं पञ्चलोहकम् ।
दशवर्षं तु काशीसं कनकं यावदायुषम् ॥

प्रणवसहितमूलमन्त्रः, एकपञ्चाशन्मातृकाश्च– बीजम् । ‘ सः ’ इति प्राणः । ‘ ह्रीम् ’ इति शक्तिः । ‘ इं, ईं ’ चेति दृष्टिः । उं ऊं चेति श्रोत्रम् । तत्तन्मन्त्रस्य देवता गायत्री मन्त्रगायत्री च “ मन्त्रराजाय विद्महे महामन्त्राय धीमहि तन्नो मन्त्रः प्रचोदयात् ” इति । ‘ यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयात् ’ इति यन्त्रगायत्री । प्राणप्रतिष्ठेति प्राणस्थापनम् । स्त्र्लूं वा स्त्रूं ’ इति जिह्वा । ‘ लं वं रं यं हं ’ इति महाभूतबीजानि । ‘ लं रं हं पं वं यं सं शं खं ह्रीं ’ इति दशदिक्पालबीजानि । ‘ रं क्षं मं रं यं औं ऊं ’ इति मनोन्मणिबीजानि ।

‘ रं ’ इति अग्निः । ‘ क्षं ’ इति ब्रह्मा । ‘ मं ’ इति वृषः । रं इति निद्रा । यं इति पुनरश्विगतम् । औं इति शक्रः । उं इति चन्द्रः । म्र्यों इति चिन्तामणिः । (मन्त्रमहोदधिः) । श्रीं ह्रीं रलूं स्लूं म्लूं न्लूं प्लूं ह्रीं श्रीं इति रत्नेश्वरी-मन्त्रः । ( दुर्गोपासना चत्वारिंशत् पुटे ).

**परावीजम् ।** **अनन्तं चन्द्रभुवनमिन्दुबिन्दुयुगान्वितम् ।**
**परावीजमिति ज्ञेयं नाल्पस्य तपसः फलम् ॥**

( टिप्पणी— क्वचित् यन्त्रेषु मनोन्मणिरत्नेश्वरिचिन्तामणिश्चेति बीजान्यावश्यकानि ।)

## ।। अथ श्रीचक्रलेखनविधिः ।।

व्यासे देवीकृते तत्तमब्लविगते चाषभागे स्वसूत्रान् । कृत्वापोरींदलान्ते गमशल्भमितो वातस्तोयभागान् ।
दन्यांशान् मे प्रमार्ज्य प्रथमतु वरुणाग्राणि सूत्रद्वयानि । प्राक्पातरोधिगानः विदमधितुधिगगं दिव्यसूनुश्चिरप्राक् ।
अष्टादशमर्माणि चतुर्विंशति सन्धयः ।

त्रिरेखासंयोगो मर्मः । द्विरेखासंयोगः सन्धिः । वृत्तं निर्माय षट् षट् पञ्च त्रीणि त्रीणि चत्वारः त्रीणि षट् षट् षट् । अङ्गुलप्रमाणतः ।

नव रेखाः निर्माय, प्रथमनवमयोः अङ्गुलत्रयम् । द्वितीयाष्टमयोः चतुरङ्गुलम् । तृतीयसप्तमयोः अङ्गुलपञ्चकम् । चतुर्थषष्ठयोः षोडशभागम् । पञ्चमे एकोनविंशतिभागान् प्रमाद्य, पार्श्वयोः प्रथमम्, षष्ठे द्वितीये नवमं तृतीये वृत्तम्, चतुर्थे अष्टमम्, पञ्चमे सप्तमम्, षष्ठे द्वितीयम्, सप्तमे वृत्तम्, अष्टमे प्रथमं, नवमे तृतीयं, पञ्चमषष्ठयोर्मध्ये बिन्दुं निर्माय, वृत्ताद्बहिः एकादशाङ्गुलप्रमाणतः अष्टदलम्, पुनर्वृत्तं, तदुपरि नवाङ्गुलप्रमाणतः षोडशपत्रम्, तदुपरि द्वयाङ्गुलप्रमाणं वृत्तत्रयम्, तदुपरि द्वयाङ्गुलिप्रमाणतः भूपुरत्रयं च विलिखेत् ।

॥ इति श्रीचक्रलेखनविधिः ॥

## ।। यन्त्रशुद्धिः ।।

( देवीरहस्ये पञ्चविंशतितमे पटले )

सौवर्णं राजतं ताम्रं स्फाटिकं रौप्यिकं तथा ।
कापालिकं च पाशासं श्रीचक्रं वैष्णवाश्मिकम् ।।

एतेष्वष्टसु दिव्येषु योगपीठेषु पार्वति ।
विभावयेन्महायन्त्रं दैवं भौमं च भाविकम् ।।

ऊर्ध्वरेखं अधोरेखं तृतीयं गन्धाचित्रितम् ।
त्रिविधं यन्त्रमीशानि स्वसिद्धं सिद्धसाधकम् ।।

सहस्राभं च पाशासं शोधयेदुत्तरायणे ।
पञ्चमे पञ्चमे देवि ततः सिद्धिप्रदं भवेत् ।।

शराङ्कुशं वैष्णवाश्मं शोधयेद्दक्षिणायने ।
चतुर्थे च चतुर्थे च ततः सिद्धिमवाप्नुयात् ।।

सौवर्णं स्फाटिकं यन्त्रं वर्षान्ते शोधयेत्सुधीः ।
राजतं ताम्रिकं यन्त्रं षण्मासान्ते च शोधयेत् ।।

एवं मयोक्तकालेषु शोधयेत् यन्त्रमीश्वरि ।
सिद्धये कौलिको देवि यथावद्वर्ण्यते मया ।।

यन्त्रशोधनमन्त्रस्य ऋषिः प्रोक्तो मया शिवः ।
त्रिष्टुप् छन्द इति ख्यातं पराशक्तिश्च देवता ।।

रमा बीजं परा शक्तिः कामः कीलकमुच्यते ।
श्रीचक्रशुद्धिसिध्यर्थं विनियोगः प्रकीर्तितः ।।

मुन्यादिना चरेन्न्यासं करन्यासं षडङ्गकम् ।
ततो विष्टरशुद्धिं च प्राणार्पणविधिं चरेत् ।।

इष्टर्षिदेवतान्यासं कराङ्गन्यासमाचरेत् ।
विधाय मातृकान्यासं लयाङ्गन्याससंयुतम् ।।

अर्धनारीश्वरन्यासं षोढा न्यासमतः परम् ।
मूलत्रिखण्डकं न्यासं कृत्वा प्राणचयं शिवे ।।

पीठपूजां स्वहृदये कृत्वा षट्चक्रदीपनम् ।
स्वर्णसिंहासने स्थाप्य श्रीचक्रं स्वेष्टदैवतम् ।।

॥ श्रीगुरुभ्योनमः ॥

## ॥ श्रीवरमहागणपतिमंत्रः ॥

अस्य श्रीवरमहागणपतिमहामंत्रस्य । ॐ गणकऋषिः । निछृद्गायत्री छंदः । श्रीवरमहागणपतिः देवता । ॐ गं बीजं । ह्रीं स्वाहा शक्तिः । ग्लौं कीलकं । श्रीवरमहागणपतिप्रसादसिध्यर्थे जपे विनियोगः ॥

ॐ श्रीं ह्रीं क्लीं ग्लौं अंगुष्ठाभ्यां नमः । गं गणपतये तर्जनीभ्यां नमः । वर वरद मध्यमाभ्यां नमः । सर्वजनं-अनामिकाभ्यां नमः । मे वशमानय कनिष्ठिकाभ्यां नमः । स्वाहा-करतलकरपृष्ठाभ्यां नमः । एवं हृदयादि न्यासः । भुर्भुवस्सुवरोमिति दिग्बन्धः । ध्यानम् ।

**बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल–**
**व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।**
**ध्येयो वल्लभया सपद्मकरयाऽऽश्लिष्टो ज्वलद्भूषया**
**विश्वोत्पत्तिविनाशसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥**

लं इत्यादि पंचपूजा ॥ मनुः ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा ॥ ततः पुनः हृदयादि न्यासं, दिग्विमोकं, ध्यानं, पंचपूजांतं कृत्वा । हस्ते जलमादाय, "गुह्यातिगुह्यगोप्ता त्वं गृहाणाऽस्मत्कृतं जपं । सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥ इति देवस्य वामकरे, जपार्पणबुध्य तज्जलं भूमौ विसृजेत् ॥ ॐ, अनेन महामंत्रजपेन श्रीवरमहागणपतिः प्रीयताम् । न्यूनातिरिक्तं सर्वं सुगुणमस्तु ॥
ॐ तत्सत् ब्रह्मार्पणमस्तु ॥

## ॥ ऋण नाशन गणपति मंत्रः ॥

अस्य मंत्रस्य सदाशिव ऋषिः । अनुष्टुप्छंदः । ऋणमोचनगणपतिर्देवता । ग्लौं बीजं । गः शक्तिः । गों कीलकं । श्री ऋण मोचन सिध्यर्थे जपे विनियोगः । ॐ ग्लौं गः गों १ गणेशाय, २ ऋणंछिन्धि ३ वरेण्यं ४ हुं ५ नमः ६ फट् संख्याक्रमेण. कर अंगन्यासं, श्लोकत्रयेण दिग्बंधनं कृत्वा ध्यानम् ।

**सिन्धूरवर्णं द्विभुजं गणेशं, लंबोदरं पद्मदले निविष्टम् ।**
**ब्रह्मादिदेवैः परिसेव्यमानं सिद्धैर्युतं तं प्रणमामि देवम् ॥**
**सृष्टयादौ ब्रह्मणा सम्यक् पूजितः फलसिद्धये ।**
**सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥** पंचपूजा ॥

मनुः । ॐ ग्लौं गः गों गणेशाय ऋणं छिछधि वरेण्यं हुं नमः फट् ॥
जपांते पुनः हृदयादि न्यासं, दिग्विमोकं, ध्यानं, पंचपूजा, जपसमर्पणं ॥

## ॥ ऋणनाशन गणपतिस्तोत्रम् ॥

पूर्वोक्त ऋषिन्यासादीन् कृत्वा जपेत् ॥

सृष्ट्यादौ ब्रह्मणा सम्यक् पूजितः फलसिद्धये ।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥
त्रिपुरस्य वधात्पूर्वं शंभुना सम्यगर्चितः ।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥
हिरण्यकश्यपादीनां वधार्थे विष्णुनार्चितः ।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥
महिषस्य वधे देव्या गणनाथः प्रपूजितः ।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥
तारकस्य वधात्पूर्वं कुमारेण प्रपूजितः ।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥
भास्करेण गणेशोहि पूजितश्छविसिद्धये ।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥
शशिना कांतिवृदचर्यं पूजितो गणनायकः ।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥
पालनाय च तपसां विश्वामित्रेण पूजितः ।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥

इदं ह्यृणहरस्तोत्रं तीव्रदारिद्र्यनाशनं ।
एकवारं पठेन्नित्यं वर्षमेकं समाहितः ॥

दारिद्र्यं दारुणं त्यक्त्वा कुबेरसमतां व्रजेत् ।
पठेद्योऽमुं महामंत्र सार्धपंचदशाक्षरम् ॥

## ॥ त्रैलोक्यमोहनकरगणेशमंत्रः ॥

अस्य मंत्रस्य गणक ऋषिः । गायत्री छंदः । त्रैलोक्यमोहनगणेशो देवता । ॐ १. वक्रतुण्डैकदंष्ट्राय क्लीं ह्रीं श्रीं गं, २. गणपतये, ३. वरवरद, ४. सर्वजनं, ५. मे वशमानय, ६. स्वाहा संख्याक्रमेण न्यासं दिग्बंधः कृत्वा ध्यानम् ।

गदा बीजपूरे धनुः शूलचक्रे सरोजोत्पले पाशधान्याग्रदंतान् ।
करैः संदधानं स्वशुण्डाग्रराजन्मणीकुंभमंगादिरूढस्वपत्न्या ॥

**सरोजांगुळीयादिसौवर्णभूषोज्वलद्धस्ततन्व्या समालिंगितांगं ।**
**करीन्द्राननं चन्द्रचूडं त्रिनेत्रं जगन्मोहनं रक्तकांतिं भजेऽहम् ॥**

पंचपूजा । मनुंजप्त्वा, पुनः हृदयादि न्यासं, दिग्विमोकं ध्यानं पंचपूजा, जपसमर्पणं च कार्यम् ॥ पुरश्चरणं चतुर्लक्षजपः । दशांशरीत्या, अष्टद्रव्येण होमं, तर्पणं, मार्जनं, ब्राह्मणभोजनं ॥ अष्टद्रव्याणि मोदक पृथुक लाज सक्तु इक्षु नारिकेल तिल कदलीफलानि ॥

## ॥ वक्रतुण्डमहागणपतिमंत्रः ॥

अस्य श्रीवक्रतुण्डमहागणपतिमहामंत्रस्य भार्गव ऋषिः । अनुष्टुप्छंदः । श्रीवक्रतुण्डगणेशोदेवता । वं बीजं । यं शक्तये नमः । विनियोगाय नमः । ॐ १. वं २. क्रं ३. तुं ४. ण्डां ५. य ६. हुं नमः इति संख्याक्रमेण न्यासं दिग्बंधनं ध्यानम्–

**उद्यद्दिनेश्वररुचिं निजहस्तपद्मैः**
**पाशांकुशाभयवरान्दधतं गजास्यम् ।**
**रक्तांबरं सकलदुःखहरं गणेशं**
**ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥**

पंचपूजा । मनुः ॐ वक्रतुण्डाय हुं नमः ॥ पुनः हृदयादि न्यासं दिग्विमोकं, ध्यानं, कृत्वा पंचपूजा । जपसमर्पणं ॥ पुरश्चरणं षड्लक्षजपः ॥ अष्टद्रव्यैः दशांशतो होमः । तत्तद्दशांशेन तर्पण मार्जने ब्राह्मणभोजनं ।

२) मेधोल्काय स्वाहा ॥ इत्यन्य मंत्रः । ऋष्यादि सर्व पूर्ववत् ॥

## अन्य वक्रतुण्डगणेश मंत्रः । एकत्रिंशदक्षर मंत्रः ॥

अस्य मंत्रस्य भार्गव ऋषिः । अनुष्टुप् छंदः । विघ्नेशो देवता । यं बीजं यं शक्तिः । विनियोगाय नमः । ॐ १. रायस्पोषस्य, २. दधिता, निधिदो ३. रत्नधातुमान् । रक्षोहणो, ५, बलगहनो, ६. वक्रतुंडाय हुं ॥ इति संख्याक्रमेण न्यासं ध्यानं पूर्ववत् ॥

## ॥ उच्छिष्ट गणपति नवार्णमंत्रः ॥

अस्य मंत्रस्य कंकोल ऋषिः । विराट् छंदः । उच्छिष्टगणपतिर्देवता । ॐ १. हस्ति २. पिशाचि ३. लिखे ४. स्वाहा ॥ १. २. ३. कनिष्ठिका, १. २. ३. ४, करतल ॥ एवं हृदयादि । ध्यानम् ।

**चतुर्भुजं रक्ततनुं त्रिनेत्रं**
**पाशांकुशौ मोदकपात्रदंतौ ।**
**करैर्दधानं सरसीरुहस्थ–**
**मुन्मत्तमुच्छिष्ट गणेश मीडे ॥**

पंचपूजा । (१) ॐ हस्तिपिशाचिलिखे स्वाहा । (२) ॐ हस्तिपिशाचलिखे स्वाहा ॥ दशाक्षरी-मंत्रः । गं हस्तिपिशाचिलिखे स्वाहा ॥ पुरश्चरणं एकलक्षं ॥

**द्वादशाक्षरमंत्रः–** ॐ ह्रीं गं हरितपिशाचिलिखे स्वाहा । अस्यमंत्रस्य मनुर् ऋषिः । शेषं पूर्ववत् ॥

**एकोनविंशत्यक्षरमंत्रः–** ॐ नमः उच्छिष्ट गणेशाय हस्तिपिशाचि लिखे स्वाहा । नवार्णवत् ॥

**एकत्रिंशत्यक्षरमंत्रः–** ॐ नमो हस्तिमुखाय लंबोदराय उच्छिष्ट महात्मनेआं क्रों ऱीं खे खे उच्छिष्टाय स्वाहा । ऋष्यादीन् पूर्ववत् ॥

**द्वात्रिंशत्यक्षरमंत्रः–** गणक ऋषिः । गायत्री छंदः । गं बीजं । ह्रीं शक्तिः । आं क्रों कीलकं । ॐ १. हस्तिमुखाय २. लंबोदराय ३. उच्छिटमहात्मने ४. आं क्रों ह्रीं क्लीं ह्रीं ह्रूं, ५. खे खे ६. उच्छिष्टाय स्वाहा ॥ संख्याक्रमेण ध्यानं-शेषं पूर्ववत् ॥

**सप्तत्रिंशत्यक्षरमंत्रः–**ऋष्यादि ३२ अक्षरवत् ॥ ध्यानं ॥ शरान् धनुः पाशसृणीस्वहस्तैर्दधान मारक्तसरोरुहस्यम् । विवस्त्रपत्न्यां सुरतप्रवृत्त उच्छिष्टमंबासुतमाश्रयेहं ॥ १. ॐ नामो भगवते एकदष्ट्राय. २. हस्तिमुखाय ३. लंबोदराय ४. उच्छिष्टमहात्मने ५. आं क्रोंह्रीं गं, ६. खेखे स्वाहा संख्याक्रमेण न्यासं ॥

**मंत्रभेदा :–**

१. ॐ हस्तिमुखाय लंबोदराय उच्छिष्टाय महात्मने आं क्रीं ह्रीं श्रीं क्लीं ग्लौं गं खे खे उच्छिष्टायस्वाहा ॥

२. ॐ नमो सिद्धिविनायकाय सर्वकार्यकर्त्रे सर्वविघ्नप्रशमनाय सर्वराजवश्यकराय ॐ शिं शिवसुताय ॐ ह्रीं अंबिकासुताय ॐ ह्रीं भास्करतेजस्काय ॐ क्लीं विष्णुपूजनसंतुष्टाय ॐ ह्रीं ॐ स्वाहा ॥

३. ॐ नमो हेरंबाय नवरत्नकलत्प्रोद्यत्करांभोरुहाय वल्लभावल्लभाय दुष्टग्रहनिवारणाय ग्लौं गं गणपतये स्वाहा ॥

४. ॐ श्रीं श्रीं नमो हेरंब भक्तदारिद्र्यविच्छेद एकदंत मोदकहस्त सर्वधनधान्यसमृद्धिद, कुबेर भवनस्थित ॐ श्रीं श्रीं गं गणपतये स्वाहा ॥

५. ॐ श्रीं ह्रीं क्लीं गं गणपतये चिंतितसकल संपत्प्रदाय हुं फट् स्वाहा ॥

६. ॐ नमो हेरंब तद्भवमदमोहित मम संकष्टं निवारय निवारय स्वाहा ॥

७. ॐ नमो भगवते श्वेतार्कगणपतये श्वेतार्कनिवासाय वासुदेवप्रियाय दक्षप्रजापतिरक्षकाय कुमारगुरवे ब्रह्मादिसुरवंदिताय, सर्वाभरणभूषिताय शशांकशेखराय धर्मध्वजाय धर्मवादनाय त्राहि २ देहि २ अवतर २ गं गणपतये वक्रतुण्डगणपतये वर वरद सर्वस्त्रीपुरुषवशीकर, सर्वशत्रुवशीकर सर्वदोषान् बंदय २ सर्वव्याधीन् निकृंतय २ सर्वदुष्टान् संहारय २ सर्वदारिद्र्याणि विमोचय २ सर्वविघ्नं छिंधि २ भिंधि २, सर्वज्ञानं बोधय २, सर्वशत्रून् उच्चाटय २ सर्वर्द्धीन् कुरु २ सर्वकार्याणि साधय २ ओं गां गीं गुं गौं गं कस्य गणपतये हुं फट् स्वाहा ॥

८. ॐ गं गणपतयेनमः । मृण्मयरूपे ध्यानावहनादि सर्वोपचारपूजां कृत्वा तत्सन्निधौ प्रतिदिनं सहस्रावर्ति मंत्रजपेन मेधां प्रज्ञां आप्नोति ।
मासमेकं जपश्चेत् धनधान्यवृद्धिर्भवति ॥

९. ॐ गीं गूं गणपतये नमः स्वाहा । ब्रह्मचर्यव्रतेन, भूमौशयनं, लक्षावर्तिजपं दशांशहोमादीन् कृतश्चेत् सर्वसंपदभिवृद्धिर्भवति ॥

१०. ॐ ह्रीं क्लीं वीरवर गणपतये वः वः इदं विश्वंममवशं आनय ॐ ह्रीं फट् ॥ रक्तवर्णवस्त्रं धारयन् रक्तगंधानुलेपनं, तिलकंचकृत्वा द्वादशसहस्रंजपं, प्रतिदिनं पंचगव्यस्नानं कृत्वा, ततः अष्टोत्तरसहस्रं अष्टद्रव्यणहवनं कृतश्चेत् अष्टमसिद्धिफलितं भवति ॥

११. ॐ गं गणपतये सर्वविघ्नहराय सर्वाय, सर्वगुरवे लंबोदराय ह्रीं गं नमः ॥ मकरमासे भानुवासरे श्वेतार्केणकृत चतुर्हस्त प्रतिमासन्निधौ, प्रातः, सायं, सहस्रं, अष्टोत्तरशतं क्रमेण जपात् युद्धेषु जयः सिद्धमः ॥

१२. ॐ नमो सिद्धि विनायकाय सर्वकार्यकर्त्रे, सर्वविघ्नप्रशमनाय सर्वराज्यवशीकरणाय सर्वजन-सर्वस्त्रीपुरुषाकर्षणाय श्रीं ॐ स्वाहा ॥

प्रतिदिनं अष्टोत्तरजपं । सर्वकार्यसिद्धिः ॥

## ॥ श्री हरिद्रागणेशमंत्रः ॥

अस्य मंत्रस्य । मदन ऋषिः । अनुष्टुप्छंदः । हरिद्रागणपतिर्देवता । ॐ १. हुं गं ग्लौं २. हरिद्रागण-पतये ३. वरवरद ४. सर्वजनहृदयं ५. स्तंभय ६. स्वाहा ॥ इति न्यासं । ध्यानम् ।

पाशांकुशौ मोदकमेकदंतं
करैर्दधानं कनकासनस्थं ।
हारिद्रखण्डप्रतिमं त्रिनेत्रं
पीतांशु हरिद्रगणेशमीडे ॥

## ॥ श्री लक्ष्मीविनायकमंत्रः ॥

अस्य मंत्रस्य । अंतर्यामि ऋषिः । गायत्रीछन्दः । लक्ष्मीविनायकोदेवता । श्रीं बीजं । स्वाहा शक्तिः । ॐ श्रीं गां, ॐ श्रीं गीं इत्यादि न्यासः । ॐ श्रीं गं सौम्याय गणपतये वरवरद सर्वजनं मे वश मानय स्वाहा ॥ इतिमनुः ॥

दंताभये चक्रकरैर्दधानं
कराग्रगं स्वर्णघटं त्रिनेत्रं ।
धृताब्जयालिंगित मब्धिपुत्र्या
लक्ष्मीगणेशं कनकाभमीडे ॥

## ।। एकाक्षरगणपतिमंत्रः ।।

अस्या मंत्रस्य गणक ऋषिः । निचृच्छन्दः । गणपतिर्देवता । गां इत्यादि षडंगन्यासः । ध्यानम् ।।

नेत्रैर्युक्तस्त्रिभिर्वामनकर चरणो बीजपूरात्तनासः ।
हस्ताग्रक्लृप्तपाशांकुशरदवरदो नागवक्त्रोहिभूषो
देवः पद्मासनस्थोभवतु नतसुरो भूतये विघ्नराजः

ॐ गां

चतुर्लक्षजपः । अष्टद्रव्येणहोमः ।।

## ।। हेरंबमंत्रः (पंचमुखः दशभुजमूर्तिः) ।।

ऋषिः न्यासः पूर्ववत् । ध्यानम् ।।

मुक्ताकांचन नीलकुन्द घुसृणच्छायैश्च नेत्रैर्युतं
नागास्यैर्हरिवाहनं शशिधरं हेरंबमर्कप्रभं ।
दृप्तं दानमभीति मोदककरादानाम्बुजाक्षात्मिकां
मालां मुद्गरमंकुशत्रिशिखकं दोर्भिर्दधानं भजे ।।

मनुः ॐ गूं नमः लक्षत्रयं जपम् ।।

## ।। क्षिप्रगणपति मंत्रः ।।

गणक ऋषिः । विराट्छंदः । क्षिप्रगणपतिर्देवता । गां इत्यादि न्यासः । ध्यानम् ।

पाशांकुशौ कल्पलता विषाणे
दधत्स्वतुण्डाहितबीजपूरः ।
रक्तस्त्रिनेत्रस्तरुणेन्दुमौलिः
हारोज्वलोहस्तिमुखोऽवताद्वः ।।

ॐ गं क्षिप्रप्रसादनायनमः ।

## ।। श्री शक्तिविनायकमंत्रः ।।

भार्गव ऋषिः । विराट्छंदः । शक्तिगणपतिर्देवता । ग्रीं बीजं । ह्रीं शक्तिः । ॐ ह्रीं ग्रीं ह्रीं । इति मूलसर्वाक्षरेण न्यासः । ध्यानम् । पूजादि लक्ष्मीविनायक मंत्रवत् ।। लक्षत्रयं जपः ।।

## ।। श्रीसुब्रह्मण्यमालामंत्रः ।।

अस्य श्री सुब्रह्मण्यमाला महामंत्रस्य । ब्रह्मा ऋषिः । अनुष्टुप्छंदः । श्रीसुब्रह्मण्यो देवता । शं बीजं । ज्वालामुखी शक्तिः । सुब्रह्मण्य इति कीलकं श्री....विनियोगः ॐ श्रीं महासेनाधिपतये, ॐ श्रीं स्कन्दाय, ॐ श्रीं कार्तिकेयाय, ॐ क्लीं द्वादशभुजाय, ॐ सौं मयूरवाहनाय, ॐ नं षडाननाय, इति पंडंगन्यासः । ध्यानम् ।

**सिंदूरारुणमिन्दुकांतिवदनं केयूरहारादिभिः ।**
**दिव्यैराभरणै विभूषित तनुं स्वर्गस्य सौख्यप्रदं ।।** पंचपूजा ।।

ॐ श्रीं ह्रीं क्लीं रं नं ळं सौः शरवणभव ।। माला ।। ॐ नमो भगवते रुद्रकुमाराय षडाननाय शक्तिहस्ताय अष्टादशलोचनाय, शिखमणिभिरलंकृताय क्रौंचगिरिमर्दनाय तारकासुरमारणाय ॐ श्रीं ऐं क्लीं ह्रीं हुं फट् स्वाहा ।।

ॐ नमो भगवते गौरीसुताय, अघोररूपाय, उग्ररूपाय, आकाशस्वरुपाय, शरवणभवाय, शक्तिशूलगदा-परशु हस्ताय पाशांकुशतोमरबाणमुसलधराय, अनेकशस्त्रालंकृताय श्रीसुब्रह्मण्याय हारनूपुरकेयूरकनककुण्डलमेख-लाद्यनेक सर्वाभरणालंकृताय शतानंदशरीराय सकलरुद्रगणसेविताय ॐ रं नं ळं स्कन्दरूपाय सकलमंत्रगणसेविताय गंगापुत्राय शाकिनी डाकिनी भूतप्रेत पिशाच गणसेविताय असुरकुलनाशनाय ॐ श्रीं रौं क्लीं ह्रीं हुं फट् स्वाहा ।।

ॐ नमो भगवते तेजोरूपाय भूतग्रह, प्रेतग्रह, पिशाचग्रह, यक्षग्रह, राक्षसग्रह, वेतालग्रह, भैरवग्रह असुरग्रह सर्वग्रहान् आकर्षय बंधय २ संत्रासय २ आर्भाटय २ छेदय २ शोषय २ बलेन प्रहरय २ सर्वग्रहान् मारय २ ॐ श्रीं क्लीं ह्रीं परमंत्र, परयंत्र परविद्या बंधनाय, आत्ममंत्र, आत्मतंत्र, आत्मयंत्र, आत्मविद्या प्रकट-नाय परविद्याछेदनाय आत्मविद्यास्थापनाय ॐ श्रीं क्लीं ह्रीं हुं फट् स्वाहा ।। ३

ॐ नमो भगवते महाबलपराक्रमाय मांरक्ष २ ॐ आवेशय २. ॐ शरवणभवाय ॐ श्रीं क्लीं सौः हुं सर्वग्रहान् मम वशीकरं कुरु २ सर्वग्रहं छिन्दि २ सर्वग्रहं मोहय २ आकर्षय २ आवेशय २ उच्चाटय २ ॐ सौः रं ळं एकाहिक, द्वयाहिक, त्रयाहिक, चातुर्थिक, पंचमज्वर, षष्टज्वर, सप्तमज्वर, अष्टमज्वर, नवमज्वर महा-विषमज्वर सन्निपातज्वर ब्रह्मज्वर, विष्णुज्वर यक्षज्वर सकलज्वरहतं कुरु २ समस्तज्वरं उच्चाटय २ भेदय २ प्रहरय २ ॐ श्रीं ह्रीं क्लीं हुं फट् स्वाहा ।। ५

ॐ नमो भगवते द्वादशभुजाय, तक्षकानंतकर्कोटक शंख महाशंख पद्म महापद्म, वासुकि गुळिक महागुळिकादीन्, समस्तविषं च नाशय २ उच्चाटय २ राजवश्यं २ भूतवश्यं अस्त्रवश्यं, पुरुषवश्यं, मृग सर्ववश्यं सर्ववशीकरं कुरु २ जवेन मां रक्ष २ ॐ शरवणभव ॐ श्रीं क्लीं वशीकरं कुरु २ ॐ शरवणभव ॐ ऐं आकर्षय २ ॐ शरवणभव ॐ स्तंभय २ ॐ शरवणभव ॐ संमोहय २ ॐ शरवणभव ॐ रं मारय २ ॐ शरवणभव ॐ जं ळं उच्चाटय २ ॐ शरवणभव ॐ श्रीं विद्वेषय २ वातपित्त श्लेष्मादि व्याधीन् नाशय २ सर्वशत्रून् हन २ सर्वदुष्टान् संत्रासय साधून् पालय २ मां रक्ष २ अग्निमुखं ज्वलमुखं बाणमुखं सिंहमुखं व्याघ्रमुखं सर्वमुखं सेनामुखं स्तंभय २ बंधय २ शोषय २ मोहय २ श्रीं क्लं छेदय २ बंधय २ जवेन प्रहरय ॐ श्रीं क्लीं ह्रीं हुं फट् स्वाहा ।

ॐ नमो भगवते महाबलपराक्रमाय कालभैरव कपालभैरव क्रोधभैरव उद्दण्डभैरव मार्ताण्डभैरव संहार-भैरव समस्तभैरवान् उच्चाटय २ बंधय २ जवेन प्रहरय २ ॐ श्रीं त्रोटय २ ॐ नं दीपय २ ॐ ईं संतापय २ ॐ श्रीं उन्मत्तय २ ॐ श्रीं ह्रीं क्लीं ऐं रं ळं सौः पाशुपतास्त्र नारायणास्त्र, सुब्रह्मण्यास्त्र ऐंद्रास्त्र आग्नेयास्त्र ब्रह्मास्त्र, याम्यास्त्र वारुणास्त्र वायव्यास्त्र, कौबेरास्त्र, ईशान्यास्त्र अंधकारास्त्र गांधर्वास्त्र, असुरास्त्र, गारुडास्त्र, सर्पास्त्र, पर्वतास्त्र अश्वास्त्र, गजास्त्र, सिंहास्त्र मोहनास्त्र भैरवास्त्र, मायास्त्र, सर्वास्त्रान् नाशय २ उच्चाटय २ ॐ श्रीं क्लीं ह्रीं हुं फट् स्वाहा ।

ॐ श्रीं क्लीं ऱ्ही चित्ररोग कुष्ठरोग, अपस्माररोग, पक्षरोग बहुमूत्ररोग, चित्तभ्रमण प्रमेह ग्रंधिरोग महोदर रक्तक्षय सर्वरोग श्वेतकुष्ठ पाण्डुरोग अतिसाररोग मूत्रकृच्छ्र गुल्मरोग सर्वरोगात् हन २ उच्चाटय २ नाशय २ ॐ ठं सौः हुं फट् स्वाहा ।

मक्षिका मशक मत्कुण पिपीलिका मूषिक मार्जा श्येनगृध्रन वायस दुष्ट पक्षिदोषान् नाशय २ दुष्ट-जंतून् नाशय २ ॐ श्रीं ऐं क्लीं ऱ्हीं रं नं ठं सौः शरवणभवाय हुं फट् स्वाहा ।

इति कुमारतंत्रे श्रीहयग्रीवागस्त्य संवादे.....पटलं श्रीसुब्रह्मण्य प्रसन्नमालामंत्रं संपूर्णम् ।

ॐ श्रीं ऐं क्लीं ऱ्हीं रं नं ठं सौः शरवणभव ॥ इतिमूलंजपेत् ॥

## ॥ श्रीसुब्रह्मण्यमंत्रः ॥

ॐ ऱ्हीं शरवणभव ॥

अस्यमंत्रस्य । सनत्कुमार ऋषिः । अनुष्टुप्छंदः । श्रीवल्लीदेवसेनासमेत श्रीसुब्रह्मण्यो देवता । ऱ्हां बीजं । ऱ्हीं शक्तिः । ऱ्हूं कीलकं ।

ऱ्हां ऱ्हीं इत्यादि न्यासः । ध्यानम् ।

द्विषड्भुजं षण्मुखमंबिकासुतं
कुमारमादित्यसमानतेजसम् ।
वन्दे मयूरासनमग्निसंभवं
सेनान्य मुद्दाम ममीष्टसिद्धये ॥

पंचपूजा ॥

## ॥ पंचदशाक्षरी ॥

ॐ श्रीं ऱ्हीं क्लीं ऐं ईं ठं रं नं सौः शरवणभव ॥

अस्य मंत्रस्य अमृताकर्षण दक्षिणामूर्ति ऋषिः पंक्तिच्छंदः । प्रसन्नस्कन्दोदेवता । ॐ सौः बीजं । ऱ्हीं शक्तिः । क्लीं कीलकं न्यासः ।

| | |
|---|---|
| ॐ शरवणभव कुमार पुष्करस्रज परापर ब्रह्ममयाय | अंगुष्ठा |
| ॐ शरवणभव कुमार पुष्करस्रज परापर विद्यामयाय | तर्जनी |
| ॐ शरवणभव कुमार पुष्करस्रज परापर द्वादशनेत्राय | मध्यमा |
| ॐ शरवणभव कुमार पुष्करस्रज परापर स्कन्दकुमाराय | अनामिका |
| ॐ शरवणभव कुमार पुष्करस्रज परापर ब्रह्मतेजोमयाय | कनिष्ठिका |
| ॐ शरवणभव कुमार पुष्करस्रज परापर रुद्रतेजोमयाय | करतल |

एवं हृदयादि । ध्यानम् ॥

बालार्कायुतसुप्रभं शिखिरथारूढं षडास्यं गुहं
दिव्यद्वादशलोचनं मणिमयैराकल्पसिद्धिप्रदं ।
विद्यापुस्तक शक्तिकुक्कुटधनुर्बाणासिखेटादिकान्
बिभ्राणं करपङ्कजैर्हृदिमहासेनानिमाद्यं स्मरेत् ॥

पञ्चपूजा:—

१. ॐ शें क्षं क्षं कुमाराय नम:
२. ॐ ह्रीं श्रीं सं सुब्रह्मण्याय वैरिधैर्यंलालय लालय स्वाहा
३. ॐ ह्रीं श्रीं क्लीं सौ: स्कंदायनम:
ऋषि न्यासादिकं षडक्षरीवत् ॥

## ॥ श्रीसुब्रह्मण्यमन्त्र: ॥

अस्य मन्त्रस्य । अगस्त्य ऋषि: । अनुष्टुप्छंद: । श्रीसुब्रह्मण्येश्वरोदेवता ।

ॐ बीजं । सं शक्ति: । शरवणभवायेति कीलकं ।

१. ह्रां हिरण्यवर्णाय, २. ह्रीं प्रतीकारनिकेतनाय, ३. ह्रूं संकल्पसाधनाय, ४. ह्रैं इक्षुधनुर्धराय ५. ह्रौं शिखिवाहनाथ, ६. ह्र: शक्तिहस्ताय इति न्यास: ।

ध्यानम्:—

कनकमंडलमंडितषण्मुखं, वनजराजविराजितलोचनं ।
निशितशस्त्र शरासन धारिणं, शरवणोद्भव मीशसुतं भजे ॥

मनु: । ॐ श्रीं ह्रीं क्लीं सं शरवणभवाय स्वाहा ॥

## ॥ सुब्रह्मण्यनवाक्षरी ॥

अस्य मन्त्रस्य कश्यप ऋषि: । त्रिष्टुप्छन्द: । श्रीसुब्रह्मण्योदेवता । सुं बीजं । सं शक्ति: । सां इत्यादि न्यास: ।

ध्यानम्:—

शक्तिहस्तं विरूपाक्षं शिखिवाहं षडाननं ।
दारुणं रिपु रोगघ्नं भावयेत्कुक्कुट ध्वजाम् ॥

मनु: । ॐ सं सुब्रह्मण्यायस्वाहा ॥

## ।। सुब्रह्मण्य मन्त्रः (शारदातिलके) ।।

ॐ वच्रभुवे नमः ।

अग्नि ऋषिः गायत्रीछन्दः । श्रीसुब्रह्मण्यो देवता । ॐ बीजं । वं शक्तिः रां रीं इत्यादि न्यासः ।

ध्यानम्:–

सिन्दूरारुणकांति मिंदुवदनं केयूरहारादिभिः ।
दिव्यैराभरणैर्विभूषिततनुं स्वर्गस्यसौख्यप्रदं ।।
अंभोजाभयशक्तिकुक्कुटधरं रक्तांगरागांशुकं ।
सुब्रह्मण्य मुपास्महे प्रणमतां भीतिप्रणाशोद्यतम् ।।

अभयंवामहस्तेस्यादम्भोजं दक्षिणेकरे ।
कुक्कुटं वामहस्तेच शक्तिं दक्षिणतो न्यसेत् ।।

इति हयशीर्षपांचरात्रे ।।

## ।। श्रीनागेश्वरसुब्रह्मण्यमन्त्रः ।।

अस्यमन्त्रस्य अमृताकर्षण दक्षिणामूर्तिऋषिः । गायत्रीछन्दः । श्रीनागेश्वर सुब्रह्मण्योदेवता । स्वां बीजं । न्हीं शक्तिः । क्लीं कीलकं । षड्दीर्घयुत स्वां बीजेन न्यासः ।

ध्यानम्:–

सप्तभोगं सुप्रवर्णं सत्यं स्कन्दं भयंकरं ।
शांतिप्रियं सदानंदं द्विजिह्वं तीक्ष्णदंष्ट्रिनं
सर्वाभीष्टप्रदातारं जगद्रक्षणतत्परं ।
नित्यान्नदानसंतुष्टं सुब्रह्मण्यं नमाम्यहम् ।।

सिंदूरारुण मिंदुकांतिवदनंकेयूरहारादिभि
र्दिव्यैराभरणै र्विभूषिततनुं स्वर्गस्यसौख्यप्रदं ।
अंभोजाभयशक्ति कुक्कुटधरं रक्तांगरागांशुकं
सुब्रह्मण्य मुपास्महे प्रणमतां भीतिप्रणाशोद्यतम् ।।

मनुः ॐ श्रीं न्हीं क्लीं ऐं ईं णं स्वां शरवणभवाय स्वाहा (देहिमेतनयम्)

## ।। तिरुच्चेन्दूर षण्मुखध्यानम् ।।

सव्ये शक्तिं दधान स्सरसिज सदृशे वामहस्तेऽक्षमालां,
कृत्वा वामं कराब्जं, ललितकठितटे सव्यहस्तेऽब्जपुष्पं ।

क्रूरं शूरं निहत्य त्रिनयनमनिशं पूजयन्सिंधुतीरे
तिष्ठन्निष्टार्थदायी प्रथितपृथुजटः पातुमां श्रीगुहाख्यः ॥१॥

योऽ सौ शंकर मागमार्थ ममलैः पुष्पैस्सदा पूजयन्
आत्मज्ञानमखण्डदीपममषरं श्रेयः प्रदं वैदिकं ।
संप्राथ्यं शकटाक्षपूरिततनुं शांतं परं दैवतं
मां रक्षेति सुवेदषण्मुखमहं वन्देजयन्तीश्वरम् ॥२॥

॥ पळनि ध्यानम् ॥

कल्पद्रुमं प्रणमतां कमलारुणाभ,
स्कन्दं भुजद्वय मनामयमेकवक्त्रं ।
कात्यायनी प्रियसुतं कटिबद्धवामं
कौपीनदण्डधर दक्षिण हस्तपीडे ॥

॥ मालामन्त्रः ॥

ॐ शरवणोद्भवाय सां सीं सूं सैं सौं सः सुब्रह्मण्याय कुमाराय कुक्कुटध्वजाय कुंकुमवर्णाय महा-मोहनाय, द्वादशाक्षराय सर्वशत्रुहराय परसैन्यविध्वंसकाय देवसेनाधिपतये स्वाहा ॥

॥ श्रीविजामंत्रः ॥

१. मशिनशि ॥

२. ॐ र्हीं शिव मशिमशि नशिनशि वशिवशि नमः शिवाय रुं रीं शिं रां ममशत्रून्नाशय नाशय स्वाहा ॥

अस्य मन्त्रस्य । अगस्त्यो भगवान् ऋषिः । अनुष्टुप्छन्दः । श्रीसुब्रह्मण्यो देवता । मं बीजं । शिं शक्तिः । नं कीलकं । १ मं २ शिं ३ नं ४ मं ५ शिं ६ नं इति न्यासः ।

ध्यानम्ः—

सुब्रह्मण्यमहं वन्दे बालार्कायुततेजसं ।
व्याख्यानमुद्रा सहितं देवसंघैः समावृतम् ॥

सव्यदक्षिण पार्श्वस्थं गजवल्ली समन्वितं ।
आयुधानांचविविविधैः तेजोभिरतिभास्वरं ॥
स्वभक्तानांच सर्वेषां इष्टार्थफल दायकं ।
ऋषिसंघैसमावृत्तं किंचित्प्रहसदाननं ॥

## ॥ हिडुंबमंत्रः ॥

ॐ ऱ्हीं रं रं रां रां ऱ्हीं ऱ्हीं ठं ठं नं नं हिडुंबाय महाप्रताप विजयाय मम शत्रुन् हुं फट् स्वाह । मम शत्रून् हुं फट् कारेण नाशय नाशय सर्वजन वशमानय स्वाहा ॥

अस्यमन्त्रस्य ब्रह्मा ऋषिः । गायत्रीछन्दः । हिडुंबोदेवता । ऱ्हां बीजं । ऱ्हीं शक्तिः . ऱ्हां कीलकं । ऱ्हां ऱ्हीं इत्यादि न्यासः ।

ध्यानम्:—

सव्ये दण्ड मसिं वामे दधान मरुणेक्षणं ।
राक्षसेन्द्रं वरभुजं हिडुंबं प्रणतोऽस्म्यहम् ॥

पञ्चपूजा ॥

## ॥ हरिहरपुत्रमंत्रः ॥

ॐ ऱ्हीं हरिहरपुत्राय पुत्रलाभाय शत्रुनाशनाय मदगजवाहनाय शोभहस्ताय महाशास्त्रे प्रत्यक्षवेलायुधाय वरवरद सर्वजनंमेवशमानय स्वाहा ॥

अस्यमन्त्रस्य । अर्द्धनारीश्वरो भगवान ऋषिः । अनुष्टुप्छन्दः । हरिहरपुत्रो देवता । ऱ्हां बीजं । श्री शक्तिः । क्लीं कीलकं । ऱ्हां इत्यादि न्यासः ।

ध्यानम्: —

आश्याम कोमलविशालतनुं विचित्रं, वासोवसानमरूणोत्पलदानहस्तं ।
मुत्तुंगरत्नमकुटं कुटिलात्तकेशं शास्तारमिष्टवरदं शरणं प्रपद्ये ॥

पञ्चपूजा ॥

## ॥ महाशास्तृमंत्रः ॥

अस्य श्रीमहाशास्तृमन्त्रस्य । ब्रह्मा ऋषिः । गायत्रीछन्दः । श्री हरिहरपुत्रो देवता । ॐ बीजं ऱ्हीं शक्तिः । क्रों कीलकं । ऱ्हां इत्यादि न्यासः ।

हरिहर शरीर जन्मा मरकतमणिभङ्गमेदुरश्यामः ।
कलयतु मुदं स शास्ता कलयतु गुरुचित्तमोहिनीमूर्तिः ॥

मनुः । ॐ न्हीं क्रों हरिहरपुत्रा यार्थलाभाय पुत्रलाभाय शत्रुनाशनाय मदगजतुरङ्गवाहनाय महाशास्त्रे अमुकं आकर्षय २ वौषट् नमः ॥

## ॥ श्रीशिवपञ्चाक्षरी ॥

॥ ॐ नमः शिवाय ॥

अस्य मन्त्रस्य । वामदेवऋषिः । पंक्तिः छन्दः । ईशानो देवता । ॐ बीजं । नमः शक्तिः । शिवायेति कीलकं । सर्वाभीष्ट सिध्यर्थे जपे विनियोगः ॥

| | | |
|---|---|---|
| ॐ | सदाशिवाय | अंगुष्ठा |
| नं | गंगाधराय | तर्जनी |
| मं | मृत्युंजयाय | मध्यमा |
| शि | शूलपाणये | अनामिका |
| वां | पिनाकपाणये | कनिष्ठिका |
| यं | उमापतये | करतल |

एवं हृदयादि

अथ ध्यानम्:—

शान्तं पद्मासनस्थं शशिधरमकुटं पञ्चवक्त्रं त्रिनेत्रं
शूलं वज्रं च खड्गं परशु मभयदं दक्षभागे वहंतम् ।
नागं पाशं च घण्टां प्रलयहतवहं साङ्कुशं वामभागे,
नानालङ्कारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥

| | | पंचमूर्ति न्यासः | वक्त्रे न्यासः | गोलकन्यासः | गोलकन्यासः २ |
|---|---|---|---|---|---|
| ॐ नं तत्पुरुषायनमः | तर्जनी | मुखे | पूर्ववक्त्रे | ॐ ॐ नमः हृदये | ॐ कण्ठे |
| ॐ मं अघोराय | मध्यमा | हृदये | दक्षिणवक्त्रे | ॐ नं नमः वक्त्रे | नं नाभौ |
| ॐ शि सद्योजाताय | कनिष्ठिका | पादयोः | पश्चिमवक्त्रे | ॐ मं नमः दक्षांसे | मं दक्षपार्श्वे |
| ॐ वां वामदेवाय | अनामिका | गुह्ये | उत्तरवक्त्रे | ॐ शि नमः वामांसे | शि वामपार्श्वे |
| ॐ यं ईशानाय | अंगुष्ठा | मूर्ध्नि | उर्ध्ववक्त्रे | ॐ वां नमः दक्षोरौ | वां पृष्ठे |
| | | | | ॐ यं नमः वामोरौ | ॐ यं हृदये |

गोलकन्यासः ३

ॐ ॐ नमः मूर्ध्नि
ॐ नं ॐ मुखे
ॐ मं ॐ दक्षनेत्रे
ॐ शिं ॐ वामनेत्रे
ॐ वां ॐ दक्षनासापुटे
ॐ यं ॐ वामनासापुटे

४
ॐ नं हस्तांगुल्यग्रेषु
मं हस्ताङ्गुलिमूलेषु
शिं मणिबन्धयोः
वां नं कूर्परयोः
यं नं बाहुमूलयोः

५
ॐ नं पादांगुल्यग्रेषु
ॐ मं पादाङ्गुलिमूलेषु
ॐ शिं गुल्फयोः
ॐ वां जान्वोः
ॐ यं जङ्घयोः

६
ॐ ॐ नमः शिरसि
ॐ नं ॐ नमः गुह्ये
मं हृदये
शिं कुक्षिद्वये
वां ऊरुद्वये
यं पादद्वये

७. ॐ ॐ नमः हृदये
ॐ नं नमः वक्त्रांबुजे
ॐ मं नमः कण्ठे
ॐ शिं नमः मृगे
ॐ वां नमः अभये
ॐ यं नमः वरें

८. ॐ ॐ नमःवक्त्रे
ॐ नं ॐ अंसयोः
ॐ मं ॐ हृदये
ॐ शिं ॐ पादद्वये
ॐ वां ॐ ऊरुद्वये
ॐ यं ॐ जठरे

९.
ॐ नं तत्पुरुषाय मूर्ध्नि
ॐ मं अघोराय-फाले
ॐ शिं सद्योजाताय-उदरे
ॐ वां वामदेवाय-अंसयोः
ॐ यं ईशानाय-हृदये

॥ ॐ नमः शिवाय ॥

मं मण्डूकादि....देवताभ्यो नमः । ॐ भगवते सकलगुणात्मशक्ति युक्ताय ॥ अनन्ताय योगपीठात्मनेनमः । पीठ शक्तीः वामा, ज्येष्ठा, रौद्रि, काली, कलविकरिणि, बलविकरिणि, बलप्रमथनि मध्ये मनोन्मनि ॥ षट्कोणे । ईशान, पूर्व, दक्षिण, पश्चिम, उत्तरे, ईशान, तत्पुरुष, अघोर, वामदेव, सद्योजात इति, देवस्य दक्षभाग ऊर्ध्वपार्श्व कोणादारभ्य, देवस्य पुरतः वामपार्श्व पर्यंतं । तदुपरिकोणं शून्यम् ॥

ततः कोणेष्वन्तरालेषु । ईशानादि । निवृत्ति, प्रतिष्ठा, विद्या, शान्ति, शांत्यतीत इति ॥ देवस्य पुरःकोणात् वामभाग अन्तरालं विना ॥

अष्टदले । अनन्ता, सूक्ष्म, शिवोत्तम, एकनेत्र, एकरुद्र, त्रिमूर्तये, श्रीकण्ठ, शिखण्डिने, इति । ततः अष्टदलाग्रेषु । उमा, चण्डीश्वर, नंदि, महाकाल गणेश, वृषभ, भृंगिरिट, स्कन्द ॥

ततो भूपुरे, इन्द्रादीन् तेषां समीपे आयुधानि ।

ॐ ह्रीं नमः शिवाय ह्रीं ॥

षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्येच । अङ्गदेवताः नेत्रत्रयं विना । कोणेष्वन्तराले । हृल्लेखा, गगना, रक्ता, कालिका, महोच्छुष्मा, इति ।

अष्टदले, वृषभ, क्षेत्रपाल, दुर्गा, कार्तिकेय, नन्दि, विघ्नेश, श्यामा, सेना, प्राचीक्रमेण तद्बाह्ये । प्राच्यादि । ब्राह्म्यादि । भूपुरे इंद्रादि, तद्बहिः तेषां आयुधानि ॥

## ।। त्र्यक्षरि मृत्युंजयम् ।।

नवपीठशक्तीः पञ्चाक्षरिवत् ।

षट्कोणेषु । अङ्गदेवताः । भूपुरे इन्द्रादि, तेषां समीपे आयुधानिल ।।

## ।। त्र्यंबकम् ।।

षट्कोणेषु अङ्गदेवताः आग्नेयादि चतुर्दिक्षु मध्येच ।

१. अष्टदलेषु । पूर्वादारभ्य प्रादक्षिण्येन ।

२. अर्कमूर्ति, इन्दुमूर्ति, वसुधामूर्ति, तोयमूर्ति, वह्निमूर्ति, वायुमूर्ति, आकाश, यजमानमूर्ति ।

३, रमा, राका, प्रभा, ज्योत्स्ना, पूर्णा, उषा, पूर्णा सुधा ।

४. विश्वा, विद्या, सिता, प्रह्वा, रारा, संध्या, शिवा, निशा ।

५. आर्या प्रज्ञा. प्रभा, मेघा, शांत्यैं, कान्ति, धृति, मृत्यै ।

६. धरा, माया, अवनी, पद्मा, शान्ता, मोघा, जया, अमला ।

भूपुरे इन्द्रादि, तेषां समीपे आयुधानि ।।

ॐ नमोस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने ।
चतुर्मूर्तिवपुस्थाय भसिताङ्गाय शम्भवे ।।

इति आपक न्यासः दशमः ।।

ध्यानम् :—

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्वलांगं परशुवरमृगाऽभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात्स्तुत समरगणैर्व्याघ्रकृत्ति वसानं
विश्वाद्यं विश्वबीजं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ।।

पञ्चपूजा ।।

## ।। सप्ताक्षरीशिवमन्त्रः ।।

ॐ १ऱ्हीं, २न३मः४शि५वा६य ऱ्हीं ।

अस्य मन्त्रस्य । वामदेव ऋषिः । पंक्तिः छंदः । उमापति दैवता । ह्रीं बीजं । नमः शक्तिः शिवायेति कीलकं । संख्याक्रमेण बिन्दुसंयुतबीजेन न्यासः ।

ध्यानम् :—

बन्धूकसन्निभं देवं त्रिनेत्रं चन्द्रशेखरम् ।
त्रिशूलधारिणं वन्दे चारुहासं सुनिर्मलम् ॥
कपालधारिणं देवं वरदाभयहस्तकम् ।
उमया सहितं शम्भुं ध्याये त्सोमेश्वरं सदा ॥

## ॥ शक्तिपञ्चाक्षरी ॥

ॐ ह्रीं नमः शिवाय ॥ ॐ श्रीं ह्रीं नमः शिवाय ॥

अस्य मन्त्रस्य वामदेव ऋषिः । पंक्तिः छंदः । श्री सांब परमेश्वरी देवता । ॐ बीजं । ह्रीं नमः शक्तिः । शिवायेतिकीलकम् ।

ॐ ह्रां सर्वज्ञशक्तिधाम्ने, ॐ ह्रीं नं नित्यतृप्तिशक्तिधाम्ने, ॐ ह्रूं मं अनादिबोध शक्तिधाम्ने, ॐ ह्रैं शिं स्वतन्त्रशक्तिधाम्ने, ॐ ह्रौं वां अलुप्तशक्तिधाम्ने, ॐ ह्रः यं अनन्तशक्तिधाम्ने इति षडङ्गन्यासः ।

ध्यानम् :—

मूलेकल्पद्रुमस्य द्रुतकनकनिभं, चारुसिंहासनस्थं,
वामांकरूढगौरीनिबिडकुचभराभोगगाढोपगूढ ।
नानालंकारकांतं वरपरशुमृगाभीतिहस्तं त्रिनेत्रं,
वन्दे बालेन्दुमौलिं गजवदनगुहाऽऽश्लिष्ट पार्श्वं महेशम् ॥

पञ्चपूजा ॥

## ॥ गौरीपञ्चाक्षरी ॥

अस्य मन्त्रस्य । आनन्द भैरव ऋषिः । पंक्तिः छंदः । श्री गौरीदेवता । ऐं बीजं । ह्रीं शक्तिः । क्लीं कीलकं । महेश्वर्यै, महालक्ष्म्यै, त्रिपुरसुन्दर्यै, अनन्तरूपिण्यै, सर्वलोकरक्षिण्यै, त्रैलोक्यमोहिन्यै ॥ न्यासः ॥

ध्यानम् :—

गौरि मम प्रियेदेवि शंकरार्धशरीरिणि ।
सौभाग्यं कुरु मे देविशिवशक्त्यै न मोस्तु ते ॥
धनधान्य पशुक्षेतां भर्तृसंरक्षणं तथा ।
सुपुत्रंच महादेवि देहि मे करुणालये ॥

मनुः ऐं ह्रीं श्रीं क्लीं गौर्यैनमः ॥

 

## ॥ स्वर्णाकर्षणभैरवमन्त्रः (सप्तपञ्चदशाक्षरमन्त्रः)

ऐं ह्रीं श्रीं ऐं श्रीं १. आपदुद्धारणाय, ह्रां ह्रीं ह्रूं २. अजामलबद्धाय, ३. लोकेश्वराय, ४. **स्वर्णा-**कर्षण भैरवाय, ५. मम दारिद्र्यविद्वेषणाय, ६. महाभैरवाय नमः श्रीं ह्रीं ऐं ॥

अस्य मन्त्रस्य श्रीब्रह्मा ऋषिः । पंक्ति श्छंदः । हरिहर ब्रह्मात्मक स्वर्णभैरवो देवता । ह्रीं बीजं । ह्रीं शक्तिः । ॐ कीलकं । संख्याक्रमेण न्यासः ॥

ध्यानम् :—

**पीतवर्णं चतुर्बाहुं त्रिनेत्रं पीतवाससम् ।**
**अक्षयस्वर्णमाणिक्यं तडित्पूरित पात्रकम् ॥**
**अभिलषितं महाशूलं तोमरं चामरद्वयम् ।**
**सर्वाभरणसम्पन्नं मुक्ताहारोपशोभितम् ॥**

**मदोन्मत्तं सुखासीनं भक्तानां च वरप्रदम् ।**
**सन्ततं चिन्तयेद्दृश्यं भैरवं सर्व सिद्धिदम् ॥**
**पारिजातद्रुकांतारस्थिते माणिक्यमण्डपे ।**
**सिंहासनगतं ध्यायेद्भैरवंस्वर्णदायकम् ॥**

**गांगेयपात्रंडमरुं त्रिशूलं वरं करैः संदधतं त्रिनेत्रम् ।**
**देव्यायुतं तप्तसुवर्णवर्णं स्वर्णाकृतिं भैरवमाश्रयामि ॥**

पञ्चपूजा ॥

(आम्नायमन्दारग्रन्थे) श्री बीजं । स्वाहा शक्तिः । श्री स्वर्णाकर्षण भैरवायनमः । इति कीलकम् । नवाष्टार्क नवदल दशार्णे न्यासः ।

ध्यानम् :—

**पारिजातद्रु कांतारे स्थिते माणिक्य मण्डपे ।**

इत्यादि श्लोकद्वयं पठेत् ।

मनुः—"ॐ ए क्लां क्लीं क्लूं ह्रां ह्रीं ह्रूं सः वं आपदुद्धारणाय अजामलबद्धाय लोकेश्वराय स्वर्णा-कर्षणभैरवाय मम दारिद्र्यविद्वेषणाय ।

ॐ श्रीं महा भैरवाय नमः ॥

## ॥ स्वर्णाकर्षणभैरवमन्त्र प्रयोगः ॥

ऐं ह्रीं श्रीं ऐं श्रीं आपदुद्धारणाय ह्रां ह्रीं ह्रूं अजामलबद्धाय लोकेश्वराय स्वर्णाकर्षणभैरवाय मम दारिद्र्यविद्वेषणाय महाभैरवाय नमः श्रीं ह्रीं ऐं ॥

मं मण्डूकादि.....नमः । नवपीठशक्तीः वटुकभैरववत् ।

१. अष्टदले प्राच्यादि क्रमेण । ॐ आकाशाय नमः मूर्ध्नि पूजयामि । इत्येव सर्वत्र । समीरणाय मुखे । दहनाय बाह्वोः । वैवर्ताय हृदि । विश्वंभराय उदरे । ब्रह्मणे कटौ । जनार्दनाय जान्वोः । इन्द्राय पादयोः इति अष्टाङ्गानि पूजयेत् ॥

२. ततः त्रिकोणे पूर्वे वटुकभैरवाय ईशानकोणे कालभैरवाय, अग्निकोणे क्षेत्रपालभैरवाय ॥

३. त्रिकोणाद्बहिः षट्कोणे । आग्नेयादि क्रमेण आपदुद्धारणाय, नैर्ऋते अजामलबद्धाय, वायुकोणे लोकेश्वराय, ऐशान्ये स्वर्णाकर्षणभैरवाय । प्राच्यां मम दारिद्र्यविद्वेषणाय पश्चिमे श्रीमहाभैरवाय ।

४. वृत्ते पूर्वादिक्रमेण । असितांगभैरवाय ब्राह्मीशक्ति सहिताय । रुरु भैरवाय माहेश्वरी; शक्ति सहिताय । चण्ड भैरवाय कौमारीशक्ति सहिताय । क्रोधभैरवाय वैष्णवीशक्ति । उन्मत भैरवाय वाराहीशक्ति । कपाली भैरवनारसिंहीशक्ति । भीषण भैरवाय चामुण्डाशक्ति । संहार भैरवाय चण्डिका शक्ति ॥ पूजाकाले ब्राह्मी शक्ति सहित असिताङ्ग भैरवश्री इत्येव, मन्त्रे प्रथमतः शक्ति योजयेत् ॥

५. वर्तुलाद्बहिरष्टदले । स्वशक्ति सहित आदित्य । सोमाय, भौमाय, बुधाय, जीवाय, शुक्राय, शनैश्चराय, राहवे, केतवे । सर्वत्र स्वशक्तिसहिताय योजयेत् ।

६. भूपुराभ्यन्तरे देव दक्षिणतः । पूजाविधिसिद्ध्यै, रससिद्ध्यै, स्वर्णसिद्ध्यै, इति भूपुराद्बहिः देव वामे भूतप्रेतपिशाच वेतालासुरेभ्यो नमः । इति ॥

७. भूपुरे इन्द्रादि दशदिक्पालाः । तद्बाह्ये वज्राद्यायुधानि च पूजयेत् ॥

यन्त्रः मध्ये त्रिकोणं वृतं तद्बहिः अष्टदलं वृतं अष्टदलंवृतं, अष्टदलं वृतं एकरेखाभूपुरम् ॥

## ॥ आपदुद्धारकवटुकभैरव मन्त्रः (एकविंशत्यक्षरमन्त्रः) ॥

ॐ ह्रीं वटुकाय आपदुद्धारणाय कुरुकुरुवटुकाय ह्रीं ॥

अस्य श्रीवटुक भैरव मन्त्रस्य । बृहदारण्य ऋषिः । अनुष्टुप् छन्दः ।

श्रीवटुकभैरवोदेवता । ऱ्हीं बीजं । ऱ्हीं शक्तिः । ॐ कीलकं ।

१.

ॐ ऱ्हौ वौं ईशानायनमः अंगुष्ठयोः
ॐ ऱ्हैं वैं तत्पुरषायनमः तर्जन्योः
ॐ ऱ्हूं वूं अघोरायनमः मध्यमा
ॐ ऱ्हीं वीं वामदेवायनमः अनामिका
ॐ ऱ्हां वां सद्योजातायनमः कनिष्ठिका

२.

ॐ ऱ्हौं वौं ईशानाय ऊर्ध्ववक्त्रायनमः शिरसि
ॐ ऱ्हैं वैं तत्पुरुषाय पूर्ववक्त्रायनमः मुखे
ॐ ऱ्हूं वूं अघोराय दक्षिणवक्त्रायनमः दक्षकर्णे
ॐ ऱ्हीं वीं वामदेवाय उत्तरवक्त्रायनमः वामकर्णे
ॐ ऱ्हां वां सद्योजाताय पश्चिमवक्त्रायनमः चूडाधः

३.

ॐ ऱ्हौं वौं ईशानायनमः शिरसि
ॐऱ्हैं वैं तत्पुरुषायनमः मुखे
ॐ ऱ्हूं वूं अघोरायनमः हृदये
ॐ ऱ्हीं वीं वामदेवायनमः गुह्ये
ॐ ऱ्हां वां सद्योजातायनमः पादयोः

४.

१. ॐ ऱ्हां वां, २. ॐ ऱ्हीं वीं, ३. ॐ ऱ्हूं वूं, ४. ॐ ऱ्हैं वैं, ५. ॐ ऱ्हौं वौं, ६. ॐ ऱ्हः वः इति षडङ्गन्यासः ॥ एवं चतुर्विध न्यासं कृत्वा ॥
ॐ सुदर्शनायास्त्रायफट् इत्यस्त्रमन्त्रेण तालैश्छोटिकाभिर्वा दशदिग्बन्धनंकृत्वा । ध्यायेत् ॥

**ॐ शुद्धस्फटिकसङ्काशं सहस्रादित्यवर्चसम् ।**
**नीलजीमूतसङ्काशं नीलांजनसमप्रभम् ।**
**अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ।**
**दंष्ट्राकरालवदनं नूपुराराव संकुलम् ॥**

**भुजंगमेखलं देव मग्निवर्णशिरोरुहम् ।**
**दिगम्बरकुमारेशं वटुकाख्यं महाबलम् ।**
**खट्वांगम सिपाशंच शूलं दक्षिण भागतः ।**
**डमरुं च कपालं च वरदं भुजगं तथा ॥**
**अग्निवर्णसमोपेतं सारमेय समन्वितम् ।**

पञ्चपूजा ॥

## ॥ अन्यो वटुकभैरवमन्त्रः ॥

ॐ १, ऱ्हीं वं २. वटुकाय ३. आपदुद्धारणाय ४. कुरुकुरुवटुकाय ५. वं ऱ्हीं ६. ॐ स्वाहा ॥

ब्रह्मा ऋषिः । गायत्रीछन्दः । वटुकभैरवो देवता । क्लां बीजं । क्लीं शक्तिः क्लूं कीलकं । संख्याक्रमेण न्यासः ।

ध्यानम् ॥

**करकलितकपालः कुण्डली दण्डपाणिः,**
**तरुणनिकरनीलः व्यालयज्ञोपवीतः ।**

**ऋतुसमयसुवीर्यो विघ्नविच्छेदहेतुः ।**
**जयति वटुकनाथः सिद्धिदः साधकानाम् ॥**

अन्यत् । ॐ ह्रीं श्रीं क्लीं क्लौं वं वटुकाय वटुकभैरवाय मम आपदुद्धारणाय ॐ ह्रीं हुं फट् वं वटुकाय स्वाहा ॥ स्कन्द ऋषिः । अनुष्टुप्छन्दः वटुकभैरवोदेवता वं बीजं ह्रीं शक्तिः कुरुकुरु कीलकं ।

ध्यानम् ।

**फणिडमरु मृगांकुशाख्य घण्टा,**
**स्यमृतकपाल भुजं वराऽभयाढ्यं,**
**मरकतमणिनीलमिन्दुमौलिं,**
**वटुकविभुं जटिलं भजे त्रिनेत्रम् ।**

## ॥ वटुक भैरवमन्त्रः ॥

ॐ ह्रीं वटुकाय आपदुद्धारणाय कुरुकुरु वटुकाय ह्रीं ॥

मं मण्डूकादि नमः नवपीठ शक्तीः ॥ वां वामायै, ज्यें ज्येष्ठायै, रौं रौद्र्यै, कां काल्यै, कं कलविकरण्यै, बं बलविकरण्यै, बं बलप्रमथिन्यै, सं सर्वभूतदमन्यै, मध्ये मं मनोन्मन्यै ॥

१. मध्ये देवस्याङ्गे ह्रां वां हृदय, ह्रीं वीं शिरः इत्यादि अङ्गदेवतां यजेत् ॥

२. कर्णिकाद्बहिरष्टदले ह्रीं आं, इत्येव, ह्रींकारसम्पुटित अं इत्यन्तं, अष्टदीर्घ मातृकान् संयोज्य, असिताङ्ग भैरव, रुरु, चण्ड, क्रोध, उन्मत्त, कपाल, भीषण, संहार भैरवादीन् पूजयेत् ॥ ततः मध्य त्रिकोणे पूर्वादिकोणेषु सत्वाय, रजसे, तमसे इति त्रिगुणान् सम्पूजयेत् ।

३. त्रिकोणाद्बहिः षट्कोणे पूर्वादिक्रमेण ॐ ह्रीं इति सम्पुटित । भूतनाथ, आदिनाथ, आनन्दनाथ, सिद्धसाबरनाथ, सहजानन्दनाथ, निःसीमानन्दनाथ इति ॥

४. ततो वर्तुले पूर्वादि । ॐ ह्रीं इति सम्पुटित । डाकिनीपुत्राः, राकिनीपुत्राः, लाकिनीपुत्राः, काकिनीपुत्राः, शाकिनीपुत्राः, हाकिनीपुत्राः याकिनीपुत्राः देवीपुत्रादीन् सम्पूज्य, देवदक्षिणे, वर्तुलषट्कोणान्तराले, उमापुत्राः रुद्रपुत्राः, मातृपुत्राः पश्चिमनैरृतयोर्मध्ये ऊर्ध्वमुखीपुत्राः, पूर्वेशानयोः मध्ये अधोमुखी पुत्रांश्च इति त्रयोदशपुत्रवर्गान् पूजयेत् ॥

५. वर्तुलाद्बहिः पूर्वाद्याग्नेयांतं, वामावर्तेन, ॐ ह्रीं इति सम्पुटित, ब्रह्माणी पुत्रवटुक, ईशान्ये माहेश्वरीपुत्रवटुक उत्तरे वैष्णवीपुत्रवटुक, वायव्ये कौमारीपुत्रवदुक, पश्चिमे इन्द्राणीपुत्रवटुक, नैरृत्ये महालक्ष्मींपुत्रवटुक, दक्षिणे वाराहींपुत्रवटुक, आग्नेये चामुण्डा पुत्रवटुकाय नमः इति अष्टौमातृपुत्रवटुकान पूजयेत् ॥

६. अष्टदलाद्बहिः चतुरश्राभ्यंतराले, प्राचयादि दशदिक्षु ॐ ह्रीं इति सम्पुटितपूर्वं हेतुक, आग्नेये त्रिपुरांतक, दक्षिणे वैतालाय, नैर्ऋते अग्निजिह्वाय, पश्चिमे कालांतकाय, वायव्ये करालाय, उत्तरे एकपादाय, ऐशान्ये भीमरूपाय इन्द्रेशानयोर्मध्ये अचलाय, नैर्ऋतवरुणयोर्मध्ये हाटकेशाय । इति हेतुकादीन् दशवटुकान पूजयेत् ॥

७. त्रिरेखात्मकभूपुरस्य । प्रथमरेखायां दिग्विदिगंतरालेषु षोडशस्थानेषु ॐ ह्रीं अं इत्यादि ॐ पर्यन्तं इति सम्पुटितं । पूर्वे श्री कण्ठेशपूर्णोदरीभ्यां, दक्षिणे अनंतेश विरजाभ्यां, पश्चिमे सूक्ष्मेशशाल्मलीभ्यां, उत्तरे त्रिमूर्तीशलोलाक्षीभ्यां अमरेशवर्तुलाक्षीभ्यां, नैर्ऋते अर्धीशदीर्घघोणाभ्यां, वायव्ये भारभूतीशदीर्घमुखीभ्यां, ऐशन्ये अतिथीशगोमुखीभ्यां, पूर्वाग्निमध्ये स्थाण्वीश दीर्घजिह्वाभ्यां, उत्तरेशानमध्ये भौतिकेशविकृतमुखीभ्यां, अग्नि-दक्षिणमध्ये सद्योजातेश ज्वालामुखीभ्यां, निर्ऋति वरुणमध्ये अनुग्रेशोल्कामुद्धीभ्यां, वायुसोममध्ये अक्रूरेशश्रीमुखी-भ्यां, ईशानपूर्वमध्ये महासेनेश विद्यामुखीभ्यां इति षोडशदेवताः यजेत् ॥

८. भूपुरस्य द्वितीय रेखां दिग्विदिङ्गतरालेषुषोडशस्थानेषु । ॐ ह्रीं सम्पुटित कं कारादितं अं सबिंदु स्वरान् संयोजयेत् ॥

पूर्वे क्रोधेशमहाकालीभ्यां, दक्षिणे चण्डीशसरस्वतीभ्यां, पश्चिमे पंचांतकेशसर्वसिद्धिगौरीभ्यां, उत्तरे शिवोत्तमेश त्रैलोक्य विजयाभ्यां, आग्नेय्यां एकरुद्रेश मन्त्रशक्तीभ्यां, ऐशान्ये चतुराननेशलंबोदरीभ्यां, पूर्वाग्निमध्ये अजेशद्र विणीभ्यां, दक्षिणनैर्ऋतमध्ये सर्वेशनागरीभ्यां, पश्चिमवायुमध्ये सोमेशशेखरीभ्यां, आग्नेययाम्यमध्ये दारु-केशरूपिणीभ्यां, नैर्ऋतपश्चिममध्ये अर्धनारीशवीरणाभ्यां, वायुसोममध्ये उमाकान्तेश काकोदरीभ्यां, ईशानपूर्वमध्ये आषाढेशपूतनाभ्यां इति पूजयेत् ।

९. भूपुरस्य तृतीयरेखायां । दिग्विदिङ्गतरालेषु षोडशस्थानेषु, ॐ ह्रीं सम्पुटित, य कारादि क्षकारान्तं सबिन्दुं योजयेत् ।

पूर्वे दण्डीशभद्रकाली, दक्षिणे अत्त्रीशयोगिनी, पश्चिमे मीनेशशंखिनी, उत्तरे मेषेश गर्जनी, आग्नेय्यां लोहितेश कालरात्री, नैर्ऋत्ये शिखीश कुब्जिका, वायव्ये छागलेश कपर्दिनी, ऐशान्ये द्विरंडेशवज्रिणी, पूर्वाग्निमध्ये महाकालेशजया, दक्षिणनैर्ऋतमध्ये त्वगात्मभ्यां बालेशसुमुखेश्वरी; पश्चिमवायव्य मध्ये असृगात्मभ्यां भुजंगेशरेवती, उत्तरेशानयोर्मध्ये मीशात्मभ्यां पिनाकीश माधवी, आग्नेयदक्षिणमध्ये वेदात्मभ्यां खड्गीशवारुणीभ्यां, नैर्ऋत-पश्चिममध्ये अस्थ्यात्मभ्यां बकेशवायवी, वायुसोममध्ये मज्जात्मभ्यां श्वेतेश रक्षोवधारिणीभ्यां, ईशानपूर्वमध्ये शुक्रात्मभ्यां भृग्वीशसहजाभ्यां, इति ॥

भूपुराद्बहिः देव दक्षिणतः प्राणात्मभ्यां लकुलीश लक्ष्मीभ्यां, शक्त्यात्मभ्यां शिवेशव्यापिनी, क्रोधात्म-भ्यां संवर्तकेश महामायाभ्यां इति पूजयेत् ॥

ततः ईशान्ये योगिनीसहितेभ्यो दिव्ययोगीश्वरेभ्यो, आग्नेये योगिनीसहितेभ्यो अन्तरिक्षस्थयोगी-श्वरेभ्यो नैर्ऋते योगिनीसहित भूमिस्थ योगीश्वरेभ्यो, पूर्वे गङ्गणपतये, मं भैरवाय, पश्चिमे क्षं क्षेत्रपालाय, उत्तरेदुंदुर्गाय, इति ॥

१० भूपुराद्बहिः इन्द्रादि दशदिक्पालान् ॥

११. भूपुराद्बहिः तेषां समीपे आयुधानिच यजेत् ॥

## ॥ अमृतेश्वरः ॥

**मन्त्रोद्धारः**

तारंहृज्जं शरन्नाम मध्ये विश्वं तथान्चले ।
मन्त्रोऽयंसर्वसिद्धीशः सुमुखी शिववल्लभः ॥

**उत्कीलनम्**

तारमन्ते जपेदादौ शक्ति मन्त्रस्यपार्वति ।
अमृतेश्वरमन्त्रस्य स्यादियंकीलदोषहृत् ॥

**संजीवनम्**

सर्वेषां विश्वमादौ विश्वमन्ते जपेन्मांत्रिकनायकः ।
अमृतेनंस्य मन्त्रस्य भवेत्संजीवश परम् ॥

**शापमोचनम्**

तारं ततोऽमृतेशान शिवशापं विमोचय ।
युग्ममन्ते तथातारं विद्येयं शापहारिणी ॥

**सम्पुटमन्त्रः**

विश्वपादौ महादेवि शक्तिमन्ते जपेत्सुधी ।
अमृतेश्वरमन्त्रस्य संपुटारव्योऽस्त्ययं मनुः ॥

## ॥ दशाक्षररुद्रमन्त्रः ॥

१. ॐ २. न ३. मो ४. भगवते ५. रुद्राय ॥ (समस्तेन)

अस्य मन्त्रस्य । बोधायन ऋषिः । पंक्तिः छन्दः । रुद्रो देवता । ॐ बीजं । नमः शक्तिः । रुद्रायेति कीलकम् ।

ध्यानम्:—

कैलासाचलसन्निभं त्रिनयनं पंचास्य मंबायुतं
नीलग्रीव महीशभूषणधरं व्याघ्रत्वचर्मांबरम् ।
अक्षस्रग्वरकुण्डिकाभयकरं चांद्रीं कलां बिभ्रतं
गंगांभोविलसज्जटं दशभुजं वन्दे महेशं परम् ॥

## ॥ षट्त्रिंशदक्षर श्रीदक्षिणामूर्तिमन्त्रः ॥

ॐ ह्रीं दक्षिणामूर्तये तुभ्यं वटमूल निवासिने ।

ध्यानैकनिरताङ्गाय नमो रुद्राय शम्भवे । ह्रीं ॐ ॥

अस्य मन्त्रस्य शुकऋषिः । अनुष्टुप्छन्दः । श्री दक्षिणामूर्तिशंभुर्देवता ॥

विनियोगः—

ॐ ह्रीं दक्षिणामूर्तये ह्रीं ॐ अंगुष्टाभ्यां नमः

ॐ ह्रीं तुभ्यं ह्रीं ॐ तर्जनी

ॐ ह्रीं वटमूलनिवासिने ह्रीं ॐ मध्यमा

ॐ ह्रीं ध्यानैकनिरताङ्गाय ह्रीं ॐ अनामिका

ॐ ह्रीं नमो रुद्राय ह्रीं ॐ कनिष्ठिका

ॐ ह्रीं शम्भवे ह्रीं ॐ करतल एवं हृदयादि न्यासः । मूलेन व्यापकन्यासः ।

ध्यानम्ः—

हिमाचलतटे रम्ये सिद्ध किंनर सेविते ।
विविधद्रुमशाखाभिः सर्वतो वारितातपे ॥
सुपुष्पितैर्लताजालैराश्लिष्टकुसुमद्रुमैः ।
शिलाविवरनिर्गच्छन्निर्झरानिलसेविते ॥
गायद्भृगांगनासंघे नृत्यद्बर्हिकदम्बके ।
कूजत्कोकिलसंघेन मुखरीकृतदिङ्मुखे ॥
परस्परविनिर्मुक्त मात्सर्यमृगसेविते ।
आद्यैः शुकाद्यैर्मुनिभिरजस्रं समधिष्ठिते ॥
पुरन्दरमुखैर्देवैः सेवायातैर्विलोकितं ।
वटवृक्षंमहोच्छ्रायं पद्मरागफलोज्वलम् ॥
गारुत्मतमयै पत्रैर्निबिडैरूपशोभितम् ।
नवरत्नमयाकल्पैर्लंबमानैरलंकृतं ॥
सजलैस्स्थलजैर्पुष्पैरामोदिभिरलंकृतम् ।
शृण्वद्भिर्वेदशास्त्राणि शुकबृन्दैर्निषेवितम् ॥
संसारतापविच्छेद कुशलच्छायमद्भुतम् ।
विचिन्त्य तस्य मूलस्थे रत्नसिंहासने शुभे ॥

आसीनममिताकल्पं शरच्चन्द्रनिभाननं ।
स्तूयमाने मुनिगणैर्दिव्यज्ञानाभिलाषिभिः ॥
संस्मरेज्जगतामाद्यं दक्षिणामूर्तिमव्ययम् ॥
कैलासाद्रिनिभं शशांकशकलस्फूर्जज्जटामण्डितं ।
नासालोकनतत्परं त्रिनयनं वीरासनाध्यासितम् ॥
मुद्राटंककुरंगजानुविलसत्पाणिं प्रशन्नाननम् ।
कक्षाबद्धभुजंगमं मुनिवृते वन्दे महेशं परम् ॥

पञ्चपूजा ॥

## वटुकभैरवः (देवीरहस्यं)

### मन्त्रोद्धारः

प्रणवं मूर्तिबीजं च वटुकाय समुद्धरेत्
आपदुद्धारणायेति कुरुयुग्मं समुच्चरेत् ।
वटुकाय पराबीजं मन्त्रोऽयं देवदुर्लभः ॥

### उत्कीलनम्

परामादौ जपेद न्ते प्रणवं साधकोत्तमः ।
मन्त्रो वटुकमन्त्रस्य स्यादयं कीलनाशकः ॥

### संजीवनम्

वटुकायेति तारादौ जपेत्पार्वति साधकः ।
संजीवन मनु प्रोक्तो वटुकस्यैष दुर्लभः ॥

### शापमोचनम्

तारं परांच वटुक ब्रह्मशापं विमोचय ।
द्वयं च देवीप्रणवो विद्येयं शापहारिणी ॥

### सम्पुटमन्त्रः

कुरुद्वयादौ प्रणवं परान्तेऽपि कुरुद्वयम् ।
सम्पुटारव्यो मनुः प्रोक्तो वटुकस्य मया शिवे ॥

## ।। शरभ सालुवमन्त्रः ।।

अस्य श्री शरभ महामन्त्रस्य । वासुदेव ऋषिः । जगती छन्दः ।

कालाग्निरुद्रशरभो देवता । खं बीजं । स्वाहा शक्तिः । फट् कीलकम् ।

जपेविनियोगः–

ॐ १ खं खां खं २ फट् ग्रससि प्राणान् ग्रहसि ३ हुं फट् ४ सर्वशत्रुसंहरणाय । ५ शरभ साल्लुवाय । ६ पक्षिराजाय हुं फट् । स्वाहा । इति न्यासः ।

ध्यानम्:—

चन्द्रार्काग्नित्रिनेत्रः कुलिशवरनखश्चंचला ह्युग्रजिह्वाः
काली दुर्गा च पक्षौ हृदयजठरगो भैरवो बाडबाग्निः ।।
ऊरू द्वौ व्याधिमृत्यू शरभवरतनु श्चण्डवातादिवेडाः ।
संहर्ता सर्वशत्रून् स जयतु शरभः सालुवः पक्षिराजः ।।

ॐ खें खां खं फट् प्राणान् ग्रहसि प्राणान्ग्रहसि हुं फट् सर्वशत्रु संहारणाय शरभ सालुवाय पक्षिराजाय हुं फट् स्वाहा ।

ध्यानम्:—

स्फुरदसिनिभदंष्ट्रं सिंहवक्त्रं त्रिनेत्रं
ज्वलदनलशिखाभिः पल्लवीभूतमौलिम् ।
वरकरनखाग्रं पक्षविक्षोभितासं
हुतवहधृतरूपं सालुवेशं स्मरामि ।।

ॐ नमो भगवते शरभसालुवाय सकलसंहारकारण नदुकच्छेदन कराय पैशाचिक विदारण शरभाय घ्रुं शें शरभसालवाय ग्लौं वीरशरभाय ईं रोगमाणरे निनशे कैलासपति आणे ।।

ॐ गुरुप्रसादं ।।

अयुतं प्रजपेद्रात्रौ सप्तवासरतः प्रिये ।
मन्त्रसिद्धिमवाप्नोति देवाता च प्रसीदति ।।
अर्केन्धनै रग्निहोत्रं प्रज्वलीकृत्य साधकः ।
तिलहोमं कुलेशानि सहस्रं तत्व संख्यया ।।

हुनेदुदङ्मुखःस्थित्वा सर्वरोग निवारणं ।
अथवा प्रजपेन्मन्त्र षट्सहस्रं दिने दिने ।
तैनैव शतधावारि मन्त्रितं वापि तत्सुखम् ॥

इति शाबर चिन्तामणौ ॥
ॐ सालुवेशाय विदमहे पक्षिराजाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥

## ॥ श्रीविद्यासम्मेलन प्रासादपञ्चाक्षरी ॥

अस्य मन्त्रस्य वामदेव ऋषिः । पंक्तिछन्दः । सांबसदाशिवो देवता ॥
बीजं, न्यासादि पूर्ववत् ।

ध्यानम् : —

गोक्षीरफेनधवलं रजताद्रि समप्रभम् ।
चारुछिन्नकलाराज जटामकुटमण्डितम् ॥
पञ्चवक्त्रधरं शम्भुं प्रतिवक्त्रं त्रिलोचनम् ।
शार्दूलचर्मवसनं रत्नाभरणभूषितम् ॥

मनुः ॐ श्रीं ह्रीं क्लीं ॐ ह्रौं ह्रीं नमः । ॐ श्रीं ह्रीं क ५ नमः शिवाय ह ६ श्रीं ह्रीं ॐ स ४ हसकलह्रीं हसकहलह्रीं सकलह्रीं ॥

## ॥ तुरीयपराम्बामन्त्रः ॥

अस्यमन्त्रस्य । सद्रूपानन्द भैरवऋषिः । अतिजगतीछन्दः । तुरीयपराम्बा देवता । ह्रां बीजं । ह्रौं शक्तिः । अः कीलकं । हसां हसां इत्यादि न्यासः ।

ध्यानम् ॥

अमृतार्णवमध्योद्यत्सु वर्णद्वीपोपशोभिते ।
कल्पवृक्षवनान्तस्थे नवमाणिक्यमण्टपे ॥
नवरत्नमये श्रीमत्सिंहासनगतांबुजे ।
त्रिकोणांत समासीनं चन्द्रसूर्यशतप्रभम् ॥

मनुः—"हसौः स्हौः हसकल हसकहल सकलह्रीम् ।"

## ॥ उन्मिनीमन्त्रः ॥

अस्य मन्त्रस्य समयविद्येश्वरी मोदिनी दक्षिणामूर्ति ऋषिः ॥

 

अनुष्टुप् छन्दः (पंक्तिः छन्दः) पूर्वाम्नायसमयविद्येश्वरी मोदिनीदेवी समष्टयम्बा उन्मनी देवता । ह्स्रीं बीजं । स्हीं शक्तिः । श्रीं कीलकं । उन्मनीदेवी प्रीत्यर्थे जपे विनियोगः । ह्स्रीं, स्हीं श्रीं इति द्विवारेण न्यासः ॥

ध्यानम्: —

स्वतन्त्रबरालेपभूषां नौमिन्दुशेखराम् ।
पूर्वाम्नायसमष्टयंबा समयांबा पाशांकुशवराभयाम् ॥

मनुः–"स्हीं श्रीं सकलह्रीं" (पूर्वाम्नायाधिदेवता मोदिनी उन्मनी देवी पूजयामि नमः)

अन्यमन्त्रः । ह्स्रैं ह्स्क्लीं ह्स्रौः (पूर्वाम्नाय समयविद्येश्वर्यम्बा)

## ॥ कामेश्वरमन्त्रः ॥

अस्यमन्त्रस्य दक्षिणामूर्ति ऋषिः । पंक्तिः छन्दः । श्रीकामेश्वरो देवता ।

क ५ बीजं । स ४ शक्तिः । ह ६ कीलकं । क ५, ह ६, स ४ इति कूटत्रयेण न्यासः ॥

ध्यानम्: --

उद्यच्छन्द्रदिवाकरारुणनिभं वामांकसंस्थाम्बिकं
वक्त्रारोपित दृक्कटाक्षकलितोल्लासं जटामण्डिम् ।
दोर्भिर्कार्मुक पाशबाणसुसृणी बिभ्राणामिन्दोः कलां ।
नानाकल्पविराजमानवपुषं कामेश्वरं भावये ॥

मनुः–"ॐ ह्रीं क ५ ह ६ स ४ नमः शिवाय ॥"

## ॥ पराषोडशीमन्त्र ॥

अस्य मन्त्रस्य आनन्द भैरवऋषिः । पंक्तिः छन्दः । पराषोडशाक्षरी देवता ।
सकलह्रां बीजम् । ह ६ शक्तिः । क ५ कीलकम् ।
स्रां सर्वज्ञाबाश्री, स्रीं नित्यतृप्तांबाश्री, स्रूं अनादिबोधांबाश्री, स्रैं स्वतन्त्रशक्त्यकश्री स्रौं अलुप्तशक्त्यम्बा श्री, स्रः अनन्तशक्त्यम्बाश्री इति न्यासः ।

ध्यानम्: --

तार्क्ष्यरूढहरि हृत्सरोजके भाति या परम चित्स्वरूपिणी ।
पद्मयुग्मणिपात्रधारिणी भासतां हृदि सदा ममाम्बिका ॥

शङ्खं चक्रं गदा शाङ्र्गं पद्मं योनिं त्रिशूलकम् ।
तार्क्ष्यं घेनुं च शक्ति च शाङ्र्गं नाराच कौस्तुभौ ॥
श्रीवत्सांकुश मुद्रे च इति मुद्राः प्रकीर्तिताः (प्रदर्शयेत्) ।
इति पञ्चदशीमुद्राः शिवेन परिभाषिताः ।
यदि मुद्रा न जानाति सजपो निष्फलो भवेत् ॥

मनुः–"श्रीं सौः क्लीं ऐं ह्रीं ॐ ह्रीं श्रीं स ४ ह ६ क ५ ह्रीं ऐं क्लीं सौः श्रीं ॥"

## ॥ दहरविद्यामन्त्रः ॥

अस्य मन्त्रस्य परमहंसः ऋषिः । अव्यक्तगायत्रीछन्दः । परमहंसो देवता ।

हं बीजम् । सं शक्तिः । सोहं कीलकम् ।

१ हंसहंसायविदभहे २ सोहं हंसायविदभहे । ३ तन्नोहंसाय विदभहे, ४ विदभहे ५ सोहंहंसाय धीमहि । ६ तन्नोहंसःप्रचोदयात् न्यासः ।

ध्यानम्:--

अग्नीषोमगरुद्वयं....बिन्दुत्रिकोणोज्वलं,
भास्वद्रुद्रमुखं शिवांध्रियुगलं पार्श्वस्थ सूर्यानलं ।
उद्यद्भास्कर कोटिकोटिसदृशं हंसं जगद्व्यापकं,
नादब्रह्मभयं हृदंबुजपुटे नीरे सदाहं भजे ॥

मनुः हंसगायत्री । हंसोगणेशो विधिरेवहंसः हंसो हरिः शम्भुमयोऽपि हंसो जीवोऽपिहंसो गुरवे च हंसश्चात्मापि हंसः परमात्महंसः । महादहरमनु "हंस" ।

## महादहरमनुः

अस्य मन्त्रस्य । आनन्दभैरव ऋषिः । पंक्तिः छन्दः । अनेककोटिरहस्यत्रयमन्त्रो देवता । हसक्षमलवरयूं बीजम् । हसक्षमलवरयीं शक्तिः । यरलवक्षमयूं कीलकम् । कूटत्रयेण न्यासः ।

ध्यानम्:—

श्रीदेवी भूषितोत्सगं सांद्र सिन्दूररोचिषम् ।
हकारादि मनोवान्यं वन्दे कामेश्वरं हरम् ॥

मनुः ॐ ऐं क्लीं सौः ॐ श्रीं ह्रीं ॐ हंसक्षमलवरयूं, सहक्षमलवरयीं, यरलवक्षमयूं ॐ ह्रीं श्रीं ॐ सौः क्लीं ऐं ॥ इति कूटत्रया रहस्य त्रिमनुः ॥

## ॥ राजराजेश्वरी ॥

अस्य मन्त्रस्य । दक्षिणमूर्ति ऋषिः । गायत्री छन्दः । श्रीराजराजेश्वरी देवता । ऐं बीजम् । सौः शक्तिः । क्लीं कीलकम् । महाषोडशीमूलेन न्यासः ।

सिद्धसिद्ध व्रतरत्नभूमिके कल्पवृक्षवनवाटिसंवृते
रत्नजाल वलयै निषेविते तत्रवापिशतकेनसंकुले ।
आदिपञ्च शिवमञ्चके शिवे शंकराङ्कमणिपीठिकास्थितां
कादिहादि मनुरूपिणींशिवां, भावयामि परदेवतामहम् ॥

मनुः—"ॐ श्रीं ह्रीं क्लीं ॐ ऐं ई, औः श्रीं ह्रीं क्लीं ऐं सौः, ॐ ई श्रीं ह्रीं श्रीं क ५ ह ६ स ४ ईँ ह्रीं श्रीं सौः ऐं क्लीं ह्रीं श्रीं हसकलह्रीं सकहलह्रीं सकलह्रीं श्रीं ई नमः ॥"

## ॥ पराभट्टारिकामन्त्रः ॥

अस्य मन्त्रस्य । परमानन्द भैरवो दक्षिणामूर्ति ऋषिः । पंक्ति छन्दः । श्री महाभट्टारिकामहात्रिपुर-सुन्दरी देवता । मूलेन न्यासः ।

ध्यानम्:—

लोहितां ललितां बाणचाप पाशसृणीन्करैः
दधानां कामराजांके यन्त्रितां मुदितां स्मरेत् ।
हारग्रैवेयरत्नादिमुद्रिकानूपुरान्वितां,
विराजमानां तां दिव्यदिव्यांशुकविधारिणीम् ॥
शुचिस्मितां शक्तिवंदगीताकर्णननन्दितां ।
सहजासवसम्भोगैः संजातानन्दविग्रहां ।
दयामदारुणापांगविलोकितसुसाधकां ।
परितोभूषणैश्चित्रैः कर्णचामरकादिभिः ॥
विराजमानवक्त्रां च द्विरदाननपूजितां ।
तथाविधान्नता नग्रे, नग्रे पश्यंती ममितोस्तवां ॥
मध्ये प्रधानदेव्यास्तु समुल्लासात्मकत्वतः ।
नवावरणशक्तीनां ध्यानंदेव्या समं भवेत् ॥

कामांगयन्त्रादन्यत्र भूषावर्णायुधादिकं ।
त्वत्समम्परमेशानि चक्रस्थानामशेषतः ।
महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातः एह्येहिपरमेश्वरि ॥

मनुः—क ५ ह ६ स ४ श्रीं ह्रीं क्लीं ऐं सौः, ॐ ह्रीं श्रीं क १ ह ६ स ४ सौः ऐं क्लीं ह्रीं श्रीं ।

## ॥ समयविद्येश्वरी कुब्जिकामन्त्रः ॥

अस्य मन्त्रस्य सदाशिवऋषिः । पंक्तिः छन्दः । पश्चिमाम्नाय समष्टयंबा समयविद्येश्वर्यंबा कुब्जिका देवता । ऐं बीजम् । ह्रीं शक्तिः । श्रीं कीलकम् । कुब्जिका देवीप्रसादसिध्यर्थें जपे विनियोगः । ह्स्रां इत्यादि न्यासः

ध्यानम्:—

पञ्चासीनां मुण्डमालां विभूषित तनूदरीम् ।
बालार्ककोटिसंकाशां रक्तमाल्यानु शोभितां ॥
पाशांकुशवराभीति हस्तां त्र्यक्षां शुचिस्मिताम् ।
पश्चिमाम्नायसंरूढां भजेऽहं चिन्मयीं हृदि ॥

मनुः— ऐं ह्रीं श्रीं ह्स्फ्रें हसौः नमोभगवत्यंबे ह्स्क्रें कुब्जिके क्षां क्ष्रीं हुं अघोरे घोरे अघोरमुखि छ्रां छ्रीं किणिकिणि विच्चे ह्सौं ह्स्क्रें श्रीं ह्रीं ऐं । इति चत्वरिंशदक्षरः मनुः—पाठान्तरम्. ॐ श्रीं प्रीं कुब्जिके देवि ह्रीं भः स्वाहा ।

## ॥ समयविद्येश्वरी भोगिनीमन्त्रः ॥

अस्य मन्त्रस्य । ईश्वर ऋषिः ।त्रिष्टुप्छन्दः । भोगिनी देवता ।

ऐं बीजम् क्लीं । शक्तिः । ह्सौः कीलकम् । ह्सां इयादि न्यासः ।

ध्यानम्:—

उद्यत्सूर्यसहस्राभां नानालंकार भूषितां ।
रत्नमाल्यांबरालेपरत्नग्रैवेयमण्डिताम् ॥
अक्षमालाकोशपाश सृण्यभ्श्रित करांबुजाम् ।
दक्षिणाम्नाय पीठादि देवतां कलये हृदि ॥

मनुः–ॐ ऐं ह्रीं श्रीं ॐ ऐं क्लिन्ने क्लिन्नमदद्रवे कुले ह्सौः ॥

अपरोमन्त्रः । ऐं क्लिन्ने क्लीं मदद्रवे कुले ह्सौः ॥

## ॥ पञ्चाम्बामन्त्रः ॥

अस्यमन्त्रस्य । आनन्द भैरवऋषिः । पंक्तिः छन्दः । पञ्चाम्बादेवता ।

क ५ बीजम् । ह ६ शक्तिः । स ४ कीलकम् । मूलखण्डत्रयेण न्यासः ।

ध्यानम्:–

"सिन्दूरारुणविग्रहां. . . .परामम्बिकाम्"

मनुः ॐ श्रीं ह्रीं क्लीं, क ५ ह ६ स ४ ॥ एतन्मूलं संयोज्य पञ्चाम्बाँ जपेत् ॥

१. मूलं आदिनाथ व्योमातीताम्बा २. मूलं अनादिनाथ ओमेश्वर्यंबा । ३. मूलं अनामयानन्दनाथ-व्योमगाम्बा, ४. मूलं आनन्दानन्दनाथ व्योमचारिण्यम्बा, ५. मूलं चिदानन्दानन्द व्योमस्थाम्बा ॥

## ॥ षोडशमूलविद्यामन्त्राः ॥

१. ॐ ऐं ह्रीं श्रीं स्वच्छप्रकाश परिपूर्ण परापर महाप्रकाश सिद्धविद्याकुलयोगिनी ह्रीं ॐ श्रीं ह्रीं क्लीं क ५ ह ६ स ४ मूलविद्याश्रीपादुकाम् ।

२. ह्सौः स्वात्मानन्दबोधय बोधय स्हौः प्रासादपराम्बा मूलविद्या ।

३. ऐं ब्लूं क्लिन्ने क्लेदिनि महामदद्रवे क्लीं क्लेदय क्लीं मोहय २ क्लीं नमः स्वाहा । अतिरहस्य योगिनी मूलविद्याश्री ॥

४. ॐ ऐं ह्रीं श्रीं हंसः स्वच्छानन्दपरमहंस परमात्मने स्वाहा स्हक्ष्म्रौं शाम्भवी मूलविद्याश्री ।

५. ह्रीं नित्यस्फुरक्ता चैतन्यानन्दमयीमहाबिन्दु व्यापक मात्रास्वरूपिणी ऐं ह्रीं श्रीं ईं हृल्लेखा-मूलविद्याश्री ।

६. ॐ ऐं ह्रीं श्रीं स्वच्छप्रकाशात्मिके ह्रीं कुलमहामालिनी ऐं कुलगर्भमातृके ह्रीं ऐं समयविमले श्रीं समयविमला मूलविद्या श्री ॥

७. ॐ ऐं ह्रीं श्रीं हंसः नित्यप्रकाशात्मिके कुलकुण्डलिनी आज्ञासिद्धि महाभैरवी आत्मानं बोधय अम्बे भगवति ह्रीं ह्रूं हुं फट् परबोधिनी मूलविद्या ॥

८. ॐ ऐं ह्रीं श्रीं ॐ मोक्षं कुरु २ कुलपञ्चाक्षरी मूलविद्याश्री ।

९. ॐ ऐं ह्रीं श्रीं हसकलह्रीं हसकहलह्रीं सकलह्रीं चैतन्य त्रिपुरा मूलविद्याश्री ।

१०. ॐ ऐं ऱ्हीं श्रीं ऐं शुद्धसूक्ष्म निराकार निर्विकल्प परब्रह्मस्वरूपिणी क्लीं परमानन्दशक्तिरूपिणी सौः शाम्भवानन्दनाय अनुत्तरकौलिनी मूलविद्या ।

११. ॐ ऐं ऱ्हीं श्रीं ऐं क्लीं सौः हंसः सोहं स्वच्छानन्दपरमहंस परमात्मने स्वाहा । गुरुक्रमविमर्शिनी मूलविद्याश्री ॥

१२. अनामाख्य व्योमातीत नाथ परापर व्योमातीत व्योमेश्वर्यंबा अनामाख्यमूल ॥

१३. ॐ ऐं ऱ्हीं ॐ ऐं ईं हूं समीकतसारमूल विद्याश्री ।

१४. ॐ ऐं ऱ्हीं श्रीं ऱ्हस्रैं ऱ्हस्क्ल्रीं ऱ्हस्रौं अनुत्तरशाङ्करी मूलविद्याश्री ।

१५. ॐ ऐं ऱ्हीं श्रीं ऱ्हीं भगवती विच्चेवाग्वादिनी क्लीं महाहृदय महामातंगिनी ऐं क्लिन्ने व्लूं हस्त्रीं अनुत्तरवाग्वादिनी मूलविद्या ।

१६. ॐ ऐं ऱ्हीं श्रीं हसकलहसकहलसकलऱ्हीं सर्वानन्दमये महाचक्रे बैन्दवे परब्रह्मस्वरूपिणी परामृतशक्तिः सर्वमन्त्रेश्वरी सर्वविद्येश्वरी सर्वपीठेश्वरी सर्ववीरेश्वरी, सर्वयोगेश्वरी सर्ववागीश्वरी, सर्वसिद्धेश्वरी सकलजगदुत्पत्ति मातृकाः सचक्राः सदेवताः समुद्राः सर्वसिद्धयः सायुधाः सपरिवाराः सालंकाराः सर्वोपचारैः सम्पूजिता सन्तर्पिता सन्तुष्टा सन्तु नमः. मां रक्षतु श्रीमहात्रिपुरसुन्दरी सम्पूर्ण मूलविद्याश्री ॥

चरण्य द्वय मन्त्राः ॥

१. ॐ ऐं ऱ्हीं श्रीं ऐं क्लीं सौः हंसः शिवः सोहं श्रीं ५ ॐ ३ क ५ ह ६ स ४ सौः ५ हसकलऱ्हीं हसकहलऱ्हीं स ४ हऱ्सौं हसक्षमलवरम् सहक्षमलवरयईं ऱ्हसोहक्षमलवरयऊं सौः आदि शिवानन्दनाथ पराभट्टारिकांबाश्री ।

२. ॐ ऐं ऱ्हीं श्रीं ॐ हंसः शिवः ऱ्हसौं योहमस्मि ब्रह्माहमस्मि, अहमस्मि ब्रह्माहमस्मि, सोहं स्वच्छ प्रकाश परिपूर्ण परापर महाप्रकाश परिपूर्णानन्दनाथश्री ॥

## ॥ संविक्तमालामन्त्रः ॥

अस्य मन्त्रस्य । कामेश्वर ऋषिः पंक्तिः छन्दः । परमसंविक्तमला देवता । ऐं बीजम् । सौः शक्तिः । क्लीं कीलकम् । ॐ १ आं, २ ईं, ३ ऊं ४ ऐं ५ औं ६ अः एवं न्यासः । ॐ क ५ ह ६ स ४ ॐ इति व्यापकन्यासः ।

ध्यानम् : —

**प्रकाशमध्यस्थितविश्वरूपां वराभये संदधतीं त्रिनेत्रां,**
**सिन्दूरवर्णामतिकोमलांगीं मायामयीं तत्वमयी मुपासे ॥**

कल्पद्रुमूलमणिकुट्टिमसन्निविष्टा ।
श्वेतातपत्रसितमौक्तिक यष्टिभूषां ॥
चापाभयेक्षुवरदानकरां त्रिनेत्रां,
मिष्टार्थदां परशिवां परिशीलयामि ॥
संविद्वेदगरीयसी गुणनिधिस्त्रैगुण्यविध्वंसिनी
मायामोहमदांधकारशमनी तापत्रयोन्मूलिनी ॥
वाग्देवी वदनांबुजे विकसतात् सम्बोधिनी दीपिका
ब्रह्मज्ञानविवेकसिद्धविजये विज्ञानमार्गे नमः ॥

मूलं ब्रह्मरंध्रांतं श्रीमूल पञ्चदशीं प्रागुक्तरूपं ध्यात्वा, तस्य एकैकाक्षर लयेन तुर्यस्वरूपामन्तिमकलां ब्रह्मरंध्रगतामवशेषयेत् ॥ यथा मनुः—क ५ ह ६ स ४ स ४ ह ६ स ४ एईलह्रीं, हसकहलह्रीं, सकलह्रीं ईलह्रीं ह ६ स ४ लह्रीं ह ६ स ४, ह्रीं ह ६ स ४, सकहलह्रीं स ४, कहलह्रीं स ४, हलह्रीं स ४, लह्रीं स ४, ह्रीं स ४, कलह्रीं, लह्रीं, ह्रीं, हीं, ई संवित्कलामहात्रिपुरसुन्दर्यै नमः ॥

वेद गर्भां स्वात्मानुसंधानेन, स्वात्मानुभावरूप सच्चिदानन्दरूपिणीं तुरीय स्वरत्वेन परिणतां कामकलां नाभौ न्यसेत् ॥

ॐ ऐं ह्रीं श्रीं ई नमः इत्यंगुष्ट तर्जनी मध्यमानामिकाभि र्नाभौ न्यसेत् ॥

## ॥ द्वादशार्धामन्त्रः ॥

अस्य मन्त्रस्य । परमानन्द भैरव ऋषिः । गायत्रीछन्दः । द्वादशार्धांबादेवता । ह्स्क्लरडैं बीजम् । ह्स्क्लरडीं शक्तिः । ह्स्क्लरडौं कीलकम् । पूर्वोक्तखण्डत्रयेन न्यसेत् ।

ध्यानम्ः--

द्वादशार्धां महादेवीं बन्धूककुसुमारुणाम्
पाशांकुशौ धारयन्तीमक्षमालां च पुस्तकम् ॥
पुंण्ड्रेक्षुचापपुष्पेषुवरदाभयधारिणीं ।
चन्द्रचूडां त्रिनयनां पञ्चवक्त्रविभूषितां ॥
शिवमञ्चे समासीनां ध्यात्वा मन्त्रं स्मरे द्बुधः ।

तारेशां चन्द्रमौलीं त्रिनयन विलसत्पञ्चवक्त्रां शिवस्थां ॥

रक्तांगां रक्तपंकोल्लुलितनुशिरोमालिकालंकृतांगीं ।
देवीं सृण्यक्षमालाकुसुमशरवरेक्षाख्यचापान् दधानाम् ।
ग्रन्थं शूलं कपालाभयकलितभुजां दिव्यरूपां नमामि ॥

मनुः—ऱ्हस्ब्लरॄडैं ऱ्हस्ब्लरडीं, ऱ्हस्ब्लरडौं । ऱ्हस्ब्लरॄडौं, ऱ्हस्ब्लरडीं, ऱ्हस्ब्लरडैं ॥

## ॥ लोपामुद्रामन्त्रः ॥

अस्य मन्त्रस्य । आनन्द भैरव ऋषिः । पंक्तिः छन्दः । श्री लोपामुद्रादेवी देवता । हसकलऱ्हीं बीजम् । हसकहलऱ्हीं शक्तिः । सकलऱ्हीं कीलकम् । एतत् कूटत्रयेण न्यासः ।

ध्यानम् : —

चतुर्भुजे चन्द्रकलावन्तसे. . . .जगदेकमातः ॥

मनुः—बीज शक्ति कीलक मन्त्राः ॥

## ॥ महार्धाम्बामन्त्रः ॥

अस्यमन्त्रस्य । कालाग्निरुद्रभैरव ऋषिः अतिजगतीछन्दः श्री महार्धांबा देवता । ॐ बीजम् । ईं शक्तिः । क्लीं कीलकां ऱ्हां इत्यादि न्यासः ।

आधारे तरुणार्कबिंबवदने अत्युग्रदंष्ट्रांकुरे
वीणावाद विनोदभोगनिलये वीणादिगानप्रिये ।
नानावर्णमये कशोद्भट(नरोत्पट) शिरस्सुव्यक्त मालाधरे ।
श्रीविद्ये त्वरिते महार्घमहिने श्रीशंकरि त्वां भजे ॥

मनुः ॐ ऐं ईं औं क ५ ह ६ स ४ महसृष्टिनित्ये स्वाहा हं स्थितिपूर्णे नमः । रं महासंहारिणिकृशे चण्डकाली फट् ऱ्हस्क्फें महासेव्ये अनन्तभास्करि चण्डकालि फट् । रं महासंहारिणी कृशेचण्डकाली फट् । हं स्थिति पूर्णे नमः । सं सृष्टिनित्ये स्वाहा ॥ इति महर्धांबा मन्त्रः ॥

## ॥ मिश्राम्बामन्त्र ॥

अस्यमन्त्रस्य । सदाशिव ऋषिः । गायत्रीछन्दः । श्री मिश्रांबा देवता । ऐं बीजम् । क्लीं शक्तिः । ऱ्हीं कीलकम् । १ आं, २ ईं ३ ऊं ४ ऐं ५ औं ६ अः इति न्यास ।

ध्यानम् ॥

ऐंकारेविद्रुमाभे रहरहमहिमे आदिमूलस्वरूपे ।
हाहागङ्गाभिरामे अमृतवनसृजे अन्नमन्नादिरूपे ॥

ह्रींकारे शक्तिमूले ईपरमहिमे ई क्षणध्यानरूपे ।
नासाढये नादनादे नवमवमहिमे नाथनाथाद्यमिश्रे ॥

मनुः ॐ ऐं मिश्रांबायै नमः ॥ पाठांतरं । ॐ ऐं क्लीं ह्रीं आं ईं ऊं ऐं औं अः ऐं मिश्रांबायै नमः ॥

## ॥ श्रीविद्याराज्ञीमन्त्रः ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः अनुष्टुप्छन्दः । श्रीविद्याराज्ञी सरस्वती देवता । ऐं बीजम् । स्वाहा शक्तिः । सरस्वति कीलकम् ॥ ऐं ह्रीं श्रीं क्लीं सौः अंगुष्टा, क्लीं ह्रीं ऐं ब्लूं स्त्रीं तर्जनी । नीलतारे सरस्वती मध्यमा । द्रां द्रीं क्लीं ब्लूं सः अनामिका ।

ऐं ह्रीं श्रीं क्लीं सौः कनिष्टिका । सौः ह्रीं स्वाहा करतल । एवं हृदयादि ।

ध्यानम्:—

शवासनां सर्वविभूषणाढ्यां कर्त्रीं कपालं चषकं त्रिशूलम् ।
करैर्दधानां नरमुंडमालां त्र्यक्षां भजे नीलसरस्वतींमताम् ॥

मनुः—ॐ ऐं ह्रीं श्रीं क्लीं सौः क्लीं ह्रीं श्रीं ह्रीं ऐं ब्लूं स्त्रीं नीलतारे सरस्वति द्रां द्रीं क्लीं ब्लूं सः ऐं क्लीं सौः ह्रीं स्वाहा ।

## ॥ पदयुगमन्त्रः ॥

अस्य मन्त्रस्य । दत्तात्रेय ऋषिः । अनुष्टुप्छन्दः । श्रीपदयुगो देवता । हं बीजम् । सः शक्तिः । सोहं कीलकम् । ऐं, क्लीं, सौः सौः क्लीं ऐं इति न्यासः ।

ध्यानम्:—

सिंजन्नूपुरपादकंकणमहामुद्रासुलाक्षारसा
लंकारांकितमंघ्रि पङ्कजयुगं श्रीपादुकालंकृतम् ।
उद्भास्वन्नखचन्द्रखण्डरुचिरं राजज्जपासंन्निभं
ब्रह्मादि त्रिदशार्चितं पदयुगं मूर्घ्निस्मराम्यम्बिके ॥

मनुः—हसकलह्रीं हसकहलह्रीं सकलह्रीं ॥ प्रकाशश्रीपादुकां (हसकलहसकलसकलह्रीं विमर्श-श्रीपादुकां) ।

## ॥ दशमुद्रामन्त्रः ॥

अस्य मन्त्रस्य । अष्टभैरव ऋषिः । गायत्रीच्छन्दः । श्रीपरमानन्द भैरवी देवता । ऐं बीजम् । क्लीं शक्तिः । सौः कीलकम् । मूलेन न्यासः ॥

(द्रां द्रीं क्लीं ब्लूं सः क्रों, ह्स्ख्फ्रें, ह्सौः ऐं सोः)

ध्यानम्:—

**शूलपात्राभयकरा सर्वाभरणभूषिता ।**
**सर्वशांतिकरा नित्या मुद्राणामधिदेवताः ॥**

मनुः—ऐं क्लीं सौः सौः क्लीं ऐं, ह्रीं श्रीं १ द्रां सर्वसंक्षोभिणि शक्तिः । २ द्रीं सर्वविद्राविणि शक्ति । ३ क्लीं सर्वाकर्षणीशक्ति, ४ ब्लूं सर्ववशंकरि, ५ सः सर्वोन्मादिनि । ६ क्रों सर्वमहांकुशे, ७ ह्स्ख्फ्रें सर्वखेचरि, ८ ह्सौ सर्वबीजे ९ ऐं सर्वयोनि, १० सौः सर्वत्रिखण्डे ॥

## ॥ पञ्चवीरावली ॥

अस्य मन्त्रस्य । ब्रह्मविष्णुरुद्र ईश्वर सदाशिव ऋषिः गायत्री छन्दः । पञ्चवीरावली देवता । लं वं रं यं हं बीजनि । वाणीलक्ष्मी उमापार्वतीमनोन्मनी शक्तयः । सोहं कीलकम् । रां इत्यादि न्यासः ।

ध्यानम्:—

**ब्रह्माणं च महाविष्णुं रुद्रं च परमेश्वरं ।**
**वन्दे भुजाश्च सर्वास्ते तत्तदायुधसंयुताः ॥**

मनुः—ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, लं ब्रह्मवीरावली, वं विष्णुवीरावली, रं रुद्रवीरावली, यं ईश्वरवीरावली, हं सदाशिववीरावली ॥

## ॥ नवदूतीमन्त्रः ॥

अस्य मन्त्रस्य । मन्मथ ऋषिः गायत्रीछन्दः । नवदूती देवता । अं बीजम् । आं शक्तिः । सौः कीलकम् । अं, आं, सौः इति द्विवारेण न्यासः ।

ध्यानम्:—

**दूतयस्तु यथा सर्वा वरदाभयहस्तकाः ।**
**योनिमुद्रां च सव्ये तु पानपात्रं च दक्षिणे ।**
**ध्येया हि सर्वकार्यार्थे नवयोन्यो यथाक्रमम् ॥**

मनुः १ अं आं सौ; ह्रीं श्रीं सौः योन्यंबादूति श्री । २. योनिसिद्ध नाथांबादूतीश्री । ३. महायोन्यंबादूतीश्री । ४. महायोनिसिद्धनाथांबाश्री । ५. दिव्ययोन्थबादूतीश्री । ६. दिव्ययोनिसिद्धनाथांबाश्री । ७. शंखयोन्थबा । ८. पद्मभोन्थंबाश्री । ९. पद्मयोनिसिद्धनाथांबाश्री ॥

## ॥ वीरावली दशकमन्त्राः ॥

अस्यवीरावलीदशकमहामन्त्रस्य । परमानन्द भैरव ऋषिः । गायत्री छन्दः । दशवीरावली देवता । ॐ वीजम् । ह्रीं शक्तिः । हं कीलकं । फां इत्यादि न्यासः ।

ध्यानम्ः—

भद्राः खेटधरावीराः वरदाभयहस्तकाः ।
ध्येयास्सदामहारौद्राः सर्वे विघ्ननिवारकाः ॥

मनुः १. ह्रीं श्रीं फट् फां फीं सृष्टिवीर भैरवायनमः । २. वीरभैरवयानमः । ३. संहार भैरवायनमः । ४. रक्त भैरवायनमः । ५ यम भैरवायनमः । ६. मृत्युवीर भैरवायनमः ७. भद्रवीरभैरवायनमः । ८. परमार्कवीर भैरवायनमः । ९. मार्ताण्डवीर भैरवायनमः । १०. कालाग्नि रुद्रवीर भैरवायनमः । इति दशावीरा ॥

## ॥ महामीनकेतु कला मन्त्रः ॥

ॐ ऐं ह्रीं श्रीं, ह्स्ख्फ्रें हसक्षमलवरयऊं सहक्षमलवरयईं, ह्सौः स्हौः ॥

२. अन्यः । ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ह्स्ख्फ्रें हसक्षमलवरयऊं सहक्षमलवरयईं ह्सौः स्हौः अहमहं ह्सौः सौः नफक्षमलवरयऊं ह्सौंः स्हौं नफक्षमलवरयईं ॥

३. ॐ ऐं ह्रीं श्रीं, क्षमं अं स्हौं मूलविद्या अनुत्तरमयीमहामीनकेतुकलाअम्बा ॥

## ॥ देवीमहापादुकामन्त्राः ॥

अस्यमन्त्रस्य । दक्षिणामूर्ति ऋषिः । गायत्री छन्दः । आदिशिवानन्दनाथ पराभट्टारिकांबा देवता । ऐं क्लीं सौः बीजम् । हशः शिवः सोह शक्तिः । श्रीं ह्रीं क्लीं ऐं सौः कीलकम् । महाषोडशीविद्या मूलेन न्यासः ।

ध्यानम्ः—

शिंजन्नूपुर पादकंकण महामुद्रा सुलाक्षारसा ।
लंकारांकितपादपंकजयुगं श्रीपादुकालंकृतं ।
उद्भास्वन्नखचंद्रखंडरुचिरं राजज्जपासन्निभं,
ब्रह्मादि त्रिदशासुरार्चितमहं मूर्ध्निस्मराम्यंबिके ॥

मनु: ॐ ऐं ह्रीं श्रीं । ऐं क्लीं सौः हंसः शिवस्सोहं श्रीं ५ ॐ ३ क ५ ह ६ स ४ सौः ६, ह्सौः ह्सक्षमलवरयऊं, स्हौः सहक्षमलवरयईं, औं रह्क्षमलवरयऊं सौः आदि शिवानन्दनाथ पराभट्टारिकांबा, ह्रीं श्रीं ॐ हंसः शिवः ह्सौं सोहमस्मि ब्रह्माहमस्मि अहमस्मि अहं ब्रह्मास्मि सोऽहं स्वब्रह्म प्रकाशनिर्गुणीय परिपूर्णा :•••

## ॥ देवीपादुकामन्त्राः ॥

(१) क ५ ह ६ स ४ । (२) एईल ह्रीं, ह ६, स ४ । (३) ईलह्रीं ह ६ हलह्रीं स ४ । (४) ह ६ स ४ ॥ (५) सकहलह्रीं स ४ । (६) कहलह्रीं स ४ । (७) हलह्रीं स ४ । (८) लह्रीं, स ४ । (९) ह्रीं स ४ । (१०) स ४ । (११) कलह्रीं । (१२) ४ लह्रीं । (१३) ह्रीं । (१४) ह्रीं नमः ॥

## ॥ महा पराचरणमन्त्राः ॥

ॐ ऐं ह्रीं श्रीं सः ह्ः सौः हंसः प्रकाशचरणाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं अः ह्ः सौः सोहं विमर्शचरणाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं सौः ह्ः हंस सोहं आनन्दचरणाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं सौः ह्ः हंसः शिवसोहं ज्योतिष्पादचरणाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं सः ह्ः ह्स्त्रौः सत्प्रकाशचरणारविंदाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं सः ह्ः स्हौः विमर्शचरणारविंदाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं सः ह्ः सौः ह्सौः स्हौः प्रकाशविमर्शविंदाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं सः ह्ः सौः सौः अहं हंस शिवः सोहं ज्योतिष्पादचरणाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं सः ह्ः सौः सौः आनंदचरणाभ्यांनमः ।

४ ॐ ऐं ह्रीं श्रीं सः ह्ः सौः सः ह्ः सौः परांबाचरणाभ्यांनमः ।

४ सः ह्ः सौः सौः ॐ ह्रीं हुं फट् परांबाचरणाभ्यांनमः ।

४ सः ह्ः सौः सौः अघोरे ह्रीं सः परमघोरे हुं परमघोरे ह्रूं घोररूपे ह्रीं, घोरमुखी भीम भीषण-मषि रम, पिबहेररुद्र ॐ ह्रीं फट् परांबाचरणार विन्दाभ्यांनमः ।

४ सः ह्ः सौः ॐ ह्रीं ह्सौः नमःशिवाय हसौः स्हौः सौः ह्रीं ह्रूं फट् श्रीमातृकानंदचरणार विन्दा-भ्यांनमः ।

## ॥ तुरीयचरणमन्त्राः ॥

१) ४ ई क ५ हंस, प्रकाशचरणश्री । २) ४ ई ह ६ सोहं विमर्शचरणाश्री । ३) ४ ई स ४ हंसः सोहं प्रकाशविमर्श । ४) ४ ई सकए ई लहसकहल स ४ अंद्राः निर्वाणचरणा ॥

## ॥ लोपामुद्राचरणमन्त्राः ॥

४ हसकलह्रीं हंसः प्रकाशचरण । ४ हसकहलह्रीं सोहं विमर्शचरणा ४ सकलह्रीं हंसः सोहं प्रकाश-विमर्शचरण ।

४ हसकलह सकहल स ४ हंसः शिवः सोहं निर्वाणचरणा ।

## ॥ कामराजचरणमन्त्राः ॥

४ क ५ हंसः प्रकाशचरणा हसकहल-ह्रीं सोहं विमर्शचरणा ।

४ स ४ हंसः सोहं प्रकाशविमर्शचरणा । ४ क एईल हसकहल स ४ हंसः शिवः सोहंनिर्वाणचरणा ॥

## ॥ त्रिसौधचरणमन्त्राः ॥

४ सौः अः हंसः प्रकाशचरणा । ४ सौः अः सोहं विमर्शचरणा ।

४ सौः अः हंसः सोहं प्रकाशविमर्श । ४ सौः अः हंसः शिवः सोहं निर्वाणचरणा ।

## ॥ सहजा परांबाचरणमन्त्राः ॥

४ सं -ह्स्ख्फ्रें -ह्सौं चित्प्रकाशानंदनाथ श्रीपरांबा । श्री पादुकासहजांबा ४ ऐं -ह्रीं -ह्सौं -ह्स्ख्फ्रें श्रीं -ह्रीं ऐं श्रीं ह ६ शांतानंदनाथ सहजाअपरांबा ॥

## ॥ शुक्लरक्तमिश्रविद्याचरणमन्त्राः ॥

४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं शुक्लविद्या महापीठश्री ।
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं शुक्लपुष्प महापीठश्री ।
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं शुक्लमंडल महापीठश्री ।
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं शुक्लचक्र महापीठश्री ।
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं शुक्लमंत्र महापीठश्री ।
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं शुक्लदीप महापीठश्री ।
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं शुक्लमुद्र महापीठश्री ।
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं शुक्लनती महापीठश्री ।
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं महाप्रकाशानंदनाथश्री ।

४ -ह्स्रौं -ह्सौं -ह्स्ख्फ्रें श्रीं-ह्रींऐं शुक्लचरणश्री ॥
४ -ह्स्ख्फ्रें -ह्सौं -ह्स्रौं रक्तविद्या महापीठश्री ।
रक्तपुष्प
रक्तदीप
रक्तमुद्रा
रक्तनती
महाप्रकाशिनीपरांबाश्री ॥

४ ऱ्हस्रौं ऱ्हसौं ऱ्हस्ख्फ्रें श्रींऱ्हींऐं रक्तचरण महापीठश्री
४ ऱ्हस्ख्फ्रें ऱ्हसौं ऱ्हस्रौं मिश्रविद्या महापीठश्री
मिश्रचरु महापीठश्री
मिश्रमन्त्र महापीठश्री
मिश्रदीप महापीठश्री
मिश्रमुद्रा महापीठश्री
मिश्रनती महापीठश्री

महाप्रकाशमहाप्रकाशिनी सामरस्यानंदनाथ मिश्रपाद स्हौं स्हौं ऱ्हसौं ऱ्हस्ख्फ्रें श्रींऱ्हींऐं मिश्र चरणश्री ॥

## ॥ निष्कलमयांबाचरणमन्त्राः ॥

४ ऐं हसक्षमलवरय ॐ श्रीं परमानंदनाथ श्री

४ ऐं छ्रां छ्रीं किणिकिणि विच्छे ऱ्हस्ख्फ्रें निष्कलचरणांबाश्री ॥

## ॥ परापावकचरणमन्त्रः ॥

४ ऱ्हस्ख्फ्रें ऱ्हसौं हसक्षमलवरयरां हसक्षमलवरयरीं श्रीं परापावक सर्वाराध्य सर्वमूर्ध्व परनाथ सर्वगुरु स्वयं गुरु श्रीगुरुनाथश्री ।

## ॥ परापावकचरणमन्त्रः ॥

शंभुगुरु हसक्षमलवरयरुं ऱ्हसौं ऱ्हस्ख्फ्रें श्रींऱ्हींऐं श्रीपरापवकश्री ॥

## ॥ गुरुपादुकामन्त्रः ॥

४ ऱ्हस्ख्फ्रें ऱ्हसौः हसक्षमलवरयऊं हसक्षमलवरयईं श्री नाथ ऱ्हस्ख्फ्रें श्रींऱ्हींऐं पादुकां पूजयामि ॥

## ॥ विश्रांतिचरणमन्त्रः ॥

४ ॐ ऱ्हीं श्रीं हंसः शिवः ऱ्हसौः सोहं हसकहल हसकहल सकलऱ्हीं सच्चिदानंद ज्योतिरहं हसकल हसकहल स ४ सच्चिदानंदनाथ ज्योतिहमेवास्मि इति विश्रांतिचरण एवशिरसिसंघट्टमुद्रया विन्यसेत् ॥

## ॥ शम्भुचरणमन्त्रः ॥

४ ॐ योह्यस्मि अह्यस्मि ब्रह्माहमस्मि, अहमस्मि ब्रह्माहमस्मि, अहमस्मिसोहं स्वच्छप्रकाश परिपूर्ण परापर महाप्रकाश परिपूर्णानंदनाथश्री ॥

इति स्वशिरसि संघट्टमुद्रया विन्यस्यः स्वात्मा सकल प्रपंचोत्तीर्ण संविदेक स्वाभाव सच्चिदानंदमयं विचिंत्येत् ॥ एवं पादुकामनुं यजेत् ।

## ॥ रक्तशुक्लचरणद्वयमन्त्राः ॥

४ ऐं क्लीं हंस शिवः सोहं श्रीं ह्रीं क्लीं ऐं सौः ॐ ३ क ५ ह ६ स ४ सौं ५ हसकलह्रीं हसकहल-ह्रीं स ४ ह्सौः हसक्षमलवरयऊं, हसक्षमलवरयीं, औं रहक्षमलवरभऊं, सौः आदि शिवानंदनाथ पराभट्टारिकांबा

४ ह्रीं श्रीं ॐ हंसः शिवः ह्सौं योहमस्मि ब्रह्माहमस्मि अहमस्मिब्रह्माहमस्मि सोहं स्वच्छ प्रकाश-परिपूर्ण परापर महाप्रकाशपरिपूर्णानंदनाथश्री ।

## ॥ भुवनेश्वरीमन्त्रः ॥

अस्यमन्त्रस्य । सदाशिव ऋषिः । पंक्तिः छन्दः । भुवनेश्वरी देवता ।

हं बीजं । ह्रीं शक्तिः ईं कीलकं ह्रां ह्रीं इत्यादि न्यासः ।

ध्यानम्ः—

उद्यद्भास्वत्समाभां विजितनवजपामिंदुखण्डावतंसां
ज्योतिर्मौलीं त्रिनेत्रां विविधमणिलसत्कुंडलालंकृतांगीम् ।
हारग्रैवेयकांजीगुणमणिवलयाद्यैर्विचित्रांबराढ्या-
मम्बां पाशांकुशाढ्यामभय वरकरामंबिकां तां नमामि ॥

ॐ श्रीं ह्रीं क्लीं ॐ नमो भगवति भुवनेश्वरि सर्वलोकवशंकरि स्वाहा ॥

## ॥ ज्योतिर्विद्यामन्त्रः ॥

अस्यमन्त्रस्य । परमानन्द ऋषिः पंक्तिः छन्दः । ज्योतिर्विद्यादेवता ।

ॐ बीजं । श्रीं शक्तिः । ह्रीं कीलकम् । श्रीं ह्रीं ईं इतिद्विवारेण न्यासः ।

ध्यानम्ः--

उद्यदादित्यरुचिरां शीतां सुकृतशेखरां ।
पद्मासनांत्रिनेत्रांच पाशांकुशवराभयां ॥
अलंकृतचतुर्बाहुं मन्दस्मितलसन्मुखीम् ।
कुचभार विनम्रांगलतां देवीं हृदि ॥
स्मरेत् प्रकृतिः परमाशक्तिः चिन्मयी ज्योतिराकृतिः ।
सत्यानन्दमयी ध्येया शक्तिमयी समयेश्वरी ॥

मनुः—ॐ श्रीं ह्रीं ईंनमः, ह्रीं श्रीं ॐ ।

## ॥ कालसङ्कर्षणीमन्त्रः ॥

अस्य मन्त्रस्य । सृष्टि नित्ये सहार भैरव ऋषिः । अनुष्टुप् छन्दः । श्रीकालसंकर्षणी देवता । ॐ सं सृष्टिकृत्ये स्वाहा बीजं । हं स्थितिपूर्णेनमः शक्ति । रं महासंहारिणी कृशेचण्डकाली फट् कीलकं । १ ॐ सं सृष्टिनित्येस्वाहा । २ ॐ हं स्थितिपूर्णेनमः । ३ ॐ रं महासंहारिणीकृशेचण्डकाली फट् । ४ रं ह्स्क्ष्फे महानारव्ये अनन्तभास्करि महा चण्डकाली फट् । ५ ह्स्क्ष्फें महाचण्डयोगेश्वरि । ६ ॐ ऐंह्रींश्रीं ऐं क्लीं पञ्चमन्त्रसमष्टिरूपिण्यै परमायुषकारिण्यै कालसंकर्षण्यै परिवारायैनमः करतल...फट् ॥

ध्यानम्ः—

**कपालशूलिनी श्यामा महाट्टहसिता नना ।**
**कालसंकर्षिणी पातु पाश विष्णुश्चकारिणी ॥**

ॐ सं सृष्टिनित्यै स्वाहा, हं स्थितिपूर्णेनमः रं महासंहारिणीकृशे चण्डकाली फट् । रं ह्स्क्ष्फें महानारव्ये अनन्तभास्करि महाचण्डकाली फट् । रं ह्स्क्ष्फें महाचण्ड योगेश्वरी । पञ्चमन्त्र समष्टिरूपिण्यै परमायुष कारिण्यै कालसङ्कर्षण्यै सपरिवारायै नमः ॥

## ॥ स्वगुरुपादुकामन्त्रः ॥

अस्यमन्त्रस्य । ब्रह्मा ऋषिः गायत्री छन्दः । श्रीगुरुपादुका देवता ।

ॐ हं बीजं । सः शक्तिः सोहं कीलकं । हंसां इत्यादिन्यासः ।

ध्यानम् ॥

**वन्दे गुरुपदद्वंद्व मवाङ्मानसगोचरं ।**
**रक्तशुल्कप्रभामिश्रमतर्क्यंत्रैपुरंमहत् ॥**

ब्रह्मरंध्रेसितांबुजे चिच्चन्द्रमण्डले शुद्धस्फटिकाभं विराजितं मुद्रया विलसत्पाणिद्वयनासावलियुतं दधानं रक्तयाशक्त्यलिष्टवामांक संस्थया धारय ॥

मनुः ४ ऐं क्लींसौः हंसः शिवः सोहं स्वरूपनिरूपणहेतवे...स्वगुरुश्री ॥

## ॥ परमगुरुमन्त्रः ॥

अस्यमन्त्रस्य । सदाशिव ऋषिः । गायत्रीछन्दः । परमगुरुर्देवता ।
हं बीजं । सं शक्तिः सोहं कीलकं हंसां इत्यादिन्यासः ।

ध्यानम्ः—

**आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तं ।**
**योगींद्रमीडयं भवरोगवेद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥**

मूलं । ४ ऐं क्लीं सौः सोहं हंसः शिवः स्वच्छप्रकाशहेतवे...परमगुरुश्री ॥

## ॥ परमेष्ठिगुरुमन्त्रः ॥

अस्यमन्त्रस्य । दक्षिणमूर्ति ऋषिः । गायत्री छन्दः । परमेष्ठिगुरुर्देवता ।

हं बीजं । सं शक्तिः । सोहं कीलकं । हंसां इत्यादिन्यासः ।

ध्यानम्:—

अन्तस्तिमिर निर्भेद भानवे कामधेनवे ।
सदन्तवासिनां कल्पतरवेगुरवे नमः ॥

मूलं ४ ऐं क्लीं सौः हंसः शिवः सोहं स्वात्माराम परमानन्द पंजर विलीन तेजसे परमेष्ठिगुरु श्री ॥

## ॥ परापरगुरुमन्त्रः ॥

अस्यमन्त्रस्य । ब्रह्मा ऋषिः । गायत्रीछन्दः । परमेष्ठिगुरुर्देवता । हं बीजं सं शक्तिः । सोहं कीलकं । हंसां इत्यादिन्यासः ।

ध्यानम्:—

नित्यं निर्मलमद्वयं निरुपमं निर्धूत दुःखाखिलं,
निःसंदेहकरं निवृत्तिसुलभं निर्मत्सरं निस्पृहम् ।
भव्यं भव्यजनैक सेव्यममलं भावादिकं भासुरं,
ब्रह्मानन्दमहं भजामि सकलोपाधि प्रणाशं मुदा ॥

लोकमाया समायुक्तं योगिनीपरिवेष्टितं । वन्दे मन्दस्मितानन्द श्री गुरु शिवशक्ति विग्रहं ॥

४ ऐं क्लीं सौः । हंसः शिवः सोहं हंसः स्वात्मा.........परापरगुरु श्री ॥

## ॥ लक्ष्मीवासुदेवमन्त्रः ॥

अस्यमन्त्रस्य । प्रजापति ऋषिः । गायत्री छन्दः । श्री वासुदेवोदेवता ।
ह्रीं बीजं । श्रीं शक्तिः । श्रीलक्ष्मीवासुदेवायेति कीलकं ॥

१ ॐ ह्रीं ह्रीं, २ ॐ श्रीं श्रीं, ३ ॐ लक्ष्मी, ४ ॐ वासुदेवाय, ५ ॐ नमः इति करतलनेत्रकर्ण न्यासः ।

ध्यानम्:—

विद्युच्चन्द्रनिभं वपुः कमलजा वैकुंठयोः रेकातां
प्राप्तंस्नेह वसेन रत्नविलसद्भूषा रसालंकृताम् ।

**विद्यापङ्कज दर्पणान्मणिमयं कुम्भं सरोजंगदां**
**शंख चक्रममूनि बिभ्रदमितां दृश्याच्च यावस्सदा ।।**

मनुः–"ॐ ह्रीं ह्रीं श्रीं श्रीं लक्ष्मीवासुदेवायनमः ।"

## ।। कुबेरमन्त्रः ।।

१ अस्यमन्त्रस्य । गौतम ऋषिः । त्रिष्टुप् छन्दः । कुबेरोदेवता । सां बीजं । सीं शक्तिः । सूं कीलकं । सां इत्यादिन्यासः ।

ध्यानम्ः—

**धूम्रवर्णो गदाहस्तः कुबेरो नरवाहनः ।**
**सौम्यः सर्वौषधि. . . . .समन्वितः ।**
**नक्षत्राधिपति स्सोमः तस्मैनित्यं नमोनमः ।।**

मनुः सोमोधेनुं सोमोअर्वंतमाशुं । सोमोवीरं कर्मण्यंदधातु, साद्नयंविधत्यं समेयं । पितुश्रवणंयोदधा-शदस्मै ।। (इतिवेदमन्त्रः)

२–अन्यः–अस्यमन्त्रस्य । विश्रवा ऋषिः । बृहतीछन्दः । शिवमित्र धनेश्वरोदेवता सां, सींसूं इति बीजम् शक्तिः कीलकं ।

१ ॐ यक्षाया, २ कुबेराय, ३ वैश्रवणाय, ४ धनधान्याधिपतये, ५ धनधान्यसमृद्धिमे, ६ देहि२ दापयर ठः ठः । संख्याक्रमेण न्यासः ।

ध्यानम्ः--

**मनुजवाह्य विमानवरस्थितं गरुडरत्ननिभं निधिनायकम् ।**
**शिवसखं मकुटादि विभूषित वरदगदेदधतं भजतुंदिलम् ।।**

मनुः । पूर्ववत् ।

मनुः । ॐ श्रीं ॐ ह्रीं श्रीं ह्रीं क्लीं श्रीं क्लीं वित्तेश्वराय नमः ।।

मनुः । ॐ श्रीं ॐ ह्रीं क्लीं श्रीं वित्तेश्वरायनमः ।।

## ।। अन्योन्यराममन्त्रः ।।

अस्यमन्त्रस्य । सदाशिव ऋषिः अनुष्टुप् छन्दः । श्रीरामचन्द्रोदेवता । रां, रीं रूं इति बीज शक्ति कीलकं । रां इत्यादि न्यासः ।

ध्यानम्:--

कालाम्बोधर कांतिकांतमनिशं वीरासनाध्यासितं ।
मुद्रां ज्ञानमयीं दधानमपरं हस्तांबुजं जानुनी ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं,
पश्यंतं मकुटांगदादि विविधा कल्पोज्वलांगं भजे ॥

ॐ श्रीं रां रामायनमः ॥

## ॥ श्रीसीतामन्त्रः ॥

अस्य मन्त्रस्य । जनकऋषिः । गायत्रीछन्दः श्रीसीतादेवता । श्रीं बीजं । स्वाहा शक्तिः । सीतायै कीलकं । सां इत्यादि न्यासः ।

ध्यानम्:—

हेमाभामंबुजकरां रामालोकनतत्परां ।
ध्यायेत्प्रसन्नवदनां सीतांरामांकसंस्थिताम् ॥

ॐ श्रीं सीतायै स्वाहा ॥

## ॥ श्रीविद्यारामन्त्रः ॥

अर्द्धनारीश्वर ऋषिः । गायत्रीछन्दः । श्रीरामत्रिपुरसुन्दरीदेवता ।

रां बीजं । स्वाहा शक्तिः श्रीं कीलकं ।

१. ॐ ऐं ऱ्हीं श्रीं, ऐं क्लीं सौः । ऐं ऱ्हीं श्रीं ऐं सौः स ४ रां रामाय ब्रह्मात्मने सर्वज्ञ शक्तिधाम्ने महात्रिपुरसुन्दरि श्रां रां ऱ्हां अंगुष्ठा ।

२. ,, क्लीं ह ६ क्लीं रघुनन्दनाय विष्णुवात्मने नित्यतृप्तिशक्तिधाम्ने श्रीमहात्रिपुरसुन्दरी श्रीं रीं ऱ्हीं तर्जनीय ।

३. ,, सौः क ५ ऐं हुं जानकीवल्लभायस्वाहा रुद्रात्मने अनादिबोधशक्तिधाम्ने श्रीमहात्रिपुरसुन्दरी श्रूं रूं ऱ्हूं मध्यमा ।

४. ,, ऐं ऱ्हीं श्रीं ऐं सौः स ४ रां रामायपरमात्मने स्वतन्त्रशक्तिधाम्ने श्रीमहात्रिपुरसुन्दरी श्रैं रैं ऱ्हैं अनामिका ।

५. ,, क्लीं ह ६ क्लीं रघुनन्दनाथ ब्रह्मात्मने नित्यमलुप्तशक्तिधाम्ने श्रीमहात्रिपुरसुन्दरी श्रौं रौं ऱ्हौं कनिष्टिका ।

६. सौः क ५ ऱ्हूं जानकीवल्लभायस्वाहा परब्रह्मात्मने अनंतशक्तिधाम्ने श्रीमहात्रिपुरसुन्दरी श्वः रः ऱ्हः करतल ॥ एवं हृदयादि ।

ध्यानम्:—

अयोध्या नगरे रम्ये कल्पद्रुः पादमूलतः ।
सिंहासने समासीनं दिव्ये श्रीचक्ररूपके ।
बिद्वाकार महातार्क्ष्य संस्थं रामं विचिंतयेत् ।
सीतां ध्यायेत्महालक्ष्मीं सर्वसंपत्तिदायिनीम् ॥
वामांके रामभद्रस्य संस्थितां पद्मधारिणीं ।
जानक्या स्तनपंमोरग्रेस्पृशतं वामपाणिना ।
वैदेहींमुदितोभिजात पुलकांगाढं समालिंगयन्
वामेनस्तनचूचुकं पुलकितं वामंकरेणस्पृशन् ।
तत्वं दक्षिणपाणिना कलितया धीमुद्रया बोधयन्
रामो मारुति सेवित स्स्मरतु मां साम्राज्यसिंहासने ।
ज्ञानमुद्रां दक्षिणेन वहन्तं पाणिनासद ।
एवं ध्यात्वाजपेन्मन्त्रं ब्रह्मात्यैक्यप्रदायकं ॥

मनुः ऐं ऱ्हीं श्रीं ऐं सौः स ४ रां रामाय क्लीं ह ६ क्लीं रघुनन्दननाथ सौः क ५ श्रीं ऐं हुं जानकीवल्लभाय स्वाहा ।

## ॥ श्रीरत्नगर्भगणपतिविद्यामन्त्रः ॥

गणक ऋषिः । देवीगायत्री छन्दः । रत्नगर्भगणपतिः देवता । गां बीजं ऱ्हीं शक्तिः । गां इत्यादि न्यासः ।

ध्यानम्:—

करींद्रवदनंदेवं त्रिनेत्रंचन्द्रशेखरम् ।
अधस्ताद्वनिताकारं सिंदूरारुणविग्रहम् ॥
उत्तंगस्तनभारोधरत्नभूषण भूषितं ।
क्वणत्किंकिणिकाकांचीहारनू पुरशोभितं ।
बीजापूरंगदामिक्षुचापं शूलारिवारिजं ।
पाशोत्पलंच व्रीह्याग्रं स्वदंतं रत्नकुंभकं ।

**बिभ्रस्तंकंकणैर्हस्तैः उभाभ्यां हेमशृंखलां ।**
**बिभ्राजमानं विघ्नेशं ध्यायेत्सर्वार्थसिद्धये ॥**

मनुः ॐ श्रीं ह्रीं क्लीं ग्लौं गं ॐ श्रीं ह्रीं क्लीं ॐ नमोभगवते रत्नगर्भगणपतये क ५ श्रीं ह्रीं श्लूं फ्लूं म्लूं म्लूं श्रीं ह्रीं श्रीं ह ६ वरवरद सर्वसिद्धिप्रदायस ४ सर्वैश्वर्यप्रदाय हसकलहसकहक सर्वाभीष्टसिद्धिं कुरु२ रत्नंदेहि २ दापय ३ स्वाहा स ४ ॥

## ॥ हिरण्येश्वरीमन्त्रः (शूलिनीप्रकरणे) ॥ (?)

अस्य मन्त्रस्य हिरण्यगर्भ ऋषिः । बृहतीछन्दः । शूलिनीदुर्गाहिरण्येश्वरी देवता ।
ॐ बीजं । ह्रीं शक्तिः । क्लीं कीलकं । श्रीं ह्रीं क्लीं इत्यादि न्यासः ।

ध्यानम्ः—

**तप्तस्वर्णसमप्रभां नवजपा पुष्पारुणाभांबरां,**
**उद्यत्पूर्ण सुधांशुमण्डल सुखीं कल्याणवेषोज्वलाम् ।**
**चित्रारत्नमुखैसमस्तनिधिभिसंसेव्यमानांशिवां**
**भक्ताभीष्टवरप्रदाननिरतां ध्यायेत् हिरण्येश्वरीम् ॥**

मनुः ॐ श्रीं ह्रीं क्लीं ॐ नमो भगवती हिरण्योद्भवे हिरण्येश्वरि हिरण्यवर्षिणि मह्यं हिरण्यं वर्षय२ समृद्धिं मे देहि देहिमे स्वाहा ॥

## यन्त्रप्रकरणम्

अर्ध्वंनवरेखा विलिख्य तिर्यक् सप्तरेखा विलिख्य, एवमेव अष्ट । चत्वारिंशत् कोष्टानि भवंति । कोष्टेषु एकवर्णेन विलिखेत् एतत् मन्त्रराजं शुभावहं सर्वैश्वर्य समृद्धये ।

## ॥ सर्वसौभाग्यलक्ष्मीमन्त्रः ॥

भृगु ऋषिः । निवृत्तिश्छन्दः । सर्वसौभाग्यलक्ष्मी देवता । श्रां, श्रीं, श्रूं इति बीजशक्ति कीलकानि । श्रां इत्यादि न्यासः ।

ध्यानम्ः—

**कान्त्याकाञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः,**
**हस्तोक्षिप्त हिरण्मयामृतघटैरासिच्यमानांश्रियां ।**
**बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्वलां,**
**क्षौमाबद्धव नितंबबिंबलसितां वन्देऽरविंदस्थिताम् ॥**

मूलं । ॐ श्रीं श्रीं क्लीं क्लीं श्रीं श्रीं कमलेकमलालये प्रसीद२ कमलवासिन्यै श्रीं क्लीं ३ महालक्ष्मी २ एह्येहि सकल सौभाग्यं श्रीं ३ क्लीं ३ ईं श्रियै महालक्ष्म्यै देहिमे स्वाहा ॥

## ॥ भूवराहमन्त्रः ॥

भृगुऋषिः । अतिजगतीछन्दः । भूवराहो देवता । ॐ, स्वाहा, भूर्भुवस्सुवः इति बीजशक्ति कीलकानि । न्यासः १ एकदंष्ट्राय, २ व्योमकेशाय, ३ तेजोधिपतये, ४ विश्वरूपाय महादंष्ट्राय इति करतल नेत्रंविना न्यसेत् ॥

ध्यानम्:—

जान्वधस्तप्तहेमाभं नाभ्यंतं स्फटिकप्रभं ।
कठांतंतरुणादित्यनिभं. ऊर्ध्वांतमंबिके ॥
निरामासं करैश्चक्रं शंखं खड्गंच खेटकं ।
उपयातंचशक्तिं च धारयंतं वराभये ।
तस्यांके, संस्मरेद्देवीं दिव्याभरणभूषितां ॥
उद्धृतांगीं वराहेणकृष्णेन शतपाणिना ।
महायज्ञवराहस्य हस्तन्यस्तपदांबुजां ॥
अंके निषण्णमेकेन करेणालिंगितो रसं ।
गंण्डस्थलेसमाक्रांतं लज्जयावनितानना ॥
श्यामलां फुल्लपद्माक्षीं फुल्लपंकज धारिणीं ।
विश्व प्रपंच निर्माण नित्योपादानकारणां ॥
सुरासुरादि गर्भस्य स्थावस्यचरस्थच ।
जीवरूपां कृपारूपां साक्षिणीं सर्वकर्मजां ॥
वराहरूपिणो विष्णु पत्नीं तुधृतां महीं ।
ध्यायन् जपेदिमांविद्यां सर्वसौभाग्यदायिनीम् ॥

मनुः ४ ऐं ह्रं ह्रीं क्लीं ग्लौं ह्रीं सौः ॐ नमो भगवते वराहरूपाय क्लीं ह्रीं ठं क्लीं हंसंरंह्रींक्लीं भूर्भुवस्स्वर्पतये सौः क्लीं विष्णुं ह्रीं ऐं भूपतित्वं मे देहि २ दापय २ स्वाहा ॥

## ॥ रत्नेश्वरीमन्त्रः ॥

प्रद्योतन ऋषिः । त्रिष्टुप् छन्दः । श्रीरत्नेश्वरीदेवता । ह्रीं बीजं । श्रीं शक्तिः ग्लूं कीलकं । स्वप्रकाशे देवेशिरत्नेश्वरीप्रसाद सिध्यर्थेजपेविनियोगः । ह्रां इत्यादि न्यासः ।

ध्यानम्:—

रत्नेश्वरीं रत्नभूषितांगीं माणिक्यमौलीं तरुणार्ककांतिं ।
करैर्वहंतीं नवरत्नदीपान् प्रकाशमानां मनसा स्मरामि ॥

मनुः । ऋ श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं न्लूं ह्रीं श्रीं ॥

## ॥ महालक्ष्मीमन्त्रः ॥

वामेकेश्वर ऋषिः । बृहतीछन्दः । श्रीमहालक्ष्मीर्देवता । मां बीजं । श्रीं शक्तिः । स्वाहा कीलकं । सां इत्यादि न्यासः ।

ध्यानम्:—

लक्ष्मींक्षीरसमुद्रराज. . . .प्रियां ।
या सा पद्मासनस्था. . . .युक्तां ॥

मनुः । ॐ श्रीं क्लीं महालक्ष्मी २ एह्येहि सकलसौभाग्यं देहिमे स्वाहा ॥

## ॥ धनलक्ष्मीमन्त्रः ॥

विष्णु ऋषिः । गायत्रीछन्दः । धनलक्ष्मीर्देवता । श्रां श्रीं श्रूं बीजं शक्ति कीलकम् । स्रां इत्यादि न्यासः ।

ध्यानम्:—

वन्दे पद्मकरां प्रसन्नवदनां कौशुंभवस्त्रान्वितां ।
भक्ताभीष्ट फलप्रदां हरिहर ब्रह्मादिभिस्सेवितां,
पार्श्वेपङ्कज शंख चक्रनिधिभिर्युक्तां सदाशक्तिभिः
तां त्वां चन्द्रकलवतंस मकुटां चारुस्मितां भावयो ॥

मनुः ॐ श्रीं २ श्रींकरीं धनकरीं धान्यकरीं धान्यैकवृद्धिकरीं समृद्धिकरीं सर्वसंपत्करीं श्रीं श्रीं महालक्ष्मी सर्वैश्वर्य कुरु२ स्वाहा ॥

## ॥ पराप्रासादांबामन्त्रः ॥

अस्य मन्त्रस्य । चिदानन्द भैरव ऋषिः । अव्यक्तगायत्री छन्दः । श्रीपराप्रासादांबा देवता । स बीजं । हौ शक्तिः । बिन्दवः कीलकं । स्हां इत्यादि न्यासः ।

ध्यानम्:—

अर्धं शम्भोश्शरीरं मरकतमणि वच्छामलं कोमलांगं,
अर्धं बालार्ककोटि द्युतिनिभमरुणं पुस्तकं ज्ञानमुद्रां ।
वामे माणिक्यपात्रमुपरिकरतले बिभ्रतीं दिव्यशूलं
प्रासादद्योतकं मे स्फुरतु हृदिसदा सच्चिदानन्द तेजः ॥

मनुः ऐं ह्रीं श्रीं स्हौं ॥

पुरुषंवा स्मरेद्देवीं स्त्रीरूपं वा विचिंतयेत् ।
अथवानिष्कलं ध्यायेत्सच्चिदानन्दलक्षणम् ॥
सर्वतेजोमयं साक्षात्सचराचर विग्रहम् ।
ततः स्सदर्शयेन्मुद्रा दशकं परमेश्वरि ॥
योनिर्लिंगेच्च सुरभिः वैति मुद्राचतुष्टयं ।
वनमाला नमोमुद्रा महामुद्रा इतिक्रमात् ॥
मूर्ध्नि संचिंतयेद्देवि श्रीगुरुं भक्तवत्सलं ।
पञ्चोपचारै स्संपूज्य ततो विद्वान्मनुं जपेत् ॥

## ॥ पराशांभवीमन्त्रः ॥

अस्य मन्त्रस्य । चिदानन्द भैरव ऋषिः । अतिजगती छन्दः श्रीपराशांभवीदेवता । ऱ्हीं बीजं । श्रीं शक्तिः । ऐं कीलकं । तारत्रयद्विरावृत्या न्यासः ।

ध्यानम्: —

माया कुण्डलिनी क्रिया मधुमती कालीकलामालिनी,
मातंगी विजया जया भगवती देवीशिवा शांभवी ।
शक्तिश्शंतरवल्लभा त्रिनयना वाग्वादिनी भैरवी,
ऱ्हींकारी त्रिपुरा परापरमयी माता कुमारी त्वसि ॥

मनुः । ॐ ऱ्हीं श्रीं ऱ्स्क्लें ऱ्हसौं अहमहंमहमहं ऱ्हसौं ऱ्हस्क्लें श्रीं ऱ्हीं ऐं ॥

अपरोमनुः ॥ ॐ ऐं ऱ्हीं श्रीं ऱ्हस्क्लें ऱ्हसौः ऱ्हौः श्रीं ऱ्हीं ऐं ॥

## ॥ प्रासादमन्त्रः ॥

अस्य मन्त्रस्य । वामदेव ऋषिः । पंक्ति छन्दः । श्रीसदाशिवोदेवता । हं बीजं औं शक्तिः । हां इत्यादि न्यासः ।

ध्यानम्: --

मुक्तापीत पयोदमौक्तिकजपा वर्णैर्मुखैःपञ्चभिः,
त्र्यक्षेरंचितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभं ।
शूलं टंककृपाण वज्रदहना न्नागेंद्रघण्टांकुशान्,
पाशंभीतिहरं दधानममिता कल्पोज्ज्वलं चिन्तये ॥

मनुः ऐं ऱ्हीं श्रीं हौं ॥

## ॥ खेचरीमन्त्रः ॥

अस्य मन्त्रस्य । आनन्द भैरवऋषिः । पंक्ति छन्दः । श्रीखेचर्यवादेवता । फ्रें बीजं । हे इति शक्तिः । स्रवे इति कीलकं । (मन्त्रार्णैः न्यासः) । हं, सं, खें फ्रें, रं एं, इति न्यासः ।

ध्यानम्:—

वियद्व्याप्ते पदाम्भोजां भुजास्फालितदिग्गजाम् ।
ध्यायामि देवदेवीशीं खेचरीं भैरवप्रियाम् ॥

मनुः ॐ ह्स्ख्फ्रें ॥

## ॥ हादिविद्यापराषोडशीमन्त्रः ॥

सच्चिदानन्द भैरव ऋषिः । अमृतविराट् छन्दः । पराषोडशीदेवी देवता ।

ॐ, श्रीं ५ ॐ ३ बीजं । ह ६ स ४ शक्तिः । सौः ५ कीलकं । एतत्कूटत्रयेणद्विरावर्तिना न्यासः ।

ध्यानम्:—

सिद्धवसिद्धव्रतरत्नभूमिके, कल्पवृक्षवनवाटिकावृते,
रत्नसालनवमध्यसे रेणुतत्वबाटी शतकेनसंवृते ।
नीपवाटि मणिमण्टपोत्तरे चण्डभानुशशिकोटिभासुरे ।
आदिमञ्चशिवपञ्चकेयुते, शंकरांकमणिपीठिकोपरि ॥
पाशबाण धनुरंकुशान्विते नूपुरांबावसुवेणिकाधराम् ।
कादिहादिमनुरूपिणीमहं भावयामि परदेवतां भजे ॥

मनुः ॐ क्लीं ह्रीं श्रीं ऐं क्लीं सौः क ५ ह ६ स ४ स्त्रीं ऐं क्रों क्लीं क्लीं हुं ॥

## ॥ षोडशीपरमविद्या ॥

मनुः ॐ ऐं क्लीं सौः क एलह्रीं सौः क्लीं ऐं ॐ अः ऐं क्लीं सौः हसकलह्रीं सौः क्लीं ऐं ॐ अः ऐं क्लीं सौः स ४ सौः क्लीं ऐं ॐ अः ॥

इतिपरमाविद्या केवलं मोक्षदायिनी ।
अस्य लक्षजपेनैव किं न साधयति साधक ॥
अस्य स्मरणमात्रेण शिवोभवति नान्यथा ॥

## अष्टदशाक्षरी

मूलं । क्लीं ह्रीं श्रीं, ह्रीं श्रीं क्लीं, श्रीं ह्रीं क्लीं, क्लीं ह्रीं श्रीं, ह्रीं श्रीं क्लीं, श्रीं ह्रीं क्लीं ॥

## ॥ श्रीविद्याराजगोपालमन्त्रः ॥

नारद ऋषिः । गायत्री छन्दः । श्रीविद्या राजगोपालकृष्णोदेवता । श्रीं वीजं । ह्रीं शक्तिः । क्लीं कीलकं ।

ॐ श्रीं ह्रीं क्लीं क ५ अंगुष्टा । ह ६ कृष्णाय तजनी । स ४ गोविंदाय माध्यमा ।

ॐ श्रीं ह्रीं क्लीं क ५ गोपीजन अनामिका । ह ६ वल्लभाय कनिष्ठिका । स ४ श्रीराजगोपालाय श्रीं स्वाहा करतल । एवं हृदयादि ।

ध्यानम् :—

श्रीमत्याञ्चारवत्यां नवकनकमये भूतले रक्तनद्यो,
मध्येकल्पद्रुमाथो विविधमणिमये भूतलेसन्निविष्टम् ।
शखं चक्रंच वेणुं नलिनमथ गदां योगमुद्रां दधानम्
वन्दे संसिच्यमानं मणिमयकलशै र्वल्लभाभि र्मुकुंदम् ।
अर्द्धं शोण मथार्धमंबुदनिभं बद्धंललटे स्रजा
बर्हाकल्पितभाविलासवदनं स्त्रीपुंमयं वैष्णवम् ।
हस्तेनादृतवेणुना सृणिलसत्पाशेक्षुचापं दधत्
वस्त्वत्यद्भुतमस्तु मे हृदि सदा गोपालचूडामणिः ॥

मनुः ॐ श्रीं ह्रां क्लीं क ५ कृष्णाय ह ६ गोविंदाय, स ४ गोपीजनवल्लभाय क ५ ह ६ स ४ श्रीराजगोपालाय ॐ श्रीं ह्रीं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा ॥ श्रीराजगोपालाय श्रीं स्वाहा ॥ अन्यः ध्याने ॥

## ॥ बलाऽतिबलामन्त्रः ॥

पुरुऋषिः । विराट् छन्दः । (गायत्री छन्दः) गायत्री देवता । अं बीजं । उं शक्तिः । मं कीलकं । क्षुधादि निरसने जपे विनियोगः । क्लीं इत्यादि न्यासः ।

ध्यानम् ॥

अमृतकरतलार्द्रौ सर्वसंजीवनाढ्यौ ।
अघहरणसुदक्षौ वेदसारे मयूखे ॥
प्रणवमय विकारौ भास्कराकारदेहौ ।
सततमनुभवेहं तौबलाऽ(?)तिबलेशौ ॥

मूलं । ॐ ह्रीं बले महादेवि ह्रीं महाबले क्लीं चतुर्विधफलपुरुषार्थसिद्धिप्रदे, तत्सवितुर्वरदात्मिके ह्रींवरेण्य भर्गोदेवस्य वरदात्मिके अतिबलेसर्वदयामूर्ते वले सर्वक्षुद्भ्रयोपनाशिनि धीमहि धियोयोनर्जाते प्रचुर्या प्रचोदयात्मिके प्रणवशिरसात्मिके हुं फट् स्वाहा ॥

ॐ नमोबलाय महाबलाय दाहमोह ग्लानि नाशय २ आलस्य जृंभणं नाशय २ मम दारिद्र्यं नाशय २ मम पापं दह २ मम सुखं प्रयच्छ रत्नं मे देहि २ तापय २ स्वाहा ॥

## ॥ चतुर्दशाक्षरीविद्या ॥

मनुः– श्रीं सौः क्लीं ऐं ह्रीं ॐ श्रीं क्लीं ऐं क्लीं सौः सौः क्लीं ऐं ॥

## ॥ परमविद्यामन्त्रः ॥

ॐ ऐं क्लीं सौः कएलह्रीं सौः क्लीं ऐं ॐ अः ऐं क्लीं सौः हसकलह्रीं सौः क्लीं ऐं ॐ अः ऐं क्लीं सौः स ४ सौः क्लीं ऐं ॐ अः ।

इति परमाविद्याकेवलं मोक्षदायिनी । अस्य, लक्षमेकं जपेन्नैव किं न साध्यं तु साधकः । अस्य स्मरण-मात्रेण शिवो भवति नान्यथा ॥

एतन्मन्त्राः सर्वं मदरास् स्थले, नागप्पय्यर् वीथ्यां ब्रह्मश्री पिच्चुस्रौतिवर्या ग्रन्थेन संग्राह्यं ॥

## ॥ द्वाविंशदक्षर दक्षिणामूर्तिमन्त्रः ॥

ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रयच्छ स्वाहा ॥

अस्य मन्त्रस्य । चतुर्मुख ऋषिः । गायत्री छन्दः । ॐ बीजं । स्वाहा शक्तिः । नमः कीलकं । वेद-व्याख्यान तत्पर दक्षिणामूर्तिर्देवता ।...विनियोगः ।

ॐ आं ॐ, ॐ ईं ॐ, ॐ ऊं ॐ, ॐ ऐं ॐ, ॐ औं ॐ, ॐ अः ॐ इति प्रणवसम्पुटित दीर्घस्वरेण -न्यासः ।

ध्यानम्:–

**स्फटिकरजतवर्णं मौक्तिकीमक्षमाला,**
**ममृत सकलविद्या ज्ञानमुद्राः कराग्रे ।**
**दधतमुरगकक्षं चन्द्रचूडंत्रिनेत्रं**
**विधृतविविध भूषं दक्षिणामूर्तिमीडे ॥**

## ॥ अन्यमन्त्रः ॥

लक्ष्मि २. ॐ नमो भगवते दक्षिणामूर्तये मह्यं श्रियं प्रज्ञां प्रयच्छस्वाहा ।

ज्ञान ४. ॐ ज्ञां नमश्चिन्मयमूर्तये ज्ञानंदेहि स्वाहा ।

वीर ६. ॐ ह्रीं ॐ दक्षिणामूर्तये सर्वसाध्यमेधां समुत्कर्षय स्वाहा ।

संहार ७. ॐकार संहारमूर्तये नमः स्वाहा ।

**अपस्मार** ८. ॐ नमो भगवते दक्षिणामूर्तये त्रिनेत्राय त्रिकालज्ञानाय सर्वशत्रुघ्नाय सर्वापस्मार विदारणायदारयदारय मारय मारय भस्मीकुरु भस्मीकुरु हुं फट् स्वाहा । अस्यमन्त्रस्य । ब्रह्मा ऋषिः गायत्रीछन्दः ।

व्याख्यामुद्राक्षमाले कलशसुलिखिते बाहुभि र्वामपादं
बिभ्राणो जानुमूर्ध्नि पदतलनिहताऽपस्मृति र्द्रुमाश्चः ।
सौवर्णेयोगपीठे लिपिमयकमले सूपविष्टस्त्रिनेत्रः
क्षीराभश्चन्द्रमौलि र्वितरतु विपुलां शान्तबुद्धिं शिवो नः ॥

**मेधा** १. ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा ।

**कीर्ति** ३. ॐ अः नमः शिवाय आः ॐ ।

**सांब** ५. ॐ सौः श्रीसांबशिवाय तुभ्यं स्वाहा ॥

भस्मेनापांडरंगः शशिशकलधरो ज्ञानमुद्राक्षमाला,
वीणापुस्तैर्विराजत्करतलकमलो योगपट्टाभिरामः ।
व्याख्यापीठे निषण्णो मुनिवरनिकरैस्सेवितः सुप्रसन्नः ।
सव्यासः कृत्तिवासा स्ततमवतुनोदक्षिणामूर्तिरीशः ॥

## ॥ हंसदक्षिणामूर्तिमन्त्रः ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीहंसदक्षिणामूर्ति देवता ।

ॐ बीजं । नमः शक्तिः सोहं कीलकं । ॐ आं । इं ॐ ईं । उं ॐ ऊं । एं ॐ ऐं । ओं ॐ औं । अं ॐ अः । इति न्यासः ।

ध्यानम्:--

ध्यायेत्पद्मासनस्थं हृदिरविकमले सूपविष्टं वरेण्यं ।
सच्चिद्ब्रह्मामृताख्यं रवि शशिदहन ख्याति विज्ञप्तिनेत्रं ।
चन्द्रार्कानुप्रदीप्त प्रथित निजतनुं चन्द्रचूडावतंसं ।
शम्भुं देवादिनाथं पशुपतिममलं दक्षिणामूर्तिमाद्यम् ॥

मनुः । ॐ नमो भगवते दक्षिणामूर्तये हंसस्सोहं मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा ॥

## ॥ सांबदक्षिणमूर्तिमन्त्राः ॥

अस्य मन्त्रस्य । शुक ऋषिः । विराट् छन्दः । श्रीसांबदक्षिणामूर्ति देवता ।

ॐ ऐं बीजं । नमः क्लीं शक्तिः । शिवाय सौः कीलकं ।

ॐ ऐं नमः । क्लीं । शिवाय सौः । नमः क्लीं । शिवासौः । इति न्यासः ।

ध्यानम्ः—

वामोरुपरि संस्थितां गिरिसुतामन्यौन्य मालिंगितां
श्यामामुत्पलचारिणीं शशिनिभंचालोकयंतं शिवं
आश्लिष्टेन करेण पुस्तकमथो कुंभं सुधापूर्णकं
मुद्रां ज्ञानमयां दधानमपरे मुक्ताक्षमालां भजे ॥

मनुः । ॐ ऐं नमः क्लीं शिवाय सौः ॥

## ॥ नवाक्षरि दक्षिणामूर्तिः ॥

अस्य मन्त्रस्य । शुक ऋषिः । विराट् छन्दः । श्रीदक्षिणामूर्ति देवता ।

श्रीं बीजं । नमः शक्तिः । शिवायेति कीलकं ।

ॐ श्रीं आं । ॐ श्रीं ईं । ॐ श्रीं ऊं । ॐ श्रीं ऐं । ॐ श्रीं औं । ॐ श्रीं अः । इति न्यासः ॥

ध्यानम्ः—

शुद्धस्फटिक संकाशं शशिखण्ड विभूषितं ।
व्याघ्रचर्मधरंशान्तं जटामकुट मण्डितम् ॥
मुखपङ्करुहोल्लासं सोमसूर्याग्निलोचनं ।
भावयामि महादेवं दक्षिणामूर्ति विग्रहम् ॥

मनुः ॐ श्रीं नमः शिवाय ॐ श्रीं ॥

## ॥ श्रीदक्षिणामूर्तिमन्त्रः ॥

षट्त्रिंशदक्षर मन्त्रस्य, पञ्चाक्षरोक्त पीठ पूजादि आवरण पूजादि सर्वं ॥

ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रयच्छ स्वाहा ॥

तत्रापि शिवपञ्चक्षरोदित पीठे पीठपूजां कृत्वा, ततः षट्कोणकेसरेषु अग्निनिर्ऋति वायु ईशान्ये । देवपूर्वे पश्चिमे च अङ्गदेवीं च, अष्टदलेषु पूर्वादि प्रादक्षिण्येन । सरस्वती, ब्रह्मा, सनकाय, सनन्दनाय सनत्कुमाराय, शुकाय, व्यासाय, गणेश इति ।

भूपुराभ्यंतरे पूर्वादिचतुर्दिक्षु । सिद्धाय, गंधर्वाय, योगीन्द्राय, विद्याधराय । भूपुरे इन्द्रादि दश दिक्पालान्, तेषां बहि आयुधानिच पूजयेत् ॥

## ॥ खङ्गरावणमन्त्रः ॥

अस्य मन्त्रस्य । भूतसंहारक ऋषिः । अनुष्टुप् छन्दः । श्रीखङ्गरावणो देवता ।

भां बीजं । भीं शक्तिः । भूं कीलकं । भां इत्यादि न्यासः ।
ध्यानम्ः—

**घण्टाकपाल सृणिमुण्ड कृपाणखेट**
**खट्वटांगशूल डमरूसभयं दधानं ।**
**रक्तांगमिन्दु शकालाभरणं त्रिनेत्रं,**
**पञ्चाननाब्ज मरुणांशुकमीशमीडे ॥**

मनुः । ॐ नमः पशुपतये ॐ नमो भूताधिपतये ॐ नमो रुद्राधिपतये ल ल ल ल खङ्गरावण विहर २ सर २ नृत्य २ शमशानभस्मार्चित शरीराय घण्टाकपाल मालाधराय व्याघ्रचर्मपरिधानाय, शशांककृत शेखराय कृष्णसर्प यज्ञोपवीतिने चल २ बल २ अनिवर्तकपालिने हन २ भूतां स्तासय २ मण्डलमध्ये फट् रुद्रांशेन शमय प्रवेशय २ आवेशय २ चण्डापि धराधि पति रुद्रो आज्ञापयति स्वाहा ॥

## ॥ वीरभद्रमन्त्रः ॥

अस्य मन्त्रस्य अघोर ऋषिः अनुष्टुप् छन्दः । श्रीवीरभद्रो देवता ।
ऱ्हां बीजं । ऱ्हीं शक्तिः । ऱ्हूं कीलकं । ऱ्हां इत्यादि न्यासः ।
ध्यानम्ः--

**गोक्षीराभं दधानं डमरुकमभयं खङ्गखेटे कपालं,**
**वज्रं चाऽभीतिदाने त्रिनयन विलसद्व्याघ्रचर्मांबराढ्यं ।**
**बेतालरूढमुग्रंकपिलसित जटाबद्ध शीतांशुखण्डं,**
**ध्यायेद्धोगीन्द्रभूषं प्रमथगणपतेस्सम्भवं वीरभद्रम् ॥**

मनुः ॐ श्रीं ऱ्हीं क्लीं ऱ्हां श्रीं वीरभद्र सर्वशान्ति कुरु २ हुं फट् स्वाहा ॥

## ॥ बेतालरुद्रमन्त्रः ॥

अस्य मन्त्रस्य । नकुल ऋषिः । देवीगायत्री छन्दः । बेतालरुद्रो देवता ।
ॐ बीजं । तुरुतुरु शक्तिः । स्वाहा कीलकं ।
१ ॐ तुरु २ । २ बेतालाय । ३ स्वाहा । ४ स्वहा ५ बेतालाय । तुरुतुरु ॐ । इति न्यासः ।
ध्यानम्ः—

**मध्यान्हार्क समप्रभं शशिधरं बिंबाधरोष्ठोज्ज्वलं**
**त्र्यक्षं पन्नगभूषणं शिखिशिखा भास्वंत्स्फुरन्मूर्धजं ।**
**हस्ताभ्यां त्रिशिखं समुद्गरमसिं शक्ति दधानं विभुं**
**दंष्ट्राभील चतुर्मुखं पशुपति बेताल मूर्ति मजे ॥**

मनुः । ॐ तुरु तुरु बेतालाय स्वाहा ॥

## ॥ महेश्वरमन्त्रः ॥

तारं व्योषं महादेवि ततो महेश्वराय च ।
विश्वमन्ते मनोर्दद्यान्मन्त्रोऽयं सर्वसिद्धिदः ॥

शिवः

तारंविश्वं शिवायेति मन्त्रोऽयं भोगमोक्षदः ।
तारं व्योषं शिवायेति नमोऽन्तेस्त्यपरो मनुः ॥

सदाशिवः

तारं वाणी शप्तुकामः सदाशिवाय प्रोद्धरेत् ।
विश्वमन्ते स्मृतो मन्त्रो मन्त्रमौलिमणिः परः ॥

तत्शापमोचनम्

तारं परां रमां वाणींकामं शक्ति सदाशिव ।
शिवशापं मोचयापो विद्येयं शापहारिणी ॥

रुद्रमन्त्रः

तारं काली शिवो नाम तुरीरूपं (चतुर्थ्यन्तं) चठद्वयं ।
मन्त्रो भैरवविख्यातः कलौ भोगापवर्गदः ॥

खलभैरवः

तारं पराशिवोदेवि महादेवाय ठद्वयम् ।
मन्त्रः शिवप्रदोदेवि शैवानां परमार्थदः ॥

विकरालः

तारं वाग्भवमामाया विकरालाय विन्यसेत् ।
अन्ते ठद्वयमुच्चार्य मन्त्रराजोऽयमीरितः ॥

शर्वः

तारं परा रमा बीजं शर्वायेति पदं वदेत् ।
अन्तेऽश्मरी मनोर्देवि मन्त्रोयं भोगदः स्मृतः ॥

पशुपतिः

प्रणवो वाग्भवो मारः शक्तिः पशुपतेर्वनम् ।
मन्त्रोयं देवदेवस्य वल्लभो मुक्तिदायकः ॥

मृडः

तारं परा मृडायेति विश्वमन्ते मनुः स्मृतः ॥

पिनाकिनः

तारं ह्रुज्जं परा लक्ष्मीर्मध्ये ब्रूयात्पिनाकिने ।
अन्तेऽश्मरी मनोर्देवि मन्त्रोयं वैरिसूदनः ॥

गिरीशः

तारं शिवो मठं देवि गिरीशायाश्मरी मनुः ॥

भीमः

तारं परा भद्रिका च भीमायांतेऽश्मरी मनुः ॥

प्रमथाधिपः

तारं परा च वाह्लीकं प्रमथाधिपमुद्धरेत् ।
प्रसीद द्वयमापोन्ते मन्त्रोयं देवदुर्लभः ॥

कुमारः १

छविः कुमाराय मनोरन्तेविश्वं मनुः परः ।
सर्वदेवेन्द्रपददो भोगदो मोक्षदः स्मृतः ॥

कुमारः २

प्रणवं छवि बीजं च मन्त्रं तु द्विशिरः स्मृतम् ।
मध्ये कुमाराय नमोह्यन्ते नीरमुदाहृतम् ॥
ॐ ह्रां कुमाराय नमः स्वाहा ॥

क्रोधनेशः

तारं काली शिवो देवि क्रोधनेशाय चाश्मरी ।
मन्त्रोयं सर्वसिद्धीशो वैरिवर्ग निबर्हणः ॥

## ॥ विरिंचिवटुकमन्त्रः ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीविरिंचिवटुको देवता । अः बीजं । सरस्वती शक्तिः ऐं कीलकं । फां इत्यादि न्यासः ।

ध्यानम्:—

वरदाभयहस्तं च साक्षसूत्र कमण्डलुं ।
वटुकं प्रथमं वन्दे वाग्देवीसहितं प्रभुम् ॥

मनुः । ऱ्हीं श्रीं हुं फट् विरिंचिवटुकाय नमः ॥

## ।। मुकुन्दवटुकः ।।

अस्य मन्त्रस्य । विष्णु ऋषिः । गायत्रीछन्दः । श्रीमुकुंदवटुको देवता ।

हं बीजं । महालक्ष्मीर्देवता शक्तिः । ह्रीं कीलकं । फां इत्यादि न्यासः ।

ध्यानम्:--

**शङ्ख चक्र धरं देवं चापबाणैरलंकृतं ।**
**ध्यायेन्मुकुंदवटुकंश्रियादेव्यानुशोभितम् ।।**

मनुः । ह्रीं श्रीं ह्रुं फट् श्रीमुकुंदवटुकाय नमः ।।

## ।। रुद्रवटुकः ।।

अस्य मन्त्रस्य । रुद्रऋषिः । गायत्री छन्दः । श्रीरुद्रवटुकोदेवता । स्रः बीजं गौरी शक्तिः । श्रीं कीलकं । फां इत्यादि न्यासः ।

ध्यानम्:—

**शूलं च डमरुं हस्ते बिभ्राणं च वराभये ।**
**गौरीदेव्या समायुक्तं ध्यायेद्रुद्रंमहाननम् ।।**

मनुः । ॐ श्रीं ह्रीं ह्रुं फट् श्रीरुद्रवटुकाय नमः ।।

## ।। अपस्मार हर दक्षिणामूर्तिमन्त्रः ।।

अस्य मन्त्रस्य । वामदेव ऋषिः । गायत्री छन्दः । श्री दक्षिणामूर्तिः देवता । ह्रां बीजं । नमः शक्तिः । ह्रीं कीलकं । जपे विनियोगः । ह्रां इत्यादि न्यासः ।

ध्यानम्:—

**अजिनं पटमजितांगुलिपट मुकुलस्फुटं गुप्तमणिकण्ठं,**
**मोहमति वटं हस्तजपवठं, कपिलाजटं नौमि कंकोटिपीठंम् ।।**

मनुः– ॐ ह्रीं ह्रां नमो भगवते दक्षिणामूर्तये, वीरासनस्थिताथ खे खे समस्तापस्मारान् नाशय २ हुं फट् स्वाहा ।।

## ।। षट्त्रिंशदक्षर दक्षिणामूर्तिमन्त्रः ।।

मनुः १ ॐ ह्रीं दक्षिणामूर्तये, २ तुभ्यं ३ वटमूलनिवासिने । ४ ध्यानैकनिरतांगाय, ५ नमोरुद्राय, ६ शंभवे ह्रीं ॐ ।

शुक ऋषिः । अनुष्टुप्छन्दः दक्षिणामूर्ति शम्भुर्देवता ।

संख्याक्रमेण मन्त्रपदस्य आद्यंतयो ॐ ह्रीं, पदं ह्रीं ॐ इति संयोज्य न्यासः ।

ध्यानम् :—

हिमाचलतटेरम्ये सिद्धकिंन्नरसेविते ।
विविधद्रुम शाखाभिः सर्वतो वारितातपे ॥

सुपुष्पितैर्लताजालैराश्लिष्ट कुसुमद्रुमैः ।
शिलाविवरनिर्गच्छन्निर्झरानिलसेविते ॥

गायद्भृंगांगनासंघे नृत्यद्बर्हिकदंबके ।
कूजत्कोकिल संघेन मुखरीकृतदिङ्मुखे ॥

परस्पर विनिर्मुक्त मात्सर्यमृगसेविते ।
आद्यैः शुकाद्यैर्मुनिभिरजस्रं समधिष्ठिते ॥

पुरंदर मुखैर्देवैः सेवायातैर्विलोकितं ।
वटवृक्षं महोच्छ्रायं पद्मरागफलोज्ज्वलम् ॥

गारुत्मतमयैः पत्रै निबिडैरुपशोभितं ।
नवरत्न मयाकल्पैर्लंबमानैरलंकृतम् ॥

सजलैः स्थलजैः पुष्पैरामोदिभिरलंकृतं ।
शृण्वद्भिर्वेदशास्त्राणि शुकबृंदैर्निषेवितं ॥

संसारताप विच्छेद कुशलच्छायमद्भुतं ।
विचिंत्य तस्य मूलस्थे रत्नसिंहासनेशुभे ॥

आसीनममिताकल्पं शरच्चन्द्रनिभाननं ।
स्यतूमानंमुनिगणैर्दिव्यज्ञानाभिलाषिभिः
संस्मरेज्जगतामाद्यं दक्षिणामूर्तिमव्ययं ॥

कैलासाद्रिनिभं शशांक सकलस्फूर्जज्जटामण्डितं
नासालोकनतत्परं त्रिनयनं वीरासनाध्यासितं ।
मुद्राटंक कुरंगजानुविलसत्पाणिं प्रसन्नाननं ।
कक्षाबद्धभुजंगमम् मुनिवृतं वन्दे महेशं परम् ॥

## ॥ महामृत्युंजयम् ॥

ॐ मण्डूकादि...पीठदेवताभ्योनमः । नवपीठशक्तिः । पञ्चाक्षरीवत् ॥

ॐ नमो भगवते सकलगुणात्मकशक्तियुक्ताय अनंताय योगपीठात्मने नमः ।

१. मध्ये पञ्चकोणे । ईशान, पूर्व दक्षिण, पश्चिम उत्तरे, ईशान, तत्पुरुष, अघोर, वामदेव, सद्योजातं ॥

२. पञ्चकोणाग्रेषु । निवृत्ति, प्रतिष्ठा, विद्या, शांति, शांत्यतीत ।

३. अष्टदले प्राचीक्रमेण । सूर्य, इंदु, क्षिति, तोय, अग्नि, पवन, आकाश, यज्ञ ।

४. तद्बहिरष्टदले । रमा, राका, प्रभा, ज्योत्स्ना, पूर्णा, पूषा, घृणा, सुधा ।

५. तद्बहिरष्टदले । विश्वा, वंद्या, सिता, प्रह्वा, सारा, संध्या, शिवा, निशा ।

६. तद्बहरिष्टदले । आर्या, प्रज्ञा, प्रभा, मेधा, शांति, कांति, धृतिः मतिः ।

७. तद्बहरिष्टदले । धरा, उमा, पावनी, पद्मा, शांता, अमोधा, जया, अमला ।

८. तद्बहिरष्टदले । अनन्ताय, सूक्ष्ममंजाय, शिवोत्तमाय, एकनेत्राय, एकरुद्राय, त्रिमूर्तये श्रीकंठाय, शिखंडिने ।

९. तद्बहिरष्टदले । उमा, चण्डेश्वर, नन्दि, महाकाल, गणेश, वृषभ, भृंगिरिटि स्कंद ।

१०. तद्बहिरष्टदले । ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, इन्द्राणी, चामुण्डा, महालक्ष्मीः ।

११. भूपुरे इन्द्रादि ।

१२. भूपुरे तेषां आयुधानि ॥

## ॥ दशाक्षररुद्रमन्त्रः ॥

मण्डूकादि...देवताभ्यो नमः । नवपीठ शक्तिः पञ्चाक्षरीवत् । ॐ नमो भगवते सकल योगपीठात्मने नमः ॥ ततः मध्ये, पञ्चकोणेषु, पश्चिमादि चतुर्दिक्षु क्रमेण ।

१. सद्योजातं, वामदेवं, अघोरं, तत्पुरुषं, ईशानं ।

२. अष्टदले ॥ नन्दि, महाकाल, गणेश्वर, वृषभ, भृंगिरिट, स्कंद, उमा, चण्डेश्वर ।

३. षोडशदले । अनन्त, सूक्ष्म, शिव, एकरुद्र, त्रिमूर्तये, श्रीकण्ठ, वामदेव ज्येष्ठ श्रेष्ठ, रुद्र, काल, कलविकरण, बल, बलविकरण, बलप्रमथन ।

४. चतुर्विंशतिदले । अणिमा, महिमा, लघिमा, गरिमा, प्राप्ति, प्राकाम्य, ईशित्व, वशित्व ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, इन्द्राणी, चामुण्डा, चण्डिका, असितांगभैरव, चण्ड, क्रोध, उन्मत्त, काल, भीषण, संहार इति ॥

५. द्वात्रिंशत्पत्रके । भव शर्व, ईशान, पशुपति, रुद्र, उग्र, भीम, महादेव, अनन्त, वासुकि तक्षक, कुलीरक, कर्कोटक, शङ्खपाल, कंबलाय, अश्वतर, वैन्य, पृथु हैहय, अर्जुन, शांकुंतल, भरत, नल, राम, हिमवत्, निषधाय, विन्ध्याय, माल्यवत्, पारियात्र, मलय, हेमकूट गन्धमादन ।

६. चत्वारिंशद्दले । इन्द्र, अग्नि, यम, निर्ऋति, वरुण, वायु कुबेर, ईशान, शची, स्वाहा, वाराही, खङ्गिनी, वारुणी, वायवी, कौबेरी, ईशानी, वज्र, शक्ति, दण्ड, खङ्ग, पाश, अंकुश, गदा, त्रिशूल, ऐरावत, मेष, महिष, प्रेत, मकर, हरिण, नर वृषभ, ऐरावत, पुण्डरीक, वामन, कुमुद, अंजन, पुष्पदन्त, सार्वभौम, सुप्रतीक ।

७. भूपुरे ॥ इन्द्रादि दशदिक्पालान् । वज्राद्यायुधानि च पूजयेत् ॥

## ॥ दशाक्षररुद्रमन्त्रः ॥

ततोभूपुराद्यन्तरे । आग्नेये-विरुपाक्ष । निर्ऋते विरूप । वायवे पशुपति । ईशान्यां ऊर्ध्वलिंग ॥

भूपुराद्बहिःपूर्वादि १. विप्रवर्णाथश्वेतरुपाय सहस्रफणमण्डिताय शेषाय नमः ।

भूपुराद्बहिःपूर्वादि २. वैश्यवर्णाय नीलरूपाय पञ्चाशत्फणा त्तुंगकायाथ तक्षकाय ॥

भूपुराद्बहिःपूर्वादि ३. विप्रवर्णाय कुंकुमरूपाय, सहस्रफणामण्डिताय, अनन्ताय ।

भूपुराद्बहिःपूर्वादि ४. क्षत्रियवर्णाय, पीतरूपाय, सप्तशतफणामण्डितायोत्तुंगकायाय वासुकये ॥

भूपुराद्बहिःपूर्वादि १. क्षत्रियवर्णाय पीतरूपाय सप्तशतफणामण्डिताय शङ्खपालाय

भूपुराद्बहिःपूर्वादि २. वैश्यवर्णाय कृष्णरूपाय पञ्चशतफणामण्डितायोत्तुंगकायाय महापद्माय ॥

भूपुराद्बहिःपूर्वादि ३. शूद्रवर्णाय कृष्णरूपाय त्रिशत्फणमडिताय कंबलाय

भूपुराद्बहिःपूर्वादि ४. शूद्रवर्णाय श्वेतरूपाय त्रिशत्फणायुक्ताय कर्कोटकाय ॥

## ॥ श्रीमृत्युंजय आवरण देवता ॥

यन्त्रं । चतुरश्रोद्भासितारणत्रय विराजित, वसुदलखचित षडस्रमण्डित त्रिकोणोल्लसित बिन्दुमण्डलं श्रीयन्त्रराजं ॥

पीठपूजा ॥ ॐ जुंसः हंसः सोहं सः जु ॐ अं आं...हं लं क्षः शिवशक्ति सदाशिवेश्वर शुद्धविद्या-मायाकलाविद्यारागनियति पुरुषप्रकृत्यहंकार बुद्धि मनस्त्वक्चक्षुःश्रोत्र जिह्वाघ्राण वाक्पाणिपाद पायूपस्थ शब्द-स्पर्शरूपरस गंधाकाश वायुवह्निसलिल पृथिव्यात्मने श्रीयोगपीठायनमः इति चक्रे ॥ ततः वसुपत्रेषु । कामायै, ज्येष्ठायै, रौद्र्यै, काल्यै, कलविकरण्यै, बलविकरिण्यै, बलप्रमथन्यै, सर्वभूतदमन्यै नमः ॐ जुंसः नमो भगवते सकलगुणात्मशक्तियुक्ताय परानन्ताय योगपीठात्मने नमः ॥

१. ॐ जुंसः कामेश्वरश्री । ॐ जुंसः महाकाल । ॐ जुंसः स्वच्छन्द श्री इति बीरपात्रामृतात् ईशान आग्नेय, अग्रेषु ॥

२. षट्कोणेषुः ॐ जुंसः कालाग्निरुद्र, नेत्रेश, विश्वनाथ, महेश्वर, सद्योजात वामदेव ।

३. अष्टदलेषु स्ववामावर्तेन । असिताङ्ग, रुरु, चण्ड, क्रोध, उन्मत, कपालि भीषण, संहार भैरवाः

४. वसुदलेषु स्ववामावर्तेन । ३ ब्रह्माणी इत्यादि अष्ट मातृकाः

५. वृत्तत्रये । ३ स्वगुरु, परमगुरु, परापरगुरु, परमेष्ठिगुरु

६. चतुरस्रे । इंद्रादि दशदिक्पालाः

७. तेषां आयुधानि ॥

८. बिंदौ । मूलं अमृतेश्वरी शक्ति सहित श्रीमृत्युंजय,
मूलं भुवनेश्वरी शक्ति सहित भुवनेश्वर
मूलं ईशानेश्वरी शक्ति सहित ईशान
मूलं अमृतेश्वरी महित दीक्षानायक श्रीमहामृत्युंजय ॥

९. मूलं त्रिखण्डाश्री, मूलं पाशश्री, मूलं सुधाकलशश्री ।

१०. मूलं मुष्टिमुद्राश्री, सारङ्गमुद्रा, लिंगमुद्रा, योनिमुद्रा पञ्चमुद्राश्री

## ॥ त्र्यक्षर मृत्युंजयमन्त्रः ॥

ॐ ह्रौं जूंसः ॥

अस्य त्र्यक्षरात्मक मृत्युंजयमहामन्त्रस्य कहोल ऋषिः । गायत्रीछन्दः । मृत्युँजयो महादेवोदेवता । जूं बीजं । सः शक्तिः । ....विनियोगः सां सीं इत्यादि षडङ्ग न्यासः ।

ध्यानम्:--

चन्द्रार्काग्नि विलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं
मुद्रापाश मृगाक्षसूत्र विलसत्पाणिं हिमांशु प्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनहारादिभूषोज्बलं
कान्त्याविश्वविमोहनं पशुपतिं मृत्युंजयं भावयेत् ॥

॥ पञ्चपूजाः ॥

## ॥ त्र्यंबकमन्त्रः ॥

ॐ १. त्र्यम्बकं २ यजामहे ३ सुगन्धिंपुष्टिवर्धनं । ४ उर्वारुकमिव बन्धनात्, ५ मृत्योर्मुक्षीय मामृतात् ॥

अस्य मन्त्रस्य वसिष्ठ ऋषिः अनुष्टुप्छन्दः । त्र्यम्बकपार्वतीपतिर्देवता । यं बीजं । बं शक्तिः । कं कीलकं ।...विनियोगः । संख्याक्रमेण न्यासः ।।

ध्यानम्:–

**हस्ताभ्यां कलशद्वयामृतरसैराप्लावयन्तं**
**शिशे दधतं मृगाक्षवलये द्वाभ्यां वहंतं परं ।**
**अङ्कन्यस्तकर द्वयामृतघटं कैलासकान्तं शिवं**
**स्वच्छांभोजगतं नवेन्दुमुकुटं देवं त्रिनेत्रं भजे ।।**

## ।। महामृत्युंजयम् ।।

ॐ हौं ॐ जूं सः भूर्भुवस्स्वः त्र्यम्बकं यजामहे सुगंधिं पुष्टिवर्धनं । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात् भूर्भुवस्स्वरों जूंसः हौं ॐ ।

अस्य मन्त्रस्य वामदेवकहोल वसिष्ठाऋषयः । पंक्ति गायत्री अनुष्टुभश्छन्दासि । सदाशिव महा-मृत्युंजयरुद्रा देवताः । श्रीं बीजं । ह्रीं शक्तिः । विनियोगः ।

१. ॐ हौं ॐ जूं सः भूर्भुवस्स्वः त्रियंबकं ॐ नमो भगवते रुद्राय शूलपाणये स्वाहा ।

२. ॐ हौं ॐ जूं सः भूर्भुवस्स्वः यजामहे ॐ नमो भगवते अमृतमूर्तये मां जीवय ।।

३. ॐ हौं ॐ जूं सः भूर्भुवस्स्वः सुगंधिंपुष्टिवर्धनं ॐ नमो भगवते चन्द्रशिरसे जटिने स्वाहा ।

४. ॐ हौं ॐ जूं सः भूर्भुवस्स्वः उर्वारुकमिवबन्धनात् ॐ नमो भगवते त्रिपुरान्तकाय ह्रां ह्रीं ।

५. ॐ हौं ॐ जूं सः भूर्भुवस्स्वः मृत्योर्मुक्षीय ॐ नमो भगवते त्रिलोचनाय ऋग्यजुस् साममन्त्राय ।

६. ॐ हौं ॐ जूं सः भूर्भुवस्स्वः मामृतात् ॐ नमो भगवते ॐ अग्निनेत्राय ज्वल ज्वल मां रक्ष रक्ष अघोरास्त्राय ।

इति करन्यास हृदयादिन्यासौ कृत्वा–

ध्यानम्:--

**हस्तांभोजयुगस्थकुंभयुगला दुध्दृत्य तोयं शिरः**
**सिंचन्तं करयोर्युगेन दधतं स्वांके सकुंभौ करौ ।**
**अक्षस्रङ्मृगहस्तमंबुजगतं, मूर्धस्थचन्द्रस्रव**
**त्पीयूषात्ततनुंभजे सगिरिजं मृत्युंजयं त्र्यंबकं ।।**

## गायत्री दुर्गामन्त्र सम्पुटित मृत्युंजयमन्त्रः

ॐ भूर्भुवस्सुवः ॐ तत्सवितुर्वरेण्यं जातवेदसेसुनवामसोमं-त्र्यबकं यजामहे-भर्गोदेवस्यधीमहि-अरातीयतोनिददाति वेद-स्सुगंधिपुष्टिवर्धनं । ॐ जूं सः । नक्षत्रे राशौ जातं शर्माणं इमं यजमानंसहकुडुंबं पालय २, मृत्योर्मोचय २ आयुर्वर्धय २, समस्त रोगान् नाशय २ समस्तभीतिं नाशय २ ग्रहबाधान् निवारय २ सर्वविद्या पारङ्गसिद्धि कुरु २ । स्तः जूं ॐ धियोयोनः सनाः पर्षदति दुर्गाणिविश्वोर्वारुकमिव बन्धनात् प्रचोदयात् नावेव सिन्दं दुरिता त्यग्नि मृत्योर्मुक्षीय मामृतात् ॥

## मृत्युंजयत्र्यक्षरीमन्त्रः

ॐ जूँ सः ।

अस्यमन्त्रस्य । कहोल ऋषिः । अनुष्टुप्छन्दः । मृत्युंजयरुद्रो देवता ।

ॐ बीजं । सः शक्तिः । जूं कीलकं । ॐ जूं सः, ॐ जूं सः इति न्यासः ।

ध्यानम्:–

**स्फुटितनळिनसंस्थं मौलिबद्धेंदुरेखा -**<br>
**गळदमृत सार्द्रं चन्द्रवन्हियर्कनेत्रं ॥**<br>
**स्वकर कलितमुद्रा पाशवेदाक्षमाला ।**<br>
**स्फटिकरजतमुक्ता गौर मीशं नमामि ॥**

## महामृत्युञ्जयः (देवीरहस्यम्)

मन्त्रोद्धारः १. त्र्यक्षं हृज्ज शक्ति शोभेऽपिशंका, मां तस्माद्वै पालय द्विस्तयैव ।<br>
तस्माच्छक्तिः रवंशरद् हृज्जतारं मन्त्रोद्धारो देवि मृत्युंजयस्य ॥

ॐ जुंसः हंसः मां पालय २ सोहंसः जुँ ॐ ॥

२. तारं हृद्भवतार्तिकं शिवशरन्मण्डूकबीजं ततो,<br>
वाच्यं पालय पालयेति च पुनः शक्तिः शिवं शाक्तिकं ।<br>
हृज्जं तारक भूषणं निगदित स्त्वद्भक्तिहेतोर्भया,<br>
दीक्षानायकवल्भो मनुरयं त्रैलोक्यचिंतामणिः ॥

पुरश्चरणं–वर्णलक्षं पुरश्चर्या तदर्धंवा महेश्वरि । एकलक्षावधि कुर्यात्ततो न्यूनं कदाचन ॥

उत्कीलनं–हृज्जबीजं जपेदादौ अन्ते शक्तिजपेत्प्रिये । श्री मृत्युंजयमन्त्रस्यायमुत्कीलनाभिधः ॥

संजीवनं–मृत्युँजयमनोरेष मन्त्रः संजीवनाभिधः । विश्वमादौ विश्वमन्ते जपेन्मांत्रिकनायकः ॥

शापमोचनं–तारं हृज्जं शरद्रुद्रशापंमोचय मोचय । शरद् हृज्जंच तारं च विद्येयं शापहारिणी ॥

मन्त्रं बिन्दुत्रिकोण षट्कोण वृताष्टदलमण्डितं । वृतत्रयं धरासद्म श्रीचक्रं शैवमीरितम् ॥

ध्यानम्ः—

चंद्रार्काग्नि विलोचनं स्मितमुखं पद्मद्वयांतःस्थितं ।
मुद्रा (त्रिखण्डाख्या) पाशसुधाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ॥
कोटीरेन्दुगल त्सुधाप्लुततनुं हारादिभूषोज्ज्वलं ।
कान्त्या विश्वविमोहनं पशुपतिं मृत्युंजयं भावयेत् ॥

चन्द्रोद्भासितमूर्धजं सुरपतिं पीयूषपात्रं बहत् ।
हस्तांब्जेन सुधांशुकोटि विमलं हस्तस्थपंकेरुहं (चंद्रामृताप्लावितं) ।
सूर्याग्नीन्दु विलोचनं करतलै पाशाक्षसूत्रांकुशा
म्भोजाग्बिभ्रतमक्षयं पशुपतिं मृत्युंजयं तं स्मरेत् ॥

ऋषि छन्दादि ॥ सकहोल ऋषिश्छन्दो गायत्री देवता तथा । महामृत्युंजयो रुद्रो महादेवोऽधिदेवता ।

बीजं च प्रणवोदेवि शक्तिर्हृज्जाख्यबीजकं । कीलकं शरदीशानि दिग्बंधोऽभव सुन्दरि ॥

तारहृज्जशरद्बीजैः षड्दीर्घैर्न्यासमाचरेत् । मूलादिबीजमात्रेण प्राणायामत्रयं चरेत् ॥
तत्वत्रयेणाचमनमात्म विद्याशिवादिना ।

सम्पुटमन्त्रः—तारं हृज्जं पठेन्मध्ये पालय द्वयमादितः । मृत्युंजयमनोरेषसंपुटो वर्णितोमया ॥

## नीलकण्ठः

मन्त्रोद्धारम्

प्रणवं हरितं डिबं नीलकण्ठाय चाश्मरी ।
दुर्गेश नीलकण्ठस्य मंत्रोद्धारो दशाक्षरः ॥

उत्कीलनम्

हरितं प्रथमं दत्वा मंत्रांते च शिवं जपेत् ।
दुर्गा शिवस्य मंत्रोयं नीलकण्ठस्य कीलनुत् ॥

शापमोचनम्

तारं च नीलकण्ठेति दुर्वासांङ्कं विमोचय ।
मोचयापो महादेवि विद्येयं शापहारिणी ॥

संजीवनम्

श्री नीलकण्ठमंत्रस्य मंत्र : संजीवनाभिधः ।
परापादौ त्रिरूच्चार्य जपादौ संजपेत्सुधीः ।।

ऋष्यादि

श्री नीलकण्ठमत्रस्य दक्षिणामूर्तिरीश्वरः ।
ऋषिच्छन्दो मयानुष्टुब् वर्णितो वीरवन्दिते ।।
दुर्गेश्वरो नीलकण्ठो देवता कथिता मया ।
हरितं बीजमीशानि तारं शक्तिः स्मृता शिवे ।।
कीलकं विश्वमारव्यातं नियोगो मनुसिद्धये ।।
तार चंद्रकांडिभाद्यैः षड्दीर्घै न्यासमाचरेत् ।

ध्यानम्

बन्धूक कांचननिभं रूचिराक्षमालां ।
पाशांकुशौ वरमभीतिममुं दधानम् ।।
हस्तै श्शशाङ्क शकलाभरणं त्रिनेत्रं ।
श्री नीलकण्ठमुमयाश्रित माश्रयामि ।।

संपुटमन्त्रः

हरितं द्विः समुच्चार्य मध्ये नामततः परं ।
मन्त्रोयं नीलकण्ठस्य संपुटारव्यो मयेरितः ।।

## ।। नीलकण्ठमंत्रः त्र्यक्षरि ।।

ॐ फ्रों नृं ष्ठं ।।
अस्य मन्त्रस्य अरुण ऋषिः । अनुष्टुप्छन्दः । नीलकण्ठरुद्रोदेवता ।
फ्रों बीजं । शक्तिः । नृंः कीलकं । फ्रों नृं ठं फ्रों नृं ठं इति न्यासः ।
हराय कर्पादिने, नीलकंठाय, कालकूटविषभक्षणाय, श्रीकण्ठाय शितिकण्ठाय इति न्यासः ।
ध्यानम्:--

अत्युग्रहालाहलपाणिपद्मं ।
पंचानने चन्द्रतुषारवर्णम् ।।
गौरी सह कूर भुजंगभूषं
श्रीनीलकण्ठं हृदि भावयामि ।।

।। पंचपूजा ।।

## अघोररुद्र मंत्रः

१. ॐ ह्रीं स्फुर २, २. प्रस्फुर २, ३. घोरघोरतरतनुरूप, ४. चट २ प्रचट २, ५. कह २ वम २ बन्धं घातय, ६ हुं फट् ।। एवं न्यासः ।।

ध्यानम्ः—

सजल जलदश्यामं भीमदंष्ट्रं त्रिनेत्रं ।
भुजगधर मघोरं रक्तवस्त्रांगरागं ।।
परशु डमरुखड्गाखेठकं चाप बाणौ ।
त्रिशिरवर कपाले बिभ्रतं भावयामि ।।

## नीलकण्ठ प्रयोग ।।

ॐ आं ह्रीं क्रों यं फट् ठं नृं फों यं फट् क्रों ह्रीं आं । नक्षत्रे राशौ जात-शर्माणं अस्यशरीरे पीडित समस्त बाधग्रहादिबाधां, विषं, रोगांश्च उच्छाटय २ नाशय २, अस्य शरीरं रक्ष २ फं फट् स्वाहा ।। जपं । ततः होमं मधुत्रयेण विभूति उद्धूलनं, मधुत्रयप्राशनं, ताम्रं, मृण्मय कुंभ तीर्थ अभिषेचनं जपं, होमं च २१०००, शत्रुबाधा निवृत्यर्थं, काकपक्षेण निंबतैलं, होमं ।। प्रयोगेषु ध्यानम् ।।

## अष्टाक्षर विष्णु मंत्रः ।।

ॐ नमो नारायणाय ।।

ॐ बीजं । नारायणयेतिशक्तिः नमः कीलकं ।।

ॐ क्रुद्धोल्काय–अंगुष्टा । ॐ द्युल्काय–अनामिका ।

ॐ महोल्काय–तर्जनी । ॐ सहस्रोल्काय–कनिष्ठिका इति, करतल ।

ॐ वीरोल्काय–मध्यमा । न्यासंविना, हृदयादिषु नेत्रत्रयंविना न्यसेत् ।।

ॐ किरीट केयूरहार मकरकुण्डलधर शङ्खचक्रगदांभोज पीताम्बर धर श्रीवत्सांकित वक्षः स्थल श्री भूमिसहितात्मज्योतिर्द्वयदीप्तराय सहस्रादित्यतेजसे नमः इति शिरादिपादांतं व्यापकं विन्यसेत् ।।

ध्यानम्ः–

उद्यत्कोटिदिवाकराभमनिशं शंखंगदां पंकजं ।
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयं ।।
कोटीरांगदहार कुण्डलधरं पीतांबरं कौस्तुभो ।
द्दीप्तविश्वधरं स्ववक्षसिलसच्छ्रीवत्सचिह्नं भजे ।। पंचपूजा ।।

## द्वादशाक्षरी विष्णुमन्त्र: ॥

१ ॐ २ नमो ३ भगवते ४ वासुदेवाय ॥

अस्य मन्त्रस्य । प्रजापति ऋषि: । गायत्री छन्द: । वासुदेवपरमात्मादेवता ॥

संख्याक्रमेण, करतल नेत्रत्रयं विना न्यास: ।

ध्यानम्ः—

विष्णुं शारदचंद्र कोटि सदृशं शंखं रथांगं गदां ।
अंभोजं दधतं सिताब्जनिलयं कांत्या जगन्मोहनं ॥
आबद्धांगदहार कुंडल महामौलिं स्पुरत्कंकणं ।
श्रीवत्सांक मुदार कौस्तुभधरं वंदे मुनींद्रैः स्तुतम् ॥ पंचपूजा ॥

## चतुर्दशाक्षर लक्ष्मीनारायण मंत्र: ॥

१ ॐ ह्रीं ह्रीं, २ श्रीं श्रीं, ३ लक्ष्मी, ४ वासुदेवाय ५ नम: ।

अस्य मन्त्रस्य प्रजापति ऋषि: । गायत्रीछन्द: । वासुदेवो देवता ।

संख्याक्रमेण, करतल, नेत्रत्रयं विना, न्यास: ।

ध्यानम्ः—

विद्युच्चन्द्रनिभं वपु: कमलजावैकुंठयोरेकतां ।
प्राप्तं स्नेहवशेन रत्नविलसद्भूषांबरालंकृतं ।
विद्यापंकजदर्पणा न्मणिमयं कुंभं सरोजं गदां ।
शंखं चक्रममूनि बिभ्र दमितां दिश्याच्छ्रियं व: सदा ॥

## ॥ लक्ष्मीनारायण मन्त्र: ॥

मन्त्रोद्धारम्

तारं परां च हरितं परां लक्ष्मीस्ततोऽभिधम् ।
लक्ष्मीनारायणायेति विश्वमंते मनुःस्मृत: ॥

उत्कीलनम्

हरितं प्रथमं दद्या दन्ते प्रणव मीश्वरि ।
लक्ष्मीनारायणस्यायं स्यादुत्कीलको मनु: ॥

संजीवनम्

ह्रितं मूलमंत्रांते जपेत्पार्वति साधकः ।
लक्ष्मीनारायणमनो भवेत् संजीवनं परम् ॥

शापमोचनम्

तारं रमां च लक्ष्मीति नारायण शिवज्वलम् ।
मोचय द्वयमापश्च विद्येयं शापहारिणी ॥

मन्त्र :

बिंदुस्त्रिकोणवस्वश्रं वृत्ताष्टदलमण्डितम् ।
षोडशारं त्रिवृत्तं च भूगेहेनोपशोभितम् ॥

ऋषिछन्दत्यादि

मंत्रस्यास्य महादेवि वर्णितोत्र ऋषिः शिवः ।
त्रिष्टुप्छन्दो मथारव्यातं देवतापि समीरिता ॥
लक्ष्मीनारायणो देवि बीजं लक्ष्मीरुदाहृता ।
शक्तिः परा तथा तारं कीलकं समुदाहृतम् ॥

ध्यानम्

पूर्णेन्दुवदनं पीतवसनं कमलासनम् ।
लक्ष्म्याश्रितं चतुर्बाहुं लक्ष्मीनारायणं भजे ॥

न्यासम्

तारमाभूति बीजैस्तु षड्दीर्घान्तैर्महेश्वरि ।
न्यासं कुर्यात् षडङ्गादि करशुध्यादि पूर्वकम् ॥

संपुटमन्त्रः

नामांते कमलां देवि विश्वांते प्रणवं जपेत् ।
लक्ष्मीनारायण मंत्रो मंत्रोयं संपुटाभिधः ॥

## विष्णु अष्टाक्षरी

मंत्रकादि...नमः ॥ नवपीठशक्तिः । पूर्वादिक्रमेण मध्ये च ॥ विमला, उत्कर्षिणि, ज्ञाना, क्रिया, यागा, प्रह्व्यै, सत्या, ईशानायै, मध्ये अनुग्रहायै ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्म संयोग-पीठात्मनेनमः ॥ षट्कोणे । आग्नेयादि विदिक्षु प्रदक्षिण्येन । क्रुधोल्काय, महोल्काम, वीरोल्काय द्व्युल्काय देवपश्चिमे सहस्रोल्काय अस्त्रायफट् । इति नेत्रं बिना ॥

अष्टदलमूले । प्राच्यादि । ॐ ॐ, ॐ नं, ॐ मों, ॐ नां, ॐ रां, ॐ यं, ॐ णां, ॐ यं ॥

अष्टदलमूले । मध्ये प्राच्यादि । वासुदेव, संकर्षण, प्रद्युम्न, अनिरुद्ध ।
अष्टदलमूले आग्नेयादि । शांति, श्रियै, सरस्वती, रत्यै ॥

अष्टदलमूले अग्रेषु । पूर्वादि चतुर्दिक्षु । चक्र, शंख, गदा, पद्मा
आग्नेयादि विदिक्षु । कौस्तुभ, मुसल, खड्ग, वनमाला ।

भूपुरांतरे पूर्वादिचतुर्दक्षु । गरुड, शङ्खनिधये, ध्वजा, पद्म निधये भूपुरे इन्द्रादि दशदिक्पालान् । तेषां मायुधानि च ॥

## श्रीं लक्ष्मींनारायण आवरणदेवता: (देवींरहस्यम्)

यन्त्र । बिन्दु, त्रिकोण, वसुकोण, वृत्तं, वसुदलं, षोडशदलं, वृत्तत्रयं, चतरश्रं ॥ योगपीठपूजा । ॐ ह्रीं मण्डूकाय, कालाग्निरुद्राय, मूलप्रकृत्यै, आधारशक्त्यै, कूर्माय, अनन्ताय, वराहाय, पृथिव्यै, सुधार्णवाय, मणिमयद्वीपाय, अष्टदिक्षु । नवरत्नखण्डेभ्यो, सुवर्णपर्वताय, नन्दनोद्यानाय, कल्पवनाय, पद्मवनाय, विचित्ररत्न खचित भूमिकायै, चिन्तामणिमण्डपाय, नवरत्नवेदिकायै रत्नसिंहासनाय, उच्चैः श्वेतच्छत्राय, पूर्वादिदिक्षु धर्म, ज्ञान, वैराग्य, ऐश्वर्येभ्यो, विदिक्षु, अधर्माज्ञानावैराग्यानैश्वर्येभ्यो नमः ।

संसत्वाय, रं रजसे, तं तमसे, तत्वेभ्यो, ॐ ह्रीं ह्सौः मन्त्रवर्णभूषित कर्णिकायै, प्रकृतिमय पत्रेभ्यो, विकृतिमय केसराय, गरुडाय, पञ्चाशद्वर्णविभूषित पद्मासनाय, मूलं सर्वतत्वात्मकाय श्री योगपीठायनमः ।

१. बिन्दौ । महालक्ष्मी, राज्यलक्ष्मी, सिद्धलक्ष्मी ।

२. त्र्यश्रे । गं गंगा, यं यमुना, सं सरस्वती ॥

३. बिन्दौ । शंख, चक्र, गदा, पद्म ॥

४. वसुकोणे ॥ लक्ष्मीविष्णु, लक्ष्मीवासुदेव, लक्ष्मीदामोदर, लक्ष्मीनृसिंह, लक्ष्मीसंकर्षण लक्ष्मीत्रिविक्रम, लक्ष्मीअनिरुद्ध, लक्ष्मीविश्वक्सेन ।

५. अष्टदलेषु । महाभैरव, रुरुभैरव, चण्डभैरव, भूतेशभैरव, कालभैरव, कपालिभैरव, भीषणभैरव, श्मशानभैरव ।

६. अन्तर्वृत्तत्रये वायव्यादीशान्तं । असिताङ्गभैरव, हंसकेतुभैरव, वंशीपाणि, स्वगुरु, परमगुरु, परापरगुरु, परमेष्ठिगुरु ॥

७. षोडशदले । केशव, माधव, कृष्ण, गोविन्द, मधुसूदन, गदाधर, शंङ्खपाणि, चक्रपाणि, चतुर्भुज, पद्मायुध, कैटभारि, घोरदंष्ट्र, जनार्दन, वैकुण्ठ, वामन, गरुडध्वज ।

८. चतुरश्रे । लंइन्द्रादि दशदिक्पालाः ।

९. बाह्यद्वारचक्रेषु । वज्र, शक्ति, दण्ड, खड्ग, पाश, ध्वज, यष्टि, शूल ॥

## विष्णु द्वादशाक्षरी

मं मण्डूकादि....नमः । नवपीठशक्तीः अष्टाक्षरीवत् ॥

१. षट्कोणेषु । आग्नेयादि विदिक्षु, ॐ हृदयं, नमः शिरसे, भगवते शिखा, वासुदेवाय कवचं, देव— पश्चिमे, पूर्तिमन्त्रेण अस्त्राय इति नेत्रं विना पञ्चाङ्ग देवता ॥

२. अष्टदले ॥ पूर्वादिचतुर्दिक्षु । वासुदेव, संकर्षण, प्रद्युम्न, अनिरुद्ध,
विदिक्षु ॥ आग्नेयादि । शांत्यै, श्रियै, सरस्वत्यै, रत्यै ॥

३. द्वादशदले पूर्वादिक्रमेण । केशवादि, विष्ण्वादि च द्वादशनाम देवताः ।
भूपुरे इंद्रादि दशदिक्पालाः । ततः तेषां आयुधानि च ॥

## श्री मत्स्यमन्त्रः

अस्य मन्त्रस्य । परब्रह्मऋषिः । देवीगायत्रीछन्दः । श्रीमत्स्यरूपी हरि र्देवता ।

मं बीजं नमः शक्तिः । मत्स्यराजायेति कीलकं । ह्रां इत्यादि न्यासः ।

ध्यानम्ः--

**मत्स्याननं हरिं देवं शंखचक्रधरं विभुं ।**
**सर्वाभरणसंयुक्तं श्रीभूनीलाधिपं भजे ॥**

मनुः । ॐ आं ह्रीं क्रों मं मत्स्यराजाय नमः ॥

मत्स्यराजायविद्महे महामत्स्याय धीमहि तन्नो मत्स्यः प्रचोदयात् ॥

## श्रीकूर्ममन्त्रः

अस्य मन्त्रस्य । कश्यप ऋषिः । प्रकृतिः । कच्छपरूपी भगवान् र्देवता ।

कुं बीजं । धराधर धुरंधरायेति शक्तिः । नमः कीलकं । मूलमन्त्रवर्णैः न्यासः ।

ध्यानम्ः—

**पीतांबरं कूर्मपृष्ठं लसल्लांगूल शोभितं ।**
**दीर्घग्रीवं महाग्राह माश्रये रक्तलोचनम् ॥**

मनुः १ ॐ, २ नमो ३ भगवते, ४ कुं कूर्माय, ५ धराधर धुरंधराय ६ नमः ॥

## वराहमन्त्रः

अस्य मन्त्रस्य । भार्गवऋषिः अनुष्टुप्छन्दः । श्रीवराहो देवता । हुं बीजं । स्वाहा शक्तिः ॥

वराहरूपायेति कीलकं । एकशृंगाय नमः । व्योमोल्काय नमः । तेजोधिपतये नमः । विश्वरूपाय नमः । महावराहाय नमः । इति करतल नेत्रत्रयं विना न्यासः ।

ध्यानम् :—

आपादं जानुदेशाद्वरकनकनिभं नाभिदेशादधस्ता,
न्मुक्ताभं कण्ठदेशात्तरुणरविनिभं मस्तकान्नीलभासं ।
ईडेहस्तैर्दधानंरथचरणदरौ खड्गखेटे गदाख्यां
शक्ति दानाभये च क्षितिधरणलसद्दंष्ट्रमाद्यं वराहम् ॥

मनुः । ॐ नमो भगवते वराहरूपाय भूर्भुवस्सुवः पतये भूपतित्वं मे देहिदापय स्वाहा ।

## वामनमन्त्रः

अस्य मन्त्रस्य । इन्दु ऋषिः । विराट् छन्दः । सर्वज्ञेश्वरो वामनो देवता । ॐ बीजं । स्वाहा शक्तिः । क्लीं कीलकं ॥ ॐ क्लीं श्री वं । नमः । विष्णवे । सुरपतये । महाबलाय । स्वाहा ॥ इति न्यासः । अथवा वां इत्यादि न्यासः ।

ध्यानम् :—

मुक्तागौरं नवमणिलसद्भूषणं चन्द्रसंस्थं,
भृंगाकारै रलकनिकरै शोभि वक्त्रारविंदं ।
हस्ताब्जाभ्यां कनककलशं शुद्धतोयाभिपूर्णं,
दध्यन्नाढ्यं कनकचषकं धारयंतं भजामः ॥

मनुः । ॐ क्लीं श्रीं वं नमोविष्णवे सुरपतये महाबलाय स्वाहा ॥

## त्रयस्त्रिंशदक्षरो वराहमन्त्रः ॥

ॐ नमो भगवते वाराहरूपाय भूर्भुवः स्वः स्थात्पते भूपतित्वं देह्यते ददापय स्वाहा ॥

अस्य मन्त्रस्य भार्गवऋषिः । अनुष्टुप् छन्दः । आदिवराहो देवता ।

ॐ एकदंष्ट्राय अंगुष्टा । ॐ व्योमोल्काय तर्जनी । ॐ तेजोधिपतये मध्यमा । ॐ विश्वरूपाय अनामिका । महादंष्ट्राय कनिष्टिका । एवं करतल नेत्रद्वयं विना न्यसेत् ।

ध्यानम् :—

आपादं जानुदेशाद्वरकनकनिभं, नाभिदेशादधस्तान्
मुक्ताभं कण्ठदेशात्तरुणरविनिभं मस्तकान्नीलभासं ।

ईडेहस्तैर्दधानं रथचरणदरैखङ्गखेटौ गदाख्यां,
शक्ति दानाभये च क्षितिधरणलसत्दंष्ट्रमाद्यं वराहम् ॥

## द्वात्रिंशदक्षर नृसिंहमन्त्रः ॥

१ ॐ उग्रवीरं, २ महाविष्णुं, ३ ज्वलंतंसर्वतोमुखं । ४ नृसिंहंभीषणं, ५ भद्रंमृत्युमृत्युं नमाम्यहम् ॥

अस्यमन्त्रस्य । ब्रह्मा ऋषिः अनुष्टुप्छन्दः । श्रीनृसिंहदेवतायैनमः । संख्याक्रमेण न्यासः ॥

ध्यानम्:--

माणिक्याद्रिसमप्रभं निजरुचा सन्त्रस्तरक्षोगणं,
जानुन्यस्तकरांबुजं त्रिनयनं रत्नोल्लसद्भूषणं ।
बाहुभ्यां धृतशंखचक्रमनिशं, दंष्ट्राग्रवक्त्रोल्लसत्
ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं विभुम् ॥ पंचपूजा ॥

## एकाक्षर, त्र्यक्षर नृसिंहमन्त्रः

"क्ष्रौं ह्रीं क्ष्रौं ह्रीं । ॐ क्ष्रौं ॐ ।"
अस्य मन्त्रस्य । अत्रिः ऋषिः । गायत्री छन्दः । नृसिंहोदेवता ।

क्ष्रां, क्ष्रीं इत्यादि न्यासः ।

ध्यानम् ॥

तपनसोमहुताशनलोचनं घनविरामहिमांशुसमप्रभम् ।
अभयचक्रपिनाकवरान्करैर्दधतमिन्दुधरं नृहरिं भजे ॥
लक्षमेकंजपेन्मन्त्रंदशांशं घृतपायसैः ।
जुहुयात्पूजयेत्पीठे विमलादि समन्विते ॥

## अष्टाक्षर नृसिंहमन्त्रः

जयजय श्रीनृसिंह ॥
अस्य जयनृसिंह मन्त्रस्य । ब्रह्मा ऋषिः । गायत्रीछन्दः । नृसिंहोदेवता ।
ई शक्तिः । हं बीजं क्षौं कीलकं । हां हीं इतिन्यासः ।
ध्यानम्: —

श्रीमन्नृकेसरितनो जगदेकबंधो श्रीनीलकंठ करुणार्णव सामराज ।
वह्नींदुतीव्रकरनेत्रपिनाकपाणे शीतांशुशेखर रमेश्वर पाहि विष्णो ॥

एवं ध्यात्वा जपेल्लक्षाष्टकं तस्य दशांशतः ।
जुहुयात्पायसेनाग्नौ पूजाद्यस्य तु पूर्ववत् ॥

## लक्ष्मीनृसिंहमन्त्रः (एकत्रिंशदक्षरः)

ॐ श्रीं ह्रीं जयलक्ष्मीप्रियाय नित्यप्रमुदित चेतसे लक्ष्मीश्रितार्ध देहाय श्रीं ह्रीं नमः ॥
अस्य मन्त्रस्य । पद्मभुव ऋषिः । अतिजगतीछन्दः । श्रीनृसिंहो देवता ।
श्रीं बीजं । ह्रीं श्रां, ह्रीं श्रीं, ह्रीं श्रूं इत्यादि न्यासः ।
ध्यानम्ः—

क्षीराब्धौ वसुमुख्यदेवनिकरैरग्रादि संवेष्टितः,
शंखंचक्रगदांबुजं निजकरैर्बिभ्रंस्त्रिनेत्रः सितः ।
सर्पाधीशफणातपत्रलसितः पीतांबरालंकृतो,
लक्ष्म्याश्लिष्ट कलेवरो नरहरिः स्तान्नीलकण्ठो मुदे ॥

एवं ध्यात्वा जपेल्लक्षत्रयंषष्टिसहस्रकं ।
मध्वक्तैर्मल्लिकापुष्पैर्जुहुयाज्जातवेदसि ॥
षट्शतंत्रिसहस्राणि पीठे पूर्वोदिते यजेत् ।
घृतमधुशर्करायुतैमालती पुष्पैः ॥

## नवनवत्यर्ण नृसिंहमन्त्रः

ॐ क्ष्रौं नमो भगवते नरसिंहाय ॐ क्ष्रौं मत्स्यरुपाय, ॐ क्ष्रौं कूर्मरुपाय, ॐ क्ष्रौं वराहरुपाय, ॐ क्ष्रौं क्ष्रौं क्ष्रौं रामाय, ॐ क्ष्रौं कृष्णाय, ॐ क्ष्रौं कल्किने जयजय शालग्रामनिवासिने दिव्यसिंहाय स्वयंभुवे पुरुषायनमः ॐ क्ष्रौं ॥

अस्य मन्त्रस्य । अत्रि ऋषिः । अतिजगतीछन्दः नरसिंहोदेवता । क्ष्रौं बीजं । ॐ शक्तिः क्ष्रां क्ष्रीं इत्यादि न्यासः ।

ध्यानम्ः--

सहस्रचन्द्रप्रतिमो दयालुर्लक्ष्मीमुखालोकनलोलनेत्रः ।
दशावतारैः परितः परीतो नृकेसरी मंगलमातनोतु ॥

जपेयुतं दशांशेन हवनं पायसेन तु ।

## अभय नरसिंहमन्त्रः

ॐ नमो भगवते नरसिंहाय नमस्तेजस्तेजसे आविराविर्भव वज्रनख वज्रदंष्ट्रकर्माशयान्रन्धय २ तमोग्रस २ स्वाहा अभयमात्मनि भूयिष्ठा ॐ क्ष्रौं ॥
अस्य मन्त्रस्य । अत्रि ऋषिः । जगतीछन्दः । अन्यत्सर्वं पूर्ववत् ॥

## आम्नायमन्दारे नृसिंहमन्त्रः ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । अनुष्टुप्छन्दः । श्री नृसिंहोदेवता । हं बीजं । ईं शक्तिः । क्षौं कीलकं ।

ॐ उग्रं वीरं ॐ । ॐ महाविष्णुं ॐ । ॐ ज्वलंतं सर्वतोमुखं ॐ । ॐ नृसिंहंभीषणं ॐ । ॐ भद्रं मृत्युमृत्युं ॐ । नमाम्यहं ॐ । इतिन्यासः ।

ध्यानम् :—

सत्यज्ञान सुखस्वरूपममलं क्षीराब्धिमध्यस्थितं,
योगारुढमिति प्रसन्नवदनं भूषाशतप्रोज्ज्वलम् ।
त्र्यक्ष्यं चक्रपिनाकसाभयवरान् बिभ्राणमर्कच्छविं
छत्रीभूतफणीन्द्रमिन्दुधवलं लक्ष्मीनृसिंहंभजे ॥

मनुः ॐ ईं हं उग्रंवीरं महाविष्णुं ज्वलंतं सर्वतोमुखं ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं हं ईं ॐ ॥

## षडाक्षर राममन्त्रः ॥

ॐ रां रामायनमः ॥ ॐ श्रीं ह्रीं रां रामायनमः ॥
अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीरामोदेवता ।
ॐ रां बीजं । नमः शक्तिः । विनियोगायनमः । ॐ रां रीं रः इति न्यासः ।
ध्यानम् :--

नीलांभोधरकांतिकांतमनिशं वीरासनाध्यासिनं,
मुद्रां ज्ञानमयीं दधानमपरं हस्तांबुजं जानुनी ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं,
पश्यंतं मुकुटांगदादि विविधाकल्पोज्वलांगं भजे ॥ पंचपूजा ॥

## ॥ मन्त्रभेदाः ॥

| षड्विधमन्त्राः । | ऋषिः | छन्दः | देवता । |
|---|---|---|---|
| १. रां रामायननः । | ब्रह्मा | गायत्री | श्रीरामः |
| २. क्लीं रामायनमः । | संमोहनविश्वामित्रः । | गायत्री | श्रीरामः |
| ३. ह्रीं रामायनमः । | शक्ति | गायत्री | श्रीरामः |
| ४. ऐं रामायनमः । | दक्षिणामूर्ति | गायत्री | श्रीरामः |
| ५. श्रीं रामायनमः | अगस्त्यः | गायत्री | श्रीरामः |
| ६. ॐ रामायनमः | शिव | गायत्री | श्रीरामः |

न्यासं ध्यानं पूर्ववत् ॥

## दशाक्षररामममन्त्रः ॥

हुं जानकीवल्लभाय स्वाहा ॥

अस्य मन्त्रस्य वसिष्ठ ऋषिः । विराटछन्दः । श्री सीतापाणिपरिग्रहे श्रीरामो देवता । ॐ हुं बीजं । स्वाहा शक्तिः । विनियोगाय नमः ॐ "क्ली" इति अक्षरेण न्यासं ।

ॐ हुं नमः शिरसि । ॐ जां नमः ललाटे । ॐ नं नमः भ्रूमध्ये । ॐ कीं नमः तालुनि । ॐ वं नमः कंठे । ॐ ल्लं नमः हृदि । ॐ भां नमः बाह्वोः । ॐ यं नमः नाभौ । ॐ स्वां नमः जान्वोः ॐ हां नमः पादयोः ।

ध्यानम्:—

अयोध्यानगरे रम्ये रत्नसौंदर्यमण्डपे ।
मंदारपुष्पैराबद्धविताने तोरणांकिते ॥
सिंहासनसमारूढं पुष्पकोपरि राघवम् ।
रक्षोभिर्हरिभिर्देवैर्दिव्य यानगतैः शुभैः
संस्तूयमानं मुनिभिः सर्वतः परिसेवितं ।
सीतालंकृतवामांगं लक्ष्मणेनोपशोभितं ॥
श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् ॥

रामगायत्री ॥ ॐ श्रीं ह्रीं क्लीं दाशरथाय विद्महे सीतावल्लभायधीमहि ।

तन्नो रामः प्रचोदयात् ॥

## ॥ रामषडक्षरी ॥

मं मण्डूकादि....नमः । पीठदेवताः । पूर्वादि । अष्टाक्षरीवत्

देवस्यवामे ॥ षटकोणाद्बहिः वर्तुलांतरे श्रीं सीतायै । अग्निकोणे शाङ्गाय, दक्षिणे शराय, वामे चापाय ॥ ततः षट्कोणेषु । आग्नेये रां हृदयं, नैऋतेरीं शिरसे, वायव्ये शिखा, ईशान्ये कवचाय ॥ पूज्यपूजकयोर्मध्ये नेत्रत्रयाय । पश्चिमे उस्त्राय । इति अङ्गदेवताः तद्बहिरष्टदले । पूज्य पूजकयोर्मध्ये प्राची दिशं प्रकल्पय, हनुमते, सुग्रीवाय, भरताय, विभीषणाय, लक्ष्मणाय, अङ्गदाय, शत्रुघ्नाय, जांबवते ॥

अष्टदलाग्रेषु, सृष्टाय, जयन्ताय, विजयाय, सुराष्ट्राय, राष्ट्रवर्द्धनाय, अकोपाय, धर्मपालाय, सुमन्ताय ॥

भूपुरे । इन्द्र दि दशदिक्पालान्, ततः तयोः समीपे तेषां आयुधानि च पूजयेत् ।

## नामत्रयमन्त्रः

अस्य मन्त्रस्य । काश्यपाऽत्रि भरद्वाज ऋषयः अनुष्टुप्छन्दः । श्रीमहाविष्णुर्देवता । अच्युताय नमः बीजं । अनन्ताय नमः शक्तिः । गोविन्दाय नमः कीलकं । द्विरावर्तिभिः न्यासः । नामत्रयमन्त्र व्याधिमंत्र-ध्वंस पटीयसे ।

अच्युतानन्त गोविन्द नाम्ने धाम्ने नमो नमः ॥

मनुः । अच्युतायनमः । अनन्ताय नमः । गोविन्दायनमः ॥

## (आम्नायमंदारे) श्रीविद्यारामन्त्रः ॥

अस्य मन्त्रस्य । अर्धनारीश्वर ऋषिः । गायत्री छन्दः । श्रीविद्यारामो देवता । रां बीजं । स्वाहा-शक्तिः । श्रीं कीलकं ।

१. ऐं ह्रीं श्रीं ऐं सौः सकलह्रीं रां रामाय सर्वज्ञशक्तिधाम्ने ब्रह्मात्मने श्रां रां ह्रां ।

२. क्लीं ह ६ क्लीं रघुनन्दनाय नित्यतृप्तिशक्तिधाम्ने विष्ण्वात्मने श्रीं रीं ह्रीं ।

३. सौः क ५ ऐं हुं जानकीवल्लभाय स्वाहा अनादिबोध शक्तिधाम्ने श्रूं रूं ह्रूं ।

४. ऐं ह्रीं श्रीं ऐं सौः स ४ रां रामाय स्वतन्त्रशक्तिधाम्ने ईश्वरात्मने श्रैं रैं ह्रैं ।

५. क्लीं ह ६ क्लीं रघुनन्दनाय नित्यालुप्तशक्तिधाम्ने सदाशिवात्मने श्रौं रौं ह्रौं ।

६. सौः क ५ ऐं हुं जानकीवल्लभाय स्वाहा अनन्तशक्तिधाम्ने सर्वात्मने श्रः रः ह्रः इति न्यासः ।

ध्यानम्:—

सिंहासने समासीनं दिव्ये श्रीचक्रराजके ।
बिंद्वाकार महाताक्ष्य संस्थं रामं विचिंतयेत् ॥
वामांके रामभद्रस्य संस्थितां पद्मधारिणीं ।
सीतां ध्यायेन्महालक्ष्मीं स्पृशंतं वामपाणिना ॥
ज्ञानमुद्रां दक्षिणेन वहंतं पाणिना सदा ।
रामं ध्यायन् जपेन्मन्त्रं ब्रह्मात्मैक्यप्रदायकम् ॥

मनुः । ऐं ह्रीं श्रीं सौः स ४ रां रघुनन्दनाय क्लीं ह ६ क्लीं रघुनन्दनाय सौः क ५ ऐं हुं जानकी-वल्लभाय स्वाहा ॥

## ॥ श्रीराममाला ॥

अस्य मन्त्रस्य । ब्रह्माऋषिः । अनुष्टुप्छन्दः । राज्याभिषिक्तः श्रीरामो देवता । ॐ बीजं । नमः शक्तिः । क्लीं कीलकं । सप्त षट् सप्तदश षट् रुद्र संख्यार्णैः न्यासः ।

ध्यानम्:–

उद्भिन्न नील शकलामलकांतिमब्ज-
चापासिबाणकरमंबुजपत्रनेत्रम् ।
पीतांबरं स्मितसुधामधुरं मुरारिं
संचिन्तयेन्मिथिलराजसुतासहायम् ॥

मनुः । १ ॐ ऐं क्लीं नमो भगवते, २ रघुनन्दनाय, ३ रक्षोघ्नविशदाय, ४ प्रसन्नवदनाय ५ अमिततेजसे बलाय, ६ रामाय विष्णवे नमः क्लीं ऐं ॐ ॥

## श्रीसीतामन्त्रः ॥

अस्य मन्त्रस्य जनक ऋषिः । गायत्री छन्दः । श्री भगवती सीता देवता । श्रीं बीजं । स्वाहा शक्तिः । सीतायै कीलकं । श्रां इत्यादि न्यासः ।

ध्यानम्:—

रामे ध्यायति त्वामेव सुषुम्नां परमेश्वरीं ।
सीतामुपास्ते व्योमांतरीश्वरीं बिन्दुरूपिणीं ।
सीतां भगवतीं देवीं वन्दे राघवसंयुतां ।
सुवर्णाभांबुजधरां रामालोकनतत्पराम् ॥

मनुः ॥ श्रीं सीतायै स्वाहा ॥

## लक्ष्मणमन्त्रः

अस्य मन्त्रस्य । अगस्त्य ऋषिः । गायत्री छन्दः । श्रीलक्ष्मणो देवता । लं बीजं । नमः शक्तिः । लक्ष्मणेति कीलकं । लां इत्यादि न्यासः ।

ध्यानम्:—

द्विभुजं लक्ष्मणं ध्यायेत्कनकाभं किरीटिनं ।
धनुर्बाणकरं रामसेवासंसक्तमानसम् ॥

ॐ लं लक्ष्मणायनमः ॥

ॐ सर्वराजाय विद्महे सहस्रफणाय धीमहि तन्नोऽनन्तः प्रचोदयात् ॥

भरतस्यैवमेवस्याच्छत्रुघ्नस्याप्ययंविधिः ।

अङ्गत्वेनोदिता ह्येते प्राधान्येनापि संमताः ॥

ॐ भं भरताय नमः । ॐ शं शत्रुघ्नाय नमः ॥

## गोपालसुन्दरीमन्त्रः

(१) १ ऐं श्रीं ह्रीं श्रीं क्लीं । २ ऐं श्रीं कृष्णाय । ३ ऐं श्रीं गोविन्दाय । ४ ऐं श्रीं गोपीजन । ५ ऐं श्रीं वल्लभाय । ६ ऐं ह्रीं स्वाहा ॥

(२) ऐं ह्रीं श्रीं ऐं क ५ सर्वज्ञशक्तिधाम्ने ब्रह्मात्मने ह्रां ।

ऐं ह्रीं श्रीं क्लीं ह ६ नित्यतृप्तिशक्तिधाम्ने विष्ण्वात्मने ह्रीं ।

ऐं ह्रीं श्रीं सौः स ४ अनादिबोधधाम्ने रुद्रात्मने ह्रूं ।

ऐं ह्रीं श्रीं ऐं क ५ स्वतन्त्रधाम्ने ईश्वरात्मने ह्रैं ।

ऐं ह्रीं श्रीं क्लीं ह ६ नित्यालुप्तधाम्ने सदाशिवात्मने ह्रौं ।

ऐं ह्रीं श्रीं सौः स ४ अनन्तधाम्ने सर्वात्मने ह्रः ॥

ध्यानम्:—

**अर्धं शोणमथार्ध मंबुदनिभं बद्धं ललाटस्रजा,**
**बर्हाकल्पितया विलाससदनं स्त्रीपुंमयं वैष्णवं ।**
**हस्तेनाधृत वेणुनालसृणि सत्पाशेक्षु चापाशुगं**
**वस्त्वत्यद्भुतमस्तु मे हृदि सदा श्रीकृष्णरूपात्मकम् ॥**

मनुः । ह्रीं श्रीं क्लीं कृष्णाय क ५ गोविंदाय ह ६ गोपीजनवल्लभाय स ४ स्वाहा ॥

## अष्टादशाक्षरकृष्णमन्त्रः ॥

१ ॐ, क्लीं कृष्णाय, २ गोविन्दाय, ३ गोपीजन, ४ वल्लभाय ५ स्वाहा ॥

अस्य मन्त्रस्य । नारद ऋषिः । गायत्री छन्दः । श्रीकृष्णो देवता । क्लीं बीजं । स्वाहाशक्तिः । विनियोगाय नमः सर्वांगे । संख्याक्रमेण, करतल, नेत्रत्रयं विना न्यासः । अथवा क्लां इत्यादि न्यासः ॥

स्मरेदक्षवने रम्ये मोहयंतमनारतम् ।
गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ॥
आत्मनो वदनांभोजप्रेषिताक्षिमधुव्रताः ।
पीडिताः कामबाणेनाविरामाश्लेषणोत्सुकाः ॥
मुक्ताहारलसत्पीनतुंगस्तनभरानताः ।
स्रस्तधम्मिल्लवसनाः मदस्खलितभाषणाः ॥
दन्तपंक्तिप्रभोद्भासिस्पन्दमानाधरांचिताः ।
विलोभयन्ती विविधैर्विभ्रमैर्भावगर्भितैः ॥
फल्लेन्दीवरकान्तिमिंदुवदनं बर्हावतंसं प्रियम्,
श्रीवत्सांकमुदारकौस्तुभधरं पीतांबरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतं,
गोविन्दं कलवेणुवादनपरं दिव्यांगभूषं भजे ॥ पंचपूजा ॥

## ॥ नवविध कृष्णमंत्र स्वरूपम् ॥

षडक्षरो मन्त्रः क्लीं कृष्णाय स्वाहा ।

दशाक्षरो मन्त्रः गोपीजनवल्लभाय स्वाहा ।

अष्टाक्षरी क्लीं हृषीकेशानमः ।

अष्ठाक्षरी श्रीं ह्रीं क्लीं कृष्णाय स्वाहा ।

द्वादशाक्षरी श्रीं ह्रीं क्लीं कृष्णाय गोविन्दाय स्वाहा ।

चतुर्दशाक्षरी ॐ क्लीं ह्रीं श्रीं गोपीजनवल्लभाय स्वाहा ।

षोडशाक्षरी ॐ नमो भगवते रुक्मिणी वल्लभाय स्वाहा ।

द्वाविंशत्यक्षरी ऐं क्लीं कृष्णाय ह्रीं गोविन्दाय श्रीं गोपीजनवल्लभाय सौं ।

त्रयस्त्रिंशदक्षरी ॐ क्लीं नमो भगवते नन्दपुत्राय बालादि वपुषे श्यामलाय गोपीजनवल्लाभाय स्वाहा ।

त्रयोविंशनिवर्णा । ऐं ह्रीं श्रीं क्लीं कृष्णाय गोविन्दाय गोपीजन वल्लभाय स्वाहा ह्रीं ह्रीं ॥

अस्य मन्त्रस्य विधात्रानन्दभैरवौ ऋषिः। देवीगायत्रीछन्दः । गोपालसुन्दरी देवता । क्लीं बीजं । स्वाहा शक्तिः । ह्रीं कीलकं ।

अथ मार्गद्वयोपास्यां वक्ष्ये गोपाल सुन्दरि । मुनिर्विधाता दक्षे तु वामे चानन्द भैरवः ॥ इति मेरुतंत्रे ॥

## पुत्रप्रद कृष्णमंत्रः । (द्वात्रिंशदक्षरी)

१ ॐ देवकीसुतगोविन्द, २ वासुदेव, ३ जगत्पते । ४ देहि मे तनयं, ५ कृष्ण, ६ त्वामहं शरणं गतः ॥

अस्य मन्त्रस्य । नारद ऋषिः । अनुष्टुप्छन्दः ।सुतप्रदः कृष्णो देवता ।

ध्यानम्ः—

**विजयेन युतो रथस्थितः प्रसमानीय समुद्रमध्यतः ।**
**प्रददौत्तनयान्द्विजन्मने स्मरणीयो वसुदेवनन्दनः ॥**
**लक्षं जपो युतं होमस्तिलैर्मधुरसंयुतैः ।**
**अर्चा पूर्वोदिता चैव मन्त्रः पुत्रप्रदो नृणाम् ॥**

## कृष्णमंत्रः

क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा ॥

मं मण्डूकादि...नमः । पीठदेवताः अष्टाक्षरीवत् ॥

षट्कोणेषु, देवस्यपुरतः पूर्वकोणंविना । आग्नेयादि पञ्चकोणेषु नेत्रंविना ॥

अङ्गदेवता । ततो अष्टदले पूर्वादि प्रादक्षिण्येन

कालिंदी, नाग्नजिती, मित्रविंदा, चारुहासिनी, रोहिणी, जांबवती, रुक्मिणी, सत्यभामा ।

ततः दलाग्रेषु । ऐरावत, पुंडरीक, वामन, अंजन, पुष्पदन्त, सार्वभौम सुप्रतीक ।

ततः भूपुरे इन्द्रादि दशदिक्पालान् । ततः तेषां समीपे आयुधानि ॥

## लक्ष्मी वासुदेवमंत्रः

ॐ ह्रीं ह्रीं श्रीं श्रीं लक्ष्मीवासुदेवाय नमः ॥

मं मण्डूकादि...नमः । पीठदेवताः अष्टाक्षरीवत् ।

षट्कोणेषु । पूर्वकोणं विना आग्नेयादि क्रमेण । अङ्गदेवताः (नेत्रं विना) अष्टदलेषु प्राच्यादि चतुर्दिक्षु, ततः आग्नेयादि विदिक्षुच ।

वासुदेव, संकर्षण, प्रद्युम्न, अनिरुद्ध, शांति । स्री । सरस्वती, रति ।

ततः द्वादशदले । प्राच्यादि । केशवादि, दामोदरांतं ।

भूपुरे । इन्द्रादि दशदिक्पालान् । ततः तेषां आयुधानि ॥

## दधिवामन मंत्रः

ॐ नमो विष्णवे सुरपतये महाबलाय स्वाहा ।

मं मण्डूकादि...नमः । पीठशक्ति-अष्टाक्षरीवत् ।

षट्कोणेषु । आग्नेयादि विदिक्षु, मध्ये दिक्षु च । सनेत्रत्रयं अङ्गदेवता अष्टदलेषु । प्राच्यादि चतुर्दिक्षु, ततः आग्नेयादि विदिक्षु च ।

वासुदेव संकर्षण, प्रद्युम्न, अनिरुद्ध, शांति, श्री, सरस्वती, रति ॥

अष्टदलाग्रेषु । प्राच्यादि चतुर्दिक्षु । ध्वज, वैनतेय, कौस्तुभ, वनमालिका

विदिक्षु । शंख, चक्र, गदा, शार्ङ्ग ।

द्वादशदलेषु प्राचीक्रमेण । केशवादि दामोदरांतं ।

ततः भूपुरे इंद्रादि दशदिक्पालाः । ततः तेषां आयुधानि च ॥

## धन्वन्तरी मंत्रः ॥

ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीमहाविष्णुर्देवता । ॐ बीजं स्वाहा शक्तिः ।

नमः कीलकं । मनुः १ ॐ धन्वतरये, २ अमृतकलशहस्ताय, ३ वज्रजलूकपास्ताय, ४ सर्वामयविनाशाय, ५ त्रैलोक्यनाथाय, ६ महाविष्णवे स्वाहा । इति न्यासः ।

ध्यानम् :—

**अच्युतानन्त गोविन्द विष्णुनारायणामृत ।**
**रोगान्मे नाशयाशेषानाशु धन्वंतरे ! हरे ! ॥**

## अन्य मंत्रः ॥

अस्य मन्त्रस्य । अपान्तरतमा ऋषिः । त्रिष्टुप्छन्दः । धन्वन्तरिर्देवता । ॐ बीजं । स्वाहा शक्तिः सर्वरोगविनाशनार्थे जपे विनियोगः ॥ ॐ नमो भगवते, धन्वन्तरये, अमृतकलशहस्ताय, सर्वामयविनाशाय, त्रिलोकनाथाय, विष्णवे स्वाहा इति मनुः न्यासं च ॥

**शंखं चक्रं जलूकां दधदमृतघटं चापिदोर्भिश्चतुर्भिः,**
**सूक्ष्मस्वाच्छातिहृद्यां शकपरिविलसन्मौलिमंभोजनेत्रम् ।**
**कालांभोदोज्ज्वलांगं कटितट विलसच्चारुपीतांबराढ्यं**
**वन्दे धन्वन्तरिं तं निखिलगदवनप्रौढदावाग्निनीलम् ॥**

## परशुराम मंत्रः ॥

अस्य गायत्री मन्त्रस्य । भरद्वाज ऋषिः । गायत्रीछन्दः । श्रीमान्परशुरामो देवता । प्रथमपादेन बीजं । द्वितीयेन शक्तिः । तृतीयेन कीलकं । ब्रह्मक्षत्रायविद्महे । क्षत्रियांताय । धीमहि । तन्नः । रामः । प्रचोदयात् । न्यासः ध्यानम् ॥

पीतांबरधरं रामं भस्मोद्धूलितविग्रहम् ।
किरीटिनं कुण्डलिनं विप्रं क्षत्रवधोद्यतम् ॥
धनुष्टंकार निर्घोष सन्त्रस्त भुवनत्रयं ।
ध्यायेच्च तामसं क्षत्रं रुधिरावतपरशवधम् ॥

मनुः । ॐ ब्रह्मक्षत्राय विद्महे । क्षत्रियांताय धीमहि । तन्नो रामः प्रचोदयात् ॥

## बुद्ध मंत्रः ॥

नमे भगवते बुद्ध संसारार्णवतारका कलिकाला दहं भीतः शरणंगतः ॥
चतुर्भिः पादैः पूर्वार्धेनोत्तरार्धेन च करांग न्यासः ॥

ध्यानम्ः–

वन्दे पद्मासनस्थं च ऊर्वोर्न्यस्तकरद्वयम् ।
गौरं मण्डितसर्वांगं ध्यानस्तिमितलोचनम् ॥
पुस्तकासक्त हस्तैश्च नानाशिष्यैश्च शोभितं ।
इन्द्रादिलोकपालैश्च ताम्रवर्णांबरावृतम् ॥
सभ्यत्वान्नद्विजातीनामधिकारोस्तिकर्हिचित् ।
पतितानामयं मन्त्रः सम्प्रोक्तः शरणप्रदः ॥

## कल्कि मंत्रः

कं कल्किने हृदं । लोऽयं मन्त्रः प्रोक्तः षडक्षरः । एवमाराधितो मन्त्रः संग्रामे विजयप्रदः । मन्त्रवर्णैः न्यासः ॥

ध्यायेन्नीलहयारूढं श्वेतोष्णीषविराजितम् ।
महामुद्राढ्य हस्तं च कौस्तुभोद्दामकण्ठकम् ॥
मर्दयन्तं म्लेच्छगणं क्रोधपूरितलोचनम् ।
आर्तहितं देवमुनिगंधर्वैः संस्तुतं हरिम् ॥

## दत्तात्रेय मंत्रः षडक्षरी ॥

अस्य मन्त्रस्य । सदाशिवऋषिः । गायत्रीछन्दः । श्रीदत्तात्रेयो देवता । द्रां बीजं । श्रीं शक्तिः । ह्रीं कीलकं । मूलाक्षरेण न्यासः ।

ध्यानम्:--

उत्तानिते करतलेऽव्यपसव्यसव्य--
सोपानपर्व सदृशे रुपरिस्व नामे ।
प्रासार्यचर्मवसनं भसितांगरागं
मन्त्रेण तं भजत रक्तजटाकलापम् ॥

मनुः । ॐ श्रीं ह्रीं क्लीं ग्लौं द्रां ॥

## ॥ दत्तात्रेय अष्टाक्षरी ॥

अस्य मन्त्रस्य । शबररूपी शंकर ऋषिः । गायत्री छन्दः । श्रीदत्तात्रेयो देवता ।
द्रां बीजं । नमः शक्तिः । दत्तात्रेयेति कीलकं । द्रां इत्यादि न्यासः ।

योगारूढं योगपट्टोपवीतं हस्त द्वंद्वं जानुयुग्मे प्रसार्य ।
अंसाग्रन्थं दिव्यभूषाजटाकं दत्तात्रेयं भावये वीक्षमाणम् ॥

मनुः । ॐ द्रां दत्तात्रेयाय नमः ॥

## दत्तात्रेय द्वादशाक्षरी ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः गायत्रीछन्दः । दत्तात्रेयोदेवता । आं बीजं । ह्रीं शक्तिः । क्रों कीलकं । आं इत्यादि मूलेन न्यासः ।

ध्यानम्:--

दत्तात्रेयमहं वन्दे योगमुद्राविराजितं ।
ब्रह्मचर्यव्रतासक्तं भवधूतस्वरूपिणम् ॥

मनुः । ॐ १ आं २ ह्रीं ३ क्रों ४ एह्येहि ५ दत्तात्रेयाय ६ स्वाहा ॥

## अन्य मंत्रः

ॐ ह्रीं द्रां-दत्तात्रेय हरिकृष्ण उन्मत्तानन्ददायक । दिगम्बरमुनेबाल पिशाच (विशाल) ज्ञानसागर द्रां ह्रीं ॐ ॥

न्यास ध्यानादिकं सर्वं पूर्ववत् ॥

## दत्तात्रेयमन्त्राः (उपनिषत्)

१. "दां" इत्येकाक्षरमन्त्रः
सदाशिवऋषिः । गायत्रीछन्दः । दत्तात्रेयोदेवता ।

२. द्रां ॐ ह्रीं क्लीं ग्लौं द्रां ॥ षडक्षरः
सदाशिवऋषिः । गायत्रीछन्दः ।

३. द्रां दत्तात्रेयाय नमः अष्टाक्षरः
सदाशिव ऋषिः । गायत्रीछन्दः । दत्तात्रेयाय इति बीजं । कीलकं नमः शक्तिः ।

४. ॐ आं ह्रीं क्रों एहि दत्तात्रेयाय स्वाहा द्वादशाक्षरीः
सदाशिवऋषिः । जगतीछन्दः । ॐ बीजं । स्वाहा शक्तिः । दत्तात्रेयाय इति कीलकं । द्रां हृदय, क्लीं शिरः एहि-शिखा, दत्तेति कवचं, आत्रेयेति, नेत्रं, स्वाहेति अस्त्रं ।

५. ॐ ऐं क्रों क्लीं क्लूं ह्रां ह्रीं ह्रूं दत्तात्रेयाय स्वाहा षोडशाक्षरीः
सदाशिव ऋषिः गायत्रीछन्दः । दत्तात्रेयोदेवता । ॐ बीजं । स्वाहा शक्तिः । दत्तात्रेयायेति कीलकं ॥ ॐ हृदये, क्लां क्लीं क्लूं इति शिखा, सौः इति कवचे, दत्तात्रेयाय इति नेत्रं, स्वाहेति अस्त्रं । सौः इत्यंते श्री वैष्णव इत्युच्यते ।

६. दत्तात्रेय हरेकृष्ण उन्मत्तानन्ददायक ।
दिगंबर मुने बाल पिशाच ज्ञानसागर ॥ इत्यनुष्टुप्छन्दोमन्त्रः ॥

## श्रीदत्तात्रेयमन्त्राः श्रीदत्तात्रेयोपनिषदुक्ता ॥

१. सदाशिव ऋषिः । गायत्रीछन्दः । दत्तात्रेयो देवता । मनुः "दां" (एकाक्षरः)

२. सदाशिव ऋषिः । गायत्रीछन्दः । दत्तात्रेयो देवता । मनुः । द्रां ॐ ह्रीं क्लीं ग्लौं द्रां ॥

३. सदाशिव ऋषिः । गायत्रीछन्दः । दत्तात्रेयो देवता । मनुः । द्रां दत्तात्रेयायनमः ।

४. सदाशिव ऋषिः । गायत्रीछन्दः । दत्तात्रेयो देवता ।

५. सदाशिव ऋषिः । जगतीछन्दः । दत्तात्रेयो देवता । मनुः । ॐ आं ह्रीं क्रों एहि दत्तात्रेयाय स्वाहा ।

अस्य मन्त्रस्य । ॐ बीजं । स्वाहा शक्तिः दत्तात्रेय इति कीलकं । द्रं इति हृदये । ह्रीं क्लीं इति शीर्षे । एहीति शिखायां । दत्तेति कवचं । आत्रेयेति चक्षुषि । स्वाहेत्यस्त्रे ।

६. सदाशिव ऋषिः गायत्रीछन्दः दत्तात्रेयो देवता । ॐ बीजं । स्वाहा शक्तिः । दत्तात्रेयायेति कीलकं । ॐ हृदये । क्लां क्लीं क्लूं शिरसि । क्लूं शिखा । सौः कवचे । चतुर्थ्यन्तं च क्षुषि । स्वाहेत्यस्त्रे । मनुः । ॐ ऐं क्रों क्लीं क्लूं ह्रां ह्रीं ह्रूं सौः दत्तात्रेयाय स्वाहा ।

७. सदाशिव ऋषिः । अनुष्टुपछन्दः । दत्तात्रेयो देवता । दत्तात्रेयेति हृदये ।

हरे कृष्णेति शिरसि । उन्मत्तानन्देति शिखा । दायकमुने इति कवचं । दिगम्बरेति चक्षुषि । पिशाच ज्ञानसागरेति अस्त्रं । मनुः ।

दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक । दिगम्बर मुने बाल पिशाच ज्ञानसागर ।

## श्रीदत्तात्रेय द्वादशाक्षरमन्त्रः ॥

१. ॐ १ आं २ ह्रीं ३ क्रों ४ एहि ५ दत्तात्रेयाय ६ स्वाहा ॥

२. ॐ आं ह्रीं ह्रौं क्रों दत्तात्रेयाय नमः ।

मन्त्रस्य । अत्रि ऋषिः । जगती छन्दः । श्रीदत्तात्रेयो देवता । आं बीजं । ह्रीं शक्तिः । क्रों कीलकं । संख्याक्रमेण न्यासः ।

ध्यानम्:—

व्याख्यामुद्रां कर सरसिजे दक्षिणे संदधानो
जानुन्यस्तापरकरवरातुल्यदामो नतांगः ॥
ध्यानादानात् सुखपरवशा दर्धतामीलितांगो ।
दत्तात्रेयो भसितधवलः पातु नः कृत्तिवासाः ॥
दत्तात्रेयं हरिं वन्दे देवानां परमंपदम् ।
अनसूयातनूजातंमुक्तिभुक्तिफलप्रदम् ॥

## मालामन्त्रः ॥

अस्य श्रीदत्तात्रेय माला मन्त्रस्य शबररूपी सदाशिव ऋषिः । अनुष्टुप्छन्दः । दत्तात्रेयो देवता । ॐ ऐं बीजं । स्वाहा शक्तिः । दत्तात्रेयेति कीलकं ।

१ ॐ नमोभगवते दत्तात्रेयाय, २ स्मरणमात्रसन्तुष्टाय, ३ महाभयनिवारणाय, ४ महाज्ञानप्रदाय, ५ चिदानन्दात्मने, बालोन्मत्तपिशाचवेषाय, इति कर न्यासः ॥

१ महायोगिने, २ अवधूताय, ३ अनसूयानन्दवर्धनाय, ४ अत्रिपुत्राय, ५ सर्वकामप्रदाय, ६ भवबन्ध-विमोचनाय इति हृदयादि न्यासः ।

ध्यानम्:—

हृत्पद्मे योगपीठे निजकरकमले ज्ञानमुद्रां दधानो
मुक्तिप्रासादजानुस्थित करवरदो नादलीलाजितात्मा ॥

सर्वज्ञः सर्वसुस्थः सकलसुखकरः सच्चिदानंद रुपो ।
दत्तात्रेयो महात्मा भव भयहरणः सेवकामीष्टदाता ।।

पंचपूजा ।।

ॐ नमो भगवते दत्तात्रेयाय स्मरणमात्रसन्तुष्टाय, महाभयनिवारणाय, महाज्ञानप्रदाय, चिदानन्दात्मने, बालोन्मत्तपिशाचवेषाय, महायोगिने, अवधूताय, अनघाय, अनसूयानन्दवर्धनाय, अत्रिपुत्राय, सर्वकामफल प्रदाय, भवबन्ध विमोचनाय, आं असाध्यसाधनाय, ह्रीं विभूतिदाय, क्रों साध्याकर्षणाय, ऐं वाक्प्रदाय, क्लीं जगत्रय-वशीकराणाय, सौः सर्वमनः संक्षोभणाय, श्रीं महासम्पत्प्रदाय, ग्लौं भू मण्डलाधिपत्यप्रदाय, द्रां चिरंजीविने वषट् वशीकुरु २ वौषद् आकर्षय, हुं विद्वेषय २ फट् उच्चाटय २ ठः ठः स्तंभय २ खें खें मारय २, नमः सम्पन्नाय २, स्वाहा पोषय २ चित्तं तोषय २ दारिद्र्यं विद्रावय २ देहं पोषय २ परमन्त्रयन्त्रतन्त्राणि छिंधि २ ग्रहान् निवारय २ व्याधीन् नाशय २, दुःखं हर २, सर्वमन्त्रस्वरूपाय, सर्वतन्त्रस्वरूपाय, सर्वयन्त्रस्वरूपाय ॐ नमोयो-गिने, महासिद्धिदाय स्वाहा ।।

नारायणास्त्रंमन्त्रः ।।

ॐ नमो भगवते श्रीनारायणाय नमो नारायणाय विश्वमूर्तये नमः पुरुषोत्तमाय पुष्पदृष्टि प्रयक्षंवा परोक्षंवा अजीर्ण पञ्चविषूचिकां हन २ एकाहिकं द्वयाहिकं त्रयादिकं चातुर्थिकं ज्वरं नाशय २ चतुरशीति वाना नष्टादश कुष्ठान् अष्टादशक्षयरोगान् हन २ सर्वदोषान्भंजय २ तत्सर्व नाशय २ शोषय २ आकर्षय २ शत्रून्मारय २ उच्चाटय २ विद्वेषय २ स्तंभय २ निवारय २ विघ्नैर्हन २ दह २ मथ २ विध्वंसय चक्रं गृहीत्वा शीघ्रं आगच्छा २ चक्रेण हत्वा परविद्यां छेदय २ भेदय २ चतुरशीतान् सर्ववातशूल दृष्टिमर्प सिंहव्याघ्र द्विपद चतुष्पद-बाह्यान्दिविभुव्यन्तरिक्षे अन्येअपि केचित्तान् द्वेषकान् सर्वान् हन २ विद्युन्मेघनदीपर्वताटवी सर्वस्थान, रात्रिदिव पथ चौरान् वशं कुरु २ हरिः ॐ नमो भगवते ह्रीं हुं फट् स्वाहा ठः ढं ढं ढः नमः ।।

एषाविद्या महानाम्नी पुरादत्ता मरुत्वते ।
असुरान्जितवान्सर्वाच्छक्रस्तु बहदानवान् ।।
यः पुमान् पठते मन्त्रं वैष्णवो नियतात्मना ।
तस्य सर्वाणि सिध्यंति यच्च दृष्टिगतं विषम् ।।

अन्यदेह विषंचैव नदेहे संक्रमे ध्रुवम् ।
संग्रामे धारयत्यंगे शत्रून्वै जयते क्षणात् ।।

अतः सद्यो जयस्तस्य विघ्नस्तस्य न जायते ।।
किमत्र बहुनोक्तेन सर्वसौभाग्यसम्पदः ।
लभते नात्रसन्देहो नान्यथातु भवेदिति ।।

गृहीतो यदि वा येन बलिना विविधैरपि ।
शीतं समुष्णतां याति चोष्णं शीतलतां व्रजेत् ।
अन्यया न भवेद्विद्यां यः पठेत्कथितां मया ।।

भूर्ज पत्रे लिखेन्मंत्रं गोरोचनजलेन च ।
इमां विद्यां स्वके बध्वा सर्वरक्षां करोतु मे ॥
पुरूषस्याथवा स्त्रीणां हस्तेबध्वा विचक्षणः ।
विद्रवंति च विघ्नानि न भवन्ति कदाचन ॥
न भयं तस्य कुर्वंति गगने भास्करादयः ।
भूतप्रेतपिशाचाश्च ग्राम ग्राही तु डाकिनी ॥
शाकिनी तु महाधोरा बेतालाश्च महाबलाः ।
राक्षसाश्च महारौद्रा दानवा बलिनो हि ये ॥
असुराश्च सुराश्चैव अष्टयोनिश्च देवता ।
सर्वत्र स्तंपिता तिष्टे न्मन्त्रोच्चारणमात्रतः ।
सर्वहत्याः प्रणश्यंति सर्वं फलति नित्यशः ॥
सर्वे रोगा विनश्यंति विघ्नस्तस्य न बाधते ।
उच्चाटनेऽपराहृणेतु संध्यायां मारणे तथा ॥
सर्व शांति केऽर्धे रात्रेतु ततोऽर्थः सर्वकामिकः ॥
इदं मत्ररहस्यं च नारायणास्त्रमेवच ।
त्रिकालं जपते नित्यं जयं प्राप्नोति मानवः ॥
आयुरारोग्य मैश्वर्यं ज्ञानं विद्यां पराक्रमं ।
चिंतितार्थं सुख प्राप्ति लभतेनात्रसंशयः ॥

## कार्तवीर्यार्जुनमन्त्रः विंशत्यक्षरो मन्त्रः ॥

१. ॐ फ्रों व्रीं क्लीं भ्रूं आं ह्रीं क्रों श्रीं हुं फट् कार्तवीर्यार्जुनाय नमः ॥

अस्य मन्त्रस्य । दत्तात्रेय ऋषिः । अनुष्टुप्छन्दः । कार्तवीर्यार्जुनो देवता ।
फ्रां बीजं । व्रीं शक्तिः । क्रों कीलकं ।

ॐ फ्रां व्रीं अंगुष्टा
ॐ क्लीं भ्रीं तर्जनी
ॐ हूं मध्यमा
ॐ क्रैं श्रैं अनामिका
ॐ हुं फट् कनिष्ठिका
ॐ कार्तवीर्यार्जुनायनमः करतल
एवं हृदयादि न्यासं

ध्यानम्ः—

उद्यत्सूर्यसहस्रकांतिरखिलक्षोणीधवैर्वंदितो ।
हस्तानां शतपंचकेनच दधच्चापा निषूंस्तावतः ॥
कंठे हाटकमालया परिवृत श्चक्रावतारो हरेः
पायात्स्यन्दनगोऽरुणाभवसनः श्री कार्तवीर्यो नृपः ॥

२. ॐ नमो भगवते श्रीकार्तवीर्यार्जुनाय सर्वदुष्टांतकाय, तपोबलपराक्रमपरिपालितसप्तद्वीपाय, सर्वराजन्यचूडामणये महाशक्तिमते सहस्रबाहवे हुं फट् ॥

विधानं । १ राजन्यचक्रवर्तिने, २ वीराय, ३ शूराय, ४ माहिष्मतीपतये ५ रेवांबुपरितृप्ताय, ६ कारागेहप्रबाधितदशास्याय । इति न्यासं ।

ध्यानम्ः—

सिच्यमानं युवतिभिः क्रीडंतं नर्मदाजले ।
हस्तैर्जलौधं रुंधंतं ध्यायेन्मत्रं नृपोत्तमम् ॥

३. १ कार्तवीर्यार्जुनोनाम, २ राजाबाहुसहस्रवान् । ३ तस्यसंस्मरणादेव, ४ हृतंनष्टंचलभ्यते ॥

सम्पूर्ति मन्त्रेण-अस्त्रायफट् । करानं, नेत्रत्रयं विना न्यसेत् ॥

४. ॐ कार्तवीर्यः खलद्वेषी, कृतवीर्य सुतोबली । सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्धरः । रक्तगंधो-रक्तमाल्यो राजास्मर्तुरभीष्टदः ॥ द्वादशैतानि नामानि कार्तवीर्यस्य यः पठेत् । अनष्टद्रव्यता तस्य नष्टस्य पुनरागमः ॥ अन्तरंगविधमन्त्राः सर्वेऽनुष्टुप्छन्दः । अन्यत्सर्वं प्रथम मन्त्रवत् ॥

१. ॐ फ्रों कार्तवीर्यार्जुनायनमः ।

२. ह्रीं कार्तवीर्यार्जुनायनमः ।

३. फ्रों श्रों कार्तवीर्यार्जुनायनमः ।

४. फ्रों क्लीं कार्तवीर्यार्जुनायनमः ।

५. फ्रों व्रीं कार्तवीर्यार्जुनायनमः ।

६. फ्रों क्रों कार्तवीर्यार्जुनायनमः ।

७. हुं कार्तवीर्यार्जुनायनमः ।

८. फट् फ्रों ऐं कार्तवीर्यार्जुनायनमः ।

९. फ्रों स्रूं कार्तवीर्यार्जुनायनमः ।

१०. आं फ्रों कार्तवीर्यार्जुनायनमः ।

## कार्तवीर्यार्जुन मन्त्र प्रयोगः ।।

ॐ फ्रों श्रीं क्लीं भ्रूं आं ह्रीं क्रों श्रीं हुं फट् कार्तवीर्यार्जुनाय नमः

मं मण्डूकादि...नमः । नवपीठशक्तीः पूर्वादिक्रमेण ।

विमला । उत्कर्षिणी, ज्ञाना, क्रिया, योगा, प्रह्वयै, सत्या, ईशानायै, मध्ये अनुग्रहायै ।।

१. षट्कोणकेसरेषु । आग्नेय्यादि चतुर्दिक्षु, मध्ये च ।। षडंगयुवतीं यजेत् ।।

२. ततः अष्टदलेषु प्राच्यादि चतुर्दिक्षु, ततः आग्नेयादि विदिक्षुच ।।

चोरमदविभंजनाय, मारीमदविभंजनाय, अरिमदविभंजनाय, दैत्यमदविभंजनाय । दुःखनाशाय, दुष्टत्व-नाशाय, दुरितनाशाय, रोगनाशकाय ।

३. अष्टदलाग्रेषु । प्राचीक्रमेण पूर्ववत् । क्षेमंकरि, वश्यकरि, श्रीकरि, यशस्करि. आयुष्करि, प्रज्ञाकरि, विद्याकरि, धनकरि ।

४. भूपुरे इन्द्रादि दशदिक्पालान् । ततः वज्राद्यायुधानि च पूजयेत् ।। अन्ये मन्त्राः

१. ॐ नमो भगवते श्रीकार्तवीर्यार्जुनाय सर्वदुष्टांतकाय तपोबलपराक्रम परिपालित सप्तद्वीपाय सर्वराजन्यचूडामणये महाशक्तिमते सहस्रबाहवे हुं फट् ।

२. ॐ कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् । तस्यसंस्मरणा देव हृतं नष्टं चलभ्यते ।।

३. ॐ कार्तवीर्यं खलद्वेषी कृतवीर्यसुतोबली । सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्धरः । रक्तगंधो रक्त-माल्य राजा स्मर्तुरभीष्टदः ।।

४. कार्तवीर्यार्जुनाय विद्महे महावीर्याय धीमहि । तन्नोऽर्जुनः प्रचोदयात् । एते सर्वमन्त्राः पूजाविधानं पूर्ववत् ।।

## श्रीवासुदेवद्वादशाक्षरी ।।

अस्य मन्त्रस्य । प्रजापति ऋषिः गायत्रीछन्दः । श्रीवासुदेवो देवता । ॐ बीजं । नमः शक्तिः । वासु-देवायेति कीलकं । ॐ नमः । भगवते । वासुदेवाय । इति द्विवारेण न्यासः

ध्यानम्ः—

विष्णुं शारदचन्द्रकोटि सदृशं शंखं रथांगं गदां
अंभोजं दधतं सिताब्जनिलयं कान्त्याजनान्मोहनं ।।
आबद्धांगदहारकुंडलमहामौलिं स्फुरत्कंकणं
श्रीवत्सांकमुदार कौस्तुभधरं वंदे मुनीन्द्रैस्स्तुतम् ।।

ॐ नमो भगवते वासुदेवाय मुक्ताय परमात्मने । विशुद्धज्ञानदेहाय लक्ष्मीकांताय ते नमः ॥

मनुः । ॐ नमो भगवते वासुदेवाय ॥

## लक्ष्मीवराहमन्त्रः ॥

तारं रमार्णं सकला स्मरश्च लक्ष्मीवराहाय पदं वदेत्तु ।
अन्तेऽस्मरी वैष्णवधामदायी लक्ष्मीवराहस्य मनुः स्मृतस्ते ॥

उत्कीलनं

तारमन्ते रमामादौ जपेत्साधक सत्तमः ।
लक्ष्मी वराहमन्त्रस्य भवेदुत्कीलनं परम् ॥

संजीवनं

रमामन्ते त्रिरुच्चार्य जपेदानन्दनिर्भरो ।
लक्ष्मीवराहमन्त्रस्य संजीवन मनुः स्मृतः ॥

शापमोचनं

तारंरमां परां लक्ष्मी वराहहरिलांछन ।
मोचय द्वय मापोन्ते विधेयं शापहारिणी ॥

संपुटमन्त्रः

विश्वमादौ मनोर्देवि नाम्नोऽग्रे सकलां जपेत् ।
लक्ष्मीवराहमन्त्रस्य मन्त्रोयं सम्पुटाभिधः ॥

भार्गवराममन्त्रः

तारं परां भूति रमा कुचार्णं श्रीजामदग्न्याय सरोजयुग्मं ।
आपस्तथान्ते गदितोऽयभीड्यो यथेष्टदो भार्गवराममन्त्रः ॥

उत्कीलनं

कुचबीजं जपेदादौ मन्त्रांते पद्मयुग्मकं ।
मनोर्भार्गवरामस्य भवेदुत्कीलनं शिवे ॥

संजीवनं

परायुग्मं जपेदादौ मन्त्रराजस्य पार्वति ।
मन्त्रो भार्गवरामस्य मनोः संजीवनः स्मृतः ॥

शापमोचनं

तारं कूर्चं भार्गवेति शुक्रशापं विमोचय ।
तुरगं ठद्वयंदेवि विद्येयं शापहारिणी ॥

संपुटमन्त्रः

सक्षेजं प्रथमं देवि वनांते च रमां जपेत् ।
जामदग्न्यमनोरेष मन्त्र सम्पुटकारकः ।

सीतारामयंत्रः

तारं परा रमा लक्ष्मीं सीतारामेति संववेत् ।
प्रसीद युगमापोन्ते मन्त्रोयं मुक्तिकारणम् ॥

उत्कीलनंः

परामन्तेरमामादौ जपेत्पार्वति सिद्धये ।
श्रीसीतारामभद्रस्य मनोर्मन्त्रोऽस्ति कीलहृत् ॥

संजीवनंः

मन्त्रांते प्रणवं देवि तारादौ सकलां जपेत् ।
श्रीसीताराममन्त्रस्य मनो संजीवनो मनुः ॥

शापमोचनंः

तारं रमां रामभद्र गुरुशापं विमोचय ।
हरं ठद्वयमन्तेच विद्येयं शापहारिणी ॥

संपुटमंत्रः

तारमन्ते वनं चादौ जपेत्साधकसत्तम ।
श्रीसीताराममन्त्रस्य मन्त्रोयं सम्पुटाभिधः ॥

जनार्दनमन्त्रः

तारं मा भूतिमा मारध्या वदेत्जनार्दनाय च ।
विश्वमन्ते मनोर्देवि मन्त्रोयं रिपुसूदनः ॥

उत्कीलनं

मामन्ते प्रथमं मां च जपेत्पार्वति साधकः ।
जनार्दनमनोरमन्त्रः स्यादुत्कीलनाभिधः ॥

संजीवनंः

विश्वमादौ परामंते जपेत्पार्वति साधकः ।
जनार्दनमनोरेष मंत्रसंजीवनः स्मृतः ॥

शापमोचनं

तारं रमां रमां तारं जनार्दन विधिच्छलम् ।
मोचयापो महादेवि विद्येयं शापहारिणी ॥

संपुटमन्त्रः

विश्वांतेनामदेवेशिमायुगं प्रथमं जपेत् ।
श्रीजनार्दनमन्त्रस्य मंत्रोयं संपुटाभिधः ॥

विष्वक्सेनमन्त्रः

तारं परायुगं लक्ष्मीं विष्वक्सेनाय संवदेत् ।
कर्च पद्मत्रयं नीरं वैष्णवानांसुदुर्लभः ॥

उत्कीलनं:

लक्ष्मीमादौ परामंते सकृदुच्चारयेत्सुधीः ।
विष्वक्सेनमनोर्देवि स्यादुत्कीलनको मनुः ॥

संजीवनं

परामादौ परामंते सतारां साधको जपेत् ।
विष्वक्सेनमनोरेष स्थात्संजीवन मनुः ॥

शापमोचनं

तारं परां रमांतारं विष्वक्सेनविधिच्छलम् ।
मोचयद्वयमापश्च विद्येयंशापहारिणी ॥

सपुटमंत्रः

परामादौपरामंते जपेत्साधकनायकः ।
विष्वक्सेन मनोरेष मंत्रः संपुटकारकः ॥

लक्ष्मीवासुदेवमन्त्रः

तारं परां रमां वाणी कामो लक्ष्मीपदं वदेत् ।
वासुदेवाय विश्व स्यान्मन्त्रोयं भोगमोक्षदः ॥

उत्कीलनं

काममादौ च मंत्रांते तारं देवि जपेत्सुधीः ।
वासुदेवमनो मंत्रः स्यादुत्कीलनाभिधः ॥

संजीवनं

रमामादौ रमामन्ते जपादौ संजपेत्सुधीः ।
श्रीलक्ष्मीवासुदेवस्य मनोः संजीवनो मनुः ॥

शापमोचनं

तारं रमां रमां लक्ष्मीं वासुदेव शिवच्छलम् ।
मोचय द्वयमापश्च विद्येयं शापहारिणी ॥

संपुटमन्त्रः

वाणीमादौजपेत्देवि लक्ष्मीमंते महेश्वरि ।
श्रीवासुदेवमंत्रस्य मंत्रोय संपुटाभिधः ॥

कामेश्वरमंत्रः

वाग्भवं मदनशक्ति तारका मा परा सकलविद्यांचिता ।
तारयुक्त विपरीत बीजकः षोडशाक्षरविधिः शिवः स्मृतः ॥

उत्कीलनं:

कामेश कूटत्रयतः प्रथमार्णत्रयं जपेत् ॥

संजीवनं:

जपेत्कामेश मन्त्रस्य भवेत्संजीनं शिवे ।
कूटत्रयेभ्यो देवेशि द्वितीयाक्षर मुद्धरेत् ॥

संपुटमंत्रः

वाग्भवं कामशक्तिश्च भैरवांकं विमोचय ।
तारं परा माद्यबीजं विद्येयं शापहारिणी ॥

राधाकृष्ण मंत्रः

कूटमादौ महादेवि कूटांते वाग्भवं जपेत् ।
श्रीकामेश्वर मन्त्रस्य मन्त्रोयं संपुटाभिधः ॥

राधाकृष्णमंत्रः

तारं रमा वाग्भवकामशक्ति र्मायाग्निराधेति पदं वदेच्च ।
कृष्णाय कूर्च हुरठद्वयं स्याच्छ्रीकृष्णमंत्रो मनुराजमौलिः ॥

उत्कीलनं

शक्तिमादौ मनोरन्ते वाग्भवं साधको जपेत् ।
श्रीराधाकृष्णमंत्रस्य मंत्रोयं कीलदोषहृत् ।

संजीवनं

शक्तिमन्ते मनोरादौ वाग्भवं साधको जपेत् ।
श्रीराधाकृष्णमंत्रस्य संजीवन मनुस्मृतः ॥

शापमोचनं:

तारं शक्तिः परां तारं राधाकृष्ण विघिच्छलय् ।
मोचयापो महादेवि विद्येयं शापहारिणी ॥

संपुटमंत्रः

हरमादौ महादेवि ठद्वयांते रमां जपेत् ।
श्रीराधाकृष्णमंत्रस्य मंत्रोयं संपुटाभिधः ॥

विष्णुः

तारं परायुगं तारं विष्णवे विश्वमगंले ।
देवदेवस्य मंत्रोयं विष्णोस्तव समीरितः ॥

उत्कीलनं

परायुगं जपेदंते विश्वमादौ जपेन्मनोः ।
विष्णु मंत्रस्य मंत्रोयं स्यादुत्कीलनाभिधः ॥

संजीवनं

विश्वांते प्रणवं देवि जपेत्साधकसत्तमः ।
विष्णुमंत्रस्य मंत्रोयं स्मृतः संजीवनाभिधः ।।

शापमोचनं

तारं परां रमां विष्णोरुद्रशापं विमोचय ।
तारं ठद्वयमन्तेच विद्येयं शापहारिणी ।।

संपुटमंत्रः

तारमंते जपेदादौ विश्वं विश्वसमर्चिते ।
श्रीविष्णोर्मूल मन्त्रस्य मन्त्रोयं संपुटाभिधः ।।

लक्ष्मीनृसिंहमंत्रः

तारं रमा भूतिजवाक्स्मराश्च शक्तिर्नृबीजं नरसिंहदेवम् ।
तुर्याङ्कितं वाक्तटफङ्वनं ते प्रोक्तोहि लक्ष्मीनरसिंह मन्त्रः ।।

उत्कीलनं

स्मरमादौजपेदंते नृबीजं साधकोत्तमः ।
लक्ष्मीनृसिंहमंत्रस्य मंत्रोयं कीलदोषहृत् ।।

संजीवनं

नृबीजं प्रथमंदेवि प्रणवंचानले जपेत् ।
लक्ष्मीनृसिंहमन्त्रस्य मन्त्रोयं संजीवनाभिधः ।।

शापमोचनं

तारं परां नृबीजलं नरसिंह शिवच्छलम् ।
मोचय द्वयमापश्च विध्येयं शापहारिणी ।।

संपुटमन्त्रः

स्मरमादौजपेद्देवि रमाबीजं तथांचले ।
लक्ष्मीनृसिंह मन्त्रस्य मन्त्रोयं संपुटाभिधः ।।
अधुनाशैवमंत्राणां केचित्देवि मनूत्तमः ।
निष्किचिता मया ख्याता केचित्पार्वति कीचितः ।।
महेश्वरः शिवो रुद्रो महादेवः करालकः ।
विकरालः शिवशर्वो मृडः पशुपतिस्तथा ।।
पिनाकी गिरिशो भीमः कुमारः प्रमथाधिपः ।
क्रोधेशईश ईशानः कपाली क्रूर भैरवः ।।
संहार ईश्वरो भर्गोरुरुः कालाग्निभैरवः ।
राते मंत्राः महादेवि कीलदोषविवर्जिताः ।।

पुनश्चरण मात्रेण फलं दास्यंति सत्वरं ।
अथवा देवदेवेशि वक्ष्ये तत्वं परात्परम् ॥

उत्कीलनं

एतेषां शैवमंत्राणां श्रुत्वा गोप्यतमं कुरु ।
मंत्रादिबीजदेवेशि प्रतिमंत्रं जपेत्सुधीः ॥
त्रिवारं साधको येन भवेदुत्कीलनं मनोः ॥

संजीवनं

अधुना शैवमंत्राणां निष्कीलानां महेश्वरि ।
वक्ष्ये तत्वं रहस्यं ते संजीवनंकरं परं ॥
मूलमंत्रांचले मंत्री जपेत् तारं पृथक् पृथक् ।
सर्वेषां शैवमंत्राणां भवेत्संजीवनं प्रिये ॥
येषां साधन मात्रेण मूलविद्यासु सिध्यति ॥

शापमोचन

अधुना शैवमंत्राणां कीलितानां महेश्वरि ।
सर्वसाधारणीं विद्यां वक्ष्येहं शापहारिणीम् ॥
निष्कीलितानां मंत्राणां विद्यां शापहरीं श्रुणु ।
यस्य उच्चारमात्रेण दुष्टमंत्रोपि सिध्यति ।
तारं पारांमां वाणीं शक्ति सदाशिव ।
शिवशापं मोचयापो विद्येयं शापहारिणी ॥

संपुटमन्त्र

तारद्वयं जपेदादौ मध्ये नामांचले परां ।
सर्वेषां शैवमंत्रणां संपुटारव्योऽस्त्ययं मनुः ॥

## श्रीसुदर्शनमन्त्रः (षडक्षरि, मालामन्त्रंच)

१. ॐ सहस्रार हुं फट् । श्रीं ह्रीं ॐ सुदर्शनचक्राय रिपुचित्तं भ्रामय २ स्वाहा ॥

२. अस्य मन्त्रस्य । अहिर्बुध्न्यो भगवान् ऋषिः । अत्यनुष्टुप छंदः । सुदर्शन महाविष्णुर्देवता । आचक्राय बीजं । धीचक्राय शक्तिः । ज्वालाचक्राय कीलकं ।

३. ॐ अः क्रः फट् हुं फट् कालचक्राय स्वाहा (१२ अक्षर मनुः लक्ष्मीतन्त्रः)

आचक्राय, विचक्राय, सुचक्राय, संचक्राय, धीचक्राय, ज्वालाचक्राय इति न्यासः ॥

ध्यानम्:—

कल्पांतार्क प्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं
रक्ताक्षं पिंगकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासं ।
शंखं चक्रं गदाब्जं पृथुतरमुसलं चापबाणांकुशादीन्
बिभ्राणं दोर्भिराद्यं मनसिमुररिपुं भावये चक्रराजम् ॥ पंचपूजा ॥

## मालामन्त्रः

ॐ क्लीं कृष्णाय गोविन्दाय, गोपीजन वल्लभाय पराय परम पुरुषाय, परमात्मने परकर्म मन्त्रयन्त्रौष-धास्त्र शस्त्राणि संहर २ मृत्योर्मोचय २ ॐ नमो भगवते महासुदर्शनाय दीप्त्रे ज्वाला परीताय सर्वदिक्क्षोभण कराय हुं फट् ब्रह्मणे परं ज्योतिषे स्वाहा ॥

## आम्नायमन्दारे ॥ सुदर्शनमन्त्रः ॥

अस्य मन्त्रस्य । अहिर्बुध्न्यो भगवान् ऋषिः । अनुष्टुप् छन्दः । श्रीसुदर्शनरूपी श्री महाविष्णुर्देवता । ॐ बीजं । हुं शक्तिः । फट् कीलकं ।

ॐ सं आचक्राय स्वाहा । हं विचक्राय स्वाहा । स्रां सुचक्राय स्वाहा । रं धीचक्राय स्वाहा । हुं संचक्राय स्वाहा । फट् ज्वालाचक्राय स्वाहा । इति न्यासः ।

व्याप्ति व्याप्तांतरिक्षं क्षरदरुणनिभा वासिताशांतरालं
दंष्ट्रा निष्ठ्यूतवह्नि प्रविरल शबलादभ्रशुभ्राट्टहासं
शंखारि श्रीगदांभोरुह मुसलधनुः पाशदीप्तांकुशाढ्यं
दोर्भिः पिंगाक्षवेषं प्रणमति शिरसा विष्णुचक्राधिराजम् ॥

मनुः । ॐ क्ष्म्यौं सहस्रार हुं फट् ॥

## अष्टादशाक्षरो दधिवामनाख्यचमत्कारी मन्त्रः ॥

१ ॐ २ नमो ३ विष्णवे ४ सुरपतये ५ महाबलाय ६ स्वाहा ॥

अस्य मन्त्रस्य इन्दु ऋषिः । विराट्छंदः । दधिवामनदेवतायैनमः । संख्याक्रमेण न्यासं ।

ध्यानम्ः—

मुक्तागौरं नवमणिविलसद्भूषणं चन्द्रसंस्थं,
भृंगाकारैरलकनिकरैः शोभिवक्त्रारविन्दं ।
हस्ताब्जाभ्यां कनककलशं शुद्धतोयाभिपूर्णं,
दध्यन्नाद्यं कनकचषकं धारयंतं भजामः ॥ पंचपूजा ॥

## द्विचत्वारिंशदक्षरो हयग्रीवमन्त्रः ॥

१ हंसः सोऽहं, २ विश्ववातीर्णस्वरूपाय, ३ चिन्मयानन्दरूपिणे ।

४ तुभ्यं नमोहयग्रीव, ५ विद्याराजायविष्णवे, ६ स्वाहाहंसः सोऽहं ॥

अस्य मन्त्रस्य ब्रह्मा ऋषिः । अनुष्टुप्छंदः । हयग्रीवो देवता ।

संख्याक्रमेण अङ्गन्यासः ॥

ध्यानम्ः—

शरच्छशांकप्रभमश्ववक्त्रं,
मुक्तामयैर्हारगणैरुपेतं ।
रथांगशंखांचितबाहुयुग्मं,
जानुद्वयन्यस्त करं भजामः ॥ पंचपूजा ॥

## एकादशाक्षर हयग्रीवमन्त्रः ॥

ॐ हयग्रीवाय नमः स्वाहा ॥

अस्य मन्त्रस्य ऋषिः छन्दः पूर्ववत् ।

हंसां, हंसीं...हंसः इत्यादि षडंगन्यासः ॥

ध्यानम्ः—

धवलनलिननिष्ठं क्षीरगौरं कराग्रैः
जपवलयसरोजे पुस्तकाभीष्टदानैः ।
दधतममलवस्त्राकल्पदानाभिरामं,
तुरगवदनविष्णुं नौमि विद्यार्धजिष्णुं ॥

## ।। त्र्यक्षर हयग्रीवमन्त्रः ।।

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्रीछंदः । श्रीविद्याप्रद हयग्रीवो देवता ।

हं बीजं । सः शक्तिः । सोहं कीलकं । ह्सां इत्यादि न्यासः ।

ध्यानम्:—

**ज्ञानानन्दमयं देवं निर्मल स्फटिकाकृतिं ।**
**आधारं सर्वविद्यानां हयग्रीवमुपास्महे ।।**

मनुः ॐ श्रीं ह्सौं ।।

## ।। सूर्य आवरणपूजा ।। देवीरहस्ये ।।

चक्रं । बिन्दु, त्रिकोण, वसुकोण, सुवृत्त, अष्टदल, वृत्तत्रय धरणीसद्मपद्माश्रयं ।।

षट्त्रिंशत्तत्त्व स्वरूपाय श्रीयोगपीठायनमः ।। ॐ ह्रां अष्टदलपद्माय नमः द्वादशदलपद्माय, सहस्रदल-पद्माय; सप्तच्छंदोभ्यः, सप्ततुरगेभ्यः मूलं श्रीरत्नसिंहासनाय नमः ।

१. पद्मपत्रे ।। भूपुरे लं इन्द्रादि दशदिक्पालाः ।

२. अन्तर्द्वाः स्थान पूर्वदक्षिण पश्चिमोत्तरेषु । गं गणेश, चं चण्डवेताल, लों लोलक्ष, विकराल ।

३. वृत्तत्रयेषु वायव्यदिशांतं (गुरुपात्रामृतात्) गुं गुरुभ्यो, पं परमगुरुभ्यो, पं परमेष्टिगुरुभ्योः ।

४. वसुदले पूर्वादिशात ग्रहपात्रामृतात् सौः ज्योत्स्नादेवीदीप्ता सहित सोम, सं सूक्ष्मासहित मंगल । जयासहित बुध, जुं मद्रासहित गुरुं श्रीं विमलासहित शुक्र, वं निर्मलासहित शनि, रां विद्युता सहित राहु, कं सर्वतोवक्त्रा सहित केतु ।

५. वसुकोणे श्रीपात्रामृतात् स्ववामावृत्यां । तपनीसहित सूर्य, तापिनीसहित दिवाकर बोधिनी सहित भानु, रोधिनीसहित भास्कर, कलिनीसहित रवि, शोषिणीसहित तत्वष्ट्र, बरेण्यासहित तपन, आकर्षणी सहित धर्म,

६. मायासहितहंस, इति ईशाने, विश्वावती सहित ग्रहपति इति आग्नेये, हेमप्रभा सहित त्रयीतनु इति अग्रे

७. जगद्ध्वनिमये मातर्घण्टायैनमः इति सपूज्य शतैर्वादयन् मूलमुच्चार्य श्रीविस्फुरसहित सवितृ श्री इति द्वादशवारं शतपत्रैः केवलमभ्यर्चयेत् ।।

८. रत्नकल्हश्री, सुवर्णकमलश्री, इति परमपात्रामृतेन वामदक्षिण करकमलयोः ततः मूलेन बिन्दौ समर्चयेत् ।।

## सूर्य मन्त्रः ॥

ॐ ह्रीं घृणिः सूर्य आदित्य श्रीं ॥

मं मंडूकादि....नमः

नवपीठ शक्तीः ॥ रां दीप्तायै, रीं सूक्ष्मायै, रूं जयायै, रैं भद्रायै, वैं विभूत्यै वों विमलायै, वौं अघोरायै, रं विद्युतायै, मध्ये रः सर्वतोमुख्यै ब्रह्मविष्णु शिवात्मकाय सौराय योगपीठाय नमः इति

षट्कोणेषु षडंगदेवताः । अष्टदलेषु प्राच्यादि चतुर्दिक्षु,

ॐ आदित्याय, यं रवये, उं भानवे, इं भास्कराय । आग्नेयादि विदिक्षु ।

उं ऊषायै, प्रं प्रज्ञायै, प्रभायै, संध्यायै ॥

अष्टदलाग्रेषु ॥ ब्राह्म्यादि अष्टमातृकाः ॥ तासांपुरतः । षट्कोणे शिखा, नेत्रयो र्मध्ये, कोणष्वंतराले अरुणाय इति पूजयेत् ॥

भूपुराभ्यन्तरे पूर्वादि । चन्द्राय, मंगल, बुध, बृहस्पति, शुक्र, शनैश्चर, राहु केतु ॥

भूपुरे इन्द्रादि दशदिक्पालान् । ततः तेषां आयुधानि च पूजयेत् ॥

## हयग्रीव मन्त्रः

हंसः सोहं विश्वादत्तीर्णस्वरूपाय चिन्मयानन्दरूपिणे ।तुभ्यंनमो हयग्रीव विद्याराजाय विष्णवे स्वाहा हंसः सोहं ॥

मं मंडूकादि नमः । नवपीठशक्तीः अष्टाक्षरीवत् ॥

षट्कोणेषु आग्नेयादि विदिक्षु, मध्योदिक्षु च अङ्गदेवताः सनेत्रत्रयं पूजयेत् ।

अष्टदलेषु पूर्वादि चतुर्दिक्षु, आग्नेयादि विदिक्षु च ।

ऋग्वेदाय, यजुर्वेदाय, सामवेदाय, अथर्ववेदाय । सर्वस्मृति, न्यायशास्त्र, धर्मशास्त्र, पुराणशास्त्र ॥
अन्यावरणं सर्व पूर्ववत् ॥

ॐ हयग्रीवायनमः स्वाहा ।

द्वितीयावरणं । प्रज्ञाहय, मेधाहय, स्मृतिहय, विद्याहय, लक्ष्मीहय, वागीशीहय, विद्याविशालहय, नामविमर्दनहय ॥

तृतीयं ॥ लक्ष्मी सरस्वती, रति प्रीति, कीर्ति, कांति, तुष्टि, पुष्टिभिः ।

तुरीयपंचमेः इंद्रादि दशदिक्पालाः । तेषां आयुधानि ॥

## वाराह मन्त्रः ॥

ॐ नमो भगवते वाराहरूपाय भूर्भुवः स्वः स्यात्पते भूपतित्वं देह्यते ददापय स्वाहा ॥

षट्कोणेषु । पूर्वोक्त लक्ष्मीवासुदेववत्, नेत्रंविना पंचांग देवताः ।

अष्टदलेषु पूर्वादिक्रमेण । चक्र, शंख, खङ्ग खेटक, गदा, शक्ति, वर, अभय देवताः ।

ततोभूपुरे इंद्रादि दशदिक्पालाः । ततः तेषां आयुधानि च ॥

## नृसिंह मन्त्रः

ॐ उग्रंवीरं महाविष्णुं ज्वलंतं सर्वतोमुखं । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥

मं मंडूकादि पीठदेवतांतं पूर्ववत् ।

षट्कोणेषु आग्नेयादि विदिक्षु मध्येदिक्षुच । सनेत्रं अङ्गदेवताः ।

अष्टदलेषु पूर्वादि दिक्षु गरुडपक्षिराजाय, शंकराय, ब्रह्मणे, आग्नेयादि विदिक्षु श्री, ह्री धृति, पुष्टि ॥

भूपुरे इन्द्रादि दशदिक्पालान् । ततः तेषां आयुधानि च ॥

## हनुमत् मन्त्रः ॥

ह्रौं ह्स्फ्रें ख्फे ह्स्ख्फ्रें ह्सौं हनुमते नमः

मं मण्डूकादि नवपीठशक्ति पर्यंतं विष्णु अष्टाक्षरीवत् ॥

ॐ नमो भगवते हनुमते सर्वभूतात्मने हनुमते सर्वात्मसंयोगपद्मपीठात्मने नमः ॥

षट्कोणेषु । आग्नेयादि चतसृषुदिक्षु मध्ये दिक्षुच अङ्गदेवता षट्कं पूजयेत् ॥ अष्टदलेषु । प्राचीक्रमेण दक्षिणावर्तेन ।

रामभक्ताय, महातेजसे, कपिराजाय, महाबलाय, द्रोणाद्रिहारकाय, मेरुपीठचिनकारकाय, दक्षिणाशाभास्कराय, सर्वविघ्ननिवारकाय, इति ॥

अष्टदलाग्रेषु ॥ सुग्रीवाय, अङ्गदाय, नीलाय, जांबवते, नलाय, सुषेणाय, द्विविदाय, मैंदाय इति अष्टौवानरान् ॥

भूपुरे इंद्रादि दशदिक्पालाः । ततः तेषां आयुधानि च ॥

ॐ नमो भगवते आंजनेयाय महाबलाय स्वाहा ॥ (१८)

आवरण पूजाः सर्वंपूर्ववत् ॥

हं हनुमते रुद्रात्मकाय हुं फट् ॥ (१२)

यन्त्रं अष्टदले, तन्मध्ये वर्तुलं, तन्मध्ये त्रिभागंकृत्वा पूजयेत् ॥

पीठपूजा, पूर्ववत् ॥ मध्ये मूर्ति, तस्य वामे सुग्रीवं, दक्षिणे लक्ष्मणं च पूजयेत् ॥

अष्टदलेषु । पूर्वादि क्रमेण । अङ्गद, नल, नील, जांबवते, कुमुदाय, केसरिणे पवनाय, अंजनी ॥ इति पूजयेत् ॥

भूपुरादि पूजा न दृश्यते ॥

हं पवननन्दनाय स्वाहा ।

ॐ नमो हनुमते आवेशय आवेशय स्वाहा । १८

ॐ नमो हरिमर्कटाय मर्कटाय स्वाहा । १४

## क्षेत्रपाल मन्त्र प्रयोगः

क्षं क्षेत्रपालाय नमः ॥

मं मण्डूकादि...नमः ॥ पीठ शक्तेरभावः ॥

१. षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च षडंगानि पूजयेत् ॥

२. अष्टदलेषु प्राच्यादि क्रमेण । अग्निसख्याय, अग्निकेशाय, करालाय, घण्टारवाय, महाकोपाय, पिशिताशनाय, पिंगलाक्षाय, ऊर्ध्वकेशाय इति ॥

३. भूपुरे इंद्रादि दशदिक्पालान् । ततः वज्राद्यायुधानि च पूजयेत् ॥

## कामदेव मन्त्र प्रयोगः

"क्लीं"

मं मण्डूकादि नमः नवपीठशक्तीः पूर्वादिक्रमेण, मोहिन्यै, क्षोभिण्यै, त्रास्यै, स्तंभिन्यै, कर्षिण्यै, द्राविण्यै, आह्लादिन्यै, क्लिन्नायै, मध्ये क्लेदिन्यै ॥

ॐ क्लीं मकरध्वजाय सर्वसंमोहनशक्तये पद्मासनाय नमः ॥

१. षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु, मध्ये दिक्षु च । हृदयादि षडंगदेवतान्: यजेत् ।

२. षट्कोण तदग्रेषु । द्रां शोषणाय, ह्रीं मोहनाय, संदीपनाख्यक्रीडाय, ब्लूं तापनाय, मादनाय ॥ इति पंचबाणान् पूजयेत् ॥

३. अष्टदले प्राचीक्रमेण । कामाय, भस्मशरीराय, अनंगाय, मन्मथाय, वसन्तसखाय, स्मराय, इक्षु-धनुर्धराय, पुष्पबाणाय इति यजेत् ।

४. अष्टदले वामावर्तेन । अनंगरुपायै, अनंगमदनायै, अनंगमन्मथायै, अनंगकुसुमायै, अनंगकुसुमातुराय, अनंगशिशिराय, अनंगमेखला, अनंगदीपिका ॥

५. तद्बहिः वर्तुलद्वयमध्ये षोडशदले प्राच्यादि वामावर्तेन । युवत्यै विप्रलंभायै, ज्योत्स्नायै, सुभ्रूश्री, मदद्रवा, सुरता, वारुणी, लोला, कांती, सौदामिनी, कामछत्रा चन्द्रलेखा, शक्ति, मदना, योनि, मायावती, इति

६. तद्बहिर्वर्तुलद्वयमध्ये, षोडशदलेषु, शोक, मोह, विलास, विभ्रमाय, मदनातुरा, अनजया, युवकाम, चूतपुष्प, रतिप्रिया, ग्रीष्मांतकरा, उज्जयि, हेमंते शिशिरोन्मदा इक्षुचापधरी, पुष्पबाणहस्ता, रक्तभूषा, वनितास-क्तमानस, इति

७. तद्बहिः अष्टदलेषु । प्राच्यादि चतुर्दिक्षु, हाव, भाव, कटाक्ष, भ्रूविलास ।

## कामदेव मन्त्र प्रयोगः ॥

ततः आग्नेयादि चतुर्दिक्षु । माधवी, मालती, हरिणाक्षी, मदोत्कटा ।

ततो भूपुरे इंद्रादि दशदिक्पालान्, ततः वज्राद्यायुधानि च पूजयेत् ॥

## वरुण मन्त्र प्रयोगः ॥

ॐ ध्रुवासु त्वासु क्षितिषु क्षियंतोव्यऽस्मत्पाशं वरुणो मुमोचत् । अवोवन्वाना अदितेरुपस्या यूयंपात स्वस्तिभिः सदानः स्वः ॥

मं मंडूकादि नमः पीठशक्त्यादेरभावः ॥

१. षट्कोणेषु ॥ आग्ने यादि चतुर्दिक्षु, मध्येदिक्षु च हृदयादि षडंगदेवतांः पूजयेत् ॥

२. अष्टदलेषु ॥ प्राचीक्रमेण । वासुकिश्री, तक्षक, कर्कोटक, पद्म, महापद्म, शंखपाल, कुलिका ॥

३. भपुरे इंद्रादि दशदिक्पालान्, ततः वज्राद्यायुधानि च पूजयेत् ॥

## कुबेरमन्त्रप्रयोगः ॥

ॐ यक्षाय कुबेराय वैश्रवणाय धनधान्याधिपतये धनधान्यसमृद्धिं मे देहि दापय स्वाहा ॥

ॐ धर्मादिपरतंत्रांत पीठदेवताभ्योनमः । पीठशक्त्यादेरभावः ॥

षट्कोणेषु आग्नेयादि चतुर्दिक्षु मध्येदिक्षु च षडंगदेवतां पूजयेत् ॥

ततो भूपूरे इंद्रादि दशदिक्पालान् ततः वज्राद्यायुधानि च पूजयेत् ॥

अपरोमन्त्रः ॥ श्रीं ॐ ह्रीं श्रीं ह्रीं क्लीं श्रीं क्लीं वित्तेश्वराय नमः ।

तत् ऋष्यादि, ध्यान, पूजादिकं सर्वं पूर्ववत् ॥

## चन्द्र मंत्र प्रयोगः ॥

सौं सोमायनमः ॥ अपरोमन्त्रः ॥ ॐ विद्ये विद्यापालिनि चन्द्र मुखि स्वाहा ॥

मं मंडूकादि...नमः । ॐ सौं सोमाय रोहिणीपतये नमः । इति संपूज्य ॥ सौं सर्वशक्ति कमलासनाय नमः ।

षट्कोणेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च षडंगदेवतां संपूज्य, ततः

अष्टदलेषु प्राच्यादि वामावर्तेन । रोहिणी, कृत्तिका, रेवती, भरणी, रात्रि, आर्द्रा, ज्योत्स्ना, कला इति ।

अष्टदलाग्रेषु ॥ आँ आदित्य, भौं भौम, बुं बुध, शं शनैश्चर, बृं बृहस्पति, रां राहु, शुं शुक्र, कें केतु इत्यष्टौ ग्रहान् पूजयेत् ॥

भूपुरे इन्द्रादि, दशदिक्पालान् ततः वज्राद्यायुधानि ॥ पूजयेत् ॥

## धन पुत्रादिप्रद मंगल मंत्रः ॥

ॐ हां हंसः खं खः ॥

मं मंडूकादि...नमः । नवपीठशक्तिः पूर्वादि ॥ वामायै, ज्येष्ठायै, रौद्र्यै, काल्यै, कलविकरिण्यै, बलविकरिण्यै, बलप्रमथिन्यै, सर्वभूतदमन्यै, मध्ये मनोन्मन्यै नमः इतिपूजयेत् ॥

ॐ नमो भगवते सकलगुणात्मशक्तये भूमि पुत्राय योगपीठात्मने नमः ॥

१. त्रिकोणमध्ये चतूरेखांविधाय । १, ३, ५, ५, ७, तदंतरे उक्त संख्याक्रमेण, उपर्यादि अधोपर्यंतं त्रिकोणान् विभज्य, प्रथमबृहत्रिकोणाद्बहिः कोणाग्रेषुत्रिवर्तुलान्, पार्श्वयोः एकैकमिव त्रिवर्तुलान् च, तद्बहिः अग्रे, पीठे च वर्तुलत्रयं, द्वितीयपार्श्वे एकैकवर्तुलं च कृत्वा ॥ तत्र वक्ष्यमाणक्रमेण पूजयेत् ॥

१. बृहत्रिकोणाद्बहिः वर्तुल षट्केषु । आग्नेयादि चतुर्दिक्षु मध्यवर्तुलेषु । हृदयादि षडंगं पूजयेत् ।

७ मंगलाय, ८ भूमिपुत्राय, ९ ऋणहंत्रे, १० धनप्रदाय, ११ स्थिरासनाय, १२ महाकायाय, १३ सर्वकर्मावरोधकाय, १४ लोहिताय, १५ लोहिताक्षाय, १६ सामगानां कृपाकराय, १७ धरात्मजाय, १८ कुजाय, १९ भौमाय, २० भूतिद, २१ भूमिनन्दन, २२ अंगारक, २३ यम, २४ सर्वरोगप्रहारिणे, २५ सर्वसृष्टिकर्तृ, २६ वृष्टिहर्तृ, २७ सर्वरोगापहारकाय तृतीयावरणं ॥ अष्टदिक्षु पूर्वादिक्रमेण । २८ ब्राह्मी, २९ माहेश्वरी, ३० कौमारी, ३१ वैष्णवी, ३२ वाराही, ३३ इंद्राणी, ३४ चामुंडा, ३५ महालक्ष्मी ॥ चतुर्थावरणे । यंत्रे पूर्वादिक्रमेण इन्द्रादि दशदिक्पालान् । ततः वज्राद्यायुधानि च ॥

## बृहस्पति मंत्र प्रयोगः ॥

ओं बृं बृहस्पतये नमः ॥

धर्माधर्मादिपीठांतं पीठदेवतां संस्थापयेत् । पीठशक्तये न संति ॥

षट्कोणेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षुच हृदयादि षंडगदेवतां पूजयेत् ॥

ततः भूपुरे इन्द्रादि दशदिक्पलान् ततः वज्राद्यायुधानि च पूजयेत् ॥

## शुक्र मत्र प्रयोगः

षट्कोणं, ततः भूपुरंच, पूजा विधानं च पूर्ववत् ॥

## वेदव्यास मंत्र प्रयोगः ॥

व्यां वेदव्यासाय नमः ॥

धर्मादि पीठ देवताभ्यो नमः ॥

षट्कोणेषु आग्नेयादि चतुर्दिक्षु मध्ये च षडंगयुवतीं यजेत् ।

अष्टदलेषु । प्राच्यादि चतुर्दिक्षु ततः आग्नेयादि विदिक्षु च दक्षिणावर्तेन ।

शल्याय, वैशंपायनाय, जैमिनि, सुमन्ताय, । श्रीशुक, उग्रश्रवसे, समन्याय ।

ततः भूपुरे इंद्रादि दशदिक्पालान् ततः वज्राद्यायुधानि च पूजयेत् ॥

## अष्टाप्सरो देव कन्या साधनम्

तत्रादौ आवाहनादि मुद्राः प्रदर्शयते ॥

आवाहनं ॥ द्विमुष्टिसंयुक्तौ उभौ हस्तौ कमलावर्तयोगेन मध्यमांगुल्या सूचिता अष्टाप्सर आवाहन मुद्रा ॥ उभाभ्यां षट्ककर सर्वाप्सरोवशंकरी । सान्निध्यं अग्निमुखमुद्रा सर्वत्रकामसाधनी ॥ उभाभ्यां हस्ताभ्यां कमलावर्तयोगेन सर्वाप्सरसोमोहिनी । अनया मुद्रया बद्धमात्रया दासीभवति ॥ अष्टाप्सरसामावाहनादि मन्त्रोयथा । तत्क्षणात् सर्वाप्सरस आगच्छागच्छ ऊं यः यः ॥ अनेनअप्सरसामावाहनं ॥ सान्निध्यकरणमन्त्रः । ॐ भोगेश्वरी स्वाहा ॥

अभिमुखीकरणं । ॐ कामप्रियार्थै स्वाहा

यद्यप्सरसो न सिध्यंति तदा क्रोध सहितः क्रोधमन्त्रं जपेत् ॥ क्रोधमन्त्रोयथा । ॐ ह्रीं आकट्टः कट्टः हुं वः फट् ॥ एतज्जपमात्रेण शिरःस्फुटति, शतखण्डं विशीर्यति ॥ तदाऽगच्छति ।

वेष्टनं १. ॐ बंधबंधतनूः हुं फट् ।
१. ॐ चलचल वशमानय हुं फट् । अनेन सर्वाप्सरसो वशमानयेत् ॥

## शशिदेवी अप्सरो मंत्रः

ॐ श्रीं शशिदेव्यागच्छागच्छ स्वाहा (१२)

पर्वतशिखरमारुह्य लक्षंजपेत् । सिद्धो भवति । पौर्णमास्यां यथाविभवतः पूजांकृत्वा, धृतदीपं प्रज्वाल्य, सकलरात्रि जपेत् ।

प्रभाते नियतमागच्छति । स्वयं देव्यै आगतायै चन्दनेनार्ध्यो देयः । वाचा भाषते । साधकेनैवं वक्तव्यं ॥ मम भार्या भवेति । सिद्धद्रव्यं रसरसायनं ददाति । वर्षसहस्रंजीवति ॥

## तिलोत्तमा साधनम्

ॐ श्रीं तिलोत्तमे आगच्छाऽगच्छ स्वाहा । (१२)

चन्दनक्षीराहारेण अयुतं जपेत् । दिवसानि सप्त । सप्तमेदिवसे, उदारपूजां कृत्वा शुक्लाष्टम्यां पर्वतमूर्ध्निस्थित्वा सकलां रात्रि जपेत् । प्रभातेनियतमागच्छति । ईषत् हसितरागेण पुरस्तिष्ठति । आलिंगनं चुंबनं च तया सहकर्तव्यं । तूष्णीं भावेन कामयेत ।

एवं विधिः भवति । यमिच्छति कामं ते ददाति । पृष्ठमारोप्य स्वर्गमपि नयति । पुनरपि राज्यं ददाति । इति ॥

## कांचनमाला

ओं श्रीं कांचनमाले आगच्छागच्छ स्वाह। ।

नदीसंगमं गत्वा अष्ट सहस्रंजपेत् । सप्तदिवसाः। सप्तमे दिवसे उदारपूजां कृत्वा गुग्गुलुधूपंदत्वा सकलां रात्रि जपेत् । प्रभाते नियतमागच्छति ।

साच सर्वाशाः पूरयति ।

## कुंडलाहारिण्यप्सरशः

ओं श्रीं ह्रीं कुंडलाहारिणि आगच्छागच्छ स्वाहा ।

नतिथिर्नच नक्षत्रं नोपवासो विधिर्नतु । पर्वतमूर्ध्निगत्वा आयुतंजपेत् ॥

ततो अर्धरात्रे नियतमागच्छति । अर्ध्योदेयः । भार्याभवति । दीनारलक्षं प्रतिदिनं ददाति । पृष्ठमारोप्य सर्वतो भ्रामयति । रस रसायनं सिद्धद्रव्यंच ददाति ।

## रत्नमाला

ओं हूं रत्नमाले आगच्छागच्छ स्वाह ।।

देवतायनं गत्वा अष्टसहस्रं जपेत् मासमेकं ततो मासांते पौर्णमास्याँ पूजां कृत्वा पुनर्जपेत् । तावज्जपेनार्धरात्रे महानूपुरशव्देनागच्छति ।।

आगतसमये पुष्पासनंदद्यात् । स्वागतं देव्याइति वक्तव्यं स्वामिन् किमाज्ञापयसि । तदा साधकेन वक्तव्यं मम भार्या भवेति । वर्ष सहस्रं जीवति ।

## रम्भा ।।

ओं सः रंभे आगच्छागच्छ स्वाहा ।

प्रतिपदमारम्य पूजां कृत्वाचंदनेन मंडलं कृत्वा, गुग्गुलु धूपं दत्वा, अष्टसहस्रंजपेत् । त्रिसंध्यं । ततः पौर्णमास्यां महतीं पूजां कृत्वा सकलां रात्रिजपेत् । प्रभाते शीघ्रमागच्छति । यदि शीघ्रं नागच्छति तदा भ्रियते । आगतासा भार्या भवेति । यथेष्टं काम यितव्या, दशवर्ष सहस्राणि जीवति । सर्वाशांः पूरयति । मृतो राजकुलेषु जायते ।

## ऊर्वश्यप्सरो मंत्रः ।

ॐ श्रीं ऊर्वशि आगच्छागच्छ स्वाहा । (१२)

प्रतिपदमारभ्य पूजांकृत्वा चन्दनेन मण्डलंकृत्वा गुग्गुलु धूपंदत्वा अष्टसहस्रंजपेत् । त्रिसंध्यं । ततः पौर्णमास्यां महतीं पूजां कृत्वा सकलां रात्रिं जपेत् । प्रभाते शीघ्रमागच्छति । कुसुमासनं दद्यात् ।

स्वागतमिति वक्तव्यं । भो भो साधक किमाज्ञापयसि । तदा साधकेन वक्तव्यं । भार्याभवेति । रसरसायना सिद्धद्रव्याणि ददाति ।

परस्त्रियाभिगमनं न कर्तव्यं । पंचवर्षसहस्राणि जीवति ।

## (तिलोत्तमा) भूषण्यप्सराः

ॐ वाः श्रीं वाः श्रीभूषणी आगच्छागच्छ स्वाहा । (१५)

भूर्जपत्रे श्रीभूषणी प्रतिमां विलिख्य रात्रावेकाकी शुचिः प्रतिदिनं अष्टसहस्र जपेत् । मासमेकं यावत् मासांते उदारपूजां कृत्वाता वत्जपेत् । यावदर्धरात्रं नियतमागच्छति । आगता सा शीघ्रं कामयितव्या तुष्टा-भवति । सुवर्ण मुक्तादीः निददाति । दिने दिने कनक भोजनंददाति । रसरसायनंददाति ।।

## अष्टकिन्नरी साधनम्

यद्यष्ट किनर्यो न सिध्यन्ति तदा क्रोधसहितः क्रोधमन्त्रं पठेत् । ॐ ह्रीं आ कट्टः कट्टः अस्य जप-मात्रेण तस्य शिरः स्फुटति । शतखण्डं विशीर्यति ।।

ह्रूं वः फट् ॥ तदाऽआगच्छंति ॥

## मंजुघोषा किन्नरी

ॐ श्रीं मंजुघोषे आगच्छस्वाहा । (१३)

प्रतिपदमारभ्य पूजां कृत्वाचन्दनेन मण्डलंकृत्वा गुग्गुलु धूपंदत्वा अष्टसहस्रजपेत् त्रिसंध्यं । ततः पौर्णमास्यां जपांकृत्वा सकलां रात्रिजपेत् ॥ प्रभाते शीघ्रमागच्छति । कुसुमासनंदद्यात् । स्वागतमितिवक्तव्यं । भो भो साधक किमाज्ञापयसि । तदा साधकेन वक्तव्यं । भार्या भव इति । रस रसायन सिद्धद्रव्याणि ददाति । परस्त्री स्पर्शनं वर्जयेत् । पंचवर्षसहस्राणि जीवति ।

## मनोहरी किन्नरी

ओं मनोहर्यै स्वाहा ।

पर्वतमूर्ध्निसमारुह्य अष्टसहस्रं जपेत् । अष्टकिन्नरीणां जपे समाप्ते महतीं पूजां कृत्वा गोमांस गुग्गुलु समन्वितो धूपो देयः । तावज्जपेत् यावदर्द्धरात्रौ किन्नरी नियतमागच्छति । तस्यांन भेतव्यं । भो भो साधक कि आज्ञापयसि । साधकेन वक्तव्यं । भद्रे अस्मद् भार्या भवेति ।

स्कंधे स्कंधे आरोप्य देवलोकमपि नयति । दिव्यकामुकभोजनं ददाति अष्टोत्तर साधनं भवति ।

## सुभगा किन्नरी

ॐ सुभगे स्वाहा । (६)

पर्वत मूर्ध्नि, विहारे वा अयुत जपेत् । दिव्यकोमलहस्तेन पादमुपचारयति शीघ्रं कामयित्वा भार्या भवति । दिनेदिने पंचदीनारान् ददाति ।

## विशालनेत्रा

ॐ विशालनेत्रे स्वाहा ।

नदीकूले गत्वाऽयुतं जपेत । पुनर्मासांते सकलां रात्रिं जपेत् । प्रभाते नियतमागच्छति । आगता सा भार्या भवति । दिनेदिने पंचदीनारान् ददाति ।

## सुरतिप्रिया

ॐ सुरतिप्रिये स्वाहा । (८)

रात्रौ नदी संगमेगत्वा अष्टसहस्रं जपेत् । जपांते नियतमागच्छति । प्रथम दिवसे दर्शनं ददाति । द्वितीयदिवसे पुरतःतिष्ठति । वाचाभाषते ।

तृतीयदिवसे कामयितव्या नियतं तिष्ठति । भार्या भवति ।। सर्वकर्माणिकरोति । अष्टौदीनारान् वस्त्रयुग्मं च ददाति ।

## अश्वमुखी ।।

ॐ अश्वमुखि स्वाहा । (७) पर्वतमूर्ध्निगत्वा अयुतं जपेत् । तदाशीघ्रमागच्छति । रसरूपेण पुरतस्तिष्ठति । आलिंग्य चुंबेत् तूष्णीं भावेन कामयितव्या भार्या भवति । अष्टौदीनारान् प्रयच्छति । दिव्यकामुक भोजनं ददाति ।

## दिवाकीरमुखी किन्नरी ।

ओं दिवाकीर मुखि स्वाहा ।

पर्वतमूर्ध्निगत्वा अयुतं जपेत् । नियतसमये समागच्छति । भार्या भवति ।

अष्टौदीनारान्प्रयच्छति ।।

## अष्टभूत कात्यायनीसाधन ।।

द्वौ करौ मुष्टि कृत्वा कनिष्टाद्वयं वेष्टयेत् । प्रसाद्यतर्जनीं कुर्यात् त्रैलोक्यस्याकर्षणीं मुद्रां । साधकाय ब्रह्मसाधनं करोति । किं पुनः क्षुद्रसाधनं । एतन्मुद्रावलोकनेन कात्यायनी शीघ्रमागच्छति । कात्यायना विद्या पठन मात्रेण सिध्यति ।

## सुभगकात्यानी ।।

ॐ सुरतप्रिये दिव्ललोचने कामेश्वरी जगन्मोहने सुभगे कांचनमाला विभूषण नूपुरशब्देना त्रिशाऽविश साधक प्रियं स्वाहा । (५१)

रात्रौ राजगृहं गत्वा अष्टसहस्रं जपेत् । करवीरकाष्टौ अग्निं प्रज्वाल्य मालती पुष्पैः दधिमधुघृताक्तैः, अष्टशतं जुहुयात् । तदा पंचदिनांतरे महाभूतेश्वरी भूतराज्ञी महाकात्यायनी पंचशतपरिवारेण महानूपुर शब्देनागच्छति । आगताये कुसुमेनार्घ्यंदत्वा वक्तव्यं । माता भगिनी भार्या वा भवेति । यदि माता भवति न चित्तं दूषयितव्यं । दिव्यकामुक भोजनं ददाति । सुवर्णालंकारं वा ददाति । यदि भगिनी भवति तदा राज्यं ददाति । योजनशतादपि स्त्रियमानीय ददाति । यदि भार्या भवति तदा दिव्य स्त्रीसदृशं भोगं ददाति । सर्वाशां परिपूरयति । दशवर्षसहस्राणि जीवति । मृतो राजकुले जायते ।

## कुण्डलकात्यायनी ।।

ॐ यामिनि कृतिनि अकालमृत्युनिवारिणि खड्गत्रिशूल हस्ते शीघ्रं सिद्धि ददाति । हितं साधकं आज्ञापयति ह्रीं स्वाहा (४२)

रात्रौ उद्यानंगत्वा अष्टसहस्रं जपेत् । दिनानि त्रीणि । नूपुरशब्दः श्रूयते । चतुर्थे दिवसे, अष्टमेदिवसेवा, शिरस्थाने मण्डलं कृत्वा गुग्गुलु धूपं दत्वा, अष्टसहस्रं जपेत् । दिव्यभूतिनी कन्या कुण्डलकाव्यायनी स्वगृहमागच्छति आगता च कामयितव्या भार्या भवेति । दिव्य मुक्ताहारं शयने परित्यज्य प्रभाते गच्छति ॥

## चण्डकात्यायनी

ॐ ऐं क्रं रुद्रभयंकरि अट्टाट्टहासिनि साधकप्रिये महाविचित्ररूपे रत्नाकरि सुवर्णहस्ते यमनिकृंतनि सर्वदुःख प्रशमनि ठंठंठं हूंहूंहूं शीघ्रं सिद्धि प्रयच्च ह्रीं जः स्वाहा ॥

रात्रौ एकलिंगे गत्वा सहस्रं जपेत् । एकस्मिन् दिवसे नूपुरशब्दः श्रूयते । द्वितीये, दिव्य स्त्रीः पुरतः तिष्ठ ति । नदूषयति न भाषते । तृतीये दिवसे भाषते । भोसाधक किमाज्ञापथसि । साधकेन वक्तव्यं । भो देवि उपस्थापिका भवेति यावज्जीवति तावदुपस्थानं करोति । पृष्टमारोप्य मेरुसागरादीन् नयति । पुनरपिवैश्रवणगृहेगत्वा, द्रव्यमानीय ददाति । जंबूद्वीप पादके उत्तमरूपकन्यामानीय ददाति । जीवति वर्ष शतानि । पश्चान्मृतः सामंतकुलेषु जायते ।

## रुद्रकात्यायनी

ॐ ह्रीं ह्रीं हूं हूं हे हे फट् स्वाहा

श्मशाने गत्वा सहस्रं जपेत् । दिवसानित्रीणि । तदा सर्वभूति नी रुद्रकात्यायनी शीघ्रमागच्छति । आगता कपाले कण्ठे च पूर्णाभं द्रव्यं तुष्टाभवति । ददति च । किंमया कर्तव्यमिति । साधकेन वक्तव्यं ।

मातेव भवति । मातृवत्प्रतिपालयति । राज्यं ददाति । सर्वाशापूरयति । महधनपतिर्भवति । पंचवर्षशतानि जीवति । मृतो राजकुलेजायते ।

## महाकात्यायनी

ॐ भृ ह लह्वं फट । (७) रात्रौ नदी संगेगत्वा अष्टसहस्रं जपेत् तदा दिव्यस्त्री धृतिनी महाकात्यायनीसह परिवारेणागच्छति ।

आगता च मन्त्रयितव्या । तूष्णीं भावेन कामयेत् । दिने दिने पंचदीनारान् वस्त्रयुगलं च ददाति ।

## सुरकात्यायनी

ॐ भ्रूं हूं फट् । (४) शून्ये देवालये गत्वा अष्ट सहस्रं जपेत् ।

तदा स्वयमेव सुरकात्यायनी महाट्टहासं कृत्वा अष्टशतपरिवारेण नियतमागच्छति । आगतायै चन्दनोदकेन अर्घ्योदेयः । तुष्टाभवति । रसरसायनं प्रयच्छ, इति अष्टशतपरिवाराय वस्त्रालंकार भोजनादीनि ददाति । पंचवर्षसहस्राणि जीवति मृतो राजकुले जायते ॥

जयमुखकात्यायनी, सर्वभूतकात्यायनी द्वयो मन्त्रादेरभावः ॥

## कर्णपिशाचिनीमन्त्रः ॥

मनुः १ ॐ २ ह्रीं ३ कर्णपिशाचिनि कर्णे मे ५ कथय ६ स्वाहा ।

अस्यमन्त्रस्य पिप्पलाद ऋषिः । नीवृत् छन्दः । कर्णपिशाचिनी देवता । संख्याक्रमेण न्यासः ।

ध्यानम्:—

**ॐ चिता सनस्थां नरमुंडमाला विभूषितामस्थिमणीन्कराब्जैः ।**
**प्रेतान्तरांत्रैर्दधदेकवस्त्रां भजामहे कर्णपिशाचिनीं ताम् ॥**

पीठपूजाधिकं षहयक्षीवज्ञेयं ॥ श्मशानस्थः शवस्थोवालक्षं जपेत् । विभीतक समिद्भिः दशांशतो होमः । एवं कृते मन्त्रः सिद्धोभवति । सिद्धेमन्त्रे अशुचिर्मुत्वा बदरीतरौ पुनर्लक्षं जपेत् । तदापिशाचिनी प्रसन्ना भवति । परचित्तस्थितां, वार्तां कर्णे कथयति ।

मन्त्रभेदाः लिख्यते । तेषां प्रयोगाणां परंपरा पृथक्वर्तते । विस्तरभयात् नेहलिख्यते ॥

१. ॐ कर्णपिशाचि वदातीतानगतं ह्रीं स्वाहा

२. कह कह कालिके गृहाणगृहाण पिंडं पिशाचिके स्वाहा

३. ॐ ह्रीं चः चः कंबालिके गृहाणपिण्डं पिशाचिके स्वाहा

(ॐ ह्रीं कर्णपिशाचि मे कर्णे कथय हुं फट् स्वाह)

४. ॐ ऐं ह्रीं ऐं क्लीं क्लीं ग्लौं ॐ नम कर्णपिशाचिकादेवि अतीतानागतवर्तमानवार्तां कथय मम कर्णे कथय तथ्यं मृषावार्तां कथय २ आगच्छ २ सत्यं २ वद २ वाग्देवि स्वाहा । तुरीय मन्त्रस्य प्रयोगः । मूलं रक्तचन्दनेन लिखित्वा पंचामृतेन स्नपयित्वालक्षं जपेत् । दशांशतो होमः मन्त्रसिद्धो भवति । वार्तां कथयति ॥

५. ॐ नमः कर्णपिशाचिनि ममकर्णे प्रविश अतीतानागत वर्तमानं सत्यं सत्यं कथयमे स्वाहा ॥

६. ॐ कर्णपिशाचिनि पिंगललोचने स्वाहा

७. ॐ क्लीं जयादेवि स्वाहा

८. ॐ अरविंदे स्वाहा ।

९ ॐ विश्वरूपेपिशाचि वदवद ह्रीं स्वाहा

१०. ॐ नमः कर्णपिशाचि न्यमोघ सत्यवादिनि ममकर्णे अवतरावतरातीतानागत वर्तमानानि दर्शय २ मम भविष्यं कथय २ ह्रीं कर्णपिशाचि स्वाहा

११. ॐ ह्रीं श्रीं क्लीं नं ठं ठं नमोदेवपुत्रि स्वर्गनिवासिनि सर्वनरनारीमुख वार्तालिवार्तां कथयः सप्तसमुद्रान् दर्शय २ ॐ ह्रीं श्रीं क्लीं नीं ठं ठं हुं फट् स्वाहा

१२. ॐ कं ह्रीं प्राणकर्षणमालोकितेन विश्वरूपी पिशाची वद वद ईं ह्रीं स्वाहा

१३. ॐ ऐं ह्रीं श्रीं हुंहुं फट् कनकवज्रवैडूर्य मुक्तालंकृतभूषणे एहि २ आगच्छ २ मम कर्णे प्रविश्य भूतभविष्य वर्तमानं कालज्ञान दूरदृष्टि दूरश्रवणं ब्रूहि २ अग्निस्तंभनं शत्रुस्तंभनं, शत्रुमुखस्तंभनं, शत्रुगतिस्तंभनं शत्रुमतिस्तंभनं, परेषां गतिमतिं सर्वशत्रूणां वाक्स्तंभनं कुरु २ शत्रुकार्यहानिकरि मम कार्य सिद्धिकरि, शत्रूणामुद्योग विध्वंसकरि ।

## कर्णपिशाचिनी

वीरचामुंडिनि हाटकधारिणि नगरीपुरी पट्टणस्थान संमोहिनि असाध्यसाधिनि ॐ श्रीं ह्रीं ऐं ॐ देविहन २ हुं फट् स्वाहा । अयुतजपात् सिद्धिः ।। सर्वंकर्णे कथयति, शत्रून्नाशयति । सर्वकार्याणि सिद्ध्यति ।।

## विप्रचांडालिनीमन्त्र प्रयोगः ।।

ॐ नमश्चामुंडे प्रचंडे इन्द्राय ॐ नमो विप्रचांडालिनि शोभिनि प्रकर्षणि आकर्षय २ दिव्यमानय प्रबलमानय हूं फट् स्वाहा ।।

## क्षोभिणीमन्त्र प्रयोगः

ॐ नमो उच्छिष्टचांडालिनि क्षोभिणि दह २ द्रव आनपूरी श्रीभास्करि नमः स्वाहा ।।

## वेतालसाधनं

ॐ क्षां क्षां ह्रीं ह्रीं फट् ।

श्मशाने लक्षं जपेत् वेताल सिद्धिः ।।

## अथचेटकतन्त्र प्रारम्भः वटयक्षिणी चेटकः

ॐ सुमुखे विद्युज्जिह्वे ॐ हूं चेटक जयजय स्वाहा ।।

ओंकार मुखे विद्युज्जिह्वे ॐ हुं चेटके जयजय स्वाहा

अष्टोत्तर शतं जप्त्वा यत्किंचित्स्वादु भोजनं । सबलिर्दीयते तस्यै वटाधः मासमेकतः । ततो देवी समागत्य हस्ताद्गृह्णाति भोजनं । तदैव सा वरं दत्वा सान्निध्यं कुरुते सदा । अतीतानागतं कर्म यायाथ्यं ब्रवीति सा । पर्वत प्रतिमान्सर्वांश्चालयत्येव तत्क्षणात् ।।

## कर्णवर्तस्मशानयक्षिणीचेटकः

ॐ क्लीं भगवतीभ्योनमः ॥

श्मशाने नग्नो भूत्वा पंचाशत्सहस्रं जपेत् । मध्य भांडे भोजनेन देवी प्रसन्ना भवति । त्रैकलिकीं वार्तां सर्वां कथयति । पुष्प फलादिकं ददाति ।

## करालिचेटकः

ॐ हूं करिकरालिनी क्षां क्षां फट्

एकपदेन अष्टोत्तरशतं जपेत् । अजामांस बलिं च दद्यात् ।

रक्तपुष्पेण पूजयेत । एवंकृते षाण्मासाभ्यन्तरे वरं ददाति ॥

## कालिकाचेटकः

ॐ कालिकादेव्यै स्वाहा ।

गोशालायां द्विलक्षं जपेत् । तद्दशांशतो होमः । एवं कृते मध्य रात्रे वरं ददाति ।

## भैरवचेटकः

ॐ नमो भैरवाय स्वाहा ।

चत्वारिंशत्सहस्रं जपेत् गोधूमस्य दशांशतो होमः । एवं कृते प्रतिदिनं अष्टादश धान्यानि प्रयच्छति ।

## लिंगचेटकः

१. ॐ नमोलिंगोद्भव रुद्र देहि मे वाचां सिद्धिं वित्तानां पार्वतीपते ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ॥

२. ॐ नमो लिंगोद्भवरुद्र देहिमे वाचां सिद्धिं विना पर्वतगते द्रां द्रीं द्रूं द्रौं द्रः ॥

प्रयोगः । लिंगमूर्घ्नि वामकरं दत्वा, (२) स्वस्य मूर्घ्नि वामकरं दत्वा मनुंलक्षं जपेत् । वाक्सिद्धिं मंत्रिणोलिंग चेटकस्तु प्रयच्छति ॥

## विरूचेटकः

ॐ श्रीं काक कमल वर्धने सवकार्य सर्वार्थान् देहि २ सर्वकार्यं कुरू २ परिचर्यं सर्वसिद्धि पादुकायां हुं क्षं श्रीं द्वादशान्नदायिने सर्वसिद्धिप्रदाय स्वाहा

लक्षं जपेत् । गोधूम चणकाभ्यां दशांशतो होमः । विरूचटको प्रसन्नो भवति । सहस्रग्रेनूः ददाति । स्वर्गवस्तूनि समानीय ददाति ।

सप्तद्वीपांतरान्नं वस्त्रं च ददाति । चिंतितः शीघ्रमायाति ।

वस्तु ददाति

## नानासिद्धिचेटकः (विरू)

ॐ नमो भूतनाथाय नमः मम सर्वसिद्धिदेहि २ श्रीं क्लीं स्वाहा ।

अश्वत्थवृक्षस्याधः उपविश्य पंचलक्षं जपेत् । तद्दशांशं पलाश समिद्धिः शुद्धघृतं जुहुयात् । दशकपालिभ्य तृप्तिपूर्वकं अन्नं देयं । ततो विरूचेटकः प्रसन्नोभूत्वा प्रार्थितं ददाति ।

कर्जूर चणक नारिकेलद्राक्षा फलान्यनेकानि ददाति ॥

## नृसिंहचेटकः

ॐ नमः श्रीनारसिंहाय मणिभद्राय शोषय वीर प्रहर चीरक्षीर नावपन वेग आब पाटवी पूजाय ठः ठः स्वाहा ॥

कार्तिककृष्ण चतुर्दश्यां दीपावल्यमायां वा, अर्धरात्रे येन येन वस्तुना जुहोति । तत्तद्वस्तु समानीय ददाति ।

अथवा नवरात्रे कुर्यात् । द्वादशसहस्राहुतिं तीर्थे दद्यात् ॥

नारिकेलोत्थवलिं दद्यात् । सिद्धो भवति ॥

## सागर चेटकः ॥

१. ॐ नमो भगवते समुद्राय देहि रत्नानि जलराशे त्रीणि नमोस्तु ते स्वाहा ।

२. ॐ नमो भगवन् समुद्र देहि रत्नानि जलराशे नमोस्तु ते स्वाहा रात्रौ रात्रौ जपेन्मन्त्रं सागरस्य तटे शुचिः । लक्षजपे कृते सिधि दत्ते सागरचेटकः । रत्नत्रयं तदा मूल्यं तेन मंत्री सुखी भवेत् ॥

## हंसबद्धचेटकः ॥

ॐ हं सः सर्वलोकलोचनानि बन्धय २ देवी आज्ञापयति स्वाहा ।

हृदि ध्यात्वा जपेद्रात्रौ हंसबद्धं सचेटकः । योगं ददाति सन्तुष्टो जरामृत्युविनाशनं ॥

## मणिभद्रचेटक: ॥

१. ॐ नमो मणिभद्राय नम: पूर्णाय नमो महायक्षसेनाधिपतये मोटमोट धराय स्वाहा ॥

२. ॐ नमो मणिभद्राय नम: पूर्णभद्राय महायक्षाय सेनाधिपतये मोटमोट धराय स्वाहा ।

३. ॐ मणिभद्राय नमो नम: पूर्णभद्राय नमो नम: यक्षसेनाधिपतये मोटमोटधराय स्वाहा मन्त्रोऽयं-मष्टसाहस्रं संजप्य सप्तदिनावधि । प्रत्यहं मणिभद्राय: प्रयच्छेत्यविरूपकं ॥

## भूतेश्वरचेटक:

ॐ ह्य: आ: भूतेश्वर आगच्छागच्छ स्वाहा ॥

एकलिंगे गत्वा रात्रौ एकाकी रक्तमांसबलिं दद्यात् । महामांस गुग्गुलु लवणेनसह धूपयेत् । अष्टसहस्रं जपेत् । प्रथमदिवसे स्वप्नं पश्यति । द्वितीय दिवसे स्वयमेव पश्यति । तृतीये शीघ्रमागच्छति । पुरस्तिष्ठति । स एवमाह किं मयाकर्तव्यं । साधकेन वक्तव्यं । किंकरो भवेति । नित्यानुबद्धोभवति । स्वर्गंगत्वा अक्षय निधानानि आनीय ददाति । अतीतानागतवर्तमानं कथयति । वस्त्रालंकारकामुक भोजनं च ददाति । द्विवर्षसहस्रं जीवति ॥

अस्यमुद्रा:—अंगुलिं वेष्टयित्वा मध्यमांगुलिं प्रसार्य, सूच्याकारेण धारयेत् अपराजित महाभूतराजस्य अंगुष्ठे पार्श्वतो भुवनेश्वरस्य मुद्रा ॥

## किंकरयमस्थचेटक:

ॐ अज: किन्नरोत्तम आगच्छागच्छ स्वाहा ।

वज्रधरस्य गृहं गत्वा, कृष्णचतुर्दश्यामारभ्य आयुतं जपेत् । सप्त दिवसषु सेवा भवति । तत: साधनमारभेत् । चन्दनेन मण्डलंकृत्वा गुग्गुलुधूपं दत्वा, श्वेत भक्त घृतपायसपिंडकोपविष्टेन घृतदीपं प्रज्वाल्य तावज्जपेदर्धरात्रे, स्वयं किन्नरोत्तम: तं याति ।

आगताय चन्दनेनाघ्यों देय: । भो साधक किं मया कर्तव्यमिति यदा पृच्छति । तदा साधकेन वक्तव्यं । अस्माकं किंकरो भवेति । दिव्यकमुक भोजनं ददाति । रस रसायन निधानं च ददाति । पृष्ठमारोप्य स्वर्गमपि नयति । पुनरपि राज्यं ददाति । पञ्चवर्षसहस्राणि जीवति ।

तस्य मुद्रा : । संपुटं कृत्वा, तर्जनीद्वयं कुंचयित्वा, किंकरोत्तमस्य मुद्रा ॥

## काली चेटकः ।

ॐ कं कालि महाकालि केलिकलाभ्यां स्वाहा ।

अनेन मन्त्रेण सहस्रमत्स्यां जुहुयात् । काली वरदा भवति । स्वर्णपंच चतुष्कं प्रतिदिनं ददाति ।।

## मन्त्रवादे कालीचेटकः ।

ॐ काली कं काली किल किले स्वाहा ।।

अथातः संप्रवक्ष्यामि मन्त्रवादे सुदुर्लभं । येन विज्ञातमात्रेण सर्वं सिद्धिः प्रजायते ।।

अनेन मन्त्रेण मल्लिकापुष्प सहस्रं घृतावर्तैर्जुहुयात् । तदा कं काली वरदा भवति ।

सुवर्णमासचतुष्टयं प्रतिदिनं ददाति ।

## रक्तकंबलाचेटकः

ॐ ह्रीं रक्तकंबले महादेवि मृतकमुत्थापय प्रतिभां चालय, पर्वतान् कंपय नीलभ विलस हुं हुं

जप्यं मासत्रयं रक्तकंबला सा प्रसीदति । मृतकोत्थापनं कुर्यात्प्रतिमां चालयेत्तथा ।

## आकाशगामीचेटकः

ॐ ह्रीं ॐ हुं हुं हुं ॐ

त्रिलक्षं जपेत् । तदा दूरदृष्टिर्भवति । सर्वपापरहितो भूत्वा आकाशचारी भवति ।

अन्यम् ।। ॐ नमः

एतं मन्त्रं वरारोहे जपेत्तु दशलक्षकं । सर्वपापविनिर्मुक्तो जायते खेचरः पुमान् ।।

## देवांगना प्राप्ति चेटकः ।।

ॐ ह्रीं नमः

मन्त्रेणानेन देवेशि सप्ताहं जपमाचरेत् । रक्तांबरधरो नित्यं तथा कुंकुममालिकः । सप्ताहं जपमात्रेण ह्यानयेदमरांगनां ।।

## ज्वालामालिनी चेटकः ।

१ ॐ नमो २ भगवति ३ ज्वालामालिनि, ४ गृध्रगण परिवृते, ५ स्वाहा ।।

न्यासे ॐ इति सर्वत्रयोजयेत् । विशेषेण ह्रीं इति भगवति पूर्वं योजयेत् ।

करतल नेत्रहीनं न्यसेत् । अभुक्तो नियतश्चैव जपेन्मन्त्रं जपाज्जयी ।

दीपतैलाक्त पादोय वारे गुरुदिने ततः । जपेदष्टसहस्रं तु त्रयोविंशति वासरान् । प्रत्यहं सा सुवर्णं च ददातीति न संशयः ॥

## ज्वालामालिनीचेटकः

स्मृतिमात्रेण वै मन्त्री रिपून्सर्वान्विनाशयेत् ।

## फेत्कारिणी चेटकः

ॐ नमो अश्मकर्णेश्वरि दुर्बले आर्द्रकेशि जटाकपाले ढक्कण फेत्कारिणी स्वाहा ॥

## यक्षचेटकः

ॐ नमो महायक्षसेनाधिपतये मणिभद्राय अप्रार्थितमन्नं देहि मे देहि स्वाहा ।

## उच्छिष्टचांडालिनी चेटकः

ॐ नमः उच्छिष्टचांडालिनि वाग्वादिनि राजमोहिनि प्रजामोहिनि स्त्रीमोहिनि आन आन येवे वायु वायु उच्छिष्टचांडालि सत्यवादिनि शक्ति फुरे स्वाहा ॥

## रतिराजचेटकः

ॐ ह्रां ह्रीं ह्रूं विटपाय स्वाहा ॥

प्रथमं चेटकस्य नाम गृहीत्वा तता गृहमध्ये उपविश्य पंचलक्षं जपेत् ।

ततः सिद्धिर्भवति । बालारमणसमये, अष्टविंशतिवारं जपेत् ।

कामोद्दीपनं भवति । स्त्रीःलभते । वशीभवति ॥

## अनाहारचेटकः

अंत्राणि कृकलासस्य मज्जाकारंज बीजकं । पिष्ट्वा तु वटिकां कृत्वा त्रिलोहेन वेष्टितां । तां वक्त्रे धारयेद्यस्तं क्षुत्पिपासा न बाधते ॥

तत्रमन्त्रः । ॐ नमः सिद्धरूपाय मम शरीरे अमृतं कुरु २ स्वाहा ।

अष्टोत्तरशतजपात् सिद्धिः । यस्मै कस्मै न दातव्या नान्यथा शंकरोदितं ॥

## आहारचेटकः ।

ॐ नमः सर्वभूताधिपतये ग्रस ग्रस शोषय २ भैरवी आज्ञापयति स्वाहा ॥ जपं १०८ वारं संध्यायां शुष्कवृक्षस्य कर्तव्यमभिमन्त्रणं । प्रातः पुष्पाणि संग्राह्य मालां शिरसि धारयेत् । कौपीनं संपरित्यज्य भोजनं भीमसेनवत् ।

अन्यत् । गृहीत्वा मंत्रितान् मन्त्री विभीततरुपल्लवान् । धारयेत् दक्षिणे हस्ते विंशत्याहार भुग्भवेत् ।

अन्यत् । अधरं कृकलासस्य शिखास्थाने निबन्धयेत् । वायुपुत्र इवाश्चर्यं सतु भुंक्तेऽन्नपर्वतम् ॥

## कामाख्या मन्त्रः

१ ॐ नमो, २ कामाख्यायै, ३ सर्वसिद्धिदायै, ४ अमुक कर्म, ५ कुरू २, स्वाहा ॥

वह्निक ऋषिः । जगतीछन्दः । कामाख्यादेवता । ॐ शक्तिः । अव्यक्तं कीलकं । संख्याक्रमेण न्यासः ।

ध्यानम्:—

**ओं योनिमात्र शरीराया कंगुवासिनि कामदा ।**
**रजस्वला महातेजाः कामाक्षी ध्यायतां सदा ॥**

पुरश्चरण अयुत जपः ॥ गुडहल पुष्पेण दशांशतोहोमं ।

तत्तद्दशांशेन, तर्पण मार्जन, ब्राह्मण भोजनानि कुर्यात् ॥

## तैलमातंगी मन्त्रः ।

ॐ ऐं तैलमातंगी नूनखंमध्ये आगच्छ ततः कर्मकुरु २ स्वाहा ।

## चोरनिवारणम् ।

जले रक्षतु वाराहः स्थले रक्षतु वामनः । अटव्यां नारसिंहश्च सर्वतः पातु केशवः । जले रक्षतु नंदीशः स्थलेरक्षतु भैरवः अटव्यां वीरभद्रश्च सर्वतः पातु शंकरः । अर्जुनः फल्गुनो जिष्णुः किरीटी श्वेतवाहनः । बीभत्सः विजयः कृष्णः सव्यसाची धनंजयः । तिस्रो भार्याः कफल्लस्य दाहिनी मोहिनी सती । तासां स्मरणमात्रेण चोरो गच्छति निष्फलः कफल्लकः कफल्लकः कफल्लकः । इति पठित्वा शयनं कार्यं तेनचोरो निष्फलो गच्छेत् ॥

ग्रहनाशन भुवनेश्वर मन्त्रः ॥



ॐ नमो भगवते भूतेश्वराय कलिकलिनखाय रौद्रदंष्ट्राकरालवक्त्राय त्रिनयनाय धग धगित पिङ्ग ललाटनेत्राय तीव्र भस्मरागरंजित विग्रहाय उग्रफणिकाल कूटाटोप मण्डित कण्ठदेशाय जप २ भूतनाथामरात्मन् रूपं दर्शय २ नृत्यनृत्य चल २ पाशेन बंध २ हुंकारेण त्रासय २ वज्रदंडेन हन निशित खड्गेन छिंधि २ शूलाग्रेण भिंधि मुद्गरेण चूर्णय २ सर्वग्रहानावेशय २ स्वाहा विधानं । गुग्गुलं मधुनाक्तेन घृतेन सहं धूपयेत् । मन्त्रेण तेन हारीत तर्जयेद् ग्रहपीडितं । ग्रहाविष्टेन चे त्तस्मै दीयते बलिरुत्तमः ॥ मुक्तो भवति तस्माच्च संशयो नास्ति तत्र च ॥

## भूत उन्माद नाशक नारसिंह मन्त्रः ॥

ॐ नमो भगवते नारसिंहाय घोररौद्र महिषासुर रूपाय त्रैलोक्याडंबराय, रौद्रक्षेत्रपालाय ह्रों ह्रों ह्रीं ह्रीं क्रीं इति ताडय २ मोहय २ द्रंभि २ क्षोभय २ आभि २ साधय २ ह्रीं हृदये आं शक्तये प्रीतिललाटे बंधय २ ह्रीं हृदये स्तंभय २ किलि किलि ईं ह्रीं डाकिनि प्रच्छादय २ शाकिनीं प्रच्छादय २ भूतं प्रच्छादय २ प्रभूतं प्रच्छादय २ स्वाहा राक्षसां प्रच्छादय २ ब्रह्मरक्षसां प्रच्छादय २ सिंहिनीपुत्रं प्रच्छादय २ डाकिनीग्रहं साधय २ शाकिनीग्रहं साधय २ अनेनमन्त्रेण शाकिनी डाकिनी भूतप्रेत पिशाचाद्यैः ऐकाहिक द्वयाहिक त्र्याहिक चातुर्थिक पचवातिक पैत्तिक श्लैष्मिक सारूपात, केसरि शकिनीग्रहादीन्मुंच २ स्वाहा ।

## ज्वरनाशक मन्त्राः

ॐ ह्रां ह्रीं सुग्रीवाय महाबल पराक्रमाय सूर्यपुत्राय अमिततेजसे, एकाहिकं द्वयाहिकं त्र्याहिकं चातुर्थिकं दृष्टिज्वर सान्निपातिकं संततज्वरं तत्क्षणं षाण्मासिकं सांवत्सरिकं सर्वान् छिंधि २ भिंधि २ किरि २ सर्वान् ग्रस २ पिब २ ब्रह्मज्वरं भीषय २ विष्णुज्वरं त्रासय २ माहेश्वरज्वरं निघातय २ भूतज्वर प्रेतज्वराऽपस्मारादि महाव्याधीन् बंध २ ॐ ह्रां ह्रीं हुं हुं फट् स्वाहा ॥

२. नमो भगवते च्छिंधि २ अमुकस्य ज्वरस्य शिरः प्रज्वलित परशुपाणये पुरुषाय फट् ॥

३. ॐ विद्युदानन हुं फट् स्वाहा ॥

## सुखप्रसवमन्त्रः

ॐ मुक्ताः पाशा विमुक्ताशा मुक्ताःसूर्येणरश्मयः ।
मुक्ताः सर्वभयाद्गर्भ एहि माचिर माचिर स्वाहा ॥

## ऋतु प्राप्त्यर्थ मन्त्रः

ऐं ह्रीं भगवति भगमालिनि चल २ भ्रामय २ पुष्पं विकासय २ स्वाहा ॥

## गर्भप्राप्त्यर्थ

ॐ नमो भगवते मकरकेतवे पुष्पधन्वने प्रतिचालित सकलसुरासुरचित्ताय ह्रीं गर्भं चालय २ स्वाहा ॥

## सर्वरक्षाविषहरमन्त्र:

ॐ नमो भगवति वज्रमये हन २ ॐ भक्ष २ ॐ खादय २ ॐ अरिरक्तं पिब कपालेन रक्ताक्षि रक्तपटे भस्मांगि भस्मलिप्त शरीरे वज्रायुधे वज्रकरांचिते पूर्वदिशं बंध २ ॐ दक्षिणदिशंबंध ॐ पश्चिमांदिशं बंध २ ॐ उत्तरांदिशं बंध २ ॐ नागान् बंध २ ॐ नागपत्नीं बंध २ ॐ असुरान् बंध २ ॐ यक्षराक्षसपिशाचान् बंध २ ॐ प्रेतभूत गंधर्वादयो ये केचिदुपद्रवास्तेभ्यो रक्ष २ ॐ ऊर्ध्वं रक्ष २ ॐ अधो रक्ष २ ॐ क्षुरिके बंध २ ॐ ज्वल महाबले घट ॐ मोटि २ सटावलि वज्रांगि वज्रप्रकारे हुं फट् ह्रीं ह्री श्रीं फट् ह्रीं ह्रू: हुं फें फ: सर्वग्रहेभ्य: सर्वव्याधिभ्य: सर्वदुष्ट उपद्रवेभ्यो ह्रीं अशेषेभ्यो रक्ष २ विषंनाशय अमुकस्य सर्वांगानि रक्ष २ हुं फट् स्वाहा ॥

## विषहरमन्त्र:

ॐ हुं सं ॐ नीलकांतिदंष्ट्रिनि भीमलोचने उग्ररूपे उग्रतारिणि छिलिकिलि रक्तलोचने किलि २ घोर नि:स्वने कुलु २ ॐ तडिज्जिह्वे निर्मांसे जटामुंडे कट २ हन २ महोज्वले चिलि २ मुंडमालाधारिणि स्फोटय २ मारय २ स्थावरंविषं जंगमं विषं नाशय २ ॐ महारौद्रि पाषाणमयि विषनाशिनि वनवासिनि पर्वत-विहारिणि कह २ ॐ हन २ नम २ दह २ क्रुध २ ॐ नीलजीमूतवर्णे विस्फुर २ ॐ घंटानादिनि ललज्जिह्वे क्षं हूं आकर्ष २ विषंहन २ देहरं ज्वालामुखि वज्रिणि महाकाये अमुकस्य स्थावर जंगम विषं छिंधि २ कढि २ सर्वविषनिवारिणि हुं फट् ।

## गृहे सर्पबाधा निवारणमन्त्र:

ॐ प्ल: सपुलकाय स्वाहा । अशेषकुल सर्पकुलाय स्वाहा ।

हस्ते मृत्तिकमादाय एतन्मंत्र अष्टाविंशतिवारमभिमंत्र्य, गृहे चालयेत् ।

गृहस्थ सर्पा: दूरं गच्छंति ॥

## द्यूते विजयकरणं ॥

१. गृहीत्वा पुष्यनक्षत्रे श्वेतगुंजां च मूलकं । धारयेद्दक्ष हस्तेतु द्यूतकार्ये जयो भवेत् ।

२. धत्तूरं करवीरं च अपामार्गस्य मूलकं । हरितालसमायुक्तं तिलकं सदिनें कृतं । अजाक्षीरेण संप्रोष्य

क्षणे राजकुले जयी । विरोधे द्यूतकार्ये च नान्यथा शंकरोदितं ।। यन्त्रमपि वर्तते

## गोमहिषीणां क्षीरवर्धन मन्त्रः ।

ॐ ह्रीं करालिनि पुरुषसुखं मुखं ठं ठः ।

अनेन मन्त्रेण तृणादिकं अष्टोत्तरशतमभिमंत्र्य दातव्यं । अतिक्षीरदा स्ताभवंति यन्त्रमपि वर्तते ।

## कलहनाशनं ।

तालकं तक्रपिष्टेन मृत्तिकायुक्तपुत्तलीं । निखनेतद्गृहे भूमौ कलहो नाशमाप्नुयात् ।।

## अनावृष्टिकाले वृष्टिप्राप्त्यर्थं

ॐ कालीकाली स्वाहा । अनेनअश्वत्थ समिधं धृताक्तां जुहुयात् ।

अयुतं अथवा सहस्रहोमेन महावृष्टि भवति ।।

## दुर्गा वशीकरण मन्त्रः

ॐ ह्रीं ह्रीं ह्रीं ठं ठः

अनेन मन्त्रेण श्वेत धुत्तूर काष्ठमयं कीलकं नवांगुलं, सहस्रेणाभिमंत्रितं ।

यस्य नाम्ना स्वगृहे निखनेत् सवश्यो भवति ।।

## मातंगी मन्त्रः

ॐ मातंगिनि ह्रीं ह्रीं स्वाहा ।

अनेन मन्त्रेण राजिका लवण मिश्रितं घृतं होतव्यं । स्त्रियं पुरुषमपि वा आकर्षयति । अवश्यं-वश्य । भवति ।।

## माहेश्वरीमन्त्रः

ॐ माहेश्वर्यै नमः

अनेन मन्त्रेण बदरीकाष्ठ कीलकं चतुरंगुलं सहस्रेणाभिमंत्रितं यस्य गृहे निखनेत् स सपरिवारो वश्यो भवति ।

## वश्यमुखी ॥

१ ॐ वश्यमुखि राजमुखि स्वाहा ।

२ अनेन सप्ताहं मुख प्रक्षालनात् सर्वे वश्या भवंति ॥

अन्यत् ॥ ॐ राजमुखि वश्यमुखि स्वाहा ॥

अनेन वामहस्ते तैलं संस्थाप्य अनामिकयत्रिधा आमंत्र्य पुनर्मूल मन्त्रं त्रिधा पठित्वा, मुखकेशादौ विलेपयेत् । प्रातःकाले शय्यायां स्थित्वा तदा सर्वान् जनान् वश्यान् करोति । व्याघ्रोपि न खादति ॥

## क्षोभिणी मन्त्रः

एरण्डं क्षोभय भगवति त्वं स्वाहा ।

अयुतद्वयं जपेत् सिद्धिः । अपामार्गस्य मूलं तु पेषयेद्रोचनेन तु ।

ललाटे तिलकं कुर्याद्वशी कुर्याज्जगत्रयम् ॥

## चामुण्डामन्त्रः

ॐ चामुंडे जय २ स्तंभय २ भंजय २ मोहय २ सर्वसत्वे नमः स्वाहा ।

अनेन पुष्पं अभिमंत्रितं यस्मै दीयते स वश्यो भवति ॥

एकचित्तः स्थितो मन्त्री मन्त्रं जप्त्वा अयुतत्रयं । ततः क्षोभयते लोकान् दर्शनादेव साधकः ॥

अन्यत् । ॐ नमो भगवते रुद्राय चामुंडे अमुकीं वशमानय स्वाहा ।

पुष्पे पुष्पं च संग्राह्य भरण्यां फलमेव च । शाखां चैव विशाखायां हस्ते पत्रं तथैव च । मूले मूलं समुद्धृत्य कृष्णोन्मत्तस्य तत्क्रमात् ।

पिष्ट्वा कर्पूरसंयुक्त कुंकुमं रोचनासमं । तिलका स्त्री वशयाति यदि साक्षादरुंधती काकजंघा वला कुष्ठं शुक्रशोणितमिश्रितं । तैर्दत्ते भोजने बाला श्मशाने रोदिति ध्रुवं । प्रातर्मुखं तु प्रक्षाल्य सप्तवाराभिमंत्रितं । यस्य नाम्ना पिबेत्तोयं सा स्त्रीवश्या भवेद्ध्रुवम् ॥

## भगमालिनीमन्त्रः

ॐ ऐं भग भुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोने भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वभगिनि मय्यानन्दवरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे

भगवित्ते क्षोभय २ सर्वसत्वान् भोगेश्वरि ऐं ब्लूं जें ब्लूं मे ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर्ब्लें ह्रीं भगमालिनि स्वाहा ।

अष्टोत्तरशतं प्रतिदिनं जपेत् स्त्री वश्या भवति न संदेहः

## कामपिशाचिनी मन्त्रः

ऐं पिं स्थां क्लीं कामपिशाचिनि शीघ्रं अमुकीं ग्राहय २ कामेन ममरूपेण नखैर्विदारय २ द्रावय २ स्नेहेन बंधय २ श्रीं फट् ॥

अन्यत् ॥ ॐ सहवल्लीं वल्लीं करवल्लीं कामपिशाचि अमुकीं कामं ग्राहय स्वाप्ने न मम रूपेण नखैर्विदारय द्रावय स्वेदेन बंधय श्रीं फट् ॥

आयुतद्वयं जपेत् सिद्धिः ॥

## वेश्यावशीकरण मन्त्रः

ॐ द्राविणी स्वाहा । ॐ हामिले स्वाहा ।

## राजवशीकरणं

ॐ नमो भास्कराय त्रिलोकात्मने अमुकं महीपतिं मे वश्यं कुरु २ स्वाहा ।

## वशीकरणदि मन्त्रप्रयोगाः ॥ मधुमती मन्त्रः

१ ॐ, २ ह्रीं, ३ क्रौं, ४ क्लीं, ५ हुं, ६ ॐ स्वाहा

अस्य मन्त्रस्य मधुऋषिः त्रिष्टुपछदः मधुमती देवता । संख्याक्रमेण न्यासः ।

ध्यानम्ः—

**अहिलतादल नील सरोजयुक्**
**कर युगां मणि कांचन पीठगाम् ।**
**अमरनागवधू गणसेवितां**
**मधुमतीमखिलार्थकरीं भजे ॥**

पुरश्चरणं अष्टलक्षजपः । बिल्वपत्रैः दशांशतो होमः ।

## मधुमती एकाक्षरो मन्त्रः

"ऐं"

अस्य विधानं सर्वं पूर्ववत् । पूर्ववद्यजनं चास्य ध्यायेद्देवीं कुमारिकां ।

कोट्यर्धं जपं कुर्वन्विद्यापारंगतो भवेत् ।। मधुमत्या समानान्या नानाभोग सुखप्रदा ।।

## कामेशीमन्त्रः

१ ह्रीं २ क्लीं ऐं ब्लूं स्त्रीं ।।

संमोहन ऋषिः । गायत्री छन्दः ।। कामेश्वरी देवता । संख्याक्रमेण न्यासः ।

ध्यानम्ः—

पाशांकुशा विक्षुशरास बाणौ
करैर्वहंती मरुणांशुकाढ्यां ।
उद्यत्पतंगाभिरुचिं मनोज्ञां
कामेश्वरीं रत्नचितां प्रणौमि ।।

पंचलक्षं जपः । पालाशकुसुमैर्दशांशतो होमादि ।।

## नित्यामन्त्रः

ऐं क्लीं नित्यक्लिन्ने मदद्रवे स्वाहा ।

संमोहन ऋषिः निवृत्तिऽछंदः । नित्यादेवता । स्त्रीणा माकर्षणे विनियोगः ऐं इत्यकाक्षरेण न्यासः

ध्यानम्ः—

अर्धेन्दुमौलि मरुणा ममराभिवंद्यां
अंभोज पाशसृणि पूण कपाल हस्तां
रक्तांगराग वसनाभरणां त्रिनेत्रां ।
ध्यायेच्छिवस्य वनितां मदविह्वलांगीं ।।

चतुर्लक्ष जपः । १ मध्वक्तैबंधूकुसुमैरयुत होमः ।। (मधुधृतशर्कराभिः)

## वज्रप्रस्तारिणी मन्त्रः ।

ऐं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा ।

अंगिरा ऋषिः त्रिष्टुपछंदः । वज्रप्रस्तारिणी देवता । ऐं इत्येकाक्षरेण न्यासः

ध्यानम्ः—

रक्ताब्धौ रक्तपोते रविदल कमलाभ्यंतरे सन्निषण्णां
रक्तांगीं रक्तमौलिस्फुरित शशिकलां स्मेरवक्त्रां त्रिनेत्रां ।
बीजापूरेक्षु पाशांकुश दमनधनुः सत्कपालानि हस्ते
बिभ्राणा मानतांगीं स्तनयुगल भरादंबिका माश्रयामः ॥

लक्षंजपः । अयुतं अश्वत्थ समिद्भिः घृतसिक्तैः होमः ॥

## कामदेवमंत्रः

ॐ नमो भगवते कामदेवाय इंद्राय वसाबाणाय इंद्रसंदीपनबाणाय क्लीं क्लीं संमोहनबाणाय ब्लूं ब्लूं संतापनबाणाय सः सः वशीकरणबाणाय कंपित कंपित हुं फट् स्वाहा ।

अन्यत् । क्लीं नमो भगवते कामदेवाय श्रीं सर्वजनप्रियाय सर्व जनसंमोहनाय ज्वल प्रज्वल २ हन २ वद २ तप २ संमोहय २ सर्वजनं मे वशंकुरु २ स्वाहा एकविंशति सहस्रजपात् सिद्धिः ।

सिद्धे, मन्त्रे मन्त्री पत्रं पुष्पं फलं वाभिमंत्रितं । यस्मै ददाति स वश्योभवति । पत्रं पुष्पं फलं दद्यात् स्त्रियै वा पुरुषाय वा अवश्यं वश इत्याहु रात्मना च धनेन च । महाविद्यावतां पुंसां मनःक्षोभं करोति यः ।
सप्तरात्रौ व्यतीतायां स च शत्रु विनश्यति । दृष्टा जनैर्दुष्टजनाः सर्वे मोहवशंमताः ।

अन्यमन्त्रः । ॐ आं ह्रीं सौः ऐं क्लीं हूं ग्लौं श्रीं क्रौं एह्येहि भ्रमरांबादेवि सकल जगन्मोहनाय २ सकल अण्डपिंड जनान् भ्रामय २ राजप्रजावशंकरि संमोहय २ महामाये अष्टादशपीठरूपिणि अमलवर्णे स्फुर २ प्रस्फुर २ कोटिसूर्यप्रभाभासुरि चन्द्रजटि मां रक्ष २ मम शत्रून् भस्मीकुरु २ विश्वमोहिनि हुं क्लीं हुं हुं फट् स्वाहा ॥

## काममेखलामंत्रः

ॐ ह्रीं कामातुरे काममेखले विघोषिणि नीललोचने अमुकं वश्यंकुरु ह्रीं नमः ।

अनेन मन्त्रेण स्वयं भक्ष्यद्रव्यं सप्ताभिमंत्रितं भुंजीत । सप्तमे द्वादशे वा त्रिसे स्त्री पुरुषो वा वश्योभवति ॥

## वशीकरण सूर्यमन्त्रः

ॐ नमो भगवते श्री सूर्याय ह्रीं सहस्रकिरणाय ऐं अतुलबलपराक्रमाय नवग्रह दशदिक्पाल लक्ष्मी दैवताय धर्मकर्म सहिताय अमुक नाम नाशय २ मोहय २ आकर्षय २ दासानुदासं कुरु २ वशंकुरु २ स्वाहा ।

अष्टोत्तरशतं प्रतिदिनं जपेत् । स वश्यो भवति ।

## घोररूपिणी मन्त्रः

ॐ नमः कट विकट घोर रूपिणि स्वाहा ।

अनेन मन्त्रेण सप्तभिर्मंत्रितं भोज्य वस्तु यस्य नाम्ना सप्ताहं खादेत् ।

स ध्रुवमेव वश्यो भवति ॥

## दशमहाविद्या

**ॐ काली तारा महाविद्या षोडशी भुवनेश्वरी ।**
**भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥**
**बगला सिद्धविद्या च मातंगी कमलात्मिका ।**
**एता दशमहाविद्याः सिद्धविद्याः प्रकीर्तिताः ॥**

## श्यामा (अर्थात्) दक्षिणकाली मन्त्रः (द्वाविंशत्यक्षरि)

मनुः ॥ ॐ क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं दक्षिणकालिके, क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं अस्य मन्त्रस्य । भैरवऋषिः । उष्णिक् छंदः । दक्षिणकालिका देवता । क्रीं बीजं । हूं शक्तिः । क्रीं कीलकं । क्रां क्रीं इत्यादिन्यासः ॥

ॐ अं आं....लृं नमोहृदि । एं ऐं... कं...घं दक्ष भुजे ।

ॐ इं...ढं नमः वामभुजे । ॐ णं...भं नमः दक्षपादे । ॐ मं ..क्षंनमः वामपादे । ॐ क्रीं नमः ब्रह्मरंध्रे । ॐ क्रीं नमः भ्रूमध्ये । ॐ क्रीं नमः ललाटे । ॐ हूं नमः सर्वांगे । मूलेन नवधा व्यापकन्यासं कुर्यात् ।

ध्यानम्ः—

**ॐ सद्यश्छिन्नशिरः कृपाणमभयं हस्तैर्वरं बिभ्रतीं**
**घोरास्यां शिरसां स्रजा सुरुचिरामुन्मुक्तकेशावलीम् ।**
**सृक्कासृक्प्रवहां श्मशाननिलयां श्रुत्योः शवालंकृतिं**
**श्यामांगीं कृतमेखलां शवकरैर्देवीं भजे कालिकाम् ॥**

## दक्षिणकाली मन्त्रभेदः (पुनश्चरणं लक्षजपः)

१. ॐ ह्रीं ह्रीं हूं हूं क्रीं क्रीं क्रीं दक्षिणकालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं । एकविंशत्यक्षरो मनुः ॥

२. क्रीं हूं ह्रीं दक्षिणकालिके क्रीं हूं ह्रीं स्वाहा ॥ चतुर्दशाक्षरोमंत्रः

३. हुं हुं क्रीं क्रीं क्रीं ह्रीं ह्रीं दक्षिणकालिके हुं हुं क्रीं क्रीं ह्रीं ह्रीं स्वाहा । द्वाविंशत्यक्षरोमंत्रः

४. क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणकालिके स्वाहा । । पंचदशाक्षरोमंत्रः ॥

५. ॐ क्रीं ॥ । एकाक्षरोमंत्रः ॥

६. ॐ क्रीं कालिके स्वाहा । षडक्षरोमंत्रः

७. ॐ क्रीं हूं ह्रीं । त्र्यक्षरोमंत्रः

८. ॐ क्रीं हूं ह्रीं हुं फट् । पंचाक्षरोमंत्रः

९. ॐ हूं ह्रीं फ ट् स्वाहा । सप्ताक्षरोमंत्रः

अस्य विधानं सर्वं पूर्ववत् ॥

## ॥ भद्रकालीमन्त्रः ॥

मन्त्रः ॐ ह्रौं कालि महाकालि किलिकिले फट् स्वाहा । चतुर्दशाक्षरो मन्त्रः ॥

अस्य विधानं सर्वं दक्षिणकालिका मन्त्रवत् ॥

ध्यानम्ः—

ॐ क्षुत्क्षामा कोटराक्षी मसिमलिनमुखी मुक्तकेशी रुदंती,
नाहंतृप्तावदंती जगदखिलमिदं ग्रासमेकं चरती ।
हस्ताभ्यां धारयंती ज्वलदनल शिखासन्निभं पाशमुग्रं
दंतैर्जंबूफलाभैः परिहरतु भयं पातु मां भद्रकाली ॥

## श्मशानकालीमन्त्रः

मन्त्रः ॥ १ ऐं २ ह्रीं ३ श्रीं ४ क्लीं ५ कालिके ऐं ह्रीं श्रीं क्लीं ॥ एकादशाक्षरो मन्त्रः ॥

अस्यविधानं ॥ भृगुऋषिः । त्रिष्टुप्छन्दः । श्मशानकालिका देवता । ऐं बीजं । ह्रीं शक्तिः क्लीं कीलकं । संख्याक्रमेण न्यासः ॥

ध्यानम्ः—

अंजनाद्रिनिभां देवीं श्मशानालयवासिनीं ।
रक्तनेत्रां मुक्तकेशीं शुष्कमांसाति भैरवीं ॥
पिंगाक्षीं वामहस्तेन मद्यपूर्णां समांसकां ।
सद्यः कृत शिरो दक्षहस्तेन दधतीं शिवां ॥

स्मितवक्त्रां सदा चाममांसचर्वण तत्परां ।
नानालंकार भूषांगीं नग्नां मत्तां सदा शवैः ॥

पुनश्चरणं वर्ण लक्षं ।

## दक्षिणकाली मन्त्रः

अस्य मन्त्रस्य भैरवऋषिः । उष्णिक्छंदः । श्रीदक्षिणकाली देवता ।

क्रीं बीजं । हुं शक्तिः । ह्रीं कीलकं । क्रां इत्यादि न्यासः ।

ध्यानम्:—

शवारूढां महाभीमां घोरदंष्ट्रां हसन्मुखीं ।
चतुर्भुजां खड्गमुंड वराभय करां शिवां ॥
मुण्डमालाधरां देवीं ललज्जिह्वां दिगंबरां ।
सदा संचितयेत्कालीं श्मशानालय वासिनीम् ॥

मनुः— क्रीं क्रीं क्रीं हुं हुं ह्रीं ह्रीं ॥ दक्षिणकालिके क्रीं क्रीं क्रीं हुं हुं ह्रीं ह्रीं स्वाहा ॥

## कालरात्रीमन्त्रः ॥ त्रयस्त्रिंशदुत्तर शताक्षरो मन्त्रः ॥

१ ॐ २ ऐं ३ ह्रीं ४ ह्रीं कामेश्वरि सर्वजनमनोहरे, सर्वमुखस्तंभिनि, सर्वराजवशंकरि सर्वदुष्ट-निर्दलिनि सर्वस्त्रीपुरुषाकर्षिणि, बंदिशृंखलास्त्रोटय २ सर्वशत्रून् भंजय २, द्वेष्टॄन् निर्दलय २ सर्वं स्तंभय २, मोहनास्त्रेण द्वेषिण उच्चाटय २ सर्वं वशं कुरु २ स्वाहा, देहि २ सर्वकालरात्रि कामिनीगणेश्वरि नमः ॥

अस्य मन्त्रस्य । दक्षऋषिः । जगतीछंदः । अलर्कनिवासिनी कालरात्रिः देवता । ऋीं बीजं । मायाराज्ञीति शक्तिः । १, २, ३, ४, ५, पंच अंगुलिन्यासः ।

१ ॐ हृदयाय, २ शिरसे, ३ शिखायै, ४ कवचाय, ५ नेत्रत्रयाय, ६ अस्त्राय एवं हृदयादि न्यासं कृत्वा । ध्यायेत् ॥

ध्यानम्:—

ॐ उद्यन्मार्ताडकांति विगलितकबरीं कृष्णवस्त्रा वृतांगी
दंडलिंगं कराब्जैः वरमथ भुवनं संदधानां त्रिनेत्राम् ।
नानाकल्पैर्विभासं स्मितमुखकमलां सेवितां देवसंघैः
मायाराज्ञीं मनोभूशरविकल तनूमाश्रये कालरात्रिम् ॥

अर्थः । १ (लिंगं) दण्डवरे दक्षयोः लिंगभुवने वामयोः भुवनं ब्रह्मांडं ॥

२. नानाकल्पैर्विभासं = विविधाभरण समूह शोभिताम् ॥

३. मनोभूशरविकलतनूं = कामबाण व्याकुलशरीराम् ॥

पुनश्चरण अयुत जपं । दशांशहोमः तिलैः कुर्यात् ।

## वार्तालीमन्त्रः ॥ चतुर्दशोत्तरशताक्षरोमन्त्रः ॥

ॐ ऐं ग्लौं ऐं नमो भगवति वार्तालि वाराहि वाराहमुखि ऐं ग्लौं ऐं अंध्रे अंधिनि नमो, रुंधे रुंधिनि नमो जंभे जंभिनि नमो, मोहे मोहिनि नमः स्तंभे स्तंभिनि नमः ऐं ग्लौं सर्वदुष्ट प्रदुष्टानां सर्वेषां सर्ववाक्पद चित्त चक्षुमुखगति जिह्वास्तंभनं कुरुकुरु शीघ्रंवशं कुरुकुरु ऐं ग्लौं ऐं ठः ठः ठः ठः हुं फट् स्वाहा ॥

अस्य मन्त्रस्य । शिवऋषिः । जगतीछन्दः । वार्तालीदेवता । ग्लौं बीजं । स्वाहा शक्तिः । ॐ वार्तालि, ॐ वाराहि, ॐ वाराहमुखि, ॐ अंध्रे अंधिनि, ॐ रुंधे रुंधिनि, ॐ जंभे जंभिनि । इति न्यासः ।

ध्यानम्ः—

ॐ रक्तांभोरुह कर्णिकोपरिगते शावासने संस्थितां ।
मुंडस्रक् परिराजमानहृदयां नीलाश्मसद्रोचिषम् ।
हस्ताब्जैर्मुसलं हलाभयवरान् संबिभ्रतीं सत्कुचां ।
वार्ताली मरुणांबरां त्रिनयनां वंदे वराहाननाम् ॥

पुनश्चरणं सप्तदशसहस्रजपः । तिलैर्बिल्वकुसुमैर्जुहुयान्मधुरान्वितैः ॥

## शरभकाली

अस्य मन्त्रस्य । हंसरूपी परब्रह्म ऋषिः । देवी गायत्रीछन्दः । श्रीशरभकाली देवता । ग्लौं बीजं । ह्रीं शक्तिः । ऐं कीलकं ॥ ॐ । आं । ह्रीं । ग्लौं । हुं । इति न्यासः ।

अष्टबाहुं त्रिनयनां प्रेतपद्मासनस्थितां ।
चिंतितार्थप्रदां देवीं चिंतामणि सुरेश्वरीम् ॥
एवंविधां महादेवीं शत्रुमारणतत्परां ।
ध्यायामि शत्रुसंहारां सदा शरभकालिकाम् ॥

मनुः । ॐ आं एह्येहि शरभमालुवाय स्फुर २ पक्षिराजाय प्रस्फुर २ ह्रीं खें खें बडबानल सालवाय ज्वल २ हुं बडवानल पक्षिराजाय शोणितं पिब ग्लौं ३ ह्रीं ३ ऐं ३ हुं ५ आवेशय अत्रागच्छ स्थिरोभव रोगान्नाशय कृत्रिमान् खादि चटकान् खादय आं ह्रीं क्रों आरोग्यं कुरु २ छेदयाशु संघट्टय आं पाशेन बध्नातु खें खड्गेन छेदयाशु खें खें रक्तं पिब शीघ्रं कृत्रिमान् खादय हुं फट् स्वाहा ।

ॐ नमो भगवते शरभसालुवाय सर्वभूतोच्छाटनाय ग्रहराक्षस निवारणाय ज्वालास्वरूपाय दक्षत्रिध्वंसनाय साक्षात्कालरुद्रायाष्टमूर्तये कृशानुरेतसे महाक्रूरभूतोच्छाटनाय प्रतिशायनाय शत्रून्नाशय २ शत्रुपशून् गृहाण २ खाद २ हुं फट् स्वाहा ॥

## इन्द्राक्षीमन्त्रः ॥

अस्य मन्त्रस्य । अथर्वण ऋषिः । जगतीछन्दः । इन्द्राक्षी परमेश्वरी देवता । ॐ बीजं । ह्रीं शक्तिः । ईं कीलकं ॥ मनुः ॥ १ ॐ ऐं घ्रीं ह्रीं ह्लूं दुं लं श्रीं ईं, २ इन्द्राक्षिरक्ष २, ३ ममशत्रून्दुःखग्रंथि स्फोटय २, ४ ममारीन् भंजय २, ५ मनोग्रंथि प्राणग्रंथि शरीरग्रंथि घातय २, ६ हुं फट् स्वाहा । इति न्यासः ।

ध्यानम्ः—

नेत्राणां दशभिश्शतैः परिवृतामत्युग्र च र्मांबरां,
हेमाभां महतीं विलंबितशिखा मामुक्तकेशान्वितां ।
घण्टामंडित पादपद्म युगलां नागेन्द्रकुंभस्तनीं,
इंद्राक्षीं परिचिंतयामि मनसा प्रत्यक्ष सिद्धिप्रदाम् ॥

## (श्यामा) दक्षिणकाली पूजाप्रयोगः

ॐ क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं दक्षिणकालिके क्रीं क्रीं क्रीं ह्रीं ह्रीं हूं हूं स्वाहा ।

मं मंडूकादि... नमः । नवपीठशक्तीः पूर्वादिक्रमेण । जयादि नवाक्षरी मन्त्रवत् ॥

ॐ ह्रीं कालिकायोगपीठात्मने नमः इति पुष्पाद्यासनं ॥

यंत्रं ॥ मध्ये षट्कोणं, तद्बहिः त्रिकोणत्रयं, वर्तुलं, अष्टदलं, द्वारसहितं भूपुरम् ॥

१. षट्कोणकेसरेषु । आग्नेयादि चतुर्दिक्षु मध्ये च ॥ षडंगानि पूजयेत् ।

२. षट्कोणेषु । आग्नेयादि चतुर्दिक्षु मध्ये च ॥ काली, कपालिनी, कुल्ला, कुरुकुल्ला, विरोधिनी विप्रचित्ता ॥

३. ततः त्रि त्रिकोणेषु अग्राद्या वामावर्तेन अन्तःकोणा दारभ्य । अग्र, वाम दक्षिणकोणेषु ॥ उग्रा, उग्रप्रभा, दीप्ता । नीला, घना, बलाकिका । मात्रा, मुद्रा, मित्रा ॥

४. अष्टदलेषु ब्राह्मी इत्यादि अष्टमातृकाः पूजयेत् ॥

५. भूपुराभ्यंतरे प्राच्यादि ऐं ह्रीं, अं इत्यादिह्रस्वसंयुत बीजयुक्तान् अष्टभैरवं ॥

६. तेषां समीपे अष्ट भैरवीं पूजयेत् ॥ श्रीं श्रीभैरवी, मं महाभैरवी, सिं सिंहभैरवी, धूं धूम्र भैरवी, भीं भीमभैरवी, उं उन्मत्तभैरवी, वं वशीकरणभैरवी, मों मोहन भैरवी ॥

७. भूपुराद्बहिः इन्द्रादि दशदिक्पालाः ततः वज्राद्यायुधानि च पूजयेत् ॥

ग्रन्थे ब्राहम्यादि अष्टमातृकानांः अष्ट भैरवीनां ध्यानं वर्तते ॥ दक्षिण कालीमन्त्रभेदाः २१, १४ २२, १५, १, ६, ७, भद्रकाली १४, एताः सर्वं पूजादिसर्वं पूर्ववत् ॥

## श्मशानकाली

ऐं ह्रीं श्रीं क्लीं कालिके ऐं ह्रीं श्रीं क्लीं ॥

मं मंडूकादि,, नवपीठांतं सर्वं पूर्ववत् । अष्टदलेषु अष्टमातृकाः अष्ट भैरवाश्च ।

भूपुरे इंद्राद्याः वज्राद्यायुधानि च पूजयेत् ॥

## दक्षिणकाली मन्त्रोद्धारं ॥

**कालीत्रयं कूर्चयुग्मं लज्जायुग्मं समुच्चरेत् ।**
**दक्षिणे कालिके चेति पुनर्बीजानि पूर्ववत् ॥**
**ठद्वयं स्यान्मनोरंते मन्त्रोऽयं भुवनेश्वरः ।**
**द्वाविंशत्यक्षरी विद्या विद्याराज्ञी प्रकीर्तिता ॥**

क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणकालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥

उत्कीलनम्

**भद्रीकाम् प्रथमं दद्यादंत्ये कालीत्रयंवदेत् ।**
**भद्रकाली मनोर्देवी भव्य उत्कीलनं तथा**

संजीवनम्

**भद्रीका युगलं देवी दद्यादंत्ये मनोः शिवे**
**भद्रकाली मनोरेष स्यात् संजीवनको मनोः**

शापमोचनम्

**कालीम कूर्चम् परं नाम दक्षिणे दक्षिणे कालिके तथा**
**वशिष्ठ मंत्रं प्रोच्यार्थ मोचयेदयमीश्वरि**
**कालीं कूर्चं परे नीरमेषास्याच्छापहारिणी ॥**
**कालीं भीमं टटं भद्रकाली भीमं शिवस्यहि**
**शापंमोचय युग्मापो विद्येयं शाप हारिणी**

ध्यानम्

**ब्रह्मोपेन्द्रशिवास्थि मुण्डरशनां ताम्बूलरक्ताधरां**

वर्षा मेघनिभां त्रिशूल मुसले पद्मासिपाशाङ्कुशान्
शङ्खं चाहियुगं वरं दशभुजैः संबिभ्रतीं प्रेतगां
देवीं दक्षिणकालिकां भगवतीं रक्ताम्बरां तां स्मरे ॥
अथ वक्ष्यामि श्यामाया ध्यानं पर्वतनंदिनि ।
श्यामतन्त्रे मयाख्यातं सकलागमसागरे ॥

यंत्रं ॥

अथाहं भद्रकाल्यास्ते यन्त्रोद्धारं सुरप्रियं ।
ब्रवीमि दयया देवि सर्वसारस्वतप्रदं ॥
मध्ये तुर्यवरं खमण्टलयुतं द्विः सप्तकारांकितं
द्विस्तुर्यारयुगं चतुर्गुण चतुष्पत्रावली शोभितं ।
सद्वृत्तत्रयमंडितं बहिरिलागेह त्रयोद्भासितं
जीयाद्यंत्रमिदं यथेष्टफलदं श्रीभद्रकालीप्रियं ॥

अन्यत् मन्त्रोद्धारं २

क्रीं ३ हूं २ ह्रीं २ भैं भद्रकाली भैं ह्रीं २ हूं क्रीं ३ स्वाहा ॥

भद्रकाली भेदाः

भद्रिका भास्वती भीमा भैंबीजत्रितयं स्मृतं ।
अनृतमपरं ज्ञेयं ब्रह्मान्वय समुद्भव ॥

संपुटमन्त्रः ॥

श्यामास्ति दक्षिणाकाली द्वाविंशत्यक्षरी शिवे ।
सर्वदोषविनिर्मुक्ता पुरापि कथितं मया ॥
भद्रिकामंचले दत्वा जपेन्मूलं महेश्वरि ।
भद्रकाल्या अयं मन्त्रः संपुटाख्योऽस्ति सुन्दरि ॥

## श्रीवांछाकल्पलतामन्त्रः ॥

अत्रादौ गुर्वादीनां नमनं मनोः धर्मेण विधेयं । ततः अस्त्रमुच्चार्य तालत्रयं कृत्वा, मूलेन प्राणानायम्य, मूले नैव त्रिवारं व्यापकं कुर्यात् ॥ ततः मन्त्रजपः ॥

ॐ अस्य श्री वांछाकल्पलतामालामंत्रस्य । आनन्दभैरव गणक संयुत आंगीरस काश्यप वसिष्ट विश्वामित्र (संवादेभ्यः) ऋषिभ्यो नमः ।

देवी गायत्री नियुद् गायत्री, त्रिष्टुप्, अनुष्टुप् बृहतीछंदोभ्यो नमः ।

श्रीमहात्रिपुरसुन्दरि श्रीमहागणपति संवादा दग्नि यमामृतरुद्रा देवताः । ह्रीं बीजं । श्रीं शक्तयेनमः स्वाहा कीलकं । जपे विनियोगः ।

ॐ ऐं क्लीं सौः श्रीमहात्रिपुर सुन्दरि ह्रीं गीं, सर्वज्ञायै ह्रां गां ब्रह्मात्मने अंगुष्ठ ।

ॐ ऐं क्लीं सौः श्रीमहात्रिपुर सुन्दरि ह्रीं गीं, नित्यतृप्तायै ह्रीं गीं विष्णवात्मने तर्जनीभ्यां ।

ॐ ऐं क्लीं सौः श्रीमहात्रिपुर सुन्दरि ह्रीं गीं, अनादिबोधायै ह्रूं गूं रुद्रात्मने मध्यमाभ्यां ।

ॐ ऐं क्लीं सौः श्रीमहात्रिपुर सुन्दरि ह्रीं गीं, स्वतन्त्रशक्त्यै ह्रैं गैं ईश्वरात्मने अनामिकाभ्यां ।

ॐ ऐं क्लीं सौः श्रीमहात्रिपुर सुन्दरि ह्रीं गीं, अलुप्तशक्त्यै ह्रौं गौं सदाशिवात्मने कनिष्ठिकाभ्यां ।

ॐ ऐं क्लीं सौः श्रीमहात्रिपुर सुन्दरि ह्रीं गीं, अनंतशक्त्यै ह्रः गः सर्वात्मने करतल करपृष्ठाभ्यां ।

ध्यानम्ः—

**हेमाद्रौ हेमपीठस्तितिममरगणैरीड्यमानां विराजत्**
**पुष्पेष्विक्ष्वस्त्र पाशांकुश करकमलां रक्तवेगातिरिक्तां**
**दिक्षुद्विद्विश्च तुर्भिःर्मणिमय कलशैः पंचशकत्यान्वितैश्च**
**वृक्षैक्लृप्त भिषेकां भजत भगवतीं भूतिदा मंत्ययामे ॥**

एवं हृदयादि ॥ दिग्बंधः ॥

## वांछाकल्पलतामन्त्रः

दमयन्ती नलाभ्यां च नमस्कारं करोम्यहं । अविवादो भवेदत्र कलिदोषो प्रशांतये ॥ ऐ कमत्य भवेदेषां ब्राह्मणानां पृथग्धिया । निर्वैरता च जायेत संवादाग्री प्रसीद मे ॥ ॐ शांतिः शांतिः शांतिः ॥ इति प्रथम पर्यायः ॥

## अथ द्वितीयपर्यायः

१ ॐ ऐं श्रीं ह्रीं क्लीं ग्लौं गं गुगुर्लरि क ५ ह ६ स ४ ऐं क्लीं सौः

यवद्य...वशे । गं क्षिप्र...वशमानय स्वाहा सौः क्लीं ऐं ॥

२ पूर्ववत्

३ पूर्ववत्

४ पूर्ववत्

५ पूर्ववत्

६ ॐ...सौः संगच्छध्वं सवदध्वं सं हृ मनांसि जानतां देवभागं यदा पूर्वे संजानानां उपासते । ग

क्षिप्र ऐं ॥ [illegible]

७ ॐ प्रथमपर्याय ५ मंत्रः

८ ॐ प्रथमपर्याय ४ मंत्रः

९ ॐ प्रथमपर्याय ३ मंत्रः

१० ॐ प्रथमपर्याय २ मंत्रः

११ ॐ प्रथमपर्याय १ मंत्रः

१२ ॐ अग्नेमन्युं प्रतिनुदन्पूरेषा मदर्थो गोपाः परिपाहिनन्त्वमे प्रतंञ्चो यंतु निहुतः पुनस्ते किमेषां चित्तं प्रबुधां विनेशत् । गं...सौः

१३ ॐ भुवः मरुतमोजसे स्वाहा । ॐ ह्रीं कण्ठ ममृतरुद्राय आं ह्रीं क्रों प्रतिकूलं मे नाशयतु अनुकूलं मे वशमानय स्वाहा ।

दमयन्तीनलाभ्यां च नमस्कारं करोम्यहं । अविवादो भवेदत्र कलिदोषप्रशांतयेः । ऐकमत्यं भवेदेषां ब्रह्मणानां पृथग्धिया । निर्वैरता च जायेत संवादाग्रे प्रसीद मे ॥ ॐ शांतिः ।

## अथ तृतीयपयायः

१ ॐ... यदद्य वशे... सौःक्लीं ऐं ॥

२ ॐ... तत्सवितु ... .... ...

३ ॐ त्रियंबकं ... ... ...

४ ॐ जातवेदसे ... ... ...

## श्रीवांछाकल्पलतामन्त्रः

ध्यानमः—

धवलनलिनराजं चन्द्रमध्ये निषण्ण,
कर धृतवरपाशं साभयं सांकुशं च ।
स वरदममलेन्दुं क्षीरं गौरं प्रसन्नं,
प्रणतसुखद वक्त्रं अक्षुसंवादयंतं ॥

स्फुटित नलिन संस्था मौलिबंधेन्दुरेखां,
गलदमृतजलार्द्रां चन्द्रवह्न्यर्क नेत्रां,

**स्वकर कलितमुद्रावेद पाशाक्षमालां,**
**स्फटिकरजितमुक्ता गौर मीशं नमामि ॥**

एवं ध्यात्वा गुरुपादुकां स्मरन् पंचपूजां: कृत्वा शनैर्जपेत् ॥

१ ॐ ऐं श्रीं ह्रीं क्लीं ग्लौं गं गुगुर्लरि क ५ ह ६ स ४ ऐं क्लीं सौः ॥ यदद्य कच्चवृत्रन् उदगा- अभिसूर्य सर्वन्तदिन्द्र ते वशे ।

गं क्षिप्रप्रसादनाय गणपतये वरवरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा सौः क्लीं ऐं ॥

ॐ ऐं ह्रीं श्रीं क्लीं ग्लौं गं गुगुर्लरि क ५ ह ६ स ४ ऐं क्लीं सौः तत्सवितु वरेण्यं.. प्रचोदयात् गं प्रप्रसादनाय गणपतये वरवरद सर्व जनं में वशमानय स्वाहा सौः क्लीं ऐं ॥

३ ॐ...गुगुर्लरि क ५ ह ६ स ४ ऐं क्लीं सौः त्रियंबकं....मामृतात् गं क्षिप्र स्वाहा सौः क्लीं ऐं ॥

४ ॐ...स ४ ऐं क्लीं सौः जातवेदस....त्यग्निः गं....क्षिप्र स्वाहा सौः क्लीं ऐं ।

५ ॐ स ४ ऐं क्लीं सौः समानी मन्त्रस्थपित समानी समानं मनस्सह चितमेषां । समानं मन्त्र मभि- मन्त्र एवः । समानेन वो हविषाजुहोमि । ॐ गं वरवरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा सौः क्लीं ऐं ।

६ ॐ १० क ५ ह ६ स ४ ऐं क्लीं सौः सं समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ इळ स्पदे समिध्यसे सनोवसू न्याभर गं....सौः क्लीं ऐं ॥

७ ॐ १० क ४ ह ६ स ४ ऐं क्लीं सौः समानी जुहोमि, गं....हो सौः क्लीं ऐं ॥

८ चतुर्थमन्त्रवत्

९ तृतीयमन्त्रवत्

१० द्वितीयमन्त्रवत्

११ प्रथममन्त्रवत्

१२ ॐ ऐं क्लीं सौः गणानांत्वा....सादनं गं सौः क्लीं ऐं ।

१३ ॐ भूः भद्रं नो अपिवातय मनः ॐ वं ठं अमृतरुद्राय आं ह्रीं क्रों प्रतिकूलं मे वशमानय स्वाहा

## वांछाकल्पलता मन्त्राः

५ ॐ समानो

६ ॐ सं समिद्युवसे

७ ॐ समानो....

८ ॐ जातवेदसे

९ ॐ त्र्यंबकं

१० ॐ तत्सवितु

११ ॐ यदद्यवशे

१२ ॐ योमग्ने बागीन ु संतुमद । भातांचिकीर्षत्य भागमग्नेतं कुरु । मामग्ने भागिनं कुरु स्वाहा ।

१३ ॐ सुवः इन्द्रो विश्वस्य राजती । ॐ ह्रीं वं ठं अमृतरुद्राय आं ह्रीं क्रों प्रतिकूलं मे नश्यतु । अनुकूलं मे वशमानय स्वाहा ।

दमयंती नलाभ्यां च नमस्कारं करोतियः । अविवादो भवेदत्र कलिदोषो प्रशांतितः । ऐकमत्यं भवेदेषां ब्राह्मणानां पृथग्धिया । निर्वैरता च जायेत संवादाग्रे प्रसीद मे ॥ ॐ शांतिः ३ ।

अस्य चतुर्थ पर्यायः ॥

१ ॐ यदद्य वशे ३६

२ ॐ तत्सवितु

३ ॐ त्र्यंवकं

४ ॐ जातवेदसे

५ ॐ समानो

६ ॐ समानीब आकूतिः समानाहृदयानिव । समानमस्तु दो मनो यदावस्तुसहासति । ३६

७ ॐ समानो...जुहोमि

८ ॐ जातवेदसे

९ ॐ त्र्यंबकं

१० ॐ तत्सवितु

११ ॐ यदद्य वशे

१२ ॐ अजैष्माद्यसनामच भूमा नागसोवयं ।

उषो मस्माद्दुःस्वप्न दभैष्म पलदुचत्वनेह सोवऊतयस्सु ऊतयोव ऊतय ३६ ।

१३ ॐ भूर्भुवस्सुवः शन्नो भवद्विपदे शं चतुष्पदे ॐ ह्रीं वं ठं अमृतरुद्राय आं ह्रीं क्रों प्रतिकूलं मे नश्यतु अनुकूलं मे वशमानय स्वाहा । दमयंतीनलाभ्यांच नमस्कारं करोम्यहं । अविवादो भवेदत्र कलिदोषो प्रशांतितः । ऐकमत्यं भवेदेषां ब्राह्मणानां पृथग्धियाः । निर्वैरता च जायेत संवादाग्रे प्रसीद मे । ॐ शांतिः ३ ।

## अथउत्तरपर्यायः

यथा हृदयादि न्यासः पूर्ववत् ध्यानं अनन्तरं ॐ तच्छंयोरावृणीमहि ॐ नमो ब्रह्मणे, एवं निशांते प्रत्यहं चतुर्वारं पठेत् सर्वैश्वर्यं भवति ॥ सर्ववेदांतफलमश्नुते ॥ इति ॥ वांछाकल्पलता ॥

## शुभ

वांछाकल्पलतायास्तु न होमो न च तर्पणं, स्मरणादेव भक्तानां वांछितार्थप्रदायिनी ॥ आवर्तनत्रये-लक्ष्मी, पंचावृते जगद्वशं, दशावर्ते शिवादीनां शक्तिभाग्भवेत् ॥

शतावृत्या सार्वभौमो दरिद्रो न भवेन्नरः । नाऽथर्ववादो ५ थर्वणश्च वसिष्टवचनं यथा ॥

इति अंथर्वणमन्त्रार्ण वे सौभाग्य काण्डे कल्पलतोपस्थानं संपूर्णम् ॥

## तारामन्त्र पूजा प्रयोगः ॥

१ ॐ ह्रीं त्रीं हुं फट् ॥ २ ऐं ॐ ह्रीं क्रीं हुं फट् । ३ ह्रीं त्रीं हुं फट् । ४ ह्रीं त्रीं हुं ॥

यन्त्रः । त्रिकोण, अष्टदल, सद्वारभूपुरं ॥

मं मंडूकादि नमः । नवपीठ शक्तीः पूर्वाद्यष्टदिक्षुक्रमेण ।

मेघा, प्रज्ञा, प्रभा विद्या, धी, धृति, स्मृति, बुद्धि, मध्ये विश्वेश्वरी ॥

ॐ ह्रौं सरस्वती योगपीठात्मने नमः इति पुष्पाद्यासनं ॥

१ देव्याश्चतुर्दिक्षु । त्रिकोणात् अग्रभागाद्बहिः, दक्ष, ऊर्ध्व, वाम भागेषु । गं गणेशायनमः, बं बटुकाय नमः, क्षं क्षेत्रपालाय, यां योगिनीभ्यां च तेषां ग्रन्थोक्त ध्यानश्लोक पूर्वकं अर्चयेत् ॥

ततः षट्कोणेषु आग्नेयादि चतुर्दिक्षु मध्येदिक्षु च । अङ्गदेवता यजेत् ॥

२ ततो अष्टदलेषु प्राच्यादिचतुर्दिक्षु, विदिग्दलेषुच । वैं वैरोचनाय, अं अमिताभाय, पं पद्मनाभाय, शं शंखपांडुराय । लां लामकायै, मां मामकायै, पां पांडुरायै, तां तारकायै ॥

३ भूपुराभ्यंतरे पूर्वादि चतुर्दिक्षु । पं पद्मांतकाय, जं जन्मांतकाय, विं विघ्नांतकाय, नं नरकांतकाय ।

४ भूपुराद्बहिः इन्द्रादि दशदिक्पालकान् । वज्राद्यायुधानि च पूजयेत् ॥

द्वितीय तृतीय आवरणदेवतां वक्ष्यमाण प्रकारेण अर्चयेत् ॥ तद्यथा ।

वैं वैरोचनाय नमः । वैरोचन इहागच्छ, इहतिष्ठ, इत्यावाह्य पंचोपचारैः संपूज्य वैं वैरोचन वज्रपुष्पं प्रतीच्छ स्वाहा । इत्येवं सर्वत्र ॥

(३२) मन्त्रभेदाः । ॐ त्रीं ह्रीं हां हुं नमस्ताराये महाताराये सकलदुस्तरां स्तारय २ तर २ स्वाहा ॥

२ ॐ त्रीं ह्रीं हुं फट् (७) ब्रह्मोपासितमन्त्रः।

३ ऐं ह्रीं श्रीं क्लीं सौः हुं उग्रतारे हुं फट् । (१२) विष्णूपाश्रितः

४ ॐ हुं ह्रीं क्ली सौः हुं फट् । (७)

५ ॐ ऐं ह्रीं श्रीं क्लीं हसौः हुं फट् (१२) चतुर्मुखोपासितं

६ ॐ हुं ह्रीं क्ली हुं सौः हुं फट् (७) ,,

७ ॐ ह्रीं हुं ह्रां हुं फट् ॥ ६ एकजटा मन्त्रः

८ ॐ त्रीं हुं ह्रीं फट् । ,,

९ ॐ त्रीं हुं फट् क्लीं ऐं ५ नारायणोपासितं ॥

पूजादिकं सर्वं पूर्ववत् ॥

ॐ ह्रीं नमो भगवत्येकजटे मम वज्रपुष्पं प्रतीच्छ स्वाहा ।

ॐ श्रीं ह्रीं ह्सौः हुं फट् नीलसरस्वत्यै स्वाहा । १५ पूजादिकं सर्वं पूर्ववत ॥

ऐं ह्रीं श्रीं क्लीं सौ क्लीं ह्रीं ऐ ब्लूं स्त्रीं नीलतारे सरस्वति द्रां द्रीं क्लीं ब्लूं सः ऐं ह्रीं श्रीं क्लीं सौः सौः ह्रीं स्वाहा ।

(३२) अस्य महाराज्ञी महाविद्या पूजाविधानं ।

## तारा उग्रतारा ॥

मन्त्रोद्धारं

तारं परां वधूं कूर्चं तुरगं सकलांञ्चले ।
सार्धं पंचाक्षरी तारा भवसागरतारिणी ॥
ॐ ह्रीं स्त्रीं हूं फट् ॥

उत्कीलनम्

वधूमादौ पठेदंते तारं जप्त्वा च पार्वति ।
अयमुत्कीलनो मन्त्रस्तारायां समुदाहृतः ॥

संजीवनम्

उग्रतारा मनोरेषस्थात् संजीवनको मनुः ।
वासनां मूलमन्त्रस्य जपेदन्ते महेश्वरि ॥

शापमोचनम्

प्रणवं कामिनीं मायां ब्रह्मशापं विमोचय ।
विमोचयापस्ताराया विद्येयं शापहारिणी ॥

यंत्रं ॥

बिंदुस्त्रिकोणं च षडस्त्रयुक्तं वृत्तं तथाष्टारमलं त्रिवृत्तं ।
समूपुरं चैकजटाविलासगेहं मया यन्त्रमिदं प्रदिष्टम् ॥

ध्यानम्

देवीं पन्नगभूषितां हिमरुचिं शीतांशु शंखप्रभां
मुक्तारत्नपरीतकण्ठवलयां रक्तांबरं बिभ्रतीम् ।
शूलाब्जासिगदाधरां सुरगणैर्वैकुण्ठमुख्यैः स्तुतां
नित्यं लोकत्रयैकरक्षणपरां तारां त्रिनेत्रां भजे ॥

संपुटमन्त्रः ॥

तुरगं मूल मन्त्रादौ जपेत्पार्वति साधकः ।
उग्रतारा मनोरेष मन्त्रः श्री संपुटाभिधः ॥

## ताराभेदेन सरस्वती मन्त्र प्रयोगः ॥

आं लृं (२) ऐं लृं ॥

मं मंडूकादि...नमः । नवपीठशक्तिः मेधादि तारा मन्त्रवत् ॥ ॐ वर्णाब्जपद्मासनाय नमः यंत्रं ॥ षट्कोणमष्टदल भूपुरं ॥

१ षट्कोणेषु, आग्नेयादि चतुर्दिक्षु, मध्ये दिक्षु च षडंगदेवतां पूजयेत् ।

२ अष्टदलेषु प्राच्यादि वामावर्तेन ब्राह्म्यादि अष्टमातृकां यजेत् ।

३ भूपुरे इन्द्रादि दशदिक्पालान्, ततः वज्राद्यायुधानि अर्चयेत् ॥

## सरस्वती दशाक्षरमन्त्र प्रयोगः ॥

वद वद वाग्वादिनि स्वाहा ॥

मं मंडूकादि नमः । नवपीठशक्तिः तारामन्त्रवत् ॥ ॐ वर्णाब्जपद्मासनाय नमः । षट्कोणेषु आग्नेयादि चतुर्दिक्षु मध्येदिक्षु च षडंगयुवतीं पूजयेत् ।

अष्टदलेषु प्राच्यादि । योगा, सत्या, विमला, ज्ञाना, बुद्धि, स्मृति, मेधा, प्रज्ञा ॥ इति ।

अष्टदलेषु अग्रे । ब्राह्म्यादि अष्टमातृकाः ।

भूपुरे इन्द्रादि दशदिक्पालाः ततः वज्राद्यायुधानि पूजयेत् ॥

## सरस्वती एकादशाक्षर मन्त्र प्रयोगः ॥

ॐ ह्रीं ऐं ह्रीं ॐ सरस्वत्यै नमः ॥

पूर्वोक्त पीठ, नवपीठशक्ति पूजयेत् । देव्या दक्षे ॐ संस्कृतायै, वाङ्मय्यै नमः । वामे । प्राकृतायै, वाग्मिन्यै नमः इति अर्चयेत् ।

अष्टदलेषु प्राच्यादि क्रमेण । प्रज्ञा, मेधा, श्रुति, शक्ति, स्मृति, वागीश्वरी, मति, स्वस्ति ॥ अग्रेषु । ब्राह्म्यादि अष्टमातृकाः ।

भपुरे इन्द्रादि दशदिक्पालाः ततः वज्राद्यायुधानि च पूजयेत् ॥

ऐं वाचस्पतेऽमृते प्लवः प्लवः ॥ (११) नेत्रहीनं पंचांगं ॥

पीठदेवतादि सर्वं पूर्ववत् ॥

## ताराभेदेन वागीश्वरी (सरस्वती) मन्त्रः

आं लृं ॥ मन्त्रभेदः ॥ ऐं लृं ॥

अस्य मन्त्रस्य विधानं, तारामन्त्रवत् । न्यासादि सर्वं पूर्वोक्त विधिनाकर्तुमशक्तश्चेत् । आँ इत्येकाक्षरेण षडंगन्यासान् कुर्यात् ।

ध्यानम्ः—

रत्नकांतिनिभां देवीं ज्योत्स्नाजालविकासिनीं ।
मुक्ताहारयुजां शुभ्रां शशिखंड विभूषितां ॥

बिभ्रतीं दशहस्तैश्च व्याख्यां वर्णस्य मालिकां ।
अमृतेन तथा पूर्णं घटं च दिव्यपुस्तकं ।

दधतीं वामहस्तेन पीनस्तनभरान्वितां ।
मध्ये क्षीणां तथा स्वच्छां नानारत्न विभूषिताम् ॥

पुनश्चरणं द्वादशलक्ष जपः । पायसान्नेन दशांशहोमः ॥

यंत्रलक्षणं । मध्ये षट्कोणं, बहिः अष्टदल भूपुरम् ।

षट्कोणमध्ये मूलं, षट्कोणेषु अंगदेवताः, अष्टदलेषु ब्राह्म्यादि अष्टमातृकाः, भूपुरे, इन्द्रादि लोकपालान् ततबहिः आयुधानिच ॥ जप, होम, तर्पण, मार्जन, ब्राह्मण भोजनानि कृत्वा, ततः प्रयोगं कुर्यात् ॥

१ जपेद्द्वादशलक्षाणि मूकोपि वाक्पतिर्भवेत् । प्रातर्जप्त्वा सहस्रंतु पिबेत् ब्राह्मीं वचोन्वितां । न विस्मरति मेधावी श्रुतान्वेदागमानपि ॥

२ कंठमात्रोदकेस्थित्वा ध्यायेन्मार्तांडमंडलं । ज्योतिः पुंजनिभां देवीं परिवार समन्वितां । वराभययुतांहस्ते मुद्रापुस्तक धारिणीम् । इति ध्यात्वा सहस्रेण षण्मासं विजितेंद्रियः । मीमांसां प्राप्य वाक्सिद्धिं कवीनां अग्रणीर्भवेत् ॥ इत्यादि प्रयोगाः बहवः संति ॥

## वाग्वादिनीमन्त्रः

मन्त्रः । वदवद वाग्वादिनि स्वाहा ॥

अस्य मन्त्रस्य । कण्व ऋषिः । विराट् छंदः । वाग्वादिनी देवता ॥

ॐ वं नमः शिरसि । दं नमः दक्षश्रवणे व नमः वामश्रवणे । दं नमः दक्षनेत्रे । वां नमः वामनेत्रे । ग्वां नमः दक्षनासापुटे । दिं नमः वामनासापुटे । निं नमः वदने । स्वां नमः लिंगे । हां नमः गुदे ॥ ॐ आं इत्येकाक्षरेण षडंगन्यासः ।

ध्यानम्:—

**ॐ तरुण शकलमिंदो बिभ्रती शुभ्रकांतिः**
**कुचभरनमितांगी सन्निषण्णा सिताब्जे ।**
**निजकरकमलोद्यल्लेखिनी पुस्तकश्रीः**
**सकलविभवसिद्ध्यै पातु वाग्देवता नः ॥**

पुनश्चरणं दशलक्षजपं

## ताराभेदेन सरस्वती एकाक्षरी ॥

यंत्रं मध्ये चतुर्दलं तद्बाह्ये षट्कोण अष्टदल, षोडशारं, भूपुरं ॥

पीठपूजा । ह्रीं तारिणीयोगपीठात्मने नमः पूज्यपूजकयोरंतराले प्राचीदिशं प्रकल्प्य ॥

१ चतुर्दलेषु प्राचीक्रमेण । १ ऐं, २ क्रीं, ३ ह्रीं, ४ क्रीं क्रीं कृष्णादेवी ।

२ षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्योदिक्षु च । ह्रीं इति संयोजित हृदयादि षडंगदेवताः ॥

३ चतुर्दलाग्रेषु ॥ प्राच्यादि चतुर्दिक्षु । क्षेत्रपाल, भैरव गणपति, सहांबिकायै ॥

४ अष्टदलेषु । प्राच्यादिवामावर्तेन । अणिमायै, अनंगायै, मदनायै, लघिमायै, मदनातुरायै, अनंगकुसुमायै, अष्टकर्णिकायै, कपालिकायै ।

५ षोडशाब्जे प्राच्यादि वामावर्तेन सुतदा मोक्षदा, भक्तिदा, भोगदा, मुक्तिदा, सिद्धिदा, कामदा, क्षेमदा, शिवदा, परदा, आत्मदा, योगदा भाग्यदा, भुक्तिदा, सर्वसिद्धिदा ॥

६ भूपुराभ्यंतरे पूर्वादि चतुर्दिक्षु । अणिमाद्यष्टसिद्धिभ्यः अग्निशकला, षोडशचन्द्रकला, द्वादशसूर्यकला ॥

७ भूपुराद्बहिः इंद्रादि दशदिक्पालाः ।

८ भूपुराद्बहिः तेषां आयुधानि ॥

## शारदा

मन्त्रोद्धारं

तारं माया स्मरः शक्तिरश्मरी नाम संवदेत् ।
भगवत्यै शारदायै मनोरन्तेपरा वनम् ॥
ॐ ह्रीं क्लीं सः नमो भगवत्यै शारदायै ह्रीं स्वाहा ॥
तारकामैः शिवे पूज्याः शक्तयः परमार्थदाः ॥
तारं माया कामराजश्च शक्तिः स्तम्भं तस्माद्गवत्यै च नाम ।
भूतिस्तस्मादञ्चले ठः द्वयं स्यात् प्रोक्तं मुक्त्यै शारदा मंत्र एषः ॥

उत्कीलनं

वनमादौ च नामाग्रे तारं दत्वा जपेच्छिवे ।
शारदा मन्त्रराजस्य मन्त्रोऽस्त्युत्कीलनाभिधः ॥

संजीवनं

शारदा मन्त्रराजस्य संजीवन मनुः स्मृतः ।
मन्मथं शक्ति बीजं च जपेदादौ च साधकः ॥

शापमोचनं

तारं मायां शारदे च विष्णुशापं विमोचय ।
शक्तिर्नीरं महादेवि विद्येयं शापहारिणी ॥

यंत्रं

मध्ये बिंदुः तद्बहिः स्यात्त्रिकोणं
षट्कोणं स्यात् वृत्त व स्वश्र युक्तं ।
वृत्ताकारं षोडशारं त्रिवृत्तं
भूगेहं स्याच्छारदा यन्त्रमेतत् ॥

ध्यानं

षड्भुजां त्रिनयनां स्मिताननां शाण्डिल्यर्षिनुत पादपंकजां ।
पर्वतस्थितवतीं धृतशूलां शारदां भगवतीं हृदि ध्याये ॥

संपुटमन्त्र

तारं कामं मनोरंते पठेत्साधकसत्तमः ।
शारदायाः सरस्वत्या मन्त्रोयं संपुटाभिधः ॥

## नीलसरस्वती

मन्त्रोद्धारं

तारं व्योषं वाग्भवं च कूर्चं नीलसरस्वति ।
हरं नीरं मनोरन्ते मन्त्रोयं वाक्प्रदायकः ॥
व्योषण पूजयेद्देवि परिवारां यथाविधि ॥
ॐ ह्रां ऐं हूं नीलसरस्वति फट् स्वाहा ।

उत्कीलनं

कूर्चमादौ मनोरन्ते व्योषं दत्वा जपेच्छिवे ।
मनोर्नीलसरस्वत्याः स्यादुत्कीलनको मनुः ॥

संजीवनं

भवेत्संजीवनं देवि नीलसरस्वती मनोः ।
वाणीमादौ परामंते जपेन्मांत्रिकसत्तमः ॥

शापमोचनं

तारं वाणी च नीलेति सरस्वति हरिच्छलम् ।
मोचयापो मनोरन्ते विद्येयं शापहारिणी ॥

यंत्र

बिंदुस्ततोऽन्यार षडश्रयुक्तं, वृत्तं ततो नागदलाग्निवृत्तम् ।
धरा गृहं वह्निनतुटीभिरीड्यं यंत्रं परं नीलसरस्वतीयम् ॥

संपुटमन्त्रं

कूर्चं जपेन्मनोरादौ वनांते तुरंगं जपेत् ।
मनोर्नीलसरस्वत्याः संपुटो वर्णितोमया ॥

## ताराभेद एकजटामन्त्रः ॥ द्वाविंशत्यक्षरी)

मन्त्रः ॥ ॐ ह्रीं नमो भगवत्येकजटे मम वज्रपुष्पं प्रतीच्छ स्वाहा ।

अस्य मन्त्रस्य पतञ्जलि ऋषिः । गायत्री छन्दः । एकजटा देवता ।

ह्रां, ह्रीं इत्यादि षडंगन्यासः । ध्यानादि सर्वं तारा मन्त्रवत् ॥

## नीलसरस्वती मन्त्रः ॥

ॐ १ श्री २ ह्रीं ३ ह्सौः हुं ४ फट् ५ नीलसरस्वत्यै ६ स्वाहा (पंचदशाक्षरीमन्त्रः)
अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । नीलसरस्वती देवता । संख्याक्रमेण न्यासः ।
ध्यानम्ः—

घंटां शिरः शूलमसिं कराग्रैः संबिभ्रतीं चन्द्रकलावतंसाम् ।
प्रमथ्नतीं पादतले पशुं तां भजे मुदा नीलसरस्वतीं ताम् ॥

## ताराभेदेन महाविद्या (विद्याराज्ञी) मन्त्रः (द्वात्रिंशदक्षरः)

१ ऐं ह्रीं श्रीं क्लीं सौः, २ क्लीं ह्रीं ऐं ब्लूं स्त्रीं, ३ नीलतारे सरस्वति, ४ द्रां द्रीं क्लीं ब्लूं सः, ५ ऐं ह्रीं श्रीं क्लीं सौः, ६ सौः ह्रीं स्वाहा ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः अनुष्टुप् छन्दः । सरस्वती देवता ॥ संख्याक्रमेण न्यासः ।
ध्यानम्ः—

शवासनां सर्वविभूषणाढ्यां कर्त्रीं कपालं चषकं त्रिशूलम् ।
करैर्दधानां नरमुंडमालां त्र्यक्षां भजे नीलसरस्वतीं ताम् ॥

अस्यः यन्त्रः ॥ आदौ त्रिकोणं षट्कोण मष्टषोडश पत्रकं । द्वात्रिंशत्पत्रमब्जं स्याच्चतुःषष्टिदलं ततः ॥

त्रिरेखाढ्य धरागेहं चतुरश्रमतः परं ॥ एवं यंत्रं समालिख्य बाह्यतः पूजनं चरेत् ॥

एतेषां पुनश्चरणं चतुर्लक्षजपः । पलाशपुष्पमध्वाज्यैर्दशांशतो होमः ॥

## महाराज्ञी

मन्त्रोद्धारं

तारं परा रमा वह्निः कामः शक्तिः षडक्षरः ।
भगवत्यै च राज्ञ्यै च माया ठद्वयमङ्ग्वले ॥
ॐ ह्रीं श्रीं रां क्लीं सौः भगवत्यै राज्ञ्यै ह्रीं स्वाहा ॥

उत्कीलनं

वह्निमादौ तथा चांते तारं दत्वा महेश्वरि ।
जपेन्मंत्रं महाराज्ञी मनूत्कीलनसिद्धये ॥

संजीवनं

राज्ञी मन्त्रस्य मन्त्रोयं संजीवनकरः स्मृतः ।
कूर्चमादौ च तुरगं जपेदन्ते महेश्वरि ॥

शापमोचनं

तारं वह्नि शरद्राज्ञि ब्रह्मशापं विमोचय ।
विमोचय वनंदेवि विद्येयं शापहारिणो ॥

यंत्रः

बिन्दुत्र्यस्त्रं षडस्त्रं च वृत्ताष्टदलमण्डितं ।
वृत्तत्रयं घरासद्म राज्ञी श्रीचक्रमीरितं ॥

ध्यानं

उद्यद्दिवाकर सहस्ररुचिं त्रिनेत्रां
सिंहासनोपरिगता सुरगोपवीताम् ।
खड्गांबुजाढ्य कलशामृतपात्रहस्तां
राज्ञीं भजामि विकसद्वदनारविन्दाम् ॥

चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थां भुजगोपवीतिनीम् ।
पाशांकुशांभोरुह खड्गधारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम् ॥

ऋषिछन्दः

श्रीराज्ञी मूलमन्त्रस्य ऋषिर्ब्रह्मा समीरितः ।
गायत्रीछन्द ईशानि राज्ञीदेवी च देवता ॥
माया बीजं शरच्छक्तिः कामः कीलकमीश्वरि ॥

संपुटमन्त्रः

वह्नि वाणीं पठेदन्ते जपेत्पार्वति साधकः ।
महाराज्ञ्या मनोरेष मनुः स्यात्संपुटाभिधः ॥

# महाराज्ञी (महाविद्या)

मं मंडूकादि नमः । नवपीठ शक्तीः मेघादि तारा मन्त्रवत् ॥

यंत्रं ॥ त्रिकोण, षट्कोण, अष्ट, षोडश, द्वात्रिंशत्, चतुःषष्टिदलं तद्बहिः त्रिरेखात्मक भूपुरं ॥

१. भूपुराद्बहिः अग्निकोणे वं विघ्नेशाय, वायुकोणे क्ष क्षेत्रपालाय, ईशाने भैरवाय, नैर्ऋते यं योगिनी- वामे श्रीगुरु, इति ॥ भूपुरे प्रथमरेखायां पूर्वादिक्रमेण । अणिमा, लघिमा, महिमा, असिता, वशिता, कामरूपिणी, गरिमा, प्राप्तिः इत्यष्टौसिद्धीः ।

द्वितीयरेखायां पूर्वादि, असितांग, रुरु, चण्ड, क्रोध, उन्मत्त, कपाल, भीषण, संहार भैरवान् ॥ तृतीयरेखायां । ब्राह्म्याद्यष्टमातृकाः पूजयेत् ॥

२. चतुःषष्टिदले प्राचीक्रमेण । कुलशी, कुलनन्दा, वागीशी, भैरवी, उमा, श्री, शांति, चण्डा, धूम्रा ε काली, करालिनी महालक्ष्मी, वकाली, रुद्रकाली, सरस्वती, वाग्वादिनी, नकुली, भद्रकाली, शशिप्रभा, प्रत्यंगिरा, सिद्धलक्ष्मी, अमृतेशी, चण्डिका, खेचरी, भूचरी, सिद्धा, कामाश्री, इगुला, बाला, जया, विजया, अजिता, नित्या, अपराजिता, विलासिनी, अघोरा, चित्रा, मुग्धा, धनेश्वरी, महाचण्डा, विद्या, हंसी, विनायका, वीरगर्भा, भीमा, उग्रा, वेद्या, सद्गति, उग्रेश्वरी, चन्द्रगर्भा, ज्योत्स्ना, सत्या, यशोवती, कुलिका, कामिनी, काम्या, ज्ञानवती, द्राविनी, राविनी, लाविनी, काविनी, शाविनी, हाविनी, इति ६४ शक्तीः पूजयेत् ॥

३. द्वात्रिंशत्दले प्राचीक्रमेण । किराता, योगिनी, वीरा, वेताला, यक्षिणी, हरा, ऊर्ध्वकेशी मातंगी, मोहिनी, दशवर्धिनी, ललिता, दूती, मनोजा, नंदिनी, घरा, दर्दरी, क्षत्रहरता, रक्ता, नेत्रा, विचर्चिका, मातृका, दूरदर्शी, क्षेमेशी, रंगिनी, नटी, शांति, दीप्ता, वज्रहस्ता, धूम्रा, श्वेता, सुमंगला, इति ३२ शक्तयः ।

४. षोडशदले प्राचीक्रमेण । मुग्धा, श्रीकुरुकुल्ला, त्रिपुरा, तोतला, क्रिया, रति, प्रीति, बाला, सुमुखी, श्यामला बला, पिशाची, विदारी, शीतला, वज्रयोगिनी, सर्वेश्वरी ॥१६॥

१. अष्टदले । प्राचीक्रमेण । ॐ नमः पद्मासने पद्मरूपे ऐं ह्रीं क्लीं वद २ वाग्वादिनि स्वाहा ।

२. हसकलह्रीं वद २ चित्रेश्वरि ऐं स्वाहा । ३. ऐं कुलजे ऐं सरस्वति स्वाहा ।

४. ऐं ह्रीं श्रीं वद २ कीर्तीश्वरी स्वाहा । ५. ऐं ह्रीं अन्तरिक्ष सरस्वति स्वाहा ।

६. हस्ख्फ्रें हसौः ख्फ्रीं, ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः घ्नी घट सरस्वति घटे वद २ तर २ रुद्राज्ञया मामाभिलाषं कुरु २ स्वाहा ।

७. ब्लूं ब्लें वद २ त्रीं हुं फट् नीलाश्री ।

८. ऐं हैं ह्रीं किणि किणि विच्चे ॥

९. षट्कोणकेसरेषु प्राचीक्रमेण । डाकिनी, राकिनी, लाकिनी, काकिनी, शाकिनी, हाकिनी ॥

१०. त्रिकोणे प्राचीक्रमेण । ऐं ह्रीं श्रीं बाला, ह्स्रैं ह्स्क्लीं ह्स्रौः भैरवी ।

११. भूपुराद्बहिः इन्द्रादि दशदिक्पालान् ।

वज्राद्यायुधानि संपूजयेत् ॥

## महाराज्ञी आवरणदेवताः

यंत्रं ॥ बिन्दु, त्रिकोण, षडश्र, वसुदल, वृत्तत्रय, चतुर्द्वारशोभित भूपुरम् ॥

पीठदेवताः ॥ मंडूकाय, कालाग्निरुद्राय, मूलप्रकृतये, आधार शक्त्यै, वराहाय, कूर्माय, अनंताय, पृथिव्यै, सुधांबुधये, मध्ये स्वर्णद्वीपाय, कल्पवनाय, मध्ये मणिगेहाय, रत्नवेदिकायै, तन्मध्ये चिन्तामणिमंडपाय, तत्र श्मशानाय, धर्मज्ञानवैराग्यैश्वर्येभ्यो, तद्वामे अधर्माज्ञानावैराग्यानैश्वर्येभ्यो, तदुपरि रं वह्निमण्डलाय अं अर्कमण्डलाय, सों सोममण्डलाय, तं तमसे, रं रजसे, सं सत्त्वाय, मूलं सहस्रदलकमलाय, संविन्नालाय, प्रकृतिमय-पत्रेभ्यो, विकृतिमयकेसरेभ्यो, पंचाश द्बीजभूषितकर्णिकायै, मूलं मातृकामुच्चार्य श्री योगपीठाय नमः ॥

१. भूपुरे ॥ ॐ ह्रीं सर्वाशापरिपूरकचक्राय नमः

ॐ ह्रीं गां गणेश्वर, २ भैं भीमराज, २ ह्रौं कुमार, जुं जांगलेश्वर इति दिक्षु ॥

ततः इंद्रादि दशदिक्पालान्, ततः तेषां आयुधानि च ॥

२. वृत्तत्रये । २ सर्वसंपत्प्रदचक्राय नमः ।
श्रीगुरु, परमगुरु, परापरगुरु परमेष्ठिगुरु ॥

३. वसुदले । २ सर्वार्थसाधक चक्राय नमः ।

पूर्वादि दिक्षु । २ वासुकि, २ नीलनाग, २ तक्षक, पद्मनाग विदिक्षु २ कर्कोटक, २ शंखपाल, कुलिक शेष नाग ।

वसुदले वामावर्तेन, असितांग, रुरु, चण्ड, क्रोध, उन्मत्त, भीषण, कपालि, संहार भैरवाः ।

४. षट्कोणे । २ सर्वसिद्धिप्रदचक्रायनमः ।

वामावर्तेन । २ दुर्गा, शारिका, वैखरी, शिवा, कालिका, त्रिपुरा ॥

५. त्रिकोणे । ईशानाग्नेय अग्रतो । सर्वसंमोहनचक्राय नमः ।

२ लक्ष्मी, सरस्वती, बाला ।

६. बिन्दौ । सर्वानन्दमयचक्रायनमः । २ मूलं भूतेश्वर भूतेश्वरी ॥

२ मूलं श्रीमहाराज्ञी, मूलं श्रीराज्यप्रदा, २ पंचदशाक्षरी,

२ भूतेश्वर, २ खड्ग, २ पद्म, २ कलश, २ सुधापात्र ॥

## ॥ सरस्वती ॥

मन्त्रोद्धारं

तारं माया च वाग्बीजं परा तारं महेश्वरि ।
सरस्वत्यै जगन्मंत्रः प्रसिद्धोऽयं शिवाक्षरः ॥
तारा मायाक्षरैः पूज्या देव्यो देवीसमीपगाः ॥

ॐ ह्रीं ऐं ह्रीं ॐ सरस्वत्यनमः ॥

वाग्देवी च तथा वाणी स्वरस्वत्यनलप्रिया ।
भेदात्स्वेते च विख्याताः फलं वर्षं च तुष्टये ॥

उत्कीलनं

वाग्भवं प्रथमं दद्याद्विम्वांते प्रणवं जपेत् ।
सरस्वतीमनोर्देवि मन्त्रोऽस्त्युत्कीलनामिधः ॥

संजीवनं

शारदामंत्रराजस्य संजीवनमनुः स्मृतः ।
मन्मथं शक्तिबीजं च जपेदादौ च साधकः ॥

शापमोचनम्

प्रणवं वासनां तारं सरस्वति वदेत् ततः ।
दुर्वासशापं मुञ्चाशु ठद्वयं शापमोचनं ॥

यंत्रं ॥

त्रिकोणं सबिंदुं ततः षट्ककोणं सवृत्तं ततो नागपत्रं सुवृत्तम् ।
धरामंदिरं वह्निरेखोज्ज्वलं ते मयोक्तंहि सारस्वतं यंत्रमेतत् ॥

संपुटमन्त्रं

वाग्भवं च मनोरंते पठेत् साधकसत्तमः ।
सरस्वत्या मनोर्देवि मंत्रोयं संपुटामिधः ॥

### सरस्वतीमन्त्रः (एकादशक्षरो मन्त्रः) (शारदातिलकं)

मनुः । ॐ ह्रीं ऐं ह्रीं ॐ सरस्वत्यै नमः ॥

दक्षिणामूर्ति ऋषिः । त्रिष्टुप्छन्दः । वागीश्वरी देवता । ऐं बीजं । ह्रीं शक्तिः नमः कीलकं ।
मन्त्राक्षरन्यास : ॐ ॐ नमः ब्रह्मरंध्रे । ह्रीं नमः भ्रूमध्ये । ऐं नमः दक्षनेत्रे । ह्रीं नमः बामनेत्रे । ॐ नमः

दक्षनासापुटे । सं नमः वाम नासापुटे । रं नमः दक्षकर्णे । स्वं नमः वामकर्णे । त्यैं नमः मुखे । नं नमः लिंगे । मं नमः गुदे ॥ ॐ ऐं इत्येकाक्षरेण षडंगन्यासः ।

ध्यानम्ः—

ॐ वाणींपूर्णनिशाकरोज्ज्वलमुखी कर्पूरकुंदप्रभां
चंद्रार्धाङ्कितमस्तकां निजकरैः संबिभ्रतीमादरात् ॥
वीणामक्षगुणं सुधाढयकशं विद्यां च तुंगस्तनीं ।
दिव्यैराभरणैर्विभूषिततनुं हंसाधिरुढां भजे ॥

## अन्यः सरस्वतीमन्त्रः ॥ (एकादशाक्षरी शारदातिलके)

१ ऐं २ वाचस्पतेऽ ३ मृते ४ प्लवः प्लवः ॥

संख्याक्रमेण, करतल, नेत्रहीनं षडंगन्यासः ।

ध्यानम्ः—

आसीना कमले करैर्जपवटीं पद्मद्वयं पुस्तकं ।
बिभ्राणा तरुणेंदुबद्धमुकुटा मुक्तेंदुकुंदप्रभा ॥
मालोन्मीलितलोचना कुचभराक्रांता भवद्भूतये ।
भूयाद्वागधिदेवता मुनिगणैरासेव्यमानाऽनिशम् ॥

## एकाक्षर सरस्वतीमन्त्रः (तारिणीकल्पः)

"ऐं"

सूर्यग्रहे मधुना कुशमूलेन जिह्वायां (ऐं) इति विलिख्य, तदवलिह्य स्पर्शादारभ्य मोक्षपर्यंतं जपं कुर्यात् । पुनः प्रतिदिन अद्वपर्यंतं तदेकादशशतजपात् देवी प्रसन्ना भवति । जाड्यं नाशयति, विद्यां अवश्यमेव ददाति ॥

## सरस्वतीमन्त्रः नवाक्षरी ॥

क्रीं क्लीं कृष्णादेवि ह्रीं श्रीं ऐं ॥

अस्यमन्त्रस्य । शक्तिर् ऋषिः । बृहतीछन्दः तारिणी देवता ।
ह्रीं बीजं । ऐं शक्तिः । ह्रीं इत्येकाक्षरेण न्यासः ।

ध्यानम्ः—

ॐ कृष्णां लंबोदरीं भीमां नागकुंडलशोभितां ।
रक्तमुखीं ललज्जिह्वां रक्ताम्बरधरां कटौ ॥
पीनोन्नतस्तनयुगां महानागेनवेष्टितां ।
शवस्योपरि देवेशीं तस्योपरि कपालके ॥
नासाग्रध्याननिरतां महाघोरां वरप्रदां ।
चतुर्भुजां दीर्घकेशीं दक्षिणेनोर्द्धवाहुना ॥
बिभ्रतीं नलिनीमेकां वामोर्द्धेपानपात्रकं ।
वराभयधरां देवीं मध्यस्थां दक्षवामयोः ॥
पिबंतीं रौधिरीं धारां पानपात्रं सदा शिवे ।
सर्वसिद्धिप्रदां देवीं नित्यां गिरिनिवासिनीं ॥
लोचनत्रयसंयुक्तां नागयज्ञोपवीतिनीं ।
दीर्घास्यां दीर्घजंघांच दीर्घांगीं दीर्घजिह्विकां ॥
चन्द्रसूर्याग्निभेदेन लोचनत्रय संयुतां ।
शत्रुनाशकरीं देवीं महाभीमां वरप्रदां ।
व्याघ्रचर्मशिरोबद्धां जगत्त्रयविभाविनीं ।
साधकानां सुखं कर्त्री सर्वलोकभयंकरीं
एवंभूतां महादेवीं तारिणीं प्रणमाम्यहं ॥

पुनश्चरणे एकलक्षजपः ।

## ॥ श्रीधारणासरस्वतीमन्त्रः ॥

१ ॐ ऐं नमो ब्रह्मण, २ धारणंमे अस्त्व, ३ निराकरणं, ४ धारयिता भूयासं, ५ ॐ क्लीं कर्णयोश्रुतं, ६ माच्योद्र्व ममामुष्य ॐ सौः ।।

अस्य मन्त्रस्य । निराकरण ऋषिः । अनुष्टुप्छन्दः । धारणासरस्वती देवता ऐं बीजं । क्लीं शक्तिः । सौः कीलकं । संख्याक्रमेण न्यासः ।

ध्यानम्ः—

सुरासुरैः सेवितपादपंकजा, करे विराजत्कमनीयपुस्तका ।
विरिंचिपत्नी कमलासनस्थिता, सरस्वती नृत्यतु वाचि मे सदा ॥
चतुरास्यं चतुर्बाहुं पद्मस्थं भुवनेश्वरं ।
सरस्वत्यासमाश्लिष्टपार्श्वं परमपूरुषम् ।

अक्षमालऽभयाभीष्टं कमण्डलुधरं परं
सर्वविद्याधिपं देवं ब्रह्माणं सततं स्तुमः ॥

## वाग्वादिनी त्रयोदशाक्षरमन्त्रः ॥

अस्य मन्त्रस्य । दक्षिणामूर्ति ऋषिः । पंक्तिः छन्दः श्रीवाग्वादिनी देवता । ऐं बीजं । सौः शक्तिः । क्लीं कीलकं । बालाया न्यासः ।

पुस्तकजपवटहस्ते: वरदाभयचिह्न चारुबाहुल ते ।
कर्पूरामलदेवी वागीश्वरि शोधयाशु मम चेतः ॥

मनुः ऐं क्लीं सौः वदवदवाग्वादिनि स्वाहा ॥

## हंसवागीश्वरीमन्त्रः

मनुः । ॐ ह्रीं ऐं सौः ॐ सरस्वत्यै नमः (एकादशाक्षरः)

अस्य मन्त्रस्य । कण्वऋषिः । त्रिष्टुप्छन्दः । हंसवागीश्वरी देवता ।

ऐं बीजं । ह्रीं शक्तिः । ब्रह्म बीजं । माया शक्तिः । जीवो बीजं । बुद्धिः शक्तिः । उदानोबीजं । कुण्डलिनी शक्तिः । ॐ ह्रीं शिरसि । ऐं सौः कर्णरंध्रयो । ॐ सं नेत्रयोः । रं स्वं नासारंध्रयो । त्यैं मुखे । नं लिंगे । मः गुदे । ह्रां ह्रीं इत्यादि न्यासः ।

ध्यानम् :—

वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुंदप्रभां
चन्द्रार्धाङ्कितमस्तकां निजकरैः संबिभ्रतीमादरात् ।
वीणामक्षगुणं सुधाढ्यकलशं विद्यां च कुंभस्तनीं,
दिव्यैराभरणै विभूषिततनूं हंसाधिरूढां भजे ॥

पुनश्चरणं द्वादशलक्षं । सितांबुजपुष्पै द्वादशसहस्रं होमः अथवा नागचंपक पुष्पैः ।

## मन्त्रांतरं एकादशाक्षरः

मनुः (ऐं) वाचस्पतेऽमृते प्लुवः प्लुं ॥ (वाग्भवं विना दशवर्णमन्त्रः)

ऋषिः छन्दः पूर्ववत् । ऐं बीजं । प्लुं शक्तिः । सरस्वती देवता ।

१ ऐं, २ वाचस्पते, ३ ऽमृते, ४ प्लुवः, ५ प्लुं, ६ सर्वबीजेन च न्यासः ।

ध्यानम्:—

आसीना कमले करैर्जपपटीं पद्मद्वयं पुस्तकं
बिभ्राणा तरुणेन्दुबद्धमुकुटा मुक्तेन्दुकुन्दप्रभा ।
भालोन्मीलितलोचना कुचभराक्रांता भवद्भूतये
भूयाद्वागधिदेवता मुनिगणैरासेव्यमानाऽनिशम् ॥

रुद्रलक्षं पुरश्चरणं । दशांशं घृतेन होमं । पलाशपुष्पैः वा, कदंबकुसुम श्रीफलैर्वा होमः । नंन्द्यावर्त-कुसुमैर्वा होमः । अचिरात् वाग्वल्लभो भवति ॥

ब्राह्मीरसे स्वकल्काढये कपिलाज्यं पचेज्जपन् ।
पिबेद्दिनादौ तं नित्यं सर्वशास्त्रार्थविद्भवेत् ॥
अनया विद्यया जप्तं ब्राह्मीपत्र प्रभक्षणात् ।
न विस्मरति मेधावी श्रुत्वा वेदागमान्पुनः ॥
बहुना किमियं विद्या जपतां कामदो मणिः ॥

कामदोमणिरितिः नेत्ररोगं । मूत्राशो तिथिलक्षं जप्त्वा योऽङ्कोलसर्पिषा जुहुयात् । अष्टसस्त्रं वेत्ति सः भूत भविष्य वर्तिष्य च इति ॥ ब्राह्मीघृतं ॥ घृताश्चतुर्गुणे ब्राह्मी रसैः घृतं पचेत् ।

(देवीं) हुत्वा पलाशकुसुमैः वाक्श्रियं महतीं व्रजेत् । ब्राह्मीधृतं पिबेज्जप्त्वा कवित्वं वत्सराद्भवेत् ॥

## धुमावति मंत्रः ॥

अस्य मन्त्रस्य । क्षपणक ऋषिः । गायत्रीछन्दः । श्री धूमावती देवता । धूं बीजं । ह्रीं शक्तिः । स्वाहा कीलकं । ह्रां इत्यादि न्यासः ।

ध्यानम्:—

काकारूढातिवृद्धा प्रविरलवदना मुक्तकेशातिमत्रा
धूम्राक्षी क्षुद्रहन्त्री प्रतिभयचरिता चंचला कामलोला ।
हृष्टा पुष्टालसांगी वल्मजलवसना व्यक्तगर्वातिरुष्टा
भूतिं धूमावती नः प्रदिशतु विविधां धूतशूलाग्रहस्ता ॥

मनुः धूं खे खे उरिधूमे २ कुलधूमे अन्तर्धूमे २ विश्वधूमे २ मम शत्रून मारय २ हुं फट् स्वाहा ॥
अपरोमंत्र ॥ ह्रीं धूं २ धूमावति खे खे शत्रुं हन २ हुं फट् ॥

## धूमावती मंत्रः

१ धूं धूं, २ धू ३ मा ४ व ५ ति ६ स्वाहा । (अष्टाक्षरि)

अस्य मन्त्रस्य । पिप्पलादऋषिः । निवृच्छन्दः । ज्येष्ठा देवता (धूमावती देवता) धूं बीजं । स्वाहा शक्तिः । धूमावती कीलकं । बिन्दुयुतमूलेन न्यासः (तत्रांतरे धां धीं इत्यादि न्यासः)

ध्यानम्:—

**अत्युच्चा मलिनांबराखिलजनोद्वेगावहा दुर्मना,**
**रूक्षाक्षित्रितया विशालदशना सूर्योदरी चंचला ।**
**प्रस्वेदांबुचिता क्षुधाकुलतनुः कृष्णातिरूक्षाप्रभा**
**ध्येया मुक्तकचा सदाप्रियकलिर्धूमावती मन्त्रिणा ।।**

पुनश्चरणं ।। जपेत्कृष्णचतुर्दश्यां पुनश्चरणसिद्धये । उपवासरतो मन्त्री शून्यागारे दिवानिशं ।। स्मशान-विपिने वापि जपेल्लक्षं तु वाग्यतः । मोष्णीषः सार्द्रवासाश्च पुनश्चरणकर्मणि ।। जुहुयाल्लवणोपेतराजिकां निशि तत्फलम् ।।

## बगलामुखी मंत्रः ।।

१. ॐ ह्लीं, २ बगलामुखि, ३ सर्वदुष्टानां, ४ वाचं मुखं पदं स्तंभय, ५ जिह्वां कीलय, बुद्धि विनाशय ।। ६ ह्लीं ॐ स्वाहा ।। (षट्त्रिंशदक्षरीमन्त्रः)

अस्य मन्त्रस्य । नारद ऋषिः । बृहती छन्दः । बगलामुखी देवता ।

ह्लीं बीजं । स्वाहा शक्तिः । संख्याक्रेण न्यासः ।

ध्यानम्:—

**सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं,**
**हेमाभांगरुचिशशांकमुकुटां सच्चंपकस्रग्युताम् ।**
**हस्तैर्मुद्गरपाशवज्ररशनाः संबिभ्रतीं भूषणै**
**र्व्याप्तांगीं बगलामुखींत्रिजगतां संस्तंभिनीं चिन्तयेत् ।।**

एवं ध्यात्वा जपेल्लक्षमयुतं चंपकोद्भवैः । कुसुमैर्जुहुयात्पीठे पूर्वोक्ते प्रजपेदिमां । पीतांबरधरो भूत्वा पूर्वाशाभिमुखं स्थितः । लक्षमेकं जपेन्मन्त्रं हरिद्राग्रन्थिमालया ।। ब्रह्मचर्यरतो नित्यं प्रयतो ध्यानतत्परः । प्रियंगाश्च रसेनापि पीतपुष्पैश्च होमयेत् । जपमन्त्रप्रयोगेण मन्त्र चाप्ययुतं जपेत् ।

बगलामुखी ब्रह्मास्त्रंमन्त्रकवचं अग्रे द्रष्टव्यं ।।

## धूमावती आवरणदेवताः ॥

यंत्रं ॥ षट्कोणं, वृत्तं, अष्टदलं, एकरेखा, भूपुरं द्वारयुतं ॥

पीठ देवताः मं मंडूकादि...नमः । नवपीठ शक्तीः । पूर्वाद्यष्टसुदिक्षु, मध्ये च । कामदा, मानदा, नक्ता, मधुरा, मधुरानना, नर्मदा, भोगदा, नन्दा, मध्ये प्राणदा ॥

ॐ धूमावती योगपीठायनमः ।

मध्ये मूलं धू धू धूमावती स्वाहा ।

१. षट्कोण केसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये च हृदयादि षडंगयुवती ।

२. अष्टदले पूज्यपूजकयोरंतरालं प्राचीं दिशं प्रकल्प्य प्राचीक्रमेण ।
क्षुधा, तृष्णा, रति निद्रा, निर्ऋति, दुर्गति, रुषा अक्षमा,

३. भूपुरे, तद्बहिः इन्द्रादि दशदिक्पालाः तेषां आयुधानि च ॥

## बगलामुखी ॥

यन्त्रं

पीठदेवताः । मं मण्डूकादि....नमः । नवपीठशक्तीः जयादि-मंगलांताः ॥

ॐ ह्लीं बगलामुखि योगपीठाय नमः ।

१. त्रिकोणमध्ये ऐशान्यादिक्रमेण, सत्वाय, रजसे, तमसे ।

२ षट्कोणकेसरेषु आग्नेय्यादि चतुर्विदिक्षु मध्येदिक्षु च ॥ हृदयादि षडंगयुवती ।

३. अष्टदले पूज्यपूजकयोरंतराले प्राचीं प्रकल्प्य, प्राचीक्रमेण । ब्राह्म्यादि अष्टमातृका ।

४. अष्टदले ब्राह्म्यादि समीपे, असितांग भैरवादि । अष्ट भैरवा ।

५. षोडशदलेषु प्राची क्रमेण, मंगला, स्तंभिनि, जृंभिणि, मोहिनि, वश्या, बला, अचला, भूधरा, कल्मषा, धात्रि, कलना, कालाकर्षिणी, भ्रामिका, मंदगमना, भोगस्था, भाविका ।

६. भूपुराभ्यन्तरे पूर्वादिचतुर्दिक्षु । गणपति, वटुक, योगिनी, क्षेत्रपालाश्च ।

७. भूपुराद्बहि : इन्द्रादिदशदिक्पालाः । तेषां आयुधानि च ॥

## ॥ बगलमुखी ॥

मन्त्रोद्धारः

तारं मृत्स्नां च देवेशि बगलामुखि सर्वत्र ।
दुष्टानां वाचं मुखं पदं स्तंभय युग्मकम् ।
जिह्वां कीलय युग्मं च मृत्तारं ठद्वयं मनुः ॥
ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तंभय २ जिह्वां कीलय २ ह्लीं स्वाहा ॥
बीजद्वये न संपूज्याः परिवारगताः पराः ॥

तारं मठं बगलामुखि सर्वदुष्टानां वाचं मुखं स्तंभय द्विः ।
पदं जिह्वां कीलय द्विर्मठं वा तारं नीरं ब्रह्मणोऽस्यास्त्रविद्या ॥

उत्कीलनं

मृद्बीजं च मनोरादौ वनांते प्रणवं जपेत् ।
मन्त्रोऽयं बगलामुख्या मन्त्रोत्कीलनशिद्धिदः ॥

संजीवनं

बगलामन्त्रराजस्य भवेत् संजीवनं परम् ।
तारकं मूलमन्त्रांते त्रिरुच्चार्य जपेत् प्रिये ॥

शापमोचनम्

तारं मृत्स्नां च बगले रुद्रशापं विमोचय ।
तारं मृदं वनं देवि विद्येयं शापहारिणी ॥

यंत्रं ॥

बिन्दुस्त्रिकोणं च रसारवृत्त वस्वग्र वृत्ताञ्चितषोडशारम् ।
वृत्तत्रयं भूसदनत्रयं च श्रीचक्रमेतद्बगलामुखीयम् ॥

ध्यानं

नानारत्ननिबद्धरम्यमुकुटां पीतांबरां भाग्यदां
घर्मांश्वग्निशशांकरश्मिनयनां सिंहासनस्थां शिवाम् ।
सच्चण्डीशरतां (सच्चंडांशुनिभां महार्घमणिभिरुद्भासितांगी सदा
देवीं श्रीबगलामुखीं हृदि भज भक्तेष्टदां मुक्तिदाम् ।

संपुटमन्त्रः

रसनां मृत्तिकाबीजं मनोरंते पठे त्सुधीः ।
श्रीदेव्या बगलामुख्या मन्त्रः सम्पुटकाभिधः ॥

श्री देवी रहस्योक्त (रुद्रयामळं) मन्त्रोद्धारादि

॥ श्रीबाला ॥

मन्त्रोद्धारः

वाग्भवं कामराजश्च शक्तिर्मध्येऽभिधं न्यसेत् ।
नमोऽन्ते देविबालाया मन्त्रोऽयं चाष्टवर्णकः ॥
ऐं क्लीं सौः बालायै नमः ॥

उत्कीलनं

प्रथमं देवि बालायास्त्र्यक्षर्याः श्रृणु पार्वति ।
वाणीमन्ते त्रिरुच्चार्य भवेदुत्कीलनं मनोः ॥
क्लीं सौः ऐं

संजीवनं

बालाया देवि त्र्यक्षर्याः शक्तिमादौ पठेत् सुधीः ।
संजीवनाख्यो मन्त्रोऽयं दिव्यो मन्त्रस्य सिद्धये ॥
सौः क्लीं ऐं

शापमोचनं

तारं परां रमां बाले शिवशापं विमोचय ।
ॐ ह्रीं श्रीं बाले शिवशापं
विमोचय हरं नीरं बालाशापहरो स्मृता ॥
विमोचय २ स्वाहा

ऋषिच्छन्दआदि

दक्षिणामूर्तिपंक्तौ च मुनिश्छन्दः क्रमात् स्मृतं ।
देवता त्रिपुराबाला आद्यंते बीजशक्तिके ॥
क्लीं कीलकं समादिष्टं धर्मकामार्थमुक्तये ॥
शिरसि वदने देवि हृदये गुह्यदेशके ।
पादयोर्नाभिकमले सर्वांगे च तथा न्यसेत् ॥

करन्यासं षडंगं च वीजैः कुर्यान्महेश्वरि
ऋष्या ध्यानं प्रवक्ष्यामि साधकानां हितप्रदं ॥

ध्यानं

रक्तांबरां चन्द्रकलावतंसां समुद्यदादित्यनिभां त्रिनेत्रां ।
विद्याक्षमालाभयदानहस्तां ध्यायामि बालामरुणाम्बुजस्थाम् ॥
इति ध्यात्वा महादेवीं जपेन्मन्त्रं समृद्धिदं ।
लक्षत्रयं पुरश्चर्या विधौ साधकसत्तमः ॥

यंत्रः

बिन्दुत्रिकोणवसु (रस) कोणक नागपत्र
वृत्तत्रयांचितमहीसदनत्रयंच ।
बालादिचक्रमिदमार्तिहरं गिरीशे
ब्रह्मेन्द्रविष्णुनमितं गदितं मया ते ॥

संपुटमन्त्रः

बालायाः शक्तिबीजं तु दद्यादादौ महेश्वरि ।
बालात्रिपुरसुन्दर्याः सम्पुटाख्योऽस्त्ययं मनुः ॥

## षोडशीभेदेन बालत्रिपुरामंत्र प्रयोगः ॥

मनुः ॥ ऐं क्लीं सौः ॥ इति त्र्यक्षरो मन्त्रः ॥

देव्या शप्ता कीलिता च विद्येयं तत्र सिद्धिदा । शापोद्धारंमयोत्कीलं विधाय जयमाचरेत ॥ शापोद्धार मन्त्रः ॥ ऐं ऐं सौः क्लीं क्लीं ऐं सौः क्लीं क्लीं ऐं सौः क्लीं क्लीं ॥ (नवार्ण मन्त्रः) एवं नवार्णः शतं जपः शापनिवर्तक ॥

अथ उत्कीलनमन्त्रः ॥ ॐ क्लीं नमः (शतजपं)

अथ त्रयाणां बीजानां दीपनीमाह ॥

ऐं इति वाग्बीजस्य दीपनी ॥ वदवद वाग्वादिनी ऐं ॥ शतं जपेत् ॥

क्लीं इति कामबीजस्य दीपनी ॥ क्लिन्ने क्लेदिनि महाक्षोभं कुरु ॥ ॥ शतं जपेत् ॥

सौः इति कामबीजस्य दीपनी ॥ ॐ मोक्षं कुरु ॥ शतं जपेत् ॥

एवं कृत्वा पुरश्चरणं कुर्यात् ॥

अस्य मन्त्रस्य । श्री दक्षिणामूर्ति ऋषिः । पंक्तिः छन्दः । त्रिपुराबाला देवता । सौः बीजं । क्लीं शक्तिः ॥ ॐ ऐं नमः नाभ्यादि पादांतं । ॐ क्लीं नमः हृदयादि नाभ्यन्तं । ॐ सौः नमः मूर्धादि हृदयांतं । विन्यस्य ।

ॐ ऐं नमः वामकरे । ॐ क्लीं नमः दक्षिणकरे । ॐ सौः नमः करयोः ।

ॐ ऐं नमः मूर्ध्नि । ॐ क्लीं नमः गुह्ये । ॐ सौ नमः वक्षसि ।

ॐ ऐं रत्यै नमः गुह्ये । ॐ सौः प्रीत्यै नमः हृदि । ॐ क्लीं नमः भ्रूमध्ये ॥

ॐ ऐं अमृतेश्यैनमः गुह्ये । ॐ सौः योगेश्यैनमः हृदि । ॐ क्लीं विश्वयोन्यैनमः भ्रूमध्ये । ह्रीं मनोभवाय नमः शिरसि । क्लीं मकरध्वजायनमः मुखे । ऐं कन्दर्पायनमः हृदि । ब्लूं मन्मथाय नमः गुह्ये । स्त्रीं कामदेवायनमः चरणयोः तनः

द्रां द्राविण्यैनमः शिरसि । द्रीं क्षोभिण्यैनमः पादयोः । क्लीं वशीकरिण्यै नमः मुखे । ब्लूं कर्षिण्यैनमः गुह्ये । स्त्रीं संमोहिन्यैनमः हृदि ।

| | | |
|---|---|---|
| आं सौः क्लीं ऐं | अंगुष्टा | हृदयाय |
| ईं सौः क्लीं ऐं | तर्जनी | शिरसे |
| ऊं सौः क्लीं ऐं | मध्यमा | शिखायै |
| ऐं सौः क्लीं ऐं | अनामिका | कवचाय |
| औं सौः क्लीं ऐं | कनिष्टिका | नेत्रत्रयाय |
| अः सौः क्लीं ऐं | करतल | अस्त्राय |

ध्यानम्ः—

**रक्तांबरां चन्द्रकलावतंसां समुद्यदादित्यनिभां त्रिनेत्राम् ।**
**विद्याक्षमालाभयदानहस्तां ध्यायामि बालामरुणांबुजस्याम् ॥**

पुरश्चरणं त्रिलक्षजपः । किंशुकपुष्पैः । करवीरपुष्पैर्वामधुरान्वितैर्दशांशहोमः एवमेव भजेद्बालामीशः स्याद्धनविद्ययोः ॥

## बालामन्त्रस्य, कार्यपरत्वेन ध्यान भेदाः ॥

**लक्ष्मीप्राप्तौ । मातुलुंगपयोजन्महस्तांकनकसन्निभां ।**
**पद्मासनगतां बालां लक्ष्मीप्राप्तौ विचिन्तयेत् ॥**

ज्ञानाप्तये ॥ वरपीयूषकलशपुस्तकाभीतिधारिणीं । सुधां स्रवंतींज्ञानाप्तौब्रह्मरंध्नेविचिन्तयेत् ॥
रोगनाशनं ॥ शुक्लांबरां शशांकाभांरोगनाशे स्मरेच्छिवां । अकारादि क्षकाशन्त वर्णावयवरूपिणीम् ।
वशीकरणं ॥ सृणिपाशधरां देवीं रत्नालंकार भूषितां । प्रसन्नामरुणां ध्याये द्वशीकरणसिद्धये ॥

## अथ प्रत्येकबीजमन्त्रस्य जपध्यानविधिः ॥

"ऐं"

ध्यानम्ः—

विद्याक्षमाला सु कपालमुद्राराजत्करां कुंदसमानकांतिम् ।
मुक्ताफलालंकृति शोभितांगीं बालां स्मरेद्वाङ्मयसिद्धिहेतोः ॥
ध्यात्वैव वाग्भवं लक्षत्रयं शुक्लांबरावृतः ।
शुक्लचन्दन लिप्तांगो मौक्तिकाभरणान्वितः ॥
जपित्वातद्दशांशेन पलाशकुसुमैर्नवैः ।
जुहुयान्मधुरावतैर्यः स भवेद्वुर्ताप्रियः ॥

"क्लीं"

ध्यानम्ः—

भजेत्कल्पवृक्षाध उद्दीप्तरत्नासने,
सन्निषण्णां मदाघूर्णिताक्षीम् ।
करैर्बीजपूरं कपालेषुचापं सपाशांकुशं रक्तवर्णं दधानाम् ॥
ध्यात्वा देवींजपेल्लक्षत्रयं यो मध्यबीजकं ।
रक्तवस्त्रावृतो रक्तभूषणो रक्तलोचनः ॥
दशांशं मालतीपुष्पैश्चन्द्रचन्दन लोलितैः ।
जुहुयात्तस्य वश्यास्युः त्रिलोकीजनताक्षणात् ॥

"सौः"

ध्यानम्ः—

व्याख्यांनमुद्रामृतकुंभ विद्यामक्षस्रजं संदधंतीकराग्रैः ।
चिद्रूपिणीं शारदचन्द्रकांति बालां भजेन्मौक्तिक भूषितांगीम् ॥
ध्यात्वैवंचरमं बीजं जपेल्लक्षत्रयं सुधीः ।
सितवस्त्रानुलेपाढ्यं आत्मानं देवतां स्मरेत् ॥
मालतीकुसुमैर्हुत्वा चन्दनाक्तैर्दशांशतः ।
लक्ष्मीविद्यासुकीर्तीनामाधारो जायतेऽचिरात् ॥

गायत्री ॥ क्लीं त्रिपुरादेवि विद्महे कामेश्वरी धीमहि । क्लिन्ने तन्नः प्रचोदयात् ॥

ऐं सौं क्लीं इति जपे अरिनाशः । क्लीं ऐं सौः इति वशीकरणं । क्लीं सौः ऐं—मुक्तिः ॥

[illegible]

## बालामन्त्रभेदाः ॥

१. ह्रीं क्लीं हसौः — त्र्यक्षरी

२. ह्रीं क्लीं हसौः हसौः क्लीं ह्रीं — षडाक्षरी

३. श्रीं ह्रीं क्लीं ऐं क्लीं सौः ह्रीं क्लीं श्रीं — नवाक्षरी

४. ऐं क्लीं सौः बालात्रिपुरे स्वाहा — दशाक्षरी ।

५. ऐं क्लीं सौः बालात्रिपुरे सिद्धिं देहि नमः । — चतुर्दशाक्षरी

६. ह्रीं श्रीं क्लीं त्रिपुरे भगवति कवित्वं देहि स्वाहा । — षोडशाक्षरी

७. स्क्लीं क्ष्म्यौ ऐं त्रिपुरे सर्ववांछित देहि नमः स्वाहा । — सप्तदशाक्षरी

८. ह्रीं ह्रीं ह्रीं प्रौढत्रिपुरे आरोग्यमैश्वर्य च देहि स्वाहा । — अष्टादशाक्षरी

९. ह्रीं श्रीं क्लीं त्रिपुरमर्दने सर्वंशुभं साधय स्वाहा । — अष्टादशाक्षरी

१०. ह्रीं श्रीं क्लीं बालात्रिपुरे मदायत्तां विद्यां कुरु नमः स्वाहा । — विंशत्यक्षरी

११. ह्रीं श्रीं क्लीं परापरे त्रिपुरे सर्वमीप्सितं साधय स्वाहा — विंशत्यक्षरीः

१२. क्लीं क्लीं श्रीं श्रीं ह्रीं त्रिपुराललिते मदीप्सितांच योषितं देहि वांछितं कुरु स्वाहा ॥ — अष्टाविंशत्यक्षारी

१३. क्लीं क्लीं क्लीं श्रीं श्रीं श्रीं ह्रीं ह्रीं ह्रीं त्रिपुरसुन्दरि सर्वं जगत्ममवशे कुरु कुरु मह्यं बलं देहि स्वाहा — पंचविंशत्यक्षरी ॥

एतेषां मन्त्रणादक्षिणामूर्तिऋषिः । गायत्रीछन्दः । त्रिपुराबाला देवता ॥

ध्यानम्ः—

पाशांकुशौ पुस्तकमक्षसूत्रं करैर्दधाना सकलामरार्च्या ।
रक्ता त्रिनेत्रा शशिशेखरेयं ध्येयाऽखिलर्द्ध्यै त्रिपुरा त बाला ॥

पुनश्चरणं लक्षजपः । अन्यत्सर्वं पूर्ववत् ॥

रुद्रयामले ॥ वाग्भवंकामराजस्य शक्तिर्मध्येऽभिधं न्यसेत् । नमोंते देविबालाया मन्त्रोयं चाष्टवर्णकः ॥

ऐं क्लीं सौः बालायै नमः ॥

## ॥ त्र्यक्षरात्मको भुवनेश्वरीमन्त्रः ॥

"ऐं ह्रीं श्रीं" ऋष्यादिकं सर्वं एकाक्षरमन्त्रवत् ।

न्यासे ऐं संयोजिते ह्रां ह्रीं इत्यादि ऐं ह्रां ऐं ऐं ह्रीं ऐं इत्यादि ॥

ध्यानम्:—

सिंदूरारुणविग्रहां [illegible]
तारानायकशेखरां स्मितमुखी मापीनवक्षोरुहाम् ।
पाणिभ्यां मणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थसव्यचरणां ध्यायेत्परामंबिकाम् ॥

पूजादिकं पूर्ववत् । पुनश्चरणं द्वादशलक्षजपः ।

## ॥ आम्नायमन्दारे ॥ भुवनेश्वरि ॥

अस्य मन्त्रस्य । वेदव्यास ऋषिः । अनुष्टूप् छन्दः । श्रीभुवनेश्वरी देवता ।
ह्रीं बीजं । श्रीं शक्तिः । ॐ कीलकं । ह्रां इत्यादि न्यासः ।

ध्यानम्:—

उद्यद्भास्वत्समाभां विजितनवजपामिंदुखण्डावतंसां
ज्योतिर्मौलिं त्रिनेत्रां विविधमणिलसत्कुंडलां पद्महस्ताम् ।
हारग्रैवेयकांचीगुणमणिवलयोद्यद्विचित्रांबराढ्यां
देवीं पाशांकुशाढ्यामभयवरकरामंबिकां तां नमामि ॥

मनुः ॐ श्रीं ह्रीं श्रीं ॥

## बाला आवरणदेवताः

चक्रं । नवयोन्यात्मकं, यन्त्रं, बहिरष्टदलं, भूपुरं ॥

पीठदेवताः ॥ मं मंडूकादि....नमः । नवपीठशक्तीः पूर्वाद्यष्टदिक्षु मध्ये च इच्छा, ज्ञान, क्रिया, कामिनी, कामदायिनी, रति, रतिप्रिया नन्दा । मध्ये मनोन्मनी ॥

ह्सौः सदाशिव महाप्रेतपद्मासनाय नमः ॥

१. देवीवामकोणे इरत्यै । दक्षकोणे प्रीत्यै । देव्यग्रे मनोभवायै ।

२. मध्ययोनेर्बहिर्भागे आग्नेय्यादि चतुर्दिक्षु क्रमेण । आं सौ क्लीं ऐं हृदया । ईं सौ क्लीं ऐं शिरसे । ऊं ३ शिखायै । ऐं ३ कवच, मध्ये औं ३ नेत्रत्रयं, अं: ३ अस्त्राय इति अङ्गदेवताः ।

३. मध्ययोनेः बहिर्भागे पूर्वादिचतुर्दिक्षु । ह्रीं मनोभवाय, क्लीं मकरध्वजाय, एं कंदर्पाय, ब्लूं मन्मथाय, मध्ये श्रीं कामदेवाय ।

४. मध्ययोनेर्बहिः मनोभवाय समीपे द्रां द्राविण्यै, द्रीं क्षोभिण्यै, क्लीं वशीकरिण्यै ब्लूं आकर्षिण्यै सः सर्वसंमोहिन्यै ॥

५. अष्टदलेषु पूज्यपूजकयोरंतरालं प्राची तदनुसारेण अन्या दिशः प्रकल्प्य, प्राचीक्रमेण सुभगायै, भगायै, भगसर्पिण्यै, भगमालायै, अनंगसंगायै, कुसुमापरायै, अनंगमेखलायै अनंगदमनायै इत्यष्टौ ॥

६. अष्टदलमूले प्राचीक्रमेण ब्राह्म्याद्यष्टमातृकाः ।

७. अष्टदलमध्ये अष्ट भैरवान् ॥

८. अष्टदलाग्रेषु प्राचीक्रमेण । कामरूपपीठाय, मलयपीठाय, कोल्लगिरिपीठाय चौहार पीठाय, कुलांतकपीठाय, जालंधरपीठाय, उड्यानपीठाय, कोट्टपीठाय ॥

९. भूपुराभ्यन्तरे पूर्वादिक्रमेण दशदिक्षु । हेतुकाय, त्रिपुरांतकाय, वेतालाय, अग्निजिह्वाय, कालांतकाय, कपालाय, एकपादाय, भीमरूपाय, मलयाय, हाटकेश्वराय ॥

१०. भूपुराद्बहिः इन्द्रादि अष्टदिक्पालान् ।

११. भूपुराद्बहिः तेषां आयुधानि ॥

तद्बहिः पूर्वे बं बाहुकाय, दक्षिणे यां योगिनीभ्यो, पश्चिमे क्षं क्षेत्रपालाय, उत्तरे गं गणपतये । आग्नेय्यां वसुभ्यो, नैर्ऋत्यां सूर्येभ्यो, वायव्यां शिवेभ्यो ऐशान्यां भूतेभ्यो नमः ॥

## ॥ भुवनेश्वरीतन्त्रः ॥

"ह्रीं"

अस्य श्री भुवनेश्वरी महामन्त्रस्य । शक्तिर्ऋषिः । गायत्री छन्दः । भुवनेश्वरी देवता ।

हं बीजं । ईं शक्तिः । रं कीलकं । ह्रां ह्रीं इत्यादि न्यासः ।

मन्त्रवर्ण न्यासः । ॐ हृल्लेखायै नमः शिरसि । ॐ ऐं गगनाय नमः मुखे ।

ॐ उं रक्तायैनमः हृदि । ॐ इं करालिकायैनमः गुह्ये । ॐ महोच्छुष्मायैनमः पादयोः पंचवक्त न्यासः । ॐ गायत्री सहित ब्रह्मणे नमः मूले । ॐ सावित्री सहितविष्णवे नमः दक्ष कपोले । ॐ वागीश्वरी सहित महेश्वराय नमः वामकपोले ।

ॐ श्री सहितधनपतये नमः वामकर्णाग्रे । ॐ रतिसहित स्मराय नमः मुखे ॥

ॐ पुष्टि सहित गणपतये नमः दक्षकर्णोपरि । ॐ शंखनिधयेनमः दक्षगंडकर्णांतराले । ॐ पद्मनिधयेनमः वाममंडकर्णांतराले । ॐ ह्रीं मूलदेवताभुवनेश्वर्यैनमः मुखे ॥

ॐ गायत्री सहित ब्रह्मणेनमः कण्ठमूले । ॐ सावित्री सहित विष्णवेनमः दक्षिणस्तने । ॐ वागीश्वरी सहित महेश्वराय नमः । वामस्तने । ॐ श्री सहित धनपतयेनमः वामांसे । ॐ रति सहित स्मराय नमः हृदयकमले । ॐ पुष्टि सहितगणपतयेनमः दक्षिणांसे । ॐ शखनिधयेनमः दक्षपार्श्वे ।

ॐ पद्मनिधयेनमः वामपार्श्वे । ॐ ह्रीं मूलदेवताभुवनेश्वर्यै नमः नाभौ ॥ ततः । ब्राह्म्यै नमः मूले । ॐ माहेश्वर्यैनमः वामांसे । ॐ कौमार्यै नमः वामापार्श्वे । ॐ वैष्णव्यैनमः जठरे । ॐ वाराह्यै नमः दक्षपार्श्वे । ॐ इंद्राण्यैनमः दक्षांसे । ॐ चामुण्डायै नमः गले । ॐ महालक्ष्म्यैनमः हृदि ॥ ततो हृदये करं दत्वा ॐ ह्रीं मूल देवता भुवनेश्वर्यैनमः । सर्वांग व्यापकं भव ॥ इति विन्यस्य देवतारूपं भावयन् ध्यायेत् ॥

ॐ उद्यदिनद्युतिमिंदुकिरीटां तुंगकुचां नयनत्रययुक्ताम् ।
स्मेरमुखीं वरदांकुशपाशाभीतिकरां प्रभजे भुवनेशीम् ॥

पुरश्चरणं द्वात्रिंशल्लक्षजपः । १ त्रिस्वादुक्तैः २ प्रजुहुयादष्टद्रव्यैर्दशांशतः ।

१ घृतमधुशर्करा । २ अश्वत्थोदुंबरप्लक्षन्यग्रोधसमिधस्तिलाः । सिद्धार्थपायसाज्यानि द्रव्याण्यष्टौ विदुर्बुधाः ॥

## भुवनेश्वरी मन्त्र भेदाः ॥

एकाक्षर्यादि सर्व मन्त्राणां । शक्ति ऋषिः । गायत्रीछन्दः । त्र्यस्त्रिंशदमरगुसेविता भुवनेश्वरीदेवता । ह्रुं बीजं । ई शक्तिः । रं कीलकं । ह्रां, ह्रीं इत्यादि षड्वर्णेण न्यासः ।

चतुर्दशात्मिका विद्या भुवने भुवनेश्वरी ।
तस्या श्री भुवनेश्वर्या भेदा भुवि चतुर्दश ॥

रमार्णं समस्ताक्षरं कामराजं,
तथा पंचवर्णाङ्कितं नाम देव्याः ।
ततो ठद्वयं देवि मंत्रावसाने
स्मृतो भेद मंत्रो मयाद्यो दशार्णः ॥१॥
श्रीं ह्रीं क्लीं भुवनेश्वरी स्वाहा ॥

तारं माया वाग्भवं कामराजं, शक्तिर्मध्ये नाम पंचाक्षरीयम् ।
अंते दद्यान्नीर मेवस्मृतस्ते, मंत्रोद्धारो देवि भेदो द्वितीयः ॥२॥
ॐ ह्रीं ऐं क्लीं सौं भुवनेश्वरी स्वाहा ॥

त्र्यक्ष वाग्भव रमामदशार्णं, शक्तिशून्य शरदूर्ध्व मातृका ।
नाम ठद्वय मयो महेश्वरी भेद एष गदितस्तृतीयकः ॥३॥
ॐ ऐं श्रीं क्लीं सौं ह्रीं भुवनेश्वरी स्वाहा ॥

ताराणं सबला रमार्णमदनौ शक्तिस्तथा वाग्भवं
तारद्वन्दमयो रमार्णद्वितयं मध्ये भिन्नां विन्यसेत् ।
अंते वाग्भवमन्यथौ शरदयो नीरं च भेदः स्मृतो
मंत्राणां भुवनेश्वरीप्रियतरो दुर्गे चतुर्थो यथा ॥४॥
ॐ ह्रीं श्रीं क्लीं सौः ऐं ॐ ॐ श्रीं श्रीं भुवनेश्वरी ऐं क्लीं सौः स्वाहा ॥

तारं लक्ष्मी मन्मथः शक्तिबीजं मायाबीजं नाममध्ये शिवायाः ।
तारं कूर्चं त्रिष्टकारं वनं च, भेदःप्रोक्तः पंचमो विश्वमातुः ॥५॥
ॐ श्रीं क्लीं सौः ह्रीं भुवनेश्वरी हूं ठः ठः ठः स्वाहा ॥

त्र्यक्षर माया वाग्भव शक्तिर्मन्मथ लक्ष्मी नाम च मध्ये ।
ठद्वयमन्ते पार्वति भेदः षष्ठो गोप्यो निगदित एष ॥६॥
ॐ ह्रीं ऐं सौः क्लीं भुवनेश्वरी ठः ठः स्वाहा ॥

तारकशक्तिर्मन्मथ लक्ष्मी वाग्भव माया विगलित कूर्चम् ।
नाम च ठ द्वय मन्ते भेदः प्रोक्तः समय एषः ॥७॥
ॐ सौः क्लीं श्रीं ऐं ह्रीं हूं भुवनेश्वरी ठः ठः स्वाहा ॥

त्रासोल्लसन्मदन वाग्भव शक्ति माया
काली तवत्रययुगं ह्यभिधानमध्ये ।
काली ठकार त्रितयं तुरगं वनंच,
भेदोष्टमो निगदितस्तव प्रीति वृद्धयै ॥८॥
ॐ क्लीं ऐं सौं ह्रीं क्रीं क्रीं क्रीं हूं हूं भुवनेश्वरि ठः ठः ठः फट् स्वाहा ॥

त्रासो माया मन्मथं कूर्च काली,
माया लक्ष्मीर्वाग्भवं शक्ति कामा ।
न्यासार्णं कूर्चं फट् नीरमन्ते,
भेदः प्रोक्तो नवमो गोपनीयः ॥९॥
ॐ ह्रीं क्लीं हूं क्लीं क्रीं ह्रीं श्रीं ऐं सौः क्लीं भुवनेश्वरि हुं फट् स्वाहा ॥

तार सार कमला सकला च कूर्चं शून्य शरदाख्यमीश्वरि ।
तीर नीर मवसानके मनोर्भेद एषगदितः शुभदस्ते ॥१०॥
ॐ क्लीं श्रीं ह्रीं हूं ह्रौं भुवनेश्वरि हूं हूं स्वाहा ॥

त्र्यक्षमाया रमालक्ष्मी तटंच काली,
युवाग्भवं वासना शक्ति नाम ।
काली कूर्चं फट् हरं देवताया,
मंत्रः प्रोक्तो देवि चैकादशोऽयम् ॥११॥
ॐ ह्रीं क्लीं श्रीं क्रीं ऐं सौः भुवनेश्वरी क्रीं हूं फट् स्वाहा ॥

त्र्यक्ष वाग्भव शरत्कमलार्णं कामनाम भुवनेश्वरि न्यसेत् ।
तार कूर्चं हरनीरकमन्ते भेद एष गदितस्तु द्वादशः ॥१२॥
ॐ सौं श्रीं क्लीं भुवनेश्वरि ॐ हूं स्वाहा ।

तव प्रणव वाग्भवः शरदनंगमाया रमा,
वियद्यतगता शरत् तटयुगञ्च मध्येऽभिधाम् ।
पुनः प्रणव वाग्भव महरवने तव प्रीतये,
त्रयोदशतमो मया निगदितस्तु भेदोत्तमः ॥१३॥
ॐ ऐं सौं क्लीं श्रीं ह्रौं हूं हूं भुवनेश्वरि ॐ ऐं स्वाहा ॥

तारं शरन्मदन कामराजं,
शक्तिर्वधूस्तटजा सकला च काली ।
मध्ये भिधां प्रणव कूर्चं हरं तथाऽयं,
भेदश्चतुर्दशतमो गदितोभवाकन्याः ॥१४॥
ॐ सौं क्ली ऐं क्लीं सौः स्त्रीं हूं श्रीं ह्री क्रीं भुवनेश्वरि ॐ हूं फट्
स्वाहा ॥

एतेषां देवदेवेशि ऋष्यादि पूर्ववत्स्मृतम् ॥ १५ ॥

॥ भुवनेश्वरीतत्वविद्या ॥

चन्द्रशक्तिः पराबीजं तथैव तत्वरूपिणी ।
मायाबीजं समुद्धृत्य सकलागमनिश्चिता ॥
ततश्च साधको दद्यात्तथैव भुवनेश्वरि ।
मायाबीजं समुध्दृत्य तत्व विद्या यमाहृत्ता ॥

ॐ ऐं सौः ह्रीं तत्वरूपिणी ह्रीं भुवनेश्वरी ह्रीं ॥

मनुः ह्रौं सौः ह्रीं भुवनेश्वरी ह्रीं तत्वरूपिणी ह्रीं ॥
अस्य मन्त्रस्य भैरव ऋषिः । अनुष्टुप्छन्दः । श्री तत्वरूपिणी भुवनेश्वरी देवता । ह्रीं बीजं । शक्तिः । हः कीलकं । ह्रां इत्यादि न्यासः ।

## तत्वरूपिणी ध्यानं ॥

करे रवीन्द्वग्निविलोचनानां, संपुस्तकं जाप्यपटीं दधानां ।
सिंहासनामध्यम पत्र संस्थां, श्रीतत्वविद्या परमां भजामि ॥

पूर्वोक्त एकाक्षरादि सर्वमन्त्राणां ।

ध्यानम्ः—

उद्यद्दिनद्युतिमिंदुकिरीटां तुंगकुचां नयनत्रययुक्ताम् ।
स्मेरमुखीं वरदांकुशपाशाभीतिकरां प्रभजेत् भुवनेशीम् ॥

## श्री भुवनेश्वरी मन्त्र भेदाः ॥

### भुवनेश्वरी रहस्ये ॥

श्रुणु देवि प्रवक्ष्यामि भेदानन्यान्महेश्वरि ।
एकादि षोडशार्णान्तान् सर्वकामार्थसिद्धिदान् ॥
प्रयोगसहितान् देवि भुवनेशीप्रियान् प्रियम् ॥

एको दर्शदिने मन्त्री प्राङ्मुखः साधकोत्तमः ।
एकाक्षरीं जपेद्विद्यां धर्मकामार्थसिद्धये ॥
हकारो वह्निसंयुक्तो वामनेत्रेन्दुसंयुतः ।
ततोऽभिधां नमः प्रांते प्रोक्तेयमेकवर्णिका ॥१॥
ह्रीं भुवनेश्वर्यै नमः

आग्नेयाभिमुखो भूत्वा चन्द्रभद्रादिने शुभे ।
द्व्यक्षरीं साधको जप्त्वा सर्वान्कामानवाप्नुयात् ॥
लक्ष्मीं मायां महादेवि नतो नाम वदेत्ततः ।
नतिरियं महेशानि द्व्यक्षरी परिकीर्तिता ॥२॥
श्रीं ह्रीं भुवनेश्वर्यैनमः

दक्षिणाभिमुखो भूत्वा भौमे जयाह्नि साधकः ।
त्र्यक्षरी प्रजपेद्भक्त्या सर्वान्कामानवाप्नुयात् ॥
तारं रमा कामराज इत्थं नाम सामुद्धरेत् ।
प्रान्ते नतिः समाख्याता त्र्यक्षरीयं महेश्वरि ॥३॥
ॐ श्रीं क्लीं भुवनेश्वर्यै नमः

नैऋत्यभिमुखो भूत्वा चतुर्थ्यां सौम्यवासरे ।
चतुर्वर्णात्मिकां विद्यां जपेन्मन्त्री स्वशवितः ॥
प्रणवं च तथा माया कमला मन्मथस्तथा ।
अन्ते विश्व नाममध्ये विदध्याच्च सुरेश्वरि ॥४॥
ॐ ह्रीं श्रीं क्लीं भुवनेश्वर्यै नमः

पश्चिमाभिमुखो भूत्वा पंचम्यां गुरुवासरे ।
पंचाक्षरीं जपेन्मंत्री कला मीप्सितदायिनीम् ॥
तारं लक्ष्मीं वाग्भवं कामो मायाभिधास्तथा ।
ङेन्ता नतिरियं प्रोक्ता देबि पंचाक्षरी मया ॥५॥
ॐ श्रीं ऐं क्लीं ह्रीं भुवनेश्वर्यै नमः ॥

वायव्याभिमुखो भूत्वा शुक्रे षष्टयां सुरेश्वरि ।
षष्टाक्षरीमहाविद्यां प्रजपेत्साधकोत्तमः ॥
तारं लक्ष्मीः पराकामो वाग्भवं शक्तिरेव च ।
अभिधा नतिसंयुक्ता प्रोक्ता षष्टाक्षरी परा ॥६॥
ॐ श्रीं ह्रीं भुवनेश्वर्यै नमः

उत्तराभिमुखो भूत्वा सप्तम्यां शनिवासरे ।
सप्ताक्षरीमिमां विद्यां प्रजपेत्साधकोत्तमः ॥
प्रणवं कमला माया कामो वाग्भव एव च ।
शक्तिर्माया मिधाप्रांते नतिः सप्ताक्षरी मता ॥७॥
ॐ श्रीं ह्रीं क्लीं ऐं सौः ह्रीं भुवनेश्वर्यै नमः ॥

ईशानाभिमुखो भूत्वा अष्टयम्यां रविसासरे ।
अष्टाक्षरीं महाविद्यां प्रजपेत्साधकोत्तमः ॥
तारं लक्ष्मीः पराकामो वाग्भवः शक्तिरेव च ।
कामो मायामिधा प्रांते नतिरष्टाक्षरी मता ॥८॥
ॐ श्रीं ह्रीं क्लीं ऐं सौः क्लीं ह्रीं भुवनेश्वर्यै नमः ॥

प्राङ्मुखस्तु पुनर्भूत्वा नवम्यां चन्द्रवासरे ।
देवीं नवाक्षरीं जप्त्वा लभते सिद्धिमुत्तमाम् ॥
तारं लक्ष्मीं पराकामो वाक्कामो शक्तिरेव च ।
वाक्छक्तिरमिधा विश्वं संप्रोक्तेयं नवाक्षरी ॥९॥
ॐ श्रीं ह्रीं क्लीं ऐं क्लीं सौः ऐं सौः क्लीं भुवनेश्वर्यै नमः ॥

दशम्यां अग्निकोणस्थो मंगलं साधको जपेत् ।
दशाक्षरीं महाविद्यां साक्षाद्ब्रह्मस्वरूपिणीम् ॥
प्रणव सकला लक्ष्मीः कामो वाक्छक्ति कालिके ।
कूर्चमाया द्वयं नाम विश्वप्रोक्ता दशाक्षरी ॥१०॥
ॐ ह्रीं श्रीं क्लीं ऐं सौः क्रीं ह्लीं ह्रीं क्लीं भुवनेश्वर्यै नमः ।

एकादश्यां बुधदिने दक्षिणाभिमुखो नरः
एकादशाक्षरीं विद्यां प्रजपेद्भक्तिपूर्वकम् ।
तारं माया रमाकामो वाक् शक्ति काम वाग्भवाः ।
शक्तिर्मायाकलानाम विश्व मेकादशाक्षरी ॥११॥
ॐ ह्रीं श्रीं क्लीं क्लीं ऐं सौः श्रीं ह्रीं क्लीं भुवनेश्वर्यै नमः ।

नैऋत्यभिमुखो भूत्वा द्वादश्यां गुरुवासरे ।
साधकः प्रजपेद्विद्यां द्वादशाक्षररूपिणीम् ॥
तारद्वयं परायुग्मं लक्ष्मीयुगलमेव च ।
कामो वाग्भव शक्ति सर्वयुगलमेव च ॥
नाम ङेन्तं विश्वमन्ते प्रोक्तेयं द्वादशाक्षरी ॥१२॥
ॐ ॐ ह्रीं ह्रीं श्रीं श्रीं क्लीं क्लीं ऐं ऐं सौः सौः क्लीं भुवनेश्वर्यै नमः ।

पश्चिमाभिमुखो भूत्वा त्रयोदश्यां कवेर्दिने ।
साधको देवतां ध्यात्वा जपेत् त्रयोदशाक्षरीम् ॥
प्रणवं शिव वह्नी च द्वितीयस्वरसंयुते ।
बिंदुयुक्ते कालिका च माया श्रीवाक् शरस्तया ॥१३॥
ॐ ह्रा क्रीं ह्रीं श्रीं ऐं सौं क्लीं श्रीं ह्रीं ऐं सौं क्लीं भुवनेश्वर्यै नमः ।

उत्तराभिमुखो भूत्वा साधकः शनिवासरे ।
चतुर्दशात्मिकां विद्यां जपेत्साधकसिद्धिदाम् ॥
तार द्वयं काम युग्मं शक्तिद्वन्दं रमायुगम् ।
वाग्युगं शक्तियुग्मं च मायायुग्मं तथैव च ।
नाम ङेन्तञ्च विश्वं च प्रोक्ता चतुर्दशाक्षरी ॥१४॥
ॐ ॐ क्लीं क्लीं सौं सौं श्रीं श्रीं ऐं ऐं सौः सौः ह्रीं ह्रीं
भुवनेश्वर्यै नमः ।

अमायां पूर्णिमायां च जपेत्पंचदशाक्षरीम् ।
ईशानाभिमुखो भूत्वा रविवारे च साधकः ॥
तारं रमा प्रणवो लक्ष्मीर्माया वाक् कला तथा ।
वाणीकामौ शक्तिकामौ शक्तिः कालीयुगं परा ।
नाम ङेन्तं नमो देवि प्रोक्ता पंचदशाक्षरी ॥१५॥
ॐ श्रीं ॐ श्रीं ह्रीं ऐं ह्रीं ऐं क्लीं सौः ह्रीं ऐं क्लीं सौः क्लीं सौः
क्रीं क्रीं ह्रीं भुवनेश्वर्यै नमः ॥

विद्यां यो जपते भूमाविमां च षोडशात्मिकां ।
तस्य देवि कलौ देवी स्वपदं भुवि दास्यति ॥
प्रणवं सकला लक्ष्मी मारो वाग्भव शक्तिके ।
प्रासादः प्रणवश्चैव प्रासाद शक्तिवाग्भवाः ॥
कामो मा सकला तारं माया नाम नतिस्तथा ।
महादेवि गुह्यतरा प्रोक्तेयं षोडाशाक्षरी ॥१६॥
ॐ ह्रीं श्रीं क्लीं ऐं सौः ह्सौः ॐ ह्सौः सौः ऐं क्लीं श्रीं ह्रीं
भुवनेश्वर्यै नमः ॥

सर्वदिनेषु इयं षोडशाक्षरी पठनीया ॥

## भुवनेश्वरी आवरणदेवताः

मन्त्रं षट्कोणाष्टदलवृतषोडशदल भूपुरात्मकं ॥

पीठदेवताः मं मंडूकादि...नमः । नवपीठशक्तीः । जया, विजया, अजिता अपराजिता, नित्या, विलासिनी, दोग्ध्र्यै, अघोरा, पीठमध्ये मंगलायै नमः ।

ॐ ह्रीं सर्वशक्ति कमलासनाय नमः ।

१. देव्या समीपे मध्ये हृल्लेखायै । पूर्वे ऐं गगनायै, दक्षिणे रक्तायै, उत्तरे ईं करालिकायै, पश्चिमे महोच्छुष्मायै इति ॥

२. षट्कोणकेसरेषु ॥ आग्नेय्यादि चतुर्विदिक्षु, मध्ये दिक्षु च । हृदयादि षडंगयुवतीः ॥

३. षट्कोणाग्रेषु पूर्वे गायत्र्यै, ब्रह्म, नैऋते सावित्री, रुद्र, आग्नेये श्रियै, धनपतये, पश्चिमे रति, स्मराय, ईशान्यां पुष्टि, गणपति, षट्कोणदक्षिणे शंखनिधि, वामे पद्मनिधि ।

४. अष्टदले पूर्वादि । अनंगकुसुमा, अनंगकुसुमातुरा, अनंगदमना, अनंगमदनातुरा, भुवनपाला, गगनवेगा, शशिरेखा, गगनरेखा ।

५. षोडशदलेषु पूर्वादिक्रमेण । कराली, विकराली, उमा, सरस्वती, श्रीः, दुर्गा, उषा, लक्ष्मी, श्रुति, स्मृति, धृति, श्रद्धा, मेधा, मति, कांति आर्या इति ।

६. भूपुराभ्यन्तरे पूर्वादि । अनंगमदना, अनंगमदनातुरा, भुवनरेखा भुवनपालिका, सर्वशिशिरा, अनंगवेदना, अनंगमेखला ।

७. भूपुरे ॥ इंद्रादिदशदिक्पालान्, तेषां आयुधानि च ।

## श्री भुवनेश्वरी कल्पे यन्त्र कक्षपुट प्रयोगाः

ईश्वर उवाच ।

अवाच्यमपि देवेशि त्वयिस्नेहाद्वदाम्हं ।
यन्त्रं कक्षपुटं वक्ष्ये श्रुणुसर्वांग सुन्दरी ॥
उत्तराभिमुखी भूत्वा बाणरेखासमा लिखेत् ।
प्रत्यक्प्रागग्रगास्तिर्यक् चर रेखाः समालिखेत् ॥

मेषे कर्कि तुलापूर्वे धनुश्चमकरे तुला ।
मिथुने मेष पञ्चास्य इत्येते ध्रुवसंज्ञिकाः ।
सिंह वृश्चिक मीनेषु कुलीरोत्तर गोपतिः ।
कुंभवृश्चिक पूर्वे च कन्या च ध्रुव संज्ञिकाः ।
एकाद्यष्टांतसख्या तु ध्रुवे संलिख्य वै क्रमात् ॥

युग्मे विषमारब्धे तार्द्धं, भित्वाच विन्यसेत् ॥
सिंहादि चैकं हित्वा तु अध्रुवे च लिखेत्क्रमात् ॥

मेषादिचाष्टखण्डेषु ह्रस्वमक्षर मालिखेत् ।
ककारादि क्षकारांतं लिखित्वा तु यथाक्रमम् ॥
ङञणान् वर्जयित्वा तु रेखाग्रे शूलमालिखेत् ॥
शूलाग्रे पाश माये चांकुशं च समालिखेत् ॥

चिंतामणिं च मायांच लिखेत्षोडश कोष्टके ॥
ॐ नमो नीलकण्ठाय ध्रुवे संलिख्य वै क्रमात् ॥
अध्रुवे तु लिखेत्पश्चात् वैष्णवाक्षर मक्षकं ॥

बीजं प्राणं च शक्ति च दृष्टि वश्यादिकं तथा ।
यन्त्रमन्त्रक गायत्रीं प्राणस्थापनमेव च ॥
भूतदिग्पालबीजानि संत्रस्यांगानि वै दश ॥

अस्यार्थः ॥ बीजं ह्रीं । प्राणं च ह्रां । शक्ति ह्रीं, दृष्टि इं वश्यादिकं वषट्, यन्त्रमन्त्रकगायत्रीं यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयात् मन्त्रराजायः यात् प्राणस्थापनमेव च, ॐ आं ह्रीं क्रों यरलवशषस ॐ हौं हसः ह्रीं ॐ भुवनेश्वर्याः प्राणाः अस्मिन् भुवनेश्वरी कक्षपुटयन्त्रे स्थिताः ॐ आं... भुवनेश्वर्याः जीवः अस्मिन्भुवनेश्वरी कक्षपुटे यन्त्रे स्थितः ॐ आं...सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राण प्राणाः भुवनेश्वरी कक्षपुट यन्त्रे इहागत्य सुखं चिरं तिष्टंतु स्वाहा ।

ॐ ह्रीं हं सः भूतदिक्पाल बीजानि ल वं रं यं ह । लं रं हं क्षं वं मं सं शं यन्त्रस्यांगानि वैदशं इत्यर्थः ॥

ध्रुवा ध्रुवे सा संयोज्य दशांग च यथाक्रमं ॥
वश्यमाकर्षणं चैव भेदनं मोहनं तथा ।
स्तंभनं मारणं चैव विद्वेषोच्चाटने तथा ।
वश्यादिशुभकार्येषु अष्टगंधेन लेपयेत् ॥
विद्वेषणादिकार्येषु लिखेदष्टविषैस्तथां ।
तत्तत्रतिख्यातिसमायुक्तं तत्तत्कर्मसमन्वितं ।
तत्तत्स्थानसमायुक्तं वसुकर्मफलं लभेत् ॥
बहुनात्र किमुक्तेन तत्तत्कर्मप्रसिद्धये ।
यंद्यत्करोति तन्मन्त्री लभते नात्र संशयः ॥

## अष्टादशसंख्याप्रयोगाः

ह्रीं इति कोष्टेषु ह्रीं क्लीं भुवनेश्वरि सर्वसौभाग्यं कुरु २ स्वाहा इति परितः । अस्य मन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । श्री भुवनेश्वरी देवता ह्रीं बीजम् । स्वाहा शक्तिः । क्लीं कीलकं । ह्रां इत्यादि न्यासः

ध्यानम्:—

उद्यदिनद्युतिमिंदुकिरीटां तुंगकुचां नमनत्रययुक्ताम् ।
स्मेरमुखीं वरदांकुशपाशांभीतिकरां प्रभजेद् भुवनेशीम् ॥

श्रीं ह्रीं नमो भगवति भुवनेश्वरि सर्वलोकवशंकरि सर्वसौभाग्यं कुरु २ स्वाहा ।

यन्त्रं स्पृष्ट्वा जपेद्भक्त्या पंचसहस्रकं पुनः · तद्यंत्रं धारयेद्यो वै स सौभाग्यमवाप्नुयात् ॥

## विंशत्प्रयोगः ।

वं श्रीं ह्रीं इति कोष्टेषु ।

अग्नये जातवेदसे ह्रीं स्वाहा । इति परितः ।

भृगु ऋषिः । गायत्री छन्दः । अग्निर्देवता । ह्रां इत्यादि न्यासः ।

ध्यानम्:—

त्रिनयनमरुणाभं चन्द्रमौलिं सशुक्लां
शुकमरुणमनेकाकल्पमंबोजसंस्थं ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं,
नमत शनकमालालंकृतांगं कृशानुं ॥

ह्रीं श्रीं उत्तिष्ट ष्हटुरितपिंगल लोहिताक्ष धनधान्यरत्नादीन् देहि मे ददापय स्वाहा इदं यन्त्रं स्वर्णे विलिख्य अयुतं जप्त्वा धारयेत् । धनधान्यसमृद्धिर्भवति ॥

## २२ प्रयोगः ।

ठ ठ ठ ठ इति कोष्टेषु । ऐं ग्लौं वार्तालि वाराहि वराहमुखि सर्व शत्रु जिह्वा स्तंभनं कुरु २ हुं फट् । इति परितः ॥

अघोर ऋषिः । अनुष्टुप्छन्दः । वार्तालि देवतामित्यदि न्यासः ।

ध्यानम्:—

तत्र योनौ समासीनां देवीं परमसुन्दरीं ।
दंष्ट्राकरालवदनां ज्ञो त्रिवक्त्रां समुज्वलां ।
चतुर्भुजां त्रिनयनां देवीं मरकतप्रभां ।
पाटलोज्वलकौशेयां कृष्णकंचुकधारिणीं ।
प्रवालकर्णाभरणां मणिकोटीरभासुरां ॥

मुसलं बिभ्रतीं हस्ते दक्षिणोर्ध्वे समुज्वलं ।
इतरेषु वरं पाणौ साधकानामभीष्टदं ॥
वामोर्ध्वे च हलं हस्ते तदन्ये नृकपालकं ।
दधानां भावयन्देवीं मूलमन्त्रं जपेत्सुधीः ॥

ॐ ऐं ग्लौं ह्रीं नमोभगवति वार्तालि २ वराहि २ वराहमुखि २ अन्धे अंधिनि, रुंधे रुंधिनि, जंभिनि, स्तंभे स्तंभिनि, मोहे मोहिनि सर्वदुष्टप्रदुष्टानां वाक्चित्तचक्षुर्गतिस्तंभनं कुरु २ ऐं ग्लौं ठ ठ ठ ठ हूं फट् स्वाहा । इदं यन्त्रं लोहपट्टे विलिख्य दशायुतं जप्त्वा शत्रुगेहे निखनेत् । शत्रुस्तंभनं भवति ॥

## २४ प्रयोगः

क्लीं इतिकोष्टेषु । कामदेवाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनंगः प्रचोदयात् । इति परितः ॥ नारदऋषिः गायत्री छन्दः । कामदेवो देवता क्लीं बीजं । स्वाहा शक्तिः । नमः कीलकं । क्लां इत्यादि न्यासः ।

ध्यानम् :—

**अरुणमरुणवासामाल्यदाभांगरागं,**
**स्वकरकलितपाशं पुष्पबाणेषुचापं ।**
**मणिमयमकुटाद्यैः क्लृप्तमादीप्तदेहं**
**अरुणनलिनसंस्थं चिंतयेदङ्गयोनिं ॥**

क्लीं नमः कामदेवाय सर्वजनप्रियाय सर्वजन संमोहनाय ज्वल २ प्रज्वल २ सर्वजनस्य मुखं हृदयं मम वशं कुरु २ स्वाहा ।

इदं यन्त्रं ताम्रपट्टे विलिख्य, दशायुतं जप्त्वा साध्यस्य जन्मवृक्षमूले निधाय तदुपरि, त्रिकोणकुंडं कृत्वा, जपापुष्पैरयुतं हुवेत् । राजवश्यं भवति ॥

## २६ प्रयोगः

श्रीं ह्रीं क्लीं कोष्टेषु ॥ ह्रीं क्लीं नित्यक्लिन्ने मदद्रवे सर्वराजवशं कुरु २ स्वाहा । इति परितः ॥

अस्य मन्त्रस्य शक्ति ऋषिः पंक्तिः छन्दः नित्यक्लिन्ना देवता । क्लां इत्यादि षडंगं ।

ध्यानम्ः——

**नित्यं भजेद्बालशशांकचूडां, पाशांकुशौ कल्पलतां कपालं**
**हस्तैर्वहंतीमरुणां त्रिनेत्रामास्फालयंतीं करवल्लकीं तां ॥**

इद यन्त्र स्वर्ण रजतपट्टे विलिख्य अयुतत्रयं, जप्त्वा धारयेत् । सर्वराजवश्यं भवति ।

मन्त्रः श्रीं ह्रीं क्लीं नित्यक्लिन्ने मदद्रवे सर्वराजवशं कुरु २ स्वाहा ॥

## २८ मन्त्रः

यं इति कोष्टेषु । यं दुं दुर्गे पक्षिरूपिणि शत्रूनुच्चाटय २ धूं धूं धूं हुं फट् इति परित ॥ काश्यप ऋषिः । गायत्री छन्दः । पक्षिदुर्गा देवता । ह्रां इत्यादि षडङ्गम् ।

ध्यानम्ः—

उद्वृत्तोद्भ्रान्तनेत्रां प्रतिभयवदनध्वस्तनिर्यत्कृशानुं
ज्वालामालादिभीमां विकटतरकरालोग्रतीक्ष्णाग्रतुण्डाम् ।
पक्षोत्क्षेपप्रचण्डानलरयनिनदद्राविताराति संघां
दुर्गां भिन्नांजनाभां खरतरनखरां पक्षिरूपां नमामि ॥

ॐ ह्रीं दुं दुर्गे पक्षिरूपिणि धूं धूं धूं अट्टहासरूपे रौं ह्रीं धूं धूं स्वाहा ॥ इदं यन्त्रं सर्वे विलिख्य लक्षं जप्त्वा शत्रुगृहे निखनेत् शत्रूच्चाटनं भवति ॥

## ३० मन्त्रः

ह्रीं मिति कोष्टेषु । ॐ ह्रीं त्रैलोक्यसुन्दरि मम सर्वराजवश्यं कुरु २ ह्रीं । इति परितः ।

अर्जुन ऋषिः । गायत्री छन्दः । पार्वती देवता ।

त्रैलोक्यवश्यसंमोहिनि ह्रां । जगत्त्रयवश्यमोहिनि ह्रीं । उरगवश्यसंमोहिनि ह्रूं । राजवश्यसंमोहिनि ह्रैं । सर्वस्त्रीपुरुषवश्यसंमोहिनि ह्रौं । सकलस्थावरजंगमस्य मुख हृदयं मम वशं कुरु २ ह्रः । इति न्यासः ।

ध्यानम्ः--

करधृतपरमाख्या सर्वरत्नांगभूषा
निखिलवदनचेतोहरिरूपाग्र्यवेषा ।
प्रभवतु मदभीष्टप्राप्तये शैलकन्या
पुरुषयुवतिवश्याकर्षनित्यप्रसन्ना ॥

ह्रीं योगिनि २ योगीश्वरि योगभयंकरि सकलस्थावरजंगमस्य मुखं हृदयं मम वशं कुरु २ स्वाहा ॥ इदं यन्त्रं सुवर्ण, रजतपट्ट वा विलिख्य अयुतत्रयं जप्त्वा हस्ते धारयेत् ॥ सर्व वशीकरं भवति ॥

## ३२ मन्त्रः

यं इति कोष्टेषु । ह्रीं नमो अघोररूपिणि सर्वजनरथगजतुरंगपदातीन् नाशय २ मारिमसूचिका-स्फोटकं कुरु २ मारीज्वरं गृह्ण गृह्ण हुं फट् ॥ क्षपणक ऋषिः । गायत्री छन्दः । कालरात्रिर्देवता । ह्रां इत्यादि षडंगं ।

ध्यानम्ः--

ध्यायेत्कालाभ्रनीलां विवरितवदनां ज्वालजिह्वां त्रिनेत्रां
पात्रं शूलं दधानां धृतमुसलगदां वक्रतुण्डां विषास्यां ।
ज्येष्टां निष्ठूरवेषां भ्रुकुटितनयनां मुक्तकेशीमुदारां
वक्त्रोत्तुंगातिनीलस्तनभरयुगलां निष्कृतां शत्रुहंत्रीम् ॥

मन्त्रः ह्रीं रं रं खे खे कालरात्रि मम शत्रून् नाशय २ खादय २ मशूचिकाज्वरं गृहाण २ हुं फट् ॥ इदं यन्त्रं सीसपट्टे विलिख्य नियुतं जप्त्वा शत्रु गृहे, कालीगृहे वा निखनेत् । मारीज्वरं गृह्णाति ॥

## ३४ मन्त्रः

श्रीं इति कोष्टेषु । क्लीं सः उच्छिष्टमातंगि सर्वजनवशं कुरु २ स्वाहा इति परितः । मतंग ऋषिः । मातंगी देवता । ह्रां इत्यादि षडंगं ।

ध्यानम् ॥

**वीणावाद्यविनोदगीतनिरतां, नीलांशुकोल्लासिनीं**
**बिंबोष्ठीं नवयावकार्द्रचरणामाकीर्णकेशालकां ।**
**हृद्यांगीं सितशंखकुंडलधरां सर्वांगभूषोज्वलां**
**मातंगीं प्रणतोस्मि सुस्मितमुखीं देवीं शुकश्यामलाम् ।**

मनुः—श्रीं ह्रीं क्लीं नमो भगवति मातंगेश्वरि सर्वजनवश्यं कुरु २ स्वाहा ।

इदं यन्त्रं सौवर्णे विलिख्यायुतत्रयं जप्त्वा धारयेत् । सर्ववश्यं भवति ॥

## ३६ मन्त्रः ॥

ठं ठं इति कोष्टेषु । ह्लीं बगलामुखि मम शत्रून् स्तंभय २ ठं ठं ह्लीं हुं फट् इति परितः । ईश्वर ऋषिः । गायत्री छन्दः । बगलामुखी देवता ह्लरां इत्यादि षडंगं ।

ध्यानम्ः—

**मध्ये सुधाब्धिमणिमण्डपमध्यवेद्यां,**
**सिंहासनोपरिगतां परिपीतवर्णाम् ।**
**पीतांबराभरणमाल्यविभूषितांगीं**
**देवीं भजामि धृतमुद्गर वैरिजिह्वां ॥**

मनुः—ऐं ह्लरीं बगलामुखि मम शत्रुजिह्वां कीलक, बुद्धिं नाशय ठ ठ ठ ठ ह्लरीं स्वाहा ॥

इदं यन्त्रं सीसे विलिख्य लक्षं जप्त्वा शत्रुमार्गे वा कालिगेहे वा निखनेत् । शत्रुस्तंमनं भवति ॥

## ३८ मन्त्रः

ह्रीं धूं रं इति कोष्टेषु । धूं धूं धूंम्राक्षि शत्रून् हन २ हुं फट् इति परितः । क्षपणक ऋषिः । गायत्री छन्दः । चितिवासिनी भैरवी देवता । ह्रां इत्यादि षडंगं ।

ध्यानम्ः—

द्विभुजां कृष्णवर्णां च त्रिनेत्रां सर्पभूषणां ।
कपालशूले दधतीं चिंतयेच्चितिवासिनीं ॥

इदं यन्त्रं सीसे विलिख्यलक्षं जप्त्वा शत्रुजन्मगृहे, वृक्षाधो वा निखनेत् । मारणं भवति ॥

४० मन्त्रः ॥

धूं इति कोष्टेषु । मन्त्रः—ह्रीं धूं धूं धूमावति खे खे शत्रुं हन २ हुं फट् इति परितः ॥ क्षपणक ऋषिः । गायत्री छन्दः । धूमावती देवता । ह्रां इत्यादि षडंगम् ।

ध्यानम्ः—

काकारूढातिकृष्णा (क्रुद्धा) प्रविरलवदना मुक्तकेशातिमत्ता
धूम्राक्षी क्षुद्रहन्त्री प्रतिभयचरिता चञ्चला कामलोला ।
हृष्टा पृष्टालसांगी मलमजलवसना व्यक्तगर्वातिरुष्टा
भूतिं धूमावती नः प्रदिशतु विविधा धूतशूलाग्रहस्ता ॥

मनुः— ह्रीं धूं खे खे उरिधूमे उरिधूमे कुलधूमे कुलधूमे, अन्तर्धूमे २ मम शत्रून् मारय २ हुं फट् स्वाहा । ॐ गणं गणं गुणिगुणि यूं यूं धूमावती नमः ॥

इदं यन्त्रं ताम्रे, सीसे वा विलिख्य लक्षं जप्त्वा शत्रुगृहे निखनेत् ॥ नाशोभवति ॥

४२ मन्त्रः

घ्रौं इति कोष्टेषु । ह्रीं घ्रौं रं रक्तचामुंडि इति परितः ।

विकराल ऋषिः । गायत्री छन्दः । रक्तचामुंडीदेवता । ह्रां इत्यादि षडङ्ग ।

ध्यानम् —

चक्रं शङ्खं च चापं स्वृणिममलधनुः रसायकं खड्गखेटौ
बिभ्राणां दीपयुग्मे त्रिशिखनरशिरः कुंतघण्टाभयेष्टां
दोर्भिश्चद्वयष्टसंख्यै ज्वलदनिलनिखामुग्रदंष्ट्रां त्रिनेत्रां
देवीं माहेश्वरीं तां ग्रहरिपुभयदां संस्मरेद्रक्तवस्त्राम् ।

मनुः ह्रीं नमो भगवति घ्रौं रं रक्तचामुंडि अरिरुधिर मांस भक्षिणि खेखे शत्रून् हन २ फट् क्लौं ।

इदं यन्त्रं अष्टविषे विलिख्य पञ्चायुतं जप्त्वा शत्रुगृहे निखनेत् ॥ रुधिरस्रावं भवति ॥

## ४४ मन्त्रः ॥

हस्ल्ब्रीं इति कोष्टेषु । ह्रीं लं ब्रह्म शत्रु वाचं स्तंभय २ ठ ठ ठ ठ लंलं इति परितः । बामदेव ऋषिः । गायत्री छन्दः । ह्रां इत्यादि षडङ्गम् ।

ध्यानम्:--

**दण्डकमंडलू चाक्षसूत्रमभयं करैः वंहंती ।**
**कृष्णाजिनपरीधाना ब्रह्माणी पातु कनकाभा ।**

मनुः–ऐं ह्रीं हस्ल्लब्रीं ब्राह्मि ठ ठ ठ ठ लं लं शत्रु वाक्स्तं भनं कुरु २ ठं लं ह्रीं हुं फट् स्वाहा ॥

इति यन्त्रं हरिद्राचूर्णे विलिख्य अयुतत्रयं जप्त्वा त्रिसहस्रं हुवेत् । शत्रुवाक्स्तंभनं भवति ॥

## ४६ मन्त्रः

हसलम्रीं इतिकोष्टेषु । ॐ श्रीं ईं महेश्वरि सर्वराजवशंकरि क्लीं स्वाहा ॥

इति परितः ॥ वामदेव ऋषिः । गायत्री छन्दः । माहेश्वरी देवता । ह्रां इत्यादि षडंगं ।

ध्यानम्:—

**शूलकुठारौदधती क्षुद्र दुंदुभि वरा वेकेन नृकरोटिम् ।**
**मां केऽलिसंकाशा माहेशी भूषणैःशुभ्रा ॥**

मन्त्रः ह्रीं हलम्रीं महेश्वरि सर्वजनं मे वशं कुरु २ स्वाहा (वशमानयस्वाहा) इदं यन्त्र भूर्जपत्रे विलिख्य लक्षं जप्त्वा धारयेत् । सर्ववश्यं भवति ॥

## ४८ मन्त्रः

क्ल्वां इति कोष्टेषु । ह्रीं क्ल्वां क्रों कौमारि वर्ष माकर्षय २ क्रों वौषट् इति परितः । नारदऋषिः । गायत्री छन्दः कौमारी देवता ह्रां इत्यादि षडंगम् ।

ध्यानम्:–

**अंकुश शक्तीपाशं खड्वांगं बिभ्रती करैरनिशं ।**
**कौमारि सततमव्याद्वांछितवरदायिनी नित्यम् ॥**

मनुः– अं ह्रीं क्रों क्ल्वां कौमारि वर्षमाकर्षय २ क्रों बं वं हुं वौषट् ॥

इदं यन्त्रं ताम्रपट्टे विलिख्य त्रअयुतत्रयं जप्त्वा क्षेत्रे निखनेत् वर्षाकर्षणं भवति ॥

## ५० मन्त्रः

श्रीं क्ल्व्रैं इति कोष्टेषु ।। मनुः ह्रीं श्रीं क्ल्व्रैं वैष्णवि सर्वशांति कुरु २ स्वाहा इति परितः । वामदेव ऋषिः । गायत्री छन्दः वैष्णवी देवता । श्रां इत्यादि षडंगं ।

ध्यानम्ः—

चक्रकपाली घण्टां शंखं दधतीकरांबुजाग्रे मां
पातु तमालश्याम सुविभ्रमा वैष्णवी नित्यं ।।

अन्यमनुः—ह्रीं श्रीं कल्व्रीं वैष्णवि मां रक्ष २ हुं फट् स्वाहा ।।

इदं यन्त्रं सौवर्णे राजते वा विलिख्य अयुतत्रयं जप्त्वा धारयेत् । सर्वरक्षाभवति ।।

## ५२ मन्त्रः

हस्ल्व्खरैं इति कोष्टेषु । मनुः— ह्रीं हस्ल्व्खरैं वरवर वाराहि खेखे दुष्टं हन २ ग्लौं हुं फट् ।। इति परितः ।

अग्नि ऋषिः जगतीछन्दः । वाराही देवता । ग्लां इत्यादि षडंगं ।

ध्यानम्ः—

मुसलं खड्गं खेटं हलमपि दधती वराहवदना ।
कालघनाभा पायादरिमदशमनी च मत्तवाराही ।।

अन्य मन्त्रः—ऐं ह्रीं ग्लौं हस्ल्व्खैं खे खे रं रं पत्रिमहंवामे येन्चोडं मरत्तु सनुत्तु शत्रु वायुवरुं देवदत्तं नावकं कुति परिच्युतिं सुतिं नृतक्कि तक्कि निक्क स्वाहा ।।

इदं यन्त्रं रूपे विलिख्य पंचायुतं जप्त्वा अर्द्धरात्रौ चिताग्नौ महिषाज्यौ स पंच सहस्रं हुत्वा तद्भस्मं दुष्ट गृहे विसर्जयेत् ।। दुष्टनाशोभवति ।।

## ५४ मन्त्रः

हस्ल्त्रीं इति कोष्टेषु । मनुः । ह्रीं हस्ल्त्रीं इन्द्राणि सर्वजनरंजनि क्लीं हुं फट् । इति परितः । वामदेव ऋषिः । जगती छन्दः । इन्द्राणी देवता । क्लां इत्यादि षडंगं ।

ध्यानम्ः—

अंकुशं तोमरं शक्ति कुलिशधरा चेंद्रनीलसंकाशा
मां पाया दिंद्राणी सर्वसिद्धिकरी सहस्राक्षी ।।

मनुः—ह्रीं क्लीं इन्द्राणि जगत्क्षोभकरि द्रां द्रीं क्लीं ब्लूं सः सर्वजनरंजनि स्वाहा ॥

इदं स्वर्णे रजते वा विलिख्य [illegible] धारयेत् । सर्ववश्यं भवति ॥

## षट्पञ्चाशत् संख्या प्रयोगः



च्लूं इति कोष्टेषु । ह्रीं च्लूं चामुण्डि दुष्टोच्चारिणि हुं फट् परितः ॥ नारद ऋषिः । गायत्री छन्दः । चामुंडी देवता ह्रां इति षडंगम् ।

ध्यानम्:—

**शूल कृपाण सशिरः कपालमपि बिभ्रती करांबोरुहैः**
**मुण्डस्रजं बिभ्राणा रक्ता मां पातु चामुण्डा ॥**

ह्रीं च्लां श्रीं भद्ररूपिणि चामुंडि खे खे शत्रून् हन २ हुं फट् स्वाहा ॥
इदं सीसे विलिख्य द्वादशायुतं जप्त्वा शत्रु गृहे, मार्गे वा निखनेत् ॥ उच्चाटनं भवति ॥

## ५८ प्रयोगः

श्रीं इति कोष्टेषु । श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः सर्वसमृद्धिं कुरु कुरु निरितः । वामदेवऋषिः । गायत्री छन्दः । श्री महालक्ष्मीर्देवता । श्रां इत्यादि षडंगं ।

ध्यानम्:—

**अक्षस्रजं बीजपूरं विमलं कपालजलजे**
**मां पायात्करैर्वहंती हंसवृक्षौ महालक्ष्मीः ॥**

श्रीं ह्रीं क्लीं श्रीं क्लीं ऐं महालक्ष्नमः ॥

इदं यन्त्रं ताम्रपट्टे विलिख्याऽष्ट लक्ष अष्टायुतं वा जप्त्वा ॥ स्वगृहे निखनेत् धनधान्यसमृद्धिर्भवति ॥

## ६० प्रयोगः

ह्रीं इति कोष्टेषु । दुं दुर्गे क्षं क्षं दुष्टग्रहान् खादय २ हुं फट् इति परितः ॥ वीरभद्र ऋषिः । गायत्री छन्दः । शिवदूती देवता । ह्रां इति षडंगं ॥

ध्यानम्:—

**चक्रं शंखं खड्वांगं कपालमपि बिभ्रती,**
**सुरारातीन् संगृह्य भक्षयन्ती शिवदूती पातु मां नित्यं ॥**

ह्रीं क्ष्रौं शिवदूति अघोररूपे खेखे यं यं यं सर्वग्रहान् खादय २ उच्चाटय हुं फट् स्वाहा ।।

इदं यन्त्रं ताम्रपट्टे [illegible] ।।

## ६२ प्रयोगः

ह्रीं क्ष्रौं इति कोष्टेषु । ह्रीं क्ष्रौं नृसिंहवदने खेखे दुष्टं हन २ हुं फट् ।।

इति परितः । प्रह्लाद ऋषिः । गायत्री छन्दः । नारसिंही देवता । ह्रां इत्यादि षडङ्गम् ।

ध्यानम्:—

**वक्षो विपक्षजन्तो विदारयन्ती सशंखचक्रौम ।**
**देवी च नारसिंही पायादरिमर्दिनी नित्यं ।।**

ह्रां ह्रीं ह्रूं नारसिंहवदने द्रुतं गच्छ २ परस्परं वित्रासनं कुरु २ खे खे हुं फट् स्वाहा ।

इदं यन्त्र सर्षपे विलिख्य त्रियायुतं जप्त्वा शत्रुगेहे विसर्जयेत्, मारणं भवति ।।

## ६४ प्रयोगः

आं ह्रीं क्रों इति कोष्टेषु । ॐ आं ह्रीं क्रों नमो भगवति भद्रकालि क्लीं रं ह्रीं अमुकं आकर्षय २ आं ह्रीं क्रों वौषट् इति पारितः ।।

शक्ति ऋषिः । पंक्तिः छन्दः । भद्रकाली देवता । ह्रां इत्यादि षडङ्गम् ।

ध्यानम्:--

**खट्वांगशूल वरखड्ग कपाल घण्टा**
**फट् कारिका डमरुकाऽभयमुण्डहस्तां ।**
**मुद्रांधनुः शितशिरं च विलासवेषां**
**कालीं नवोत्फलनिभां शिरसा नमामि ।।**

मनुः । आं ह्रीं क्रों क्ष्रौं कालि उधिर मोकालि अम्मे नित्यवैरसमाक्वायि उयिरु उडल् कोंडुवरुवाळे, अह वै अरिवायो आनन्दत्ते केरि कडु हच्चेण्णि इंन्नालि मुडिय पिडुत्तुकाषे शंभु मावे कोंडुवर स्वाहा । इदं यन्त्र ताम्रेविलिख्य पञ्चायुतं जप्त्वा, जपामूले खात्वा, तदुपरि, त्रिकोणकुण्डं विधाय, (गृहेत्वा) अग्निं प्रज्वाल्य देवीमावाह्य अभ्यर्च्य, साध्यस्य केशान् पाशबीजेन बध्वा, मनः शक्तिबीजेनादाय, कण्ठं अंकुशबीजेन गृहीत्वा. आकर्षतीं देवीं ध्यायन् करवीरपुष्पैः पञ्चसहस्रं हुवेत् । आकर्षणं भवति ।।

## ६६ प्रयोगः

क्षौं हुं फट् इति कोष्टेषु । ॐ क्षौं नमो भगवति रजनि समुदिते भद्रकालि खे खे दुष्टं हन २ यं यं, हुं फट् इति परितः ॥

शक्ति ऋषिः । पंक्तिः छन्दः । भद्रकाली देवता । ह्रां इति षडङ्गम् ।

ध्यानम्:--

**खड्ग शूलतनु दुन्धुभिमुण्डं बिभ्रतीं कररुहै रुरु दंष्ट्रा।**
**पाटलांमृगवरासनसंस्थां भैरवीं नमत पालसुदृष्टीं ॥**

ह्रीं क्षौं नमो भगवति भद्रकालि रजनि समुदिते कपालहस्ते खे खे शत्रून् हन २ भक्षय २ रुधिरं पिब २ हुं फट् स्वाहा ॥

इदं यन्त्रं सीसे विलिख्य अयुतं जप्त्वा शत्रुक्षेत्रे निखनेत् नाशो भवति ॥

## ६८ प्रयोगः

यं इति कोष्टेषु ॥ ह्रीं यं य आकाशभैरवि दुष्टं उच्चाटय हुं फट् इति परितः ।

क्षपणक ऋषिः । गायत्री छन्दः । आकाशभैरवी देवता । ह्रां इत्यादि षडङ्गम् ।

ध्यानम्:–

**सहस्रपाणिववत्रां सहस्रत्रयलोचनां ।**
**सर्वायुधधरां देवीं ध्यायेदाकाशभैरवीम् ॥**

ॐ ह्रीं नमो भगवति आकाशभैरवि यरलवरययूं यः ध्रूं दुष्टमुच्चाटयोच्चाटय हुं फट् ॥

इदं यन्त्रं काक (ताटि) पत्रे विलिख्य नृकपले च लक्षं जप्त्वा वाल्मीके निखनेत् । उच्चाटनं भवति ॥

## ७० प्रयोगः

क्षं रं ह्रीं ज्वालाजिह्वे करालवदने क्षं भक्षय क्षं ह्रीं हुं फट् इति परितः ॥

अघोर ऋषिः । त्रिष्टुप्छन्दः । भद्रकालीदेवता । ह्रां इत्यादि षडङ्गम् ।

ध्यानम्:–

**सहस्रवक्त्रां द्विसहस्रबाहां त्रिलोचनां सर्पमयांगभूषां ।**
**आनीलवर्णां धृतखड्गमुण्डां पातालपादांबरमौलिमीडे ॥**

ह्रीं क्ष्रौं क्षं खे खे अघोर रूपिणि त्रैलोक्यदेहकारिणि शत्रून् घातय २ भेदय २ भक्षय २ क्षं ह्रीं हुं फट् स्वाहा ॥

इदं यन्त्रं सीसे विलिख्य लक्षं जप्त्वा साध्यजन्मनक्षत्रवृक्षमूले निखनेत् शत्रुनाशो भवति ॥

## ७२ प्रयोगः

श्रीं रं इति कोष्टेषु । श्रीं ह्रीं इति परितः ॥ अघोर ऋषिः । अनुष्टुप्छन्दः । कल्याणवीरभद्रोर देवता । ह्रां इत्यादि षडंङ्गम् ।

ध्यानम्ः—

गोक्षीराभं दधानं डमरुकमभयं खड्गखेटौकपालं
वज्रं चाभीतिदाने त्रिनयनलसितं व्याघ्रचर्मांबराढ्यं
भेतालारूढमुग्रं कपिलसितजटाबद्धशीतांशुखण्डं
ध्यायेद्योगीद्रभूषं निजगणपरितं संततं वीरभद्रं ॥

श्रीं ह्रीं क्रीं ह्रीं क्लीं कं कालरुद्र वीरभद्र सर्वग्रहशांति कुल २ हुं फट् स्वाहा ॥

इदं यन्त्रं स्वर्णे विलिख्य लक्षं जप्त्वा धारयेत् । सर्वग्रहशांतिः भवेत् ॥

## ७४ प्रयोगः

ख्रां रं रं इति कोष्टेषु । ह्रीं खां कवेखे क्ष्रौं वीरभद्र रं रं इति परितः ।

अघोर ऋषिः । अनुष्टुप् छन्दः । वीरभद्रोदेवता । ह्रां इत्यादि षडंङ्गम् ।

ध्यानम्ः—

रौद्रं रुद्रावतारं हुतवहनयनं चोर्ध्वकेशं सुदंष्ट्रं
व्योमास्यं भीमरूपं घणिघणरभसं ज्वालमालाकृतांगं ।
भूतप्रेतादिनाथं शमितमखमहाखड्गपात्रे वहंतं
वदेलोकैकवीरं त्रिभुवननमितं श्यामलं वीरभद्रं ॥

ह्रीं ख्रां खे खे वीरभद्र शत्रुं गृहण २ क्ष्रौं रं रं रं हुं फट् स्वाहा ॥

इदं यन्त्रं श्मशना पट्टे विलिख्य पञ्चायुतं, जप्त्वा लक्षं वा जप्त्वा शत्रु दक्षपदे निखनेत् ॥ मारिज्वारो भवति ॥ मन्त्रांतरंम्ः—

वृद्धविष्णु ऋषिः । त्रिष्टुप्छन्दः । वीरभद्रो देवता । ह्रां इत्यादि षडंङ्गम् ।

ॐ ह्रीं रं जय २ वीरभद्र अभिवर्तस्व कर्तारि दीं वसात्ते, जररोप देवदत्तं निरस्तस्याद्विरोजस याद-चोप्रणोयोयोधि आयुरस्य निकृंतस्व हिमदीस्यवदेर्गोपप्रजांच पुरुषादिनियं णिरेर्षतुवित्सतव स्वरों क्षां खे खे हन २ हुं फट् । मन्त्रांतरं ॥ ॐ ह्रीं क्ष्रां रं खं कालरुद्र अभिवर्तस्व कर्तारं देवदत्तं निरस्तास्माभिरोजसा, जय २ वीरभद्र आयुरस्य निकृंतस्व प्रजां च पुरुषादिनि क्ष्रौं खे खे हन २ हु फट् ॥

## ७६ प्रयोगः

क्ष्म्रं ठं ठं ठं इति कोष्टेषु । क्ष्रं ठं ठं इति परितः ॥

अग्नि ऋषिः गायत्री छन्दः । वीरभद्रो देवता । ह्रां इत्यादि षडङ्ग ।

ध्यानम्:—

**हरं वीरभद्रं हरिद्राभमुग्र, गदामुष्टि हस्तं करालाट्टहासं ।**
**समावाह्य वर्णा रिपुस्तंमनार्थ, हरिद्रार सोर्मिः सहस्रं जपेत ॥**

क्ष्म्रं व्रं ह्रीं ठं ठं वीरभद्र हलूं हलूं शत्रून् स्तंभय २ ठ ठं हु फट् ॥

इदं यन्त्रं लोहपट्टे विलिख्य पञ्चायुतं जप्त्वा शत्रुवामपदे निखनित्वा हरिद्रा हरिताल चूर्णैः पञ्च-सहस्रं हुवेत् । स्तंभनं भवति ॥

## ७८ अष्टसप्तति प्रयोगः

ह्रीं क्षें इति कोष्टषु ह्रीं क्षें स्त्रीं हुं हुं इति परितः ।

अर्जुन ऋषिः पंक्ति चन्दः त्वरिता देवता । ह्रा मिति षडङ्ग ।

ध्यानम्:—

**श्यामच्छाया दीप्तरत्नांगभूषा**
**गुंजापुंजै रंजिताङ्हे हस्ता ।**
**कांतापांते शोभिता पीतवस्त्रा**
**पाया त्कामान् कुर्वती पार्वती नः ॥**

ॐ ह्रीं हूं खे चक्षे क्षः स्त्रीं ह्रीं हूं क्षें हुं फट् इदं पञ्च लोहे विलिख्य लक्षं जप्त्वा धारयेत् सर्व ग्रह-शान्ति र्भवति ॥

## ८० अशीति प्रयोगः

खें खां खं इति कोष्टेषु । खें खां खं फट् शरभमूर्तये हुं फट् इति परितः

वामदेव ऋषिः । जगती छन्दः । शरभरुद्रो देवता । खां मिति षडङ्गम् ।

ध्यानम्:—

ज्वलन कुटिलकेशं सूर्य चन्द्राग्नि नेत्रं ।
निशित तरनखा ग्रै द्धंत सर्वारिदेहं ॥
शरभ मृषि मुनीं द्रैः सेव्यमानं सितांगं ।
प्रणत भय विनाशं भावयेत् पक्षिराजं ॥

ॐ खें खां खं फट् प्राणग्रहसि हु फट् सर्वशत्रून् संहर ।

संहर शरभसाळुव पक्षिराज ख खं हु फट् स्वाहा ॥

इदं यन्त्रं लक्षं जप्त्वा धारयेत् सर्वग्रह शांतिर्भवति साद्य जन्म नक्षत्र वृक्षमूले श्मशाने वा निखनेत् नाशो भवति ॥

## द्व्यशीति प्रयोगः

क्ष्म्र् क्ष्रौं इति...कोष्टेषु । ह्रीं क्ष्म्र् क्ष्रौं सिंहवदने प्रत्यगिरे दुष्टं हन हन खे खे हुं फट् इति परितः । अग्नि ऋषिः । अनुष्टुप्छन्दः । प्रत्यंगि रा देवता ह्रामिति षडङ्गम् ।

ध्यानम्:—

सिंहीं सिंहमुखीं भगवतीं श्यानील वस्त्रोज्वलां
शूल स्थूल कपालपाश डमरून् व्याघ्रोग्र हस्तांबुजैः ।
दंष्ट्रा कोटिलसद्धालास्य कुहारामारक्तनेत्रत्रयां
बालेंदुज्वलत्कालिकां भगवतीं प्रत्यंगिरांभावयेत् ॥

क्ष्रौं ह्रीं च्रां यां कल्पयन्ती—मृच्छतु क्ष्रौं ह्रीं हन हन हुं फट् ॥ (मन्त्रान्तरं)

दूर्वास ऋषिः । अनुष्टुप् छन्दः । महाकृत्या देवता । ॐ रं बीजं । फट् शक्तिः । जुहेति कीलकं ह्रामिति षडङ्गम् ।

ध्यानम्:—

कृष्ण वर्णे बृहद्रूपे बृहब्भूव महर्भये
देवि देवि महादेवि मम शत्रून् विनाशय ॥

ॐ क्ष्रौं दुं र अग्नि सत्य तारिदुदुं सिव वेनाश्वा विणिर्गादु तिदषरि पनस्वदोवेति हादनितोयत्ति राममसोमवानसुसेदवेतजा खट् फट् जहि महात्योविध्र मान्गि समप्रभेहनशत्रून् ।

त्रिशूलेन द्वास्य पिबशोणितं । अतिदुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः, जात वेदसोनः ।

पर्षदतित्याद चोप्रणोयोयो विहि म धीस्यवदेर्गो भयंग्निरेर्वतु वित्सत स्ववर्भु भूरों हन हन हुं फट् ।

इदं यन्त्रं ताम्रे विलिख्य अयुतं जप्त्वा साध्यस्य शयन स्थल निखनेत् सर्वशत्रु नाशो भवति ।

## चतुरशीति प्रयोगः

क्षूंमौ रं इति कोष्टेषु । ह्रीं क्ष्मौं क्ष्म्रां ह्रूं ह्रूं हुं गच्छ महामाये कृत्ये महेश्वर प्रियेरिपोर्बलं निहत्याशु धनपुत्रांश्च नाशय इति परितः । प्रत्यंगिरा ऋषिः । अनुष्टुप्छन्दः । कृत्या देवता ह्रामिति षडंगम् ।

ध्यानम्:—

दीपांगार निभानना त्रिणयना दंष्ट्रोल्लसद्भूषणा
निघ्नंती विविधायुधैः परकृतान् कृत्यादिकान् सन्ततं,
रोगादीं श्च समस्त शत्रु निवहं संभेदयन्ती पुन
र्ध्यातस्या परकृत्यनाशन विधौ देवी महामन्त्रिणी ॥

ह्रीं क्ष्रौं रं रं महासिंह वदने ज्वल ज्वल प्रज्वल प्रज्वल क्षे क्षे ।

परसेनां मारय मारय परकृत्यां नाशय नाशय हूं फट् ।

इदं यन्त्रं लोहे विलिख्य लक्षं जप्त्वा सेना मध्ये शत्रु गेहे वा निखनेत् मारीज्वरो भवति ॥

## षडशीति प्रयोगः

दुं क्षं इतिकोष्टेषु । ह्रीं क्षौं श्मशानवासिनि शूलिनि दुष्टगृहान् हन हन हुं फट् इति परितः । दीर्घतम ऋषिः ककुप्छन्दः । शूलिनी देवता । ह्रामिति षडङ्ग ।

ध्यानम —

बिभ्राणा शूल बाणानसिरिजलज गदाचाप पाशान् कराब्जैः
मेघ श्यामा किरीटोल्लसितजल धरा भीषणा भूषणाढ्या
सिंहस्कन्दाधिरूढा चतसृभिरसिखेटकं बिभ्रतीभिः
कन्याभिर्भिन्त दैत्या भवतु गत भयध्वंसिनी शूलिनी नः ॥

ह्रीं क्षां दुं ज्वल ज्वल शूलिनि दुष्टग्रह हुं फट् स्वाहा ॥

इदं यन्त्रं लक्षं जप्त्वा स्वर्ण राजतेवा विलिख्य धारयेत् ब्रह्मराक्षस भूतभेताळ चातुर्थिक ज्वरादि नाशो भवति ॥

## अष्टाशीति प्रयोगः

ह्रीं मिति कोष्टेषु आं ह्रीं क्रों परमेश्वरी इष्टमाकर्ष याकर्षय वौ षट् इति परितः ।

ईश्वर ऋषिः । अनुष्टुप्च्छदः । अश्वारूढादेवता ह्रामिति षडंङ्गम् ।

ध्यानम्ः—

समाधिरूढ कुरंगम वल्गनक्रम सकंचुक धनस्त न मण्डलां ।
कनक वेत्र करग्रहणोल्लसत्करतलां कलये परमेश्वरीं ।

आं ह्रीं क्रों एह्येहि परमेश्वरि अमुकमाकर्षया कर्षय स्वाहा ।

आमुण्डि मुण्डि अनलपेरुमाट्टि इंत्राळ्ळुळ्ळु उळिविळंगुंकोप्परि शिवप्पाळ् उळ्ळुयि रोडलु रुहियंवश माह स्वाहा ।

इदं यन्त्रं ताम्र पट्टे विलिख्य लक्षं जप्त्वा तुषाग्निा सप्ताहं तापयेत् । आकर्षणं भवति वश्यं वा (मन्त्रांतरं) आं ह्रीं क्रों....यदद्य कञ्च वृत्रहान् नुदगा अभिसूर्य एह्येहि परमेश्वरी क्लीं नित्यक्लिन्ने नित्यमदद्रवे सर्वं तदिंद्र ते वश वौषट स्वाहा ॥ शेषं पूर्ववत् ॥

## नवति प्रयोगः

क्ष्रौं वं इति कोष्टेषु ह्रीं क्ष्म्रौं महाभैरव खे खे दुष्ट हन हन हुं फट् ।

इति परितः । आरण्यक ऋषिः । गायत्री छन्दः आपदु द्धारवटुको देवता । ह्रामिति षडंङ्गम् ।

ध्यानम्ः--

ध्यायेन्नीलाद्रिकान्तं शशिशकल धरं मुण्डमूलं महेशं
दण्डं कोदण्ड बाणौ डमरुग मनिशं खड्गशूले महाग्नि ।
नागं घंटाकपाले करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं
सर्पाकल्पं त्रिनेत्रं मणिमय विलसत् किंकिणी नूपुराढयं ॥

ॐ श्रीं ह्रीं क्लीं क्ष्मौं वं वटुकाय आपदुद्धारणाय कुरु कुरु वटुकाय...ह्रीं क्ष्म्रीं खे खे सर्वग्रहान् नाशय नाशय अमुकं पालय पालय हुं फट् स्वाहा । इदं यन्त्रं स्वर्णे विलिख्य त्र्ययुतं जप्त्वा धारयेत् । सर्वग्रह शान्ति र्भवति ॥

## द्विनवति प्रयोगः

ह्रीं क्ष्रौं इति कोष्टेषु । ह्रीं क्ष्रौं रणरङ्ग भैरवरणविजयं कुरु कुरु हुं फट् । इति परितः ।

आरण्यक ऋषिः। अनुष्टुप्छन्दः। रणरङ्ग भैरवोदेवता। ह्रामिति षडंङ्गम्।

ध्यानम्:—

**रक्त ज्वाल जटाधरं शशिधरं रक्तांगतेजोमयं**
**हस्ते दण्डकपाल पात्रभरणं लोकस्य रक्षाकरं।**
**निर्वाणं शुनवाहनं त्रिनयनं स्वानन्दकोलाहलं**
**भूतप्रेतपिशाच नाथ वटुकं क्षेत्रस्यपालं भजे।**

आं ह्रीं क्रों क्ष्म्रौं वं वटक वटुक जय जय रणं जयं कुरु हुं फट् स्वाहा।

इदं यन्त्रं भूर्ज पत्रे विलिख्य पञ्चलक्षं जप्त्वा भेरीमुखे दत्वा वादयेत्। रणरङ्गे खनित्वा धृत्वा च योदयेत् जयो भवति।

## चतुर्नवति प्रयोगः

ह्रीं ह्र्ं हुं इति कोष्टेषु। ॐ ह्रीं ह्र्ं नमो भगवते दक्षिणामूर्तये शंभवे सर्वास्मारक हन हन हुं फट् इति परितः॥

वामदेव ऋषिः। गायत्री छन्दः। दक्षिणामूर्ति देवता ह्रा मिति षडंङ्गम्।

ध्यानम्:—

**अजिनं पटमजतां गुलिपटं मुकुर स्फुटं गुल्तमणि घंटं,**
**मोहं अतिवटुं हस्तजपवठं कपिलाजटं नौमि कं कोटि पीठं।**

ॐ ह्रीं ह्र्ं नमो भगवते दक्षिणामूर्तये वीरासनस्थिताय खे खे समस्तापस्मारान् नाशय नाशय हुं फट् स्वाहा।

इदं यन्त्रं पञ्चलोहे विलिख्य त्र्ययुतं जप्त्वा धारयेत् अपस्मारक नाशो भवति॥

## षण्णवति प्रयोगः

ह्रां मिति कोष्टेषु। विश्वपिता महाय ब्रह्मणे देहि मे तनयान् स्वाहा॥

इति परितः। प्रजापति ऋषिः। अनुष्टुप् छन्दः। अभीष्ट पुत्रो देवता। ह्रामिति षडंगम्।

ध्यानम्:—

**अरुण कमल संस्थो रक्तवर्णो विरिंचिः**
**विविध रुचिर भूषालंकृतो विश्वयोनिः।**
**अभयवर कमण्डल्वक्ष सूत्रात्तबाहुः**
**विदधतु भगवान्मे विश्वभोगान् सुपुत्रान्॥**

ॐ ह्रीं नमो भगवते ब्रह्मणे प्रजापतये अष्टौ मे पुत्रा जायन्तां अक्षय रेतसे स्वाहा ॥

इदं ताम्र पट्टे विलिख्य लक्ष जप्त्वा अयुतं हुत्वा अभ्यर्च्य धारयेत् ॥ सुपुत्रो भवति ॥

## अष्टनवति प्रयोगः

क्लीं मिति कोष्टेषु । क्लीं विश्वावसो अभीष्टकन्यां प्रयच्छ हुं फट् । इति परितः । नारद ऋषिः गायत्री छन्दः । विश्वावसुर्देवता । ह्रामिति षडंङ्गम् ।

ध्यानम्ः—

**गायन्तमाराम गमाप्त वीणं सिंहासनस्थं मणिभंगनीलं**
**कन्या सखामध्यगतं स्मरामि विश्वावसुं लब्धुमभीष्टकन्यां ॥**

ॐ ह्रीं क्लीं नमो भगवते गन्धर्वराजाय विश्वावसो ममाभिलषितां शीघ्रं प्रयच्छ क्लीं स्वाहा ॥

इदं यन्त्रं सौवर्णे राजते वा विलिख्य लक्षं जप्त्वा धारये दभीष्टकन्यां लभते ॥

## शततम प्रयोगः

आं ह्रीं क्रों इति कोष्टेषु । आं ह्रीं क्रों ह्रीं हरि हर पुत्रायार्थ लाभाय पुत्रलाभाय शत्रुनाशनाय मदगज-तुरङ्ग वाहनाय महाशास्त्रे अमुकमाकर्षयाकर्षय वौषण्णमः इति परितः ॥ ब्रह्मा ऋषिः । गायत्री छन्दः । हरि हर पुत्रो देवता ह्रामिति षडंङ्गम् ।

ध्यानम्ः—

**हरि हर शरीर जन्मा मरकतमणिभंग मेदुरश्यामः**
**कलयतु मुदं सशास्ता कलयतु गुरुवित्त मोहिनीमूर्तिः ॥**

ओडु ओडु महाशास्तने ओडि ओडि महाशास्तने उन्नेनानोड बिडिपीरेन् ओडिच्चेन्नु ओरुवरहं ओ हदे तेडिच्चेन्नु इन्नाल शितकल क्किनें जारुपेरिक्कि नेरप्पारत्तू पञ्चेंद्रियं ।

पडिकदवाळिक एळ्यिरुपक्कदळ् उळवांजि उडुत्तपेडवै ओरुत्तवेकोलय पडुत्थक्कट्रिल् येडुत्तुच्चाति शेंडुवोंडित्तु अवळ् विट्रैकोलत्तु यण्णंडैक्कु कोण्डुवरु स्वाहा ।

इदं यन्त्रं ताम्रे विलिख्य त्र्ययुतं जप्त्वा चुल्यग्नौ प्रतापयेत् आकर्षणं भवति ॥

## द्व्युत्तर शततम प्रयोगः

ह्रीं रं इति कोष्टेषु । ह्रीं क्षं रं रं ज्जल ज्वाला मालिनि शत्रु हन हन ह्रीं । इति परितः ।

सदाशिव ऋषिः । अनुष्टप्छन्दः । संहार रुद्रो देवता । रामि षडंगं ।

ध्यानम्ः--

**वज्रं दंष्ट्रं त्रिनयनं कालकण्ठमरिंतमं ।**
**सहस्र कर मत्युग्रं वन्दे देवं सदाशिवं ॥**

ह्रों क्षीं श्रीं क्लीं क्षीं रं रुद्र शत्रुप्राणान् मद मद पच पच दह दह हुं फट् स्वाहा ।

इदं यन्त्रं अष्ट विष चूर्णे विलिख्य षडयुतं जप्त्वा सर्प, निंबतैलाक्तं षट्सहस्रं जुहुयात् मसूरिका—स्फोटकं भवति ।

## चतुरुत्तर शतसंख्या प्रयोगः

क्ष्रौं मितिकोष्टेषु । ॐ ह्रीं क्ष्रौं स्फुर स्फुर गहा घोर दुष्टं हन हूं फट् । इति परितः ।

आनन्द भैरव ऋषिः । त्रिष्टुप्छन्दः । अघोररुद्रो देवता । ह्रामिति षडंगं ।

ध्यानम्ः—

**सजलघन समा भं भीम दंष्ट्रं त्रिनेत्रं,**
**भुजग धर मघोरं रक्तवस्त्रांगरागं ।**
**डमरु परशु खड्गान् खेट चापौ च बाणं,**
**त्रिशिखर नृकपाले बिभ्रतं भावयामि ॥**

ॐ क्ष्रौं ह्रीं स्फुर स्फुर प्रस्फुर २ घोर घोर तर २ तनुरूप चट चट प्रचट प्रचट कह कह बम बम बन्ध बन्ध घाताय २ खे खे शत्रु स्वातय स्वातय खे खें क्ष्रौं हुं फट् ॥

इदं यन्त्रं विष वृक्ष पत्रे त्व अष्ट विष चूर्णे वा विलिख्य लक्षं जप्त्वा भौमवारे समारभ्य भौमवासरांतं रात्रौ अदयुतं जपेत् । नाशो भवति ॥

## षड्डुत्तर शत संख्या प्रयोगः

ठ्वं घ्रं इति कोष्टेषु । ॐ द्र, ह्रीं ठ्वं घ्रं घण्ठाकर्णरुद्र वसूवसूरिका शमय शमय ठ्वं ठ्वं फट् ॥ इति परितः । ईश्वर ऋषिः। अनुष्टप्छन्दः । घण्टाकर्ण रुद्रो देवता ह्रामिति षडंगं ।

ध्यानम्:–

भूतेशंभूत संघैः परिवृतमनिशं मत्त मेताळवीठं
या हा ही हीनिनादैर्दतिरभ सकृतैरट्टहासैरुपेतं ।
हस्तै स्साहस्र संख्यै विधृत शिखिचयै स्यार्द्रदेहादिरूटं,
स्फोटान् संदह्यमानं हरमहमनिशं घंटकर्णं नमामि ।

ॐ ह्रीं ठ्वं ग्रं घण्ठाकर्ण विशालाक्ष महाबल पराक्रम स्फोटकान्नाशय त्रहि रक्ष रक्ष महाबल ।

इदं यन्त्रं औदुंबरफलके विलिख्य लक्षं जप्त्वा साद्य गृहे निखनेत् ।

स्फोटकादि शांतिर्भवति (मन्त्रांतरं) नेरुप्पु ज्वरमां ओध्रिरि तन्नै निच्चंर महत्तणित्तरुळि कुरुक्कुंवडि उळ्ळूधाहा कुडुक्कुंडै क्यार् तन्नेल् नृत्तं चेय्यं पेरुमानार् तान् निरेपूशि वरविट्टन्...ओमुत्तन् पोनवळि अरियामल् ओडिप्पोह शिवायनमः सितातळे ताळरवेवा दीर्घ चतुरश्र विलिख्य मद्ये पंकत्याकारेण अष्टमांशाकान् चतुर्दश विलिख्य तत्पूर्वार्ये भागे पंक्तिशः चतुर्दश दमरकान् विलिख्य मन्त्रेण संवेष्ट्य रेखाग्र शूलेषु साद्यं लिखित्वायुतं जप्त्वा गृहद्वार द्वयोपरि स्थापयेत् स्पोटकाशांति र्भवति ।

## अष्टोत्तर शत संख्या प्रयोगः

ह्रीं स्रां इति कोष्टेषु । ह्रीं क्ष्रौं मार्जार रुद्रमूषिकोच्चाटनं हुं फट् । इति परितः ।

विश्वामित्र ऋषिः । गायत्री छन्दः । मार्जाररुद्रो देवता । ह्रा मिति षडंङ्ग म् ।

ध्यानम्:—

उद्वृत्तो द्वांत लिंगे स्त्रिमिव रत्नलकणा नक्षिभिः प्रोद्वमन्तं
कोपोग्रो दग्रदीर्घ प्रविरळ परळ श्मश्रु मत्युग्रनादं ।
खादंतं मूषिकार्यश्चरचरति हठादुन्नता दुन्नतांसं
वंदे मार्जार रुद्रं खरतर नखरं स्तब्ध वालाग्रभागं ।

ॐ ह्रीं क्ष्रौं स्रां रं रं मार्जार रुद्र वज्रनखदंष्ट्रायुधाखून् खादय खादय हुं फट् ।

इदं यन्त्रं ताम्रे पट्टे विलिख्य त्वयुतं जप्त्वा क्षेत्रे निखनेत् मूषिक निवृत्तिः र्भवति ।

ॐ शि ओ धान् शिट्टिक एलियायान् कंडु तानु तत्रे ननु इच्चुन विट्टि मरुप्पु नंपोहाच्वाहा प्रकारांतरं केतकि पत्र नवके पूर्वोक्त यन्त्रं चतुष्कोष्ट मेव वाल्लि विख्य कोष्टेषु लं यं विलिख्य ॐ रागिनि रगिहि ह्रीं हं सं रागेश्वरि नागेंद्रुतिः भुं फट् स्वाहा । मन्त्रेंण परिवेष्टय रेखाग्र शूलेषु ससाद्य फट्कारं लिखित्वा नवमिरकं दण्डैर्नि बध्य कोद्रवान् पंक्त्याकारेण विलिखेत् मूषिकोच्चाटनं भवति ।

ॐ ह्रीं क्ष्रौं रं रं अत्रिणात्वा क्रिमेहन्मि कण्वेन जमदग्निना विश्वावसो ह्यणाहतः क्रिमीणाताुं राजा राजा अप्ये षाग् स्तपतिर्हतः अथो माता थोपिता अथोस्थूरा अथो क्षुद्राः अथो कृष्णाः अयोश्वेता- अथो अशातिकाहताः ।

श्वेताभिस्सह सर्वेहताः । इतिमन्त्रेण सहस्र मभिमन्त्र्य अष्ट दिक्षुमध्येचार्क दण्डेषु बध्वा तद्भस्म सस्यो-परि विकिरेत् शलभादि क्रिमि शांतिर्भवति ॥

## दशोत्तर शतसंख्या प्रयोगः

ह्लीं घ्रीं इति कोष्टेषु ॥ ह्लीं घ्रीं व्याघ्र चामुंडि दुष्टं हन हन हुं फट् । इति परितः ।

क्षपणक ऋषिः गायत्रीं छन्दः । व्याघ्र चामुंडी देवता । ह्लामिति षडंगं ।

ध्यानम्:–

हुं हुं हुं कारनाद प्रचलित वसुधाकंपिता भूधरेंद्रा ।
हा हा मुक्ताट्ट हासा रविगगनदळ व्राजते ब्रह्म खासं ।
ह्लीं ह्लीं श ब्देन देवद्विचय मथिनी ब्रह्मविष्ण्वीश रूपा
तां देवीं घोर रूपां त्रिभुदन नमितां व्याघ्रचामुण्डिमीडे ।

श्रीं ह्लीं स्रां क्ष्रौं रं व्याघ्रचामुण्डि शीघ्र खे खे शत्रुं हन हन हुं फट् स्वाहा ।

इदं उन्मत्त बीजचूर्णं विलिख्य लक्षं जप्त्वा कृष्णाष्टंम्यां रात्रौ महिषाज्ययुक्तं त्रिसहस्रं हुत्वा पंचदशि पर्यंतं सप्तसाहस्रं हुनेत् । शत्रुरुन्मादेन नश्यति ।

## द्वादशोरत्तरशत संख्या प्रयोगः

क्रें प्रें रं इतिकोष्टेषु ॐ ह्लीं क्ष्रौं घ्रू घ्रां स्रं सदाशिव रौद्रास्त्रेण सर्वग्रहान् नाशय नाशय हुं फट् । इति परितः ।

अन्तर्यामि ऋषिः अनुष्टप् छन्दः सदाशिवो देवता । ह्लामिति षडंगं ।

ध्यानम्:—

घण्टा कपाल घृणि मुण्ड कृपाण खेट ।
खट्वांग शूल डमरुनभय प्रदानं ।
रक्तांग मिन्दु शकला भरणं त्रिनेत्रं ।
पञ्चाननाब्ज मरुणांशुक मीश मीळे ॥

ह्रीं क्ष्रौं खे खे हुं हुं हुं फट् महारुद्र प्रळयांतक सर्वग्रहान् हन २ ह्रीं रं रं शिव हुं फट् स्वाहा ।

इदं यन्त्रं ताम्र पट्टे विलिख्य तोय पूर्ण...कलशे निधाय त्र्ययुतं जप्त्वा ग्रहाविष्टं स्नाप्य यन्त्रं बन्धयेत् सर्वग्रह शान्ति भवति ।

## चतुर्दशोत्तर शत संख्या प्रयोगः

ह्रीं क्ष्रौं रं इति कोष्टेषु । ह्रीं क्ष्रौं रं सहस्रार खे खे सर्वग्रहान् हन हन हुं फट् । इति परितः ।

अहिर्बुध्न्य ऋषिः । अनुष्टूप्छन्दः । सुदर्शन रूपी विष्णुर्देवता ह्रामिति षडंगम् ।

ध्यानम्:--

**चक्र द्यायुधचारुषोढश भुजं सज्वालकेशोज्वलं**
**चक्रं शंख गदाब्ज शूल विशिखाचापाक्षि पाशांकुशौ ।**
**कुंतं चर्म हलं भुशुंडि परशूवज्रं तथा तर्जनीं**
**हेतिं षोडश धारिणं रिपुहरं श्री चक्रराजं भजे ॥**

ॐ ह्रीं क्ष्रौं रं सहस्रार हुं फट् सहस्रज्वाला विजृंभिताय महाविकट नृसिंहाय तप्त हाटककेशोज्ज्वलत् पावकलोचनाय वज्रनख दिव्यसिंह महाध्वनि ध्वस्त जगद्भ्रायाय स्वर्ण वर्ण मकुट ज्वलित नृसिंहाय विश्वरूप धारिणे प्रदीपदिक्चक्रवाल भयंकर सहस्राक्ष सहस्रबाहवे सहस्रायुधधराय सर्वग्रहान् नाशय नाशय फट् स्वाहा ।

इदं यन्त्रं स्वर्णे राजते वा विलिख्य कलशे निधाय त्र्ययुतं जप्त्वा तज्जपेन ग्रहाविष्टं स्नापयित्वा यन्त्रं ।

बन्धयेत् सर्वग्रह क्षुद्र शांतिः भवति ॥

| १०० सुत वृद्धि | | | | ८० गोवृद्धि | | | | ७२ शूलहरं | | | | ६४ राजवश्यं | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ४२ | ४९ | २ | ७ | ३२ | ३९ | २ | ७ | २८ | ३५ | २ | ७ | २४ | ३१ | २ | ७ |
| ६ | ३ | ४६ | ४५ | ६ | ३ | ३६ | ३५ | ६ | ३ | ३२ | ३१ | ६ | ३ | २८ | २७ |
| ४८ | ४३ | ८ | १ | ३८ | ३३ | ८ | १ | ३४ | २९ | ८ | १ | २० | २५ | ८ | १ |
| ४ | ५ | ४४ | ४७ | ४ | ५ | ३४ | ३७ | ४ | ५ | ३० | ३३ | ४ | ५ | २६ | २९ |

| ६२ शुभवृद्धि | | | | ५४ ग्रहमोचनं | | | | ५२ क्षेमवृद्धि | | | | ४४ सर्वनिग्रह | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २४ | ३१ | २ | ७ | १८ | २६ | २ | ७ | १८ | २५ | २ | ७ | १४ | २१ | २ | ७ |
| ६ | ३ | २८ | २६ | ६ | ३ | २३ | २२ | ६ | ३ | २२ | २१ | ६ | ३ | १८ | १७ |
| ३० | २५ | ८ | १ | २५ | २० | ८ | १ | २४ | १९ | ८ | १ | २० | १५ | ८ | १ |
| ४ | ५ | २६ | २९ | ४ | ५ | २१ | २४ | ४ | ५ | २० | २३ | ४ | ५ | १६ | १९ |

एवमेव सर्वाणि संख्या विन्यासयोग कच्छपुटीयन्त्राणि तन्त्रोक्तविधिना परिकल्पयेत् । दिङ्मात्रं अत्र उदाहृतानि एतानि ॥ इतिशिवं शांतिकमलाकरोक्तं ॥

## छिन्नमस्ता ॥

मन्त्रोद्धारं

लक्ष्मीं लज्जां तथा मायां मात्रां द्वादशिकी मथ ।
वज्रवैरोचनीये द्वे माये फट्स्वाहया युते ॥
श्रीं ह्रीं ह्रीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा ॥

माया युग्मेन संपूज्याः शक्तयः परिवारगाः ॥
त्र्यंबकः सकला पद्मा चारुकं च सुरेश्वरि ।
अन्ते उच्छूनबीजं फट् ठद्वयेन समायुतं ॥
ॐ ह्रीं श्रीं च्छ्रीं छिन्नमस्तके च्छ्रीं फट् स्वाहा ॥

उत्कीलनः

मात्रां द्वादशिकी मादौ जपेन्मन्त्रस्य पार्वति ।
छिन्नमस्तामनो रेष स्यादुत्कीलकः परः ॥

संजीवनंः–

छिन्नमस्तामनोरेष स्यात् संजीवनको मनुः ।
परामादौ जपेद्देवि काममन्ते तथैव च ॥

शापोद्धारंः

वासनांकमलां मायां रुद्रशापं विमोचय ।
मोचयाद्यो मयाख्यातं छिन्नमस्तांकमोचनं ॥

यन्त्रं

बिंदुस्त्रिकोणं च बहिस्त्रिकोणं त्रिकोणमूर्ध्वं शुभवृत्तबिंबं ।
वस्वश्रयुक्तं धरणीगृहंस्यात् श्रीचक्रमेतत् परदेवतायाः ॥

ध्यानं

राणांकार्धपाशपरीत फाल फलकां बालार्ककोटिप्रभां
ज्वालाबद्धमहार्घरत्ननिचियां कंदर्पदर्पोज्ज्वलां ।
शूलास्थकुशपाशवेणुमुसलाभोजाभयान् बिभ्रतीं
इष्टां छिन्नकमस्तकां भगवतीं ध्याये हृदब्जे सदा ॥

संपुटमन्त्रः

मायाद्वयं जपेदन्ते साधकः साधकेश्वरि ।
मन्त्रो यंछिन्नमस्तायाः संपुटाख्योऽतिदुर्लभः ॥

## ॥ छिन्नमस्ता आवरणदेवताः ॥

यन्त्रं ॥ त्रिरेखात्मक द्वारयुत भूपुरं, अन्तरे वर्तुलं अष्टदलं, षट्कोणं, त्रिकोणं ॥

पीठपूजा । आधार शक्त्यादि परतत्वांत पीठदेवताभ्यो नमः । नवपीठ शक्तीः जयादि मङ्गलांताः । ॐ सर्वबुद्धिप्रदे वर्णनीये सर्वसिद्धिप्रदे डाकिनीये ॐ वज्रवैरोचनीये एह्येहि नमः इति पुष्पाद्यासनं ॥

१. भूपुराद्बहिः पूर्वादिक्रमेण, वं वज्रादि दशदिक्पालान् आयुधानि पूजयेत् ।

२. भूपुराद्बहिः पूर्वा तत्समीपे इन्द्रादि दशदिक्पालान्यजेत् ॥

३. भूपुराभ्यन्तरे चतुर्दिक्षु पूर्वादि क्रमेण । करालाय, विकरालाय, अतिकरालाय, महाकालाय ॥

४. अष्टदलेषु पूज्यपूजकयों रंतरालं प्राचीं प्रकल्प्य । प्राचीक्रमेण । एकलिंगायै, योगिन्यै, डाकिन्यै, भैरव्यै, महाभैरव्यै, इंद्राक्ष्यै, असितांग्यै, संहारिण्यै ।

५. षट्कोणकेसरेषु ॥ आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च । आं खड्गाय हृदयाय, ईं सुखड्गाय शिरसे । ऊं वज्राय शिखायै, ऐं पाशाय कवचाय, औं अंकुशाय नेत्रत्रयाय अः वसु रक्ष २ ह्रीं ह्रीं अस्त्राय फट् इति स्वाहा पद संयोजित अङ्गदेवीं यजेत् ॥

६. त्रिकोणेषु ॥ ऐं छिन्नमस्तायै मध्ये, दक्षिणे ऐं डाकिन्यै, वामे वर्णिन्यै ॥

## मातंगीमन्त्रः ।। (द्वात्रिंशदक्षरी)

१ ॐ ह्रीं ऐं श्रीं, २ नमो भगवति, ३ उच्छिष्टचाण्डालि, ४ श्रीमातंगेश्वरि, ५ सर्वजनवशंकरि, ६ स्वाहा ।।

अस्य मन्त्रस्य मतंग ऋषिः । अनुष्टुप्छन्दः । मातंगी देवता । संख्याक्रमेण । न्यासः ।।

ध्यानम्ः—

**घनश्यामलांगीं स्थितां रत्नपीठे शुकस्योदितं शृण्वतीं रक्तवस्त्राम् ।**
**सुरापानमत्तां सरोजस्थितां श्रीं भजे वल्लकीं वादयंतीं मतंगीम् ।।**

पुनश्चरणं अयुतजपः । मध्वक्तैर्मधुपुष्पैः दशांशतो होमः ।।

## मातंगी मन्त्रभेदे लघुश्यामा मन्त्रः ।।

१ ऐं नमः २ उच्छिष्ट ३ चाण्डालि ४ मातंगि, ५ सर्वशंकरि, ६ स्वाहा (विंशत्यक्षरी मन्त्रः)

अस्य मन्त्रस्य । मदन ऋषिः । निचृद्गायत्री छन्दः । देवी लघुश्यमा देवता ।।

ऐं बीजं । स्वाहा शक्तिः ।

ऐं रत्यैनमः मूर्घ्नि । ह्लीं प्रीत्यै नमः हृदि । क्लीं मनोभवायै नमः पादयोः ऐं इच्छाशक्त्यै नमः मुखे । ह्लीं ज्ञानशक्तयै नमः कण्ठे । क्लीं क्रियाशक्तयै नमः लिंगे ।।

द्रां द्रावणगाणाय नमः शिरसि । द्रीं शोषणबाणायनमः मुखे । क्लीं तापनबाणाय नमः हृदि । क्लूं मोहन बाणाय नमः गुह्ये । सः उन्मादनबाणायनमः पादयोः । इति बाण न्यासः । ततः संख्या क्रमेण न्यासः । मातृका न्यासः ।।

**आं क्षां ब्राह्मीकन्यकायै नमः मूर्घ्नि ।**
**ईलां माहेश्वरीकन्यकायै नमः वामांसे ।**
**ऊं हां कौमारीकन्यकायै नमः दक्षिणांसे ।**
**ॠं सां वैष्णवीकन्यकायै नमः नाभौ ।**
**ॡं षां वाराहीकन्यकायै नमः ककुदि ।**
**अः लां महालक्ष्मीकन्यकायै नमः दक्षिणांसे ।**
**औं वांचामुण्डाकन्यकायै नमः ककुदि ।**
**अः लां महालक्ष्मीकन्यकायै नमः हृदि ।**

सिद्धिन्यासः । ऐं अणिमासिद्धिकन्यकायै नमः ललाटे ।
ऐं महिमासिद्धिकन्यकायै नमः भ्रूमध्ये ।
ऐं लघिमासिद्धिकन्यकायै नमः कण्ठे ।
ऐं गरिमासिद्धिकन्यकायैनमः हृदि ।
ऐं असितासिद्धिकन्यकायै नमः नाभौ ।
ऐं वशितासिद्धिकन्यकायै नमः आधारे ।
ऐं प्राकाम्यसिद्धिकन्यकायै नमः लिंगे ।
ऐं प्राप्तिसिद्धिकन्यकायैनमः मूर्घ्नि ।

अप्सरो न्यासः क्लीं ऊर्वश्यप्सरः कन्यकायैनमः मूर्घ्नि । क्लीं मेनकाप्सरः कन्यकायै नमः ललाटे । क्लीं रंभा...यैनमः दक्षिनेत्रे । क्लीं घृताच्यप्सरः...नमः वाम नेत्रे ।

क्लीं पुंजिकस्थल्यप्सरः...नमः वक्त्रे । क्लीं सुकेश्यप्सरः...नम, दक्षकर्णे । क्लीं मंजुघोषांप्सरः....नमः वामकर्णे । क्लीं महारंगवत्यप्सरः...नमः ककुदि ।। ततः अष्ट कन्यान्यासः क्लीं यक्ष कन्यकायैनमः दक्षांसे । क्लीं गन्धर्व ..नमः वामांसे । क्लीं सिद्ध ..नमः हृदि क्लीं नर...नमः दक्षिणस्तने । क्लीं नाग...नमः वामस्तने । क्लीं विद्याधर...नमः जठरे ।

## मातंगी भेदे लघुश्यामा ।। (विंशत्यक्षरो मन्त्रः)

चक्रं ।। बिंदु, त्रिकोणं, पंचकोणं, वर्तुलं अष्टदलं, वर्तुलं षोडशदलं, एकरेखात्मकभूपुरं द्वारयुतं ।।

पीठपूजा ।। मं मंडूकादि...नमः । नवपीठशक्तीः पूर्वाद्यष्टसु दिक्षु मध्ये दिक्षु च । सर्वत्र लघुश्यामायै नमः इति योजयित्वा अर्चयेत् ।। भूत्यै, उन्नत्यै, कांत्यै, कीर्त्यै, सृष्ट्यै, सन्नत्यै, व्यष्ट्यै, उत्कृष्ट्यै, मध्ये ऋद्ध्यै ।।

१. त्रिकोणाग्रे देव्यग्रे ऐं रत्यै, दक्षिणे ह्रीं प्रीत्यै, वामे क्लीं मनोभवायै नमः ।।

२. त्रिकोणे । देव्यग्रे । ऐं इच्छाशक्तयै, देवी दक्षिणे ह्रीं ज्ञानशक्तयै, वामे क्लीं क्रियाशक्तयै ।।

३. पंचकोणेषु आग्नेयादि क्रमेण । द्रां द्रावणबाणाय, द्रीं शोषणबाणाय, क्लीं तापनबाणाय, ब्लूं मोहन बाणाय, सः उन्मादन बाणाय इति बाणान् ।।

४. पंचकोणाग्रे आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च हृदयादि षडंगानि ।

अष्टदले पूज्यपूजकयोरंतरालं प्राचीदिशां प्रकल्प्य प्राचीक्रमेण । आं क्षां ब्राह्मी कन्यकायै, इतः परं सर्वे अष्टमातृकानामांते कन्यकायै इति योजयेत् । ईं लां माहेश्वरी, ऊं हां कौमारीं ऋं सां वैष्णवीं, लृं षां वाराही, ऐंशां इन्द्राणी, औं वां चामुण्डा, अः लां महालक्ष्मीं ।।

६. अष्टदलाग्रेषु तत्तत्समीपे । ऐं अणिमासिद्धि कन्यकायै, ऐं महिमासिद्धि,ऐं लघिमासिद्धि। ऐं गरिमासिद्धि । ऐं ईशितासिद्धि, ऐं वशितासिद्धि, ऐं प्राकाम्य सिद्धि, ऐं प्राप्तिसिद्धि ॥

७. षोडशदलेषु प्राचीक्रमेणः । क्लीं ऊर्वश्यप्सरः कन्यकायै, क्लीं मेनकाप्सरः, क्लीं रम्भाप्सरः, क्लीं धृताच्यप्सरः, क्लीं पुंजिकस्थल्यप्सरः, क्लीं सुकेश्यप्सरः, क्लीं मंजुघोषाप्सरः, क्लीं महारंगवत्यप्सरः, क्लीं यक्ष, क्लीं गंधर्व, क्लीं सिद्ध, क्लीं नर, क्लीं नाग, क्लीं विद्याधर, क्लीं किंपुरुष, क्लीं पिशाच, सर्वत्र कन्यकायै इति योजयेत् ॥

८. भूपुराभ्यन्तरे प्राच्यांदिशि द्वारे गजाननायै योगिन्यै, सिंहमुख्यै, गृध्रास्यायै, काकतुंडिकायै, उष्ट्रग्रीवायै, हयकीवायै, वाराह्यै, शरभाननायै, उलूकिकायै, शिवारवायै, मयूर्यै, विकटाननायै, अष्टवक्रायै, कोटराक्ष्यै, कुब्जिकायै, विकटलोचनायै, इति षोडश शक्तीः ।

ततो दक्षिण द्वारे । शुष्कोदर्यै, ललज्जिह्वायै, अश्वदंष्ट्रायै, वानराननायै, ऋक्षाक्ष्यै, केकराक्ष्यै, बहुतुण्डायै, सुराप्रियायै, कपालहस्तायै, रक्ताक्ष्यै, शुक्यै, श्येन्यै, कपोतिकायै, पाशहस्तायै, दण्डहस्तायै, प्रचण्डायै इति षोडशशक्तीः ॥

पश्चिमद्वारे । चण्डविक्रमायै, शिशुघ्न्यै, पापहंत्र्यै, काल्यै, रुधिरपायिन्यै, वसाधयायै गर्भभक्षायै, शवहस्तायै, अन्त्रमालिन्यै, स्थूलकेश्यै, बृहत्कुक्ष्यै, सर्पास्यायै, प्रेतवाहिन्यै, दन्दशूककरायै, क्रौंच्यै, मृगशीर्षायै इति षोडश शक्तीः ॥

उतरद्वारे ॥ वृषाननायै, वृत्तास्यायै, धूमनिःश्वासायै, व्योमैक चरणायै ऊर्ध्वदृशे, तापिन्यै, शोषिण्यै, दृष्ट्यै, कोटरायै, स्थूलनाजिकायै विद्युत्प्रभायै, बलाकास्यायै, मार्जार्यै, कटपूतनायै, अट्टाट्टहासायै, कामाक्ष्यै । इति षोडशशक्तीः । सर्वत्र योगिनीपदं अन्ते योजयेत् ॥

९. भूपुराभ्यन्तरे । आग्नेये बं बटुकाय । नैरृते गं गणपतये । वायव्ये क्षं क्षेत्रपलाय, ईशाने दुं दुर्गायै ।

१०. भूपुराद्बहिः इन्द्रादि दशदिक्पालाः ।

११. तेषां आयुधानि ।

१२. तद्बहिः पूर्वादिदिक्षु । तत्तत्संज्ञावाद्येभ्यो, विततवाद्याय, घनवाद्याय, सुषिराभिधवाद्यायनमः ॥

## ॥ राजमातङ्गी ॥

**तारं परां समुध्दृत्य राजमातङ्गिनीति च ।**
**मम सर्वार्थसिद्धि च देहि-युग्मं समुद्धरेत्**
**तुरगं ठद्वयं चान्ते मंत्रोऽयं राजवल्लभः**
ॐ ह्रीं राजमातंगिनि मम सर्वार्थसिद्धिं देहि २ फट् स्वाहा ॥

ध्यानं

चन्द्रार्धाङ्कितशेखरां त्रिनयनां कोटीन्दुसूर्यप्रभां
नानारत्न सहस्र बद्धरशनां प्रेतासने संस्थितां
शंखं तोमर पट्टिसाब्जयुगलान् दोर्भिर्वहन्तीं मुदा
ध्यायेऽहं हृदये सदा भगवतीं मातंगिनीं हारिणीम् ॥

उत्कीलनं

भवेदुत्कीलनं देवि राजमातंगिनी मनो ।
विश्वांते सकलां दद्यात् जपेत् पार्वति साधकः ॥

संजीवनं

तारं परां पठेदन्ते जपादौ साधकेश्वरि ।
राजमातंगिनी देव्या भवेत् संजीवनं मनोः ॥

शापमोचनं

तारं परां च मातंगि कालशापं विमोचय ।
तुरगं नीरमन्तेतु विद्येयं शापहारिणी ॥

यन्त्रं

अथ वक्ष्यामि मातंग्या यंत्रं तंत्रविनिश्चितं ।
बिदुस्त्रिकोणं वसुकोणयुक्तं वृत्तः ततो नागदलं त्रिवृत्तं ।
भू मन्दिरं पार्वति वह्निरेखं मातंगिनीयंत्रमिदं प्रदिष्टम् ॥

मन्त्रभेदाः

मातंगी सुमुश्व्योरैक्यं मतंगमुनिना स्मृतं ।
मातंग चक्रिणीदेवी कुब्जिका शांबरी तथा ।
देव्या भेदानि चत्वारि फलं वर्षचतुष्टये ॥

संपुटमन्त्रः

तारमंते जपेदेवि त्रिवारं प्रोच्चरेत् सुधीः ।
राजमातंगिनी देव्याः संपुटाख्योस्त्य यं मनुः ॥

## मातंगी

चक्रं ॥

पीठदेवताः मं मंडूकादि...नमः । नवपीठशक्तीः । विभूत्यै मातंग्यै नमः इति सर्वत्र मातंगि पदं संयोजयेत् ॥ कांत्यै, सृष्ट्यै, कीर्त्यै, सन्नत्यै, व्युष्टयै, उत्कृष्टयै, मध्ये ऋद्धयै ॥

ॐ ह्रीं सर्वशक्तिकमलासनाय नमः

१. त्रिकोणे । ॐ ह्रीं ऐं श्रीं ४ रत्यै, ४ प्रीत्यै, भ मनोभवायै, ४ (मातंगिपदं योजयेत्)

२. षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्येदिक्षुच । ॐ ह्रीं ऐं श्रीं इति संयोज्य षडंग युवतीः ॥

३. अष्दलेषु पूज्यपूजकयोरंतरालं प्राचीक्रमेण ब्राह्म्यादि अष्टमातृकाः ।

४. अष्टदलेषु ब्राह्म्याठीनां समीपे असितांगभैरवादि अष्टभैरवा ।

५. षोडशदलेषु प्रचीक्रमेण । ४ वामामातंगी, ज्येष्ठा, रौद्री, शांत्यै, श्रद्धा, माहेश्वरी, क्रिया, लक्ष्मी सृष्टि, मोहिनि, प्रमथा, श्वासिनी, विद्युल्लता, सुन्दरि, नन्दा, नन्दबुद्धि ।

६. भूपुराभ्यन्तरे प्राच्यादि चतुर्दिक्षु । ४ मातंगीमातंग्यै, ४ महामातग्यै, महालक्ष्यै, सिद्धयै-आग्नेयादि चतुर्विदिक्षु । ४ विघ्नेशायै, ४ दुर्गायै, बटुकायै, क्षेत्रपालायै इति पूर्वोक्त सर्वनामानि, ॐ ह्रीं ऐं श्रीं इति पूर्वं, मातंग्यै इति च अन्ते योजयेत् ॥

७. भूपुराद्बहिः इंद्रादि दशदिक्पालाः । तेषां आयुधानि च यजेत् ॥

## त्रिपुरा

मन्त्रोद्धारण

**देवि वक्ष्याम्यहं गुह्यं त्रिपुराया रहस्यकं ।**
**नित्यायाशक्तयः पूज्या वाग्भवी कामशक्तयः ॥**
**तारामाया रमाबीजैर्नाममध्येऽचलेश्मरी ।**
**मन्त्रोयं सर्वशक्तीनां सर्वसाधरणो मनुः ॥**
**त्रिपुरापूजने देवि पृथग्जाप्ये पृथग्मनुः ॥**

वामकेश्वरतन्त्रं

**लक्ष्मी. परा मदनवाग्भव शक्तियुक्ता,**
**तारं च भूतिकमला कथितापि विद्या ।**
**शक्त्यादिकं तु विपरीततया च प्रोक्तं**
**श्रीषोडशाक्षरविधिः शुभदोऽस्तु पुर्णः ॥**

उड्डामरे

क्षीरोदसंभवा भूति कामं वाग्भवमेव च ।
शक्तिः प्रणवलक्ष्ये तु लक्ष्मी शक्त्यादिकं ततः ॥
विपरीततया प्रोक्ता विद्या श्रीषोडशाक्षरी ।
त्रिकूटासकला भद्रे विज्ञेयं षोडशाक्षरी ॥

उत्कीलनं

कूटत्रयाणां प्रथमं वर्णं वर्णं समुद्धरेत् ।
जपेच्छ्रीषोडशाक्षर्या भवेदुत्कीलनं मनोः ॥

संजीवनः–

पराश्रयं पठेदादौ जीवनं भैरवीमनोः ।
कूटत्रयाणां देवेशि त्रिकूटाया जपेत्सुधीः ॥

शापमोचनः

बालाबीजत्रयं कूटमाद्यं तारं परां रमां ।
सदाशिवस्य शापं च मोचयद्वयमुद्धरेत् ॥

ध्यानं

दिव्याम्बुरांकिततनुं मिहिराग्निचन्द्र
नेत्रांसुधांशुमुकुटां हिमसन्निभाभाम् ।
सिंहासनां परशुखड्गधरां भुजाभ्यां
ब्रह्मेंद्रविष्णु नमितां त्रिपुरां भजेऽहम् ॥

संपुटमन्त्रः

शक्त्यादिकूटं मन्त्रस्य दद्यादादौ जपेन्मनुं ।
महात्रिपुरसुन्दर्याः मन्त्रोयं संपुटाभिधः ॥

त्रिपुराया परिवारिताः षट्सखीनां मन्त्रोद्धारः ॥

दशविद्या भद्रकालीतुरी च छिन्नमस्तका ।
दक्षिणाकालिका श्यामा कालरात्रीति सुन्दरि ।
षट्सखीनामहं तासां मन्त्रोद्धारं ब्रवीमि ते ॥

भद्राकाली :—

कालीत्रयं कूर्चयुगं लज्जायुग्मं च भद्रिका ।
भद्रकालि इदं ब्रूयात् बीजानि प्रतिलोमतः ।
ठद्वयेन समायुक्तो भद्रकाल्या महामनुः ॥
क्रीं ३ हूं २ ह्रीं २ भैं भद्रकालीं भैं ह्रीं २ हूं २ क्रीं ३ स्वाहा ॥

तुरी :

प्रणवं तारका ज्योतिस्ताराद्यन्ते नम इति ।
तुर्या मूलमिदं प्रोक्तं स्वतन्त्रे शंभुना स्वयम् ॥
ॐ त्रं त्रौं त्रों महातुर्ये नमः ॥

छिन्नमस्ता :

त्र्यम्बकः सकला पद्माचारुकं च सुरेश्वरि ।
अन्ते उच्छूनबीजं फट् ठद्वयेन समायुतम् ॥
ॐ ह्रीं श्रीं च्छ्रीं छिन्नमस्तके च्छ्रीं फट् स्वाहा ॥

लक्ष्मीं लज्जां तथा मायां मात्रां द्वादशिकामथ ।
वज्रवैरोचनीये द्वे माया फट् स्वाहया युते ॥
ॐ ह्रीं ह्रीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा ॥

दक्षिणकाली :

कुंतीत्रयं तीरयुग्मं क्षामायुग्मंततोऽभिद्याम् ।
दक्षिणाकालिकेत्ये वमन्ते कालीत्रयं पुनः ॥
कूर्चयुग्मं परायुग्मं पयश्चैव सुरेश्वरि ।
दक्षिणायाः कालिकाया मनु र्द्वाविंशदक्षरः ॥
क्रीं ३ हूं २ ह्रीं दक्षिणे कालिके क्रीं ३ हूं २ ह्रीं स्वाहा ॥

श्यामा :—

हरिणाक्षी तथा लज्जा काली जिह्वावतुष्टयं ।
ततः सुधारसे श्यामे कृष्णशापं विमोचय
अमृतं स्रावय स्वाहा श्यामामन्त्र मुदाहृतम् ॥
ॐ ह्रीं क्रीं ऽ सुधारसे श्यामे कृष्णशापं विमोचय अमृतं स्रावय स्वाहा ॥

कालरात्री :

प्रणवं वासना माया मन्मथः कमला तथा ।
बीजं पंचशिरो ज्ञेयं ततः पल्लवमुद्धरेत् ।
ततो मध्येऽभिधां त्यक्त्वा ह्यन्ते सर्वं वशं कुरु ।
नीरो (वीर्यं) देहि युगं मध्येत्यक्त्वाभिधां च कामिनि ॥
गणेश्वर्यै तथा चांते विश्वं च समुदाहृतम् ॥

ॐ ऐं ह्रीं क्लीं श्रीं काहलेश्वरि सर्वजनमनोहरि सर्वमुखस्तंभिनि सर्वराजवशंकरि सर्वदुष्टनिर्दलिनि सर्वस्त्रीपुरुषाकर्षिणि बन्दीशृंखलास्त्रोटय २ सर्वशत्रून् भञ्जय २ द्वेष्यान् निर्दलय २ सर्वांस्तंभय २ मोहनास्त्रेण द्वेषिण-मुच्चाटय २ सर्वं वशं कुरु स्वाहा देहि २ सर्वकालरात्रि कामिनि गणेश्वर्यै नमः ॥

श्रियोमन्त्र :

ॐ ह्रीं श्रीं हरिणाक्षी बीजद्वयं फलप्रदं सद्यः ।
त्र्यक्षं ह्रीं शक्तिनीरमन्ते प्रोक्तमथापि धूर्जटिना ॥

रुक्मिणी :

ॐ ह्रीं चैवं तु रुक्मिण्यास्तारं लक्ष्मीरपस्तथा ।
अन्ते प्रोक्तं महेशानि लक्ष्मीभेदं द्वयं त्विदम् ॥

ॐ ह्रीं श्रीं लक्ष्मि ॐ ह्रीं सः स्वाहा । ॐ ह्रीं रुक्मिणि ॐ श्रीं स्वाहा ॥

सरस्वति :

तोमा परावाग्भवमेव क्षामा तारं च प्रोक्तं परमेश्वरेण ।
वाग्देवतायाः फलदं हि बालं नृणांपरो मुक्तिपरायणानाम् ॥

ॐ ह्रीं ऐं ह्रीं ॐ वाग्देवतायै नमः ॥

वाणी :

तारं लज्जोर्ध्व बीजं च ह्यन्ते स्तम्भ मुदाहृतं ॥

ॐ ह्रीं ऐं वाणी भगवत्यै नमः ॥

## ॥ त्रिपुर भैरवीमन्त्रः ॥

हसैं हसकरीं, हसैं ॥

अस्यमन्त्रस्य । दक्षिणामूर्ति ऋषिः । पंक्तिः छन्दः । त्रिपुर भैरवी देवता ।

ऐं बीजं। ह्रीं शक्तिः। क्लीं कीलकं। [illegible] [illegible] इत्यादि न्यासंकृत्वा तारा प्रयोगोक्त न्यासं च कुर्यात्।

ध्यानम् –

**उद्यद्भानुसहस्रकांति मरुणक्षौमां शिरोमालिकां,**
**रक्तालिप्तपयोधरां जपपरां विद्याममीतिं वरं।**
**हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविंदश्रियं,**
**देवीं बद्धहिमांशुरत्न मुकुटां वन्दे सुमन्दस्मिताम्॥**

पुनश्चरणं चतुर्विंशतिलक्षजपः पाठांतरे दशलक्षजपः इत्युक्तं।

द्वादशसहस्रं पुष्पैर्होमः॥

## छिन्नमस्तामन्त्रः॥ (एकोनविंशत्यक्षरी)

ॐ श्रीं ह्रीं ह्रीं क्लीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा। (मन्त्रमहोदधौ क्लीं बीजाभावः॥

अस्यमन्त्रस्य। भैरव ऋषिः सम्राट् छंदः। छिन्नमस्ता देवता।

ह्रीं ह्रीं बीजं। स्वाहा शक्तिः।

१ ॐ आं खड्गायस्वाहा, २ ॐ ईं सुखड्गायस्वाहा, ३ ॐ ऊं वज्रायस्वाहा, ४ ॐ ऐं पाशाय स्वाहा, ५ ॐ औं अंकुशायस्वाहा, ६ ॐ अः सुरक्षरक्ष ह्रीं ह्रीं स्वाहा। इति न्यासः।

ॐ श्रीं ह्रीं ह्रीं क्लीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा। इति मस्तकादि पादपर्यंतं।

ॐ श्रीं ह्रीं ह्रीं क्लीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा। पादादिमस्तकांतं व्यापकं॥

ध्यानम्:--

**भास्वन्मण्डलमध्यगां निजशिरश्छिन्नं विकीर्णालकां**
**स्फारास्यं प्रपिबद्गलात्स्वरुधिरं वामेकरे बिभ्रतीम्।**
**या भासक्तरतिस्मरोपरिगतां सख्यौ निजे डाकिनी**
**वर्णिन्यौ परिदृश्य मोदकलितां श्रीछिन्नमस्तां भजे॥**

## त्रिपुरभैरवी ॥

मन्त्रोद्धारं

वेधोबीजमधोऽध्यर्णमधोजिष्णुस्तमः परा ।
छविः शक्तिः शिरः कांतिस्तमो माया शरत् शिरः ।
तमो मायांचले देव्या मन्त्रः पञ्च दशाक्षरः ॥
कशईलह्रीं हसकहलह्रीं सकलह्रीं ॥

उत्कीलनं:

अन्त्यकूटं वदेदादौ द्विर्देवि जपसिद्धये ।
भवेत्रिपुरभैरव्या मनोरुत्कीलनं परम् ॥

संजीवनं:–

पराश्रयं पठेदादौ जीवनं भैरवीमनोः ।
कूटत्रयाणां देवेशि त्रिकूटाया जपेत्सुधीः ॥

शापमोचनं:

वाणीशरत् स्मरो रुद्रशापंमोचय मोचय ।
तुरगं ठद्वयंदेवि भैरवी शापमोचनम् ॥

यन्त्रं

बिंदुस्त्र्यश्रं नागकोणं दशारं वृत्तार्चितं वसुपत्रकरं ।
वृत्तत्रयं भूनिकेतत्रयं च श्रीचक्रं ते वर्णितं भैरवीयम् ॥

संपुटमन्त्र:

मायात्रयं पठेदन्ते त्रिकूटाया महेश्वरि ।
साध्यस्त्रिपुर भैरव्या संपुटाख्योऽस्त्ययं मनुः ॥

## षोडशाक्षरी ॥

लक्ष्मीः परा मदन वाग्भव शक्तियुक्ता,
तारं च भूतिकमला कथितापि विद्या ।
शक्त्यादिकं तु विपरीततया च प्रोक्तः
श्री षोडशाक्षरविधिः शुभदोस्तु पूर्णः ।

## त्रिपुरभैरवी (हसैं हसकरींहसैं)

यन्त्रं ।। नवयोन्यात्मकं यन्त्रं, तदुपरि अष्टदलं, ततः भूपुरं ।। (ऊर्ध्वमुखनवत्रिकोणान्)

पीठपूजा । मं मंडूकादि...नमः । नवपीठशक्तीः पूर्वाद्यष्टदिक्षु मध्ये च ।

इच्छा, ज्ञान, क्रिया, कामदायिनी, रतिप्रिया, नन्दा, परा मध्ये अपरा ।।

हसौं सदाशिवमहाप्रेतपद्मासनाय नमः । ऐं ह्रीं सहसपहक्लेह्रौं इति बिन्दौ त्रिखण्ड मुद्रया देवीं आवाहनं ।।

१. केसरेषु अग्नेयादिकोणेषु मध्ये दिक्षु च पूर्वोक्त ऐं ह्रीं इत्यादि नव खड्गं पूजयेत् ।।

२. ततः पूज्यपूजकयोरंतरालं प्राचीदिशं प्रकल्प्य तदनुसारेण क्रमानुसारेण पूजयेत् ।। उत्तरे द्रां द्राविण्यै, द्रीं क्षाभिण्यै, दक्षिणे क्लीं वशीकरिण्यै ब्लूं लोपाकर्षिण्यै, आग्नेय्यां स्रीं संमोहिन्यै, उत्तरे ह्रीं कामाय, क्लीं मन्मथाय, दक्षिणे ऐं कन्दर्पाय, ब्लूं मकरध्वजाय, आग्नेय्यां स्रीं मीनकेतवे ।

३. अष्टयोनिषु । प्राच्यादिक्रमेण । ऐं क्लीं स्रीं सः सुभगायै, ऐं क्लीं स्रीसः भगायै ऐं क्लीं स्रीं सः भगसर्पिण्यै, ऐं क्लीं स्रीसः भगपालिन्यै, ऐं क्लीं द्रीसः अनंगायै, ऐं क्लीं स्रीं सः अनंगकुसुमायै, ऐं क्लीं स्रीं सः अनंगमदनायै ।।

४. ततो अष्टदलेषु प्राचीक्रमेण, असितांग ब्राह्मी, रुरुमाहेश्वरी, चण्डकौमारी, क्रोधवैष्णवी, उन्मत्त-वाराही, कपालीन्द्राणी, भीषणचामुण्डा, संहारमहालक्ष्मी ।

५. इन्द्रादि दशदिक्पालान् तेषां आयुधानि च यजेत् ।।

## श्रीविद्याषोडशाक्षरी विकृतयः ।।

कामराजांत मन्त्रांते श्री बीजेन समन्विता ।
षोडशाक्षर विद्येयं श्री विद्येति प्रकीर्तिता ।।

विभक्ता सप्तधा विद्या श्रीमत्त्रिपुरसुन्दरि ।
अथातःकथ्यते विद्या बीजरूपा च षोडशी ।।

तारादि षोडशी पश्चात्तलोर मादि षोडशी ।
मायादि षोडशी विद्या ततः कामादि षोडशी ।।

वागादि षोडशी प्रोक्ता ततः परादि षोडशी ।
श्रीगुरोः कृपया लभ्या षट्कूटा षोडशाक्षरी ।।

## कूटत्रयस्य द्वात्रिंशद्भेद कथनं

कुबेरेण उपासितं । अतयैवोपासितया सर्वेष्टसिद्धिश्च मुख्येष्वेव कामराजविद्या ॥ तथां भेदा यथा ॥

१. हसकलशईलह्रीं हसकलशईलह्रीं हसकशईलह्रीं, हसकहशईलह्रीं हसकहशईलह्रीं हसकहशईलह्रां कहसहशईलह्रीं ॥ एतत्कौबेरीद्वयं कूटयं कामराजीयम् ॥

२. सहसकलह्रीं सहसकलह्रीं सहकलह्रीं सकलह्रीं । एतद्वयं अगस्त्योपासितम् ॥

हसकलह्रीं अन्ते कामराजीये आद्यद्वयं कामराजीयम् ॥

सहसकलह्रीं शतद्वयं लोपामुद्रोपासितम् ॥

३. हसकशईल ह्रीं सहशकईलह्रीं हसकशईलह्रीं हसकशईलह्रीं सहकशईलह्रीं तृतीयमीदृश मेव चांद्रीद्वयमेतत् ।

सकलह्रीं, सकलहलह्रीं, हसकलहह्रीं, कशईलहसकहल ह्री ह्रीं ह्रीं ह्रीलसकहलह्रीं । शतद्वयं दुर्वासोर्चितं ॥ तदुक्तं ज्ञानार्णवे ॥

कामराजाख्य विद्याया स्त्रिकूटेषु वरानने । यास्थिता भुवनेशानि द्विधाकुरु महेश्वरि ॥ बिंदुहीना नादहीना दुर्वासोपासितो भवेत् ॥ संहितायां ॥ वाग्भवस्थं चतुष्कं च कामराजस्य पंचकं । शक्ति कूटं त्रिकार्यं च कामराजस्य संलिखेत् ॥ मायास्थाने हरीवर्गयुगलं च कामालिखेत् ॥

दुर्वाससा पूजितेयं पुरुषार्थ प्रदायिनी ॥

कशईलहरी हसकहलहरी सहलहरी ॥ एतद्वयं दुर्वाससार्चितं ॥ आद्या कामराज तुल्या ॥ सहकलह्रीं अंत्येएतादृशेएव ॥ ऐंद्रीद्वयमेतौ ॥

सएईलह्रीं हकहकहलह्रीं सकलह्रीं सहसकलह्रीं सहसकलकहलह्रीं ॥

आद्यमेव तृतीयं । नंदिविद्या द्वमयेतत् ॥

हसकहलह्रीं सकहसकलह्रीं सहकहलह्रीं ।

हसएकलह्रीं द्वयमेनदेव स्कांदीद्वयमेतत् ॥

कहएईलह्रीं हकएईलह्रीं सकएईलह्रीं ॥

कशकलह्रीं हकहलह्रीं सहकलह्रीं (मानवी)

धर्मराजी । आद्यं कामराजीये । द्वितीय तृतीये धर्मराजीये ॥

एषावारुणी । कसकलह्रीं हसकलह्रीं सकलर ह्रीं ॥

आग्नेयी । हसकलह्रीं । हसकलह्रीं तृतीयमाग्नेयं ।

एषाशौषी । कएरलारह्रीं हकलरहलह्रीं सकसकरह्रीं ।

वायवीयं । कएईरलह्रीं हकहलह्रीं सहकलरह्रीं ।

सौमीयं । कहलह्रीं हकहसलरह्रीं सकलह्रीं ।

ऐशान्यं । कएकलह्रीं अन्तेकामराजीयं ।

शावतीयं । आद्यं कामराजद्वयं अत्यं सकलह्रीं ।। इति

रतिपूजिता । हसकलह्रीं हकहसरह्रीं आद्य मेष तृतीयं ।

भैवीयं । आद्यंकामराजीयं हकहसरह्रीं हसकलह्रीं ।।

ब्राह्मीयं । सहलह्रीं सहकलहलह्रीं ।

लैष्णवीयं । आद्यं कामराजीयं हकहलह्रीं हसकलह्रीं ।

उन्मनीयं ।। हसकलह्रीं हसंलह्रीं कलह्रीं सकलहलह्रीं ।।

सौरि ।। एते भेदाः ।

एषां श्रीबीजादिभिः संपुटिताः कामराजवदेव उपासनमपि ।।

## ।। श्रीविद्या पंचदशी, सौभाग्य पंचदशी मन्त्रः ।।

कएईलह्रीं हसकलह्रीं, सकलह्रीं ।।

ऐंकएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं ।।

अस्यमन्त्रस्य । आनन्दभैरव ऋषिः । पंक्तिछन्दः श्रीललितात्रिपुरसुन्दरी देवता । क ५ बीजं । स ४ शक्तिः । ह ६ कीलकं ।

कूटत्रयं, द्विवारोच्चाटणं, करन्यास, हृदयादिन्यासः ।

ध्यानम्:--

सकुंकुमविलेपनामलिकचुंबिकस्तूरिकां ।
समन्दहसितेक्षणां सशरचापपाशांकुशां ।
अशेषजनमोहिनीं अरुणमाल्य भूषांबरां,
जपाकुसुमभासुराजपविधौ स्मरेदंबिकाम् ।। पंचपूजा ।।

सौभाग्य पंचदशी मन्त्रे, सबालाबीजाक्षरेण पञ्चदशी कूटेन न्यासः ॥

(३ ऐं ह्री श्रीं) इति त्रितारि बीजाणि, जप न्यासादिकाले योजनीयं ॥

मन्त्रोद्धारं

वेधोबीजमधोऽध्यर्णमधो विष्णुतमः परा। (श्री देवी रहस्ये)
छविः शक्तिः शिरः कान्तिस्तमो माया शरत् शिरः।
तमो मायाञ्चले देव्या मन्त्रः पञ्चदशाक्षरः।

## श्रीविद्यातन्त्रः। षोडशीमन्त्रः॥

१. श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं, क ५ ह ६ स ४ सौः क्लीं ह्रीं श्रीं।

२. ह्रीं क ५ ह ६ स ४।

३. क ५ ह ६ स ४ श्रीं

प्रथम मन्त्रस्य। श्री दक्षिणामूर्ति ऋषिः पंक्तिः छन्दः। श्रीललिता त्रिपुरसुन्दरी देवता।

द्वितीय तृतीय मन्त्रयो। आनन्द भैरव ऋषिः। देवीगायत्री छन्दः। श्रीललिता त्रिपुरसुन्दरी देवता।

ऐं बीजं। सौः शक्तिः। क्लीं कीलकं। श्रीललिता...जपे विनियोगः।

ततः कर शुद्धि न्यासं। ह्रीं श्रीं आं। ह्रीं श्रीं आं। ह्रीं श्रीं सौः। इति प्रत्येकं मन्त्रेण, मध्यमादारभ्य, करतलांतंकुर्यात्। ततः आसन न्यासः।

ह्रीं श्रीं ह्रीं क्लीं सौः देव्यासनाय नमः पादयोः। ह्रीं श्रीं हैं ह्रक्लीं ह्सौः चक्रासनायनमः जंघयोः। ह्रीं श्रीं ह्सैं ह्रक्लीं ह्सौः सर्वमन्त्रासनाय नमः जानुनोः।

ह्रीं श्रीं ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः लिंगे॥ ततः षडंग न्यासः॥

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं (षट्कूटं) श्रीमहात्रिपुरसुन्दरि ह्रीं ऐं सर्वज्ञशक्तिधाम्ने ह्रां मध्यमाभ्यां नमः।

७ मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं क्लीं नित्यतृप्तिशक्तिधाम्ने ह्रीं अनामिकाभ्यां स्वाहा।

७ मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं सौः अनादिबोधशक्तिधाम्ने ह्रूं कनिष्ठिकाभ्यांवषट्।

७ मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं सौः स्वतन्त्रशक्तिधाम्ने ह्रैं अंगुष्ठाभ्यां हुं।

७ मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं नित्यमलुप्तशक्तिधाम्ने ह्रौं तर्जनीभ्यां वौषट्।

७ मूलं श्रीमहात्रिपुरसुन्दरि ह्रीं ऐं नित्यमनंतशक्तिधाम्ने ह्रः करतलकरपृष्टाभ्यां फट्।

ध्यानम्:--

सकुंकुमविलेपनामलिकचुंबिकस्तूरिकां,
समंदहसितेक्षणां सशरचापपाशांकुशाम् ।
अशेषजनमोहिनीं अरुणमाल्यभूषांबरां,
जपाकुसुमभासुरां जपविधौस्मरेदंबिकाम् ॥

श्रीचापं चेक्षुमयं प्रसूनविशिखान् पाशांकुशौ पुस्तकं,
माणिक्याक्ष सरोरुहं मणिमयीं वीणां सरोजद्वयं ।
पाणिभ्यामभयंवरं चदधतीं ब्रह्मादिसेव्यां परां,
सिन्दूरारुणविग्रहां त्रिनयनां तां षोडशीमाश्रये ॥

एवं हृदयादि क्रमेण कुर्यात् ।

ॐ ऐं ह्रीं श्रीं त्रिपुरसुन्दर्यै नमः लं पृथिव्यात्मिकायै गंधं समर्पयामि ॥

इत्येवं पंचपूजां कृत्वा, अन्य न्यासांश्चकृत्वा, आवरपूजां समर्प्य, पुनश्चरणं कुर्यात् ॥ अष्टाविंशति-लक्षजपः । प्रतिलक्षजपं कृत्वा हवनं ॥

मन्त्रोधार

लक्ष्मीः परा मदन वाग्भव शक्तियुक्ता,
तारंच भूतिकमले कथितापि विद्या ।
शक्तयादिकं तु विपरीततया च प्रोक्त
श्रीषोडशाक्षरविधिः शिवमस्तु पूर्णं ॥

## महाषोडशी आवरणदेवताः मनु महार्णवे

यन्त्रं ॥ बिन्दुगर्भ, त्रिकोणाष्टदलं, द्वादशदलं, चतुर्दशदलाष्टदलषोडश त्रिकोणरूप दलं च तस्योपरि त्रिरेखात्मक भूपुर ॥

पीठपूजा ॥ मं मंडूकादि परतत्वांत पीठदेवताभ्यो नमः ॥ पीठ मध्ये ।

ब्रं ब्रह्मप्रेताय, विं विष्णुप्रेताय, रुं रुद्रप्रेताय, ईं ईश्वरप्रेताय, सं सदाशिवप्रेताय, सुं सुधार्णवासनाय, प्रें प्रेतांबुजासनाय, दिं दिव्यासनाय, चं चक्रासनाय, सं सर्वमन्त्रासनाय, सां साध्यसिद्धासनाय नमः ।

नवपीठशक्तीः पूर्वाधष्टसुदिक्षु, मध्ये च । इच्छा, ज्ञान, क्रिया, कामिनी, कामदायिनी, रति, रतिप्रिया, नन्दा, मध्ये मनोन्मन्यै नमः ।

ऐं परायै अपरायै, परापरायै, ह्सौः सदाशिव महाप्रेतासनाय नमः ॥

१ पूज्य पूजकयोरंतराले प्राची, तदनुसारेण अन्यदिशं प्रकल्प्य, आग्नेयादिकोणेषु वामावर्तेन ॥ ऐं बीजाय नमः । क्लीं बीजाय, सौः बीजाय नमः । पूजयेत्तर्पयेच्च ॥

ह्रीं श्रीं प्रकट गुप्तगुप्ततर संप्रदायकुल निगर्भ रहस्य परापररहस्य संज्ञक श्रीचक्रगत योगिनी पादुकाभ्योनमः ॥ इति प्रथमावरणं ॥

२. त्रिकोणवाह्ये वामपार्श्वे दक्षहस्तेन पुष्पचंदनाक्षतानि तर्पयामीति, वामहस्ते जलं च अर्पयेत् । जले आर्द्रकं प्रास्यमिति केचित् ॥

१. ॐ अं ऐं क्लीं सौः ॐ कामेश्वर्यै नमः । नमः कामेश्वरि इच्छाकाम फलप्रदे सर्वसत्ववशंकरि सर्वजगत्क्षोभणकरि हुं ३ द्रां द्रीं क्लीं ब्लुं सः सौः क्लीं ऐं कामेश्वरिनित्या श्री...

२. ॐ आं ऐं भगमालिन्यै नमः भगभुजे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोने भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय, वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय, द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं, जेंब्लूं, मेंब्लूं मोंब्लूं हेंब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हरब्लें ह्रीं भगमालिनी नित्या श्री ॥

३. इं ह्रीं नित्यक्लिन्नायै नमः । नित्यक्लिन्ने मदद्रवे स्वाहा । नित्यक्लिन्ना नित्या ॥

४. ईं ॐ क्रौं भ्रौं क्रौं च्रौं छ्रौं ज्रौं झ्रौं भेरुंडायैनमः । भेरुंडानित्याश्री ॥

५. उं ॐ ह्रीं वह्निवासिन्यैनमः । वह्निवासिनि नित्याश्री इति वामरेखायां ॥

६. ऊं ह्रीं प्रें सः नित्यक्लिन्ने मदद्रवे महाविद्येश्वरि नमः स्वाहा । महाविद्येश्वरी नित्या श्री । (दक्ष रेखायां

७. ऋं ॐ ह्रीं शिवदूत्यै नमः । शिवदूती नित्या श्री ।

८. ॠं ॐ ह्रीं हुं खे चछे क्षः स्त्रीं हें क्षें फट् त्वरितायै नमः । त्वरितानित्या श्री ।

९. लृं ऐं क्लीं सौः कुलसुन्दर्यै नमः । कुलसुन्दरीनित्या श्री ॥

१०. लॄं ऐं क्लीं सौः ह्सैं ह्स्क्लीं ह्स्रौः सौः क्लीं ऐं द्रां द्रीं क्लीं ब्लूं नित्यायै नमः । नित्या श्री ॥

देव्यग्रे ॥ ११. ऐं ॐ ह्रीं फ्रें स्रूं ह्रीं स्रौं क्रों नित्यमदद्रवे हू क्रों नीलपताकायैनमः नीलपताकाश्री ॥ ऐं ॐ स्फ्रें विजयायैनमः । विजयानित्याश्री । ॐ स्वौं सर्वमंगलायैनमः । सर्व मंगलाश्री औं ओं नमो भगवति देवदेवि सर्वभूतसंहारिके जातवेदसि ज्वलंती ज्वल ज्वल प्रज्वल २ हुं रं र हु फट् । ज्वालामालिनी श्री । अक्रौं विचित्रानित्यायै नमः विचित्रानित्याश्री ॥

३. ततो भूपुराद्वहिः पूर्वादि चतुर्दिक्षु । गं गणपति श्री । बं वडुकाय । ह्रीं दुर्गायै । क्षं क्षेत्रपालकाय ततः बाह्यचतुरस्रस्य प्रथमरेखायां पश्चिमादि द्वारचतुष्टये ।

अणिमासिद्धिश्री । लघिमासिद्धिश्री । महिमासिद्धिश्री । ईशित्वसिद्धिश्री ॥ कोशचतुष्टये । वशित्वसिद्धिश्री प्राकाम्यसिद्धिश्री । भक्तिसिद्धिश्री । इच्छासिद्धिश्री । वरुणनिर्ऋति मध्ये प्राप्तिसिद्धिश्री । पूर्वेशानयोः मध्ये सर्वकामसिद्धिश्री ॥

मध्यरेखायां पश्चिमादि द्वारचतुष्टये । ह्रीं श्रीं-आं ब्राह्मी, २ ई माहेश्वरी, २ कौमारी, २ ऋ वैष्णवी कोणचतुष्टये । २ लृं वाराही, २ ऐं इन्द्राणी, २ औं चामुण्डा, २ अः महालक्ष्मी ॥ तृतीयरेखायां पश्चिमादि द्वारचतुष्टये । २ त्रिखण्डमुद्रा, २ सर्वसंक्षोभिणी, सर्वविद्राविणीसर्वाकर्षणीमुद्रा ॥

कोणचतुष्टये । २ सर्ववशंकरी, २ सर्वोन्मादिनी, २ सर्वमहांकुशा, २ खेचरीमुद्रा ॥ ततस्त्रिवलये २ बीज, २ योनि, २ चार्वादर्शनाय नमः ॥

त्रैलोक्यमोहनचक्रे श्रीमहात्रि...र्यां समधिष्ठिते एताः ईशित्वाद्याः प्रकटयोगिन्यः समुद्राः ससिद्धयः सायुधाः सवाहना सपरिवाराः सर्वोपचारैः संपूजिता संतर्पिताः संतु ।

४. षोडशदलेषु पश्चिमदलादारभ्य वामावर्तेन ॥ अ कामाकर्षिणी, २ आ बुद्ध्याकर्षिणी, २ इं अहंकाराकर्षिणी, २ ईं शब्दाकर्षिणी, २ उं रूपाकर्षिणी, २ ऊं स्पर्शाकर्षिणी, २ ऋं रसाकर्षिणी, २ ॠं गंधाकर्षिणी, २ लृं चिताकर्षिणी, २ लॄं धैर्याकर्षिणी, २ एं स्मृत्याकर्षिणी, २ ऐं नामाकर्षिणी, २ ओं बीजाकर्षिणी, औं अमृताकर्षिणी, २ अं शरीराकर्षिणी, अः आत्माकर्षिणी ॥

सर्वाशा परिपूरकचक्रे श्री...कामाकर्षिण्याद्या गुप्तयोगिन्यः समुद्राः...सन्तु ॥

५. अष्टदलेषु पूर्वादिक्रमेण । २ कं...ङ अनंगकुसुमा, २ च.. ञं अनंगमेखला, २ ढं...णं अनंगमदना, २ तं...नं अनंगमदनातुरा, २ पं...मं अनंगरेखा, २ यं...व अनंग योगिनी, २ शं...हं अनंगांकुशा, २ लं क्षं अनंगमालिनी ।

सर्वसंक्षोभकरचक्रे श्री...अनंगकुसुमाद्याः गुप्ततरयोगिन्य...सन्तु ॥

६. चतुर्दशारचक्रे पश्चिमादि वामावर्तेन ॥ २ सर्वसंक्षोभिणी, २ सर्वविद्राविणी, २ सर्वाकर्षिणी, २ सर्वाह्लादिनी, २ सर्वसंमोहिनी, २ सर्वस्तंभिनी, सर्वजृंभिणी, २ सर्ववशंकरी, २ सर्वरंजिनी, २ सर्वोन्मादिनी, सर्वार्थसाधिनी, २ सर्वाशापरिपूरिणी, २ सर्वमन्त्रमयी, सर्वद्वंद्वक्षयंकरी ॥

सर्वसौभाग्यदायकेचक्रे श्री...सर्वसंक्षोभिण्याद्याः संप्रदाययोगिन्यः...सन्तु ॥

७. दशारचक्रे पश्चिमादिवामावर्तेन । ३ सर्व सिद्धिप्रदादेवी, २ सर्वसंपत्प्रदा, २ सर्वप्रियंकरी, २ सर्वमंगलकारिणी, २ सर्वकामप्रदा, २ सर्वदुःखविमोचिनी, २ सर्वांगसुन्दरी, २ सर्वमृत्युविनाशिनी, २ सर्वविघ्ननिवारिणी, २ सर्वसौभाग्यदायिनी ॥

सर्वसौभाग्यदायके चक्रे श्री...सर्वसिद्धिप्रदाद्य : कुलकौलिनीयोगिन्य...सन्तु ।

८. अन्तर्दशारे पश्चिमादिवामावर्तेन । २ सर्वज्ञादेवी, सर्वशक्तिमयी, २ सर्वैश्वर्यप्रदा, २ सर्वज्ञानमयी, सर्वव्याधिविनाशिनी, सर्वाधारस्वरूपा, २ सर्वपापहरा, २ सर्वानन्दमयी, सर्वरक्षास्वरूपिणी, सर्वेप्सितफलप्रदा ॥

सर्वरक्षाकरे चक्रे श्री...सर्वज्ञाद्याः निगर्भयोगिन्यः... सन्तु ॥

९. अष्टारचक्रे पश्चिमादिवामावर्तेन । ३ अं आं...अं अः वशिनीवाग्देवता ।

२ कं...कं कामेश्वरी, ३ चं ञं मोदिनी, ३ टं.. णं विमला, ३ तं...नं अव्यया (अरुणा) ३ पं...मं जयिनी, ३ यं...वं सर्वेश्वरी, ३ शं...क्षं कौलिनी ।

सर्वरोगहरेचक्रें श्री वशिन्याद्याः रहस्ययोगिन्यः... सन्तु ॥

ततः अभ्यन्तरचक्रमध्ये दक्षिणे ३ उत्तमबाणाय नमः । वामे मोहधनुषे । पुनः त्रिकोणे, ३ कामेश्वर्यै, ३ चक्रिण्यै, ३ भगमालिन्यै ॥

## श्री विद्या परा षोडशाक्षरी मन्त्रः ॥

अस्य मन्त्रस्य । नारायण ऋषिः । गायत्रीछन्दः । पराश्रीर्देवता । श्रीं बीजं । ह्रीं शक्तिः । क्लीं कीलकं । श्रां सर्वज्ञशक्ति धाम्ने ह्रां । श्रीं...ह्रीं इत्यादि न्यासः ।

ध्यानम्ः--

**तार्क्ष्यरूढहरिहृत्सरोजके भाति या परमचित्स्वरूपिणी ।**
**पद्मयुग्म मणिपात्रधारिणी भासतां हृदि सदा ममांबिका ॥**

मनुः । श्रीं सौः क्लीं ऐं ह्रीं ॐ ह्रीं श्रीं, स ४ ह ६ क ५ ह्रीं ऐं क्लीं सौः श्रीं ॥

मन्त्रोद्धारं

**लक्ष्मीपरा मदन वाग्भव शक्तियुक्ता ।**
**तारं च भूतिकमले कथिता च विद्या ॥**
**शक्त्यादिकंतु विपरीततया प्रयुक्तं ।**
**श्री षोडशार्णमिद मागम सुप्रसिद्धम् ॥**

कथिता च विद्येति । श्रीविद्यायाः सोमसूर्यानलात्मक क्रमेण खण्डत्रितयं ।

तत्र सादिखंडः सोमात्मकः । हादिखण्डः सूर्यात्मकः । कादिखण्डो वह्न्यात्मकः ॥

## परांबा मन्त्रः

अस्य मन्त्रस्य । चिद्रूपानन्द भैरवऋषिः । जगती छन्दः । श्रीपरांबा देवता । सं बीजं । औं शक्तिः । अंः कीलकं । सां इत्यादि न्यासः ।

अकलंक शशांकाभां त्र्यक्ष चन्द्रकलावतीम् ।
मुद्रापुस्तल सद्वाहुं प्रणमामि परां कलाम् ॥

मनुः ॐ सौः ॐ ॥

## प्रासादपरामन्त्रः

अस्य मन्त्रस्य । पराशंभु ऋषिः । अव्यक्ता गायत्री छन्दः । सर्वमन्त्रेश्वरी परा देवता ।

ह्सां बीजं । ह्सीं शक्तिः । ह्सूं कीलकं । ह्सां इत्यादि न्यासः । सद्योजातादि मन्त्रैः पुनः षडंगन्यासं कुर्यात् ।

अमृतार्णवमध्योद्यत्सुवर्ण द्वीपशोभिते ।
कल्पवृक्षवनांतस्थे नवमाणिक्यमण्टपे ॥

नवरत्नमये श्रीमत्सिंहासन गतांबुजे ।
त्रिकोणांतसमामसीनं चन्द्रसूर्यायुत प्रभम् ॥

अर्धांबिकां समायुक्तं प्रविभक्त विभूषणं ।
कोटिकन्दर्पलावण्यं सदाषोडशवार्षिकम् ॥

मंदस्मित मुखांभोजं त्रिनेत्रं चन्द्रशेखरं ।
दिव्यांबर स्नगालेप दिव्याभरण भूषितम् ॥

पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः ।
विद्यासंसदि बिभ्राणं सदानन्द मुखांबुजम् ॥

महाषोडोदिता सैष देवतागणसेवितं ।
सदाचित्तांबुजे ध्यायेदर्धनारीश्वरं शिवम् ॥

मनुः । ऐं ह्रीं श्रीं ह्सौः ॥

## ॥ पंचलक्ष्म्यंबा ॥ लक्ष्मीलक्ष्म्यंब ॥

भृगु ऋषिः । निचृद्गायत्री छन्दः । श्रीलक्ष्मीलक्ष्म्यंबादेवता । शकारो बीजं । ईकारश्शक्तिः । रेफः कीलकं । श्रां इत्यादि न्यासः ।

नमाम्यहं श्रियं रम्यां सर्वदेवनमस्कृतां ।
तप्तकार्तस्वराभासां दिव्यरत्नविभूषिताम् ॥
रत्नौघमूर्धमुकुटां शुद्धक्षौमांगरागिणीं ।
पद्माक्षीं पद्मनाभेन हृदि चिंत्यां कृपामयीम् ॥

मनुः ॥ श्रीं ॥

## महालक्ष्मीलक्ष्म्यंबा ॥

प्रजापति ऋषिः । गायत्री छन्दः । श्रीमहालक्ष्मीलक्ष्म्यंबादेवता । श्रीं बीजं । ह्रीं शक्तिः । ॐ कीलकं । श्रां इत्यादि न्यासः ।

चतुर्भुजां स्फुरद्रत्न नूपुरां मुकुटोज्वलां ।
ग्रैवेयांगद हाराढ्यां कंकतीरत्नकुंडलाम् ॥
पद्मासन समासीनां दूतीभिर्मण्डितां सदा ।
शुक्लांगराग वसनां ध्यायेद्दिव्यांगनानताम् ॥

मनुः ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद २ श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः ॥

## त्रिशक्तिलक्ष्म्यंबा ॥

ब्रह्मा ऋषिः गायत्री छन्दः । श्रीत्रिशक्तिलक्ष्म्यंबदेवता । श्रीं बीजं । ह्रीं शक्तिः । क्लीं कीलकं । बीजत्रयद्विरावृत्या न्यासः ।

ध्यानम्:—

कमलासन शोभाढ्यां रत्नमंजीर रंजितां ।
स्फुरद्रत्नलसन्मौलि रत्नकुंडम मण्डिताताम् ॥
अनंतरत्नस्फुटित नानाभरण भूषितां ।
दधतीं पद्मयुगलं पाशांकुशधनुश्शिरान् ॥
षड्भुजामिंदुवदनां दूतीभिलः परिवारितां ।
तप्तकार्तस्वराभासां त्रिशक्तिभावयाभ्यहम् ॥

मनुः । श्रीं ह्रीं क्लीं ॥

## साम्राज्यलक्ष्म्यंबा ॥

विष्णु ऋषिः । गायत्री छन्दः । श्रीसाम्राज्यलक्ष्म्यंबा देवता । सहकलह्रीं बीजं । श्रीं शक्तिः । श्रीं कीलकं । आं ई इत्यादि न्यासः ।

ध्यानम्ः—

अतसीपुष्पसंकाशां रत्नभूषण भूषितां ।
शंखचक्रगदा पद्म शार्ङ्गबाणधरां करैः ॥
सर्वांग सुन्दरीं देवीं वरदाभय शोभितां ।
ध्यायेदष्टभुजां लक्ष्मीं सर्वसाम्राज्यदेवतात् ॥

मनुः श्रीं सहकलह्रीं श्रीं ॥

## पंचकल्पलतांबा ॥ पंचकामेशी कल्पलतांबा ॥

संमोहन ऋषिः । गायत्रीछन्दः । श्री पंचकामेश्वरीकल्पलतांबा देवता । क्लीं बीज । ह्रीं शक्तिः । ऐं कीलकं । श्रीं । क्लीं । ए । ब्लूं । स्त्रीं । समत्रेन च । न्यासः ।

रक्तां रक्तदुकूलांगलेपनां रक्तभूषितां ।
पाशांकुशधनुर्बाणान् पुस्तकं चाक्षमालिकाम् ॥
वरा भीती श्च दधतीं त्रैलोक्य वशकारिणीं ।
ध्यायेद्देवीं पंचकामनायकां विश्वमातरम् ॥

मनुः श्रीं क्लीं ऐं ब्लूं स्त्रीं ॥

## पारिजातेश्वरी कल्पलतांसा ॥

दक्षिणामूर्ति ऋषिः । गायत्रीछन्दः । श्रीपारिजातेश्वरी देवता । हसकलह्रीं बीजं । ह्रीं शक्तिः । ॐ कीलकं । आं इत्यादि न्यासः ।

हंसारूढ़ालसन्मुक्ता धवलां शुभ्रवाससं ।
शुचिस्मितां चन्द्रमौलिं वज्रमुक्ताविभूषिताम् ॥
विद्यांवीणां सुधाकुंभ मक्षमालां च बिभ्रतीं ।
पारिजातेश्वरीं देवीं ध्यायेत्सारस्वत प्रदाम् ॥

मनुः ॐ ह्री हसकलह्रीं ॐ सरस्वत्यै नमः ॥

## कुमारी कल्पलतांबा ॥

दक्षिणामूर्ति ऋषिः । पंक्तिछन्दः । श्रीकुमारीकल्पलतांबा देवता । ऐं बीजं । सौः शक्तिः । क्लीं कीलकं । बीजत्रयद्विरावृत्या न्यासः ।

उद्यत्सूर्यसहस्राभां माणिक्यवरभूषणां ।
स्फुर द्रत्न विद्युल्लास्यां नानालंकार भूषिताम् ॥
इक्षुकोदण्ड बाणांश्च पुस्तकंचाक्षमालिकां ।
दधतीं चिंतये द्वालां सर्वराजवशंकरीम् ॥

मनुः ऐं क्लीं सौः ।

## पंचबाणेशीकल्पलतांबा ॥

मदन ऋषिः । गायत्री छन्दः । श्रीपंचबाणेशीकल्पलतांबा देवता । द्रां बीजं । सः शक्तिः । ब्लूं कीलकं । मूलमन्त्र पंचबीजेन समस्तेन च न्यासः ।

उद्यद्दिवाकराभासां नानालंकार भूषितां ।
बन्धूककुसुमाकार रक्तवस्त्रांग रागिणीम् ॥
इक्षुकोदण्ड पुष्पेषु विराजित भुजद्वयां ।
ध्यायेद्देवीं महेशानीं पंचबाणेश्वरीं शिवाम् ॥

मनुः । द्रां द्रीं क्लीं ब्लूं सः ॥

## (पंच पंचिकायां) पंचकोशांबा ॥ परंज्योतिकोशांबामन्त्रः ॥

श्री परंज्योतिकोशांबा महा मन्त्रस्य । ब्रह्मा ऋषिः । गायत्रीछन्दः । श्री परंज्योतिर्मयांबा देवता । हुं बीजं । सः शक्तिः । सोऽहं कीलकं । १ स्वाहा । २ सोहं । ३ हंसः । ४ ह्रीं । ५ ओं । ६ समस्तमन्त्रेण । न्यासः ।

ध्यानम्:--

प्रणवादिचतुष्कलारूपां मायया व्याप्तिरूपिणीं ।
हंसपदेन देवेशीं साक्षादात्मस्वरूपिणीम् ॥
तत्रत्या बिन्दुत्रितया त्सृष्टिस्थिति लयात्मिकां ।
श्रीदेवीं दर्पणाकारां वन्दे ज्योतिर्मयां पराम् ॥

मनुः । ॐ ह्रीं हंसस्सोहं स्वाहा ॥

## परानिष्कल कोशांबा ॥

ब्रह्मा ऋषिः । गायत्री छन्दः । ब्रह्मादेवता । अकारो बीजं । उकारः शक्तिः । मकारः कीलकं । अं ओं आं । इं ओं ईं । उं ओं ऊं । एं ओं ऐं । ओं औं अं । अं ओं अः । इति न्यासः ॥

परनिष्कल देवीं तां परब्रह्मस्वरूपिणीं ।
शुक्लांबर परीधानां शुक्लमाल्यानुलेपनाम् ॥
ज्ञानमुद्रांकितां सिद्धै स्संसेवित पदांबुजां ।
ज्ञानानंदमयां वन्दे परनिष्कल देवताम् ॥

मनुः ॥ ॐ ॥

## ॥ अजपाकोशांबा ॥

हंसः ऋषिः । अव्यक्तगायत्री छन्दः । हंसोदेवता । हं बीजं । सः शक्तिः । सोहं कीलकं ।

हंसां सूर्यात्मने । हंसीं सोमात्मने । हंसूं निरंजनात्मने । हंसैं निराभासात्मने । हंसौं अतनुसूक्ष्मप्रबोधात्मने । हंसः अव्यक्तप्रबोधात्मने । इति न्यासः ।

ध्यानम्ः—

शिवशक्ति पदद्वंद्व कालाग्नि पार्श्वयुग्मकः ।
अहं परम हंसस्तु सर्वव्यापी प्रकाशवान् ॥
सूर्यकोटि प्रतीकाशः स्वप्रकाशेन भासते ।
संहाररूपहंसोऽयं स्वरूपं दर्शयत्यपि ॥

मनुः हंसः ॥

## मातृकाकोशांबा ॥

ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीमातृककोशांबा देवता । हलो बीजानि । स्वराश्शक्तयः । बिंदवः कीलकं ॥ अं कं...ङं आं । इं चं...ञं ईं । उं टं ..णं ऊं । एं तं...नं ऐं । ॐ पं...मं औं । अं यं...क्षं अः । इति न्यासः ।

ध्यायेद्वर्ण स्वरूपाढ्यां महादेवीं स्वराननां ।
कचवर्गकरां रम्यां चतवर्ग पदांबुजां ॥
पवर्गचारु पार्श्वांग लसच्छातोदरीं परां ।
यशवर्गांग शुभगांपीनो न्नतधनस्तनीम् ॥
नितंबिनीं च गहनां शुक्लाक्षीं क्षाममध्यगां ।
मुक्तामाल्यांग रागांगी मक्षस्त्रक्कुंभशोभिताम् ॥
चितालिखितसत्पाणीं समग्रवरदायिनीं ।
सुप्रसन्नां शशिमुखीं मातृकां लोकमातरम् ॥

मनुः अं आं ...कं क्षं ॥

## पंचकामदुधाबा: अमृतपीठेश्वरी

शुक्र ऋषिः । गायत्री छन्दः । श्री अमृतपीठेश्वरी कामदुधांबा देवता । ह्रीं बीजं । स्वाहा शक्तिः । जूं सः कीलकं । १ ह्रीं हंसः । २ संजीवनि । ३ जूं जीवं । ४ प्राणग्रंथिस्थं । ५ कुरु २ । ६ सः स्वाहा । इति न्यासः ।

**कर्पूराभां स्फुरन्मुक्ताभूषणै र्भूषितां परां ।**
**ज्ञानमुद्रामक्षमालां दधतीं परमेश्वरीम् ॥**
**इच्छाज्ञान क्रियारूपां सर्वकाम फलप्रदां ।**
**अमृतेशीं परांवन्दे शांतवक्त्र सुलोचनाम् ॥**

मनुः । ॐ ह्रीं हंसः संजीविनि जूं जीवं प्राणग्रंथिस्थं कुरु २ सः स्वाहा ॥

## सुधाश्री कामदुधांबा ॥

असित ऋषिः । गायत्री छन्दः । श्रीसुधाश्री कामदुधांबा देवता । ऐं वदवद वाग्वादिनि । ऐं बीजं । ॐ मोक्षं कुरुकुरु ह्रौं ॐ शक्तिः । क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु २ क्लीं कीलकं । कूटत्रय द्विरावृत्या न्यासः ।

**संजीवनीं महादेवीं कदंबवन मध्यगां ।**
**पुस्तकं वामहस्तेन दक्षिणे नाक्षमालिकां ॥**
**बिभ्रतीं कुंदधवलां कुमारीं परदेवतां ।**
**कामदुघां सुधादेवीं चिंतयामि परां शिवाम् ॥**

मनुः । ऐं वदवद वाग्वादिनि ऐं । क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु २ क्लीं । ॐ मोक्षं कुरु २ ह्रौं ॐ ॥

## अमृतेश्वरी कामदुधांबा ॥ ऋषि ध्यानादीनां अभावः ॥

ऐं ब्लूं झ्रौं जूं सः इत्युक्त्वा अमृते अमृतोद्भवे । अमृतेश्वरि अमृतवर्षिणीति पदं वदेत् ॥

**अमृतं श्रावय युगं स्वाहांतो मनुरुच्यते ।**
**अमृतेशीमनुः प्रोक्तः पंचत्रिंशद्भिरक्षरैः ॥**

मनुः । ऐं ब्लूं झ्रौं जूंसः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय २ स्वाहा ॥

## अन्नपूर्णाकामदुघांबा ॥

ब्रह्मा ऋषिः । त्रिष्टुप्छन्दः । अन्नपूर्णेश्वरी कामदुघांबा देवता । ह्रीं बीजं । श्रीं शक्तिः । क्लीं कीलकं । ह्रां इत्यादि न्यासः ।

तप्तकांचनसंकाशां बालेंदुकृत शेखरां ।
नवरत्नप्रभादीप्त मुकुटां कुंकुमारुणां ।
चित्रवस्त्रपरीधानां मीनाक्षीं कमलस्तनीं ।
नृत्यंती मीशमनिशं दृष्ट्वाऽऽनंदमयां शिवाम् ।
सानंदमुखलोलाक्षीं मेखलाढ्य नितंबिनीं ।
नित्यान्नदान निरतां भूमिश्रीभ्यां नमस्कृतां ॥
दुग्धान्नभरितं पात्रं सरत्नं वामहस्तके ।
दक्षिणे तु करे देव्या संविं ध्याये त्सुवर्णभां ॥

मनुः । ॐ ह्रीं श्रीं क्लीं भगवति माहेश्वरि अन्नपूर्णे स्वाहा ॥

## पञ्जरत्नांबाः ॥ सिद्धलक्ष्मीरत्नांबा ॥

ब्रह्मा ऋषिः । गायत्रीछन्दः । श्रीसिद्धलक्ष्मी रत्नांबादेवता । ह्रीं बीज । क्रों शक्तिः । क्लीं कीलकं । १ ह्रीं ह्रीं ह्रीं । २ ह्रीं क्लीं ह्रीं । ३ ह्रीं क्रों ह्रीं । ४ ह्रीं क्लिन्ने ह्रीं । ५ ह्रीं नित्यमद ह्रीं । ६ ह्रीं द्रवे ह्रौं । इति न्यासः ।

रक्तां रक्तांबरां रक्त गंधमाल्य विभूषितां ।
चतुर्भुजां त्रिनयनां माणिक्य मुकुटोज्वलाम् ।
सिंहासने सुखासीनां स्मेरवक्त्र सरोरुहां ।
सिद्धलक्ष्मीमहंवन्दे करुणामृतसागराम् ॥

मनुः ह्रीं क्लीं क्लिन्ने क्रों नित्यमदद्रवे ह्रीं ॥

## मातंगी

मतंग ऋषिः । गायत्री छन्दः । मातंगीश्वरीदेवता । क्लीं बीजं । ऐं शक्तिः । सौं कीलकं । ऐं क्लीं सौः इति द्विरावृतिभ्यां न्यासः ।

मनुः । ऐं ह्रीं श्रीं ऐं क्लीं सौः । ॐ नमो भगवति श्रीराजमातंगीश्वरि सर्वजनमनोहारिणि सर्वमुखरंजिनि क्लीं ह्रीं श्रीं सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्वसत्वशंकरि सर्वलोकवशंकरि अभीष्टं मे देहि सर्वजनं मे वशमानय स्वाहा । सौः क्लीं ऐं श्रीं ह्रीं ऐं ॥

## भुवनेश्वरी रत्नांबा ॥

भुवनेश्वरी मन्त्रभागे द्रष्टव्यं ।

मनुः ॐ श्रीं ह्रीं श्रीं ॥

## वाराहीरत्नांबा ॥

शिवऋषिः । गायत्री छन्दः । वाराही देवता । ग्लौं बीजं । स्वाहा शक्तिः ।

मूलेन संख्याक्रमेण न्यासः

ध्यानंः–वाराही मन्त्र संदर्भे दृष्टव्यं ॥

मनुः ॥ १ ऐं ग्लौं ऐं ॐ नमो भगवति वार्तालि २, २ वाराहि २, ३ वराहमुखि २, ४ ऐं ग्लौं ऐं अन्धे अंधिनि नमः । ५ रुधे रुंधिनि नमः । ६ जम्भे जंभिनि नमः । मोहे मोहिनि नमः । स्तंभे स्तंभिनि नमः । ७ ऐं ग्लौं ऐं सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुख गति जिह्वास्तंभनं कुरु २ शीघ्रं वश्यं कुरु २ ऐं ग्लौं ऐं ग्लौं ऐं ठः ठः ठः ठः हुं फट् स्वाहा ॥

## तिथिनित्या मण्डलम् ॥

अथ कामेश्वरीं नित्यां नित्या च भगमालिनी ॥
नित्यक्लिन्नाभिधानित्या भेरुंडा वह्निवासिनी ॥
महाविद्येश्वरी दूती त्वरिता कुल सुन्दरी ।
नित्या नीलपताका च विजया सर्वमंगला ।
ज्वालामालिनिका चित्रेत्येताः पंचदशोदिताः ।
कामेश्वर्यादिका नित्या विचित्रांताः प्रकीर्तिताः ॥

## कामेश्वरीनित्या मन्त्रः ।

अस्य मन्त्रस्य । संमोहन ऋषिः । गायत्री छन्दः । श्री कामेश्वरीदेवता । क्लीं बीजं ।

सौः शक्तिः । ऐं कीलकं ॥ १ ऐं क्लीं सौः । २ नमः कामेश्वरि । ३ इच्छाकामफलप्रदे । ४ सर्वसत्व–वशंकरि । ५ सर्वजगत्क्षोभकरि । ६ सौः क्लीं ऐं । इति मूलेन न्यासः ।

ध्यानम्:--

देवीं ध्यायेज्जगद्धात्रीं जपाकुसुमसन्निभां ।
बालभानु प्रतीकाशां शातकुंभसमप्रभां ॥
रक्तवस्त्रपरीधानां संपद्विद्यावशंकरीं ।
नमामि वरदां देवीं कामेशी मभयप्रदाम् ॥

मनुः ३ ऐं क्लीं सौः नमः कामेश्वरि ..सर्वजगत्क्षोभकरि हुं हुं द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐं ॥

## भगमालिनी मन्त्रः

अस्य मन्त्रस्य । मदन ऋषिः । त्रिष्टुप्छन्दः । श्रीभगमालिनी देवता ।

ऐं बीजं । ह्रीं शक्तिः । ब्लूं कीलकं । ब्लां इत्यादि न्यासः ।

ध्यानम्:—

भगरूपां भगमयां दुकूलवसनां शिवां ।
सर्वालंकारसंयुक्तां सर्वलोकवशंकरीम् ॥
भगोदरीं महादेवीं रक्तोत्पलसमप्रभां ।
कामेश्वरांकनिलयां वन्दे श्रीभगमालिनीम् ॥

मनुः । ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोने भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वभगानि मे वशमानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय सर्वसत्वान् भगेश्वरि अमोघे भगविच्चे क्षुभक्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हुं ब्लुं ह्रीं ॥

## नित्यक्लिन्ना

ब्रह्मा ऋषिः । विराट् छन्दः । नित्यक्लिन्नादेवता । ह्रीं बीजं । स्वाहा शक्तिः । क्लीं कीलकं ।
ह्रां इत्यादि न्यासः ।

पद्मराग मणि प्रख्यां हेमताटंक भूषितां ।
रक्तवस्त्रधरां देवीं रक्तमाल्यानुलेपनां ॥
अंजनांचितनेत्रांतां पद्मपत्र निभेक्षणां ।
नित्यक्लिन्नां नमस्यामि चतुर्भुज विराजिताम् ॥

मनुः । ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा ॥

## भेरुण्डा मन्त्रः ॥

महाविष्णु ऋषिः । गायत्रीछन्दः । श्री भेरुंडा नित्या देवता । श्रों बीजं । स्वाहा शक्तिः । क्रों कीलकं । श्रां इत्यादि न्यासः ।

शुद्धस्फटिक संकाशां पद्मपत्र समप्रभां ।
मध्याह्नादित्य संकाशां शुभ्रवस्त्र समन्वितां ।
श्वेतचन्दन लिप्तांगीं शुभ्रमाल्य विभूषितां ।
बिभ्रतीं चिन्मयां मुद्रा मक्षमालां च पुस्तकं ।
सहस्रपत्रकमले समासीनां शुचिस्मितां ।
सर्वविद्याप्रदां देवीं भेरुंडां प्रणमाम्यहम् ॥

## वह्निवासिनी मन्त्रः ॥

मनुः ॐ क्रों भ्रों क्रों झ्रौं छ्रौं ज्रौं स्वाहा ॥

वसिष्ठ ऋषिः । गायत्री छन्दः श्रीवह्निवासिनीनित्या देवता । ह्रीं बीजं । नमः शक्तिः । ॐ कीलकं । ह्रां इत्यादि न्यासः ।

ध्यानम्ः—

वह्निकोटि प्रतीकाशां सूर्यकोटि समप्रभां ।
अग्निज्वालासमाकीर्णां सर्वरोगोपहारिणीं ॥
कालमृत्युप्रशमनी मपमृत्युनिवारिणीं ।
परमायुष्यदां वन्दे नित्यां श्रीवह्निवासिनीं ॥

मनुः ॐ ह्रीं वह्निवासिन्यै नमः ॥

## महाविद्येश्वरी

ब्रह्मा ऋषिः । गायत्रीछन्दः । श्रीमहाविद्येश्वरीनित्या देवता । ॐ बीजं । फ्रें शक्तिः । ह्रीं कीलकं । ॐ ह्रीं । फ्रेंसः नित्यक्लिन्ने । मदद्रवे स्वाहा इति न्यासः ।

तप्तकांचन संकाशां कनकाभरणान्वितां ।
हेमताटंक संयुक्तां कस्तूरी तिलकान्विताम् ।
हेमचिताक संयुक्तां पूर्णचन्द्रमुखांबुजां ।
पीतांबर समोपेतां पुष्पमाल्यविभूषितां ।

मुक्ताहार समोपेतां मुकुटेन विराजितां ।
महाविद्येश्वरीं वन्दे सर्वैश्वर्यफलप्रदाम् ॥

मनुः ॐ ह्रीं फ्रेंसः नित्यक्लिन्ने मदद्रवे स्वाहा ॥

## शिवदूती ॥

ईश्वर ऋषिः । गायत्री छन्दः । श्रीशिवदूतीनित्या देवता । ह्रीं बीजं । नमः शक्तिः शिवदूत्ये कीलकं । ह्रां इत्यादि न्यासः ।

बालसूर्य प्रतीकाशां बन्धूक प्रसवारुणां ।
विधिविष्णु शिवस्तुत्यां देवगंधर्व सेवितां ॥
रक्तारविंद संकाशां सर्वाभरण भूषितां ।
शिवदूतीं नमस्यामि रत्नसिंहासन स्थिताम् ॥

मनुः ह्रीं शिवदूत्यै नमः ॥

## ॥ त्वरिता ॥

ईश्व ऋषिः । विराट् छन्दः । श्रीत्वरितानित्यादेवता । हूं बीजं स्त्रीं शक्तिः । ह्रीं कीलकं । ह्रां इत्यादि न्यासः ।

रक्तारविंद संकाशा मुद्यत्सूर्य समप्रभां ।
दधतीमंकुशं पाशं बाणान् चापं मनोहरम् ॥
चतुर्भुजां महादेवी मप्सरोगणसंकुलां ।
नमामित्वरितां नित्यां भक्तानामभयप्रदाम् ॥

मनुः । ॐ ह्रीं हूं खेचच्छेक्षः स्त्रीं हूं क्षें ह्रीं फट् ॥

## कुलसुन्दरी ॥

दक्षिणामूर्ति ऋषिः । पंक्ति छन्दः । श्रीकुलसुन्दरीदेवता । ऐं बीजं । सौः शक्तिः क्लीं कीलकं । मूलेन द्विरावृत्या न्यासः । ध्यानं । अरुण किरण...कल्याणशीला ॥

मनुः ऐं क्लीं सौः ॥

## ॥ नित्या नित्या ॥

जामदग्नि राम ऋषिः । पंक्तिः छन्दः । श्री नित्या नित्यादेवता । ऐं बीजं । सौः शक्तिः । क्लीं कीलकं ॥

अनुलोम विलोम खण्डत्रयेण न्यासः।

ध्यानम्—

उद्यत्प्रद्योतननिभां जपाकुसुम सन्निभां।
हरिचन्दनलिप्तांगीं रक्तमाल्य विभूषितां।
रत्नाभरण भूषांगीं रक्तवस्त्र सुशोभितां।
जगदंबां नमस्यामि नित्यां श्रीपरमेश्वरीम् ॥

मनुः, ऐं क्लीं सौः हसकलरडैं हसकलरडीं हसकलर डौं सौः क्लीं ऐ। द्रां द्रीं क्लीं ब्लूं सः।

## नीलपत्ताका नित्यमदद्रवा)

परमशिव ऋषिः। जगती छन्दः। श्रीनीलपताकानित्या देवता। ह्रीं बीजं। फ्रें उक्तिः स्रूं कीलकं ॥ १ ॐ ह्रीं। २ फ्रें स्रूं। ३ आं ह्रीं क्रों। नित्यमदद्रवे। ५ हुं। ६ क्रो। इति न्यासः।

पंचवक्त्रां त्रिनयनांमरुणाशुक धारिणीं।
दशहस्तां लसन्मुक्ता प्रायाभरण मंडिताम् ॥
नीलमेघसमप्रख्यां धूम्रार्चिसदृशप्रभां।
नीलपुष्पस्रजोपेतां ध्यायेन्नीलपताकिनीम् ॥

मनुः। ॐ ह्रीं फ्रें स्रूं आं ह्रीं क्रों नित्यमदद्रवे हुं क्रों ॥

## ॥ विजया नित्यामन्त्रः ॥

दक्षिणामूर्ति ऋषिः। पंक्तिः छन्दः। श्रीविजयानित्या देवता। ह्रां बीजं। ह्रीं शक्तिः। ह्रूं कीलकं। ह्रां इत्यादि न्यासः।

उद्यदर्कसमप्राभा दाडिमीपुष्पसन्निभां।
रक्तकंकणकेयूर किरीटांगद संयुताम् ॥
देवगंधर्व योगीश मुनिसिद्धनिषेवितां।
नमामि विजयां नित्यां सिंहोपरिकृतासनाम् ॥

मनुः ॥भ्म्र्यौं ॥

## सर्वमंगला

चन्द्र ऋषिः । गायत्री छन्द । श्रीसर्वमंगलानित्या देवता । स्त्रौं बीजं । नमः शक्तिः । सर्वमंगलायै इति कीलकं । मूल भागत्रयेण न्यासः ।

रक्तोत्पल समप्रख्यां पद्मपत्रनिभेक्षणां ।
इक्षुकार्मुक पुष्पौघ पाशांकुश समन्वितां ॥
सुप्रसन्नां शशिमुखीं नानारत्नविभूषितां ।
शुभ्र पद्मासनस्थांतां भजामि सर्व मंगलाम् ॥

मनुः स्त्रौं सर्वमंगलायै नमः ॥

## ज्वालामालिनी मन्त्रः ॥

कश्यप ऋषिः । गायत्री छन्दः । श्रीज्वालामालिनीनित्या देवता । रं बीजं । फट् शक्तिः । हुं कीलकं ।

१ ॐ नमो भगवति ज्वालामालिनि । २ देवदेवि सर्वभूतसंहारकारिके । ३ जातवेदसि । ज्वल-अतिज्वाल २ । ५ प्रज्वल २ हुं हुं । ६ रं रं हुं फट् । इति न्यासः ।

ध्यानम्ः—

अग्निज्वाला समाभाक्षीं नीलवक्त्रां चतुर्भुजां ।
नीलनीरद संकाशां नीलकेशीं तनूदरीम् ।
खड्गंत्रिशूलं बिभ्राणां वरांसाभय मेवच ।
सिंहपृष्ठ समारूढां ध्यायेज्ज्वालाद्यमालिनीम् ॥

मनुः । ॐ नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलातिज्वल २ प्रज्वल २ हुं हुं रं रं हुं फट् ॥

## विचित्रानित्या ॥

ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीविचित्रानित्या देवता ककारो बीजं । औकारः शक्तिः । चकारः कीलकं । चां इत्यादि न्यासः ।

ध्यानम्ः--

शुद्धस्फटिक संकाशां पलाशकुसुमप्रभां ।
नीलमेघ प्रतीकाशां चतुर्हस्तां त्रिलोचनाम् ॥
सर्वालंकार संयुक्तां पुष्पबाणेक्षुचापिनीं ।
पाशांकुशसमोपेतां ध्यायेच्चित्रां महेश्वरीम् ॥

मनुः च्क्रौं ॥

## षडध्वक्रमम् ॥

१. पदाध्वाः– चक्रत्रयेषु निगद्यते ।

२. भुवनाध्वाः– चक्रत्रिसन्धि भागेषु व्यवस्थिता ॥

३. वर्णाध्वाः– मातृकारूपी भूपुरादि बिंद्वन्त तत्तच्चक्रकोणस्य मातृकाक्षररूपेण मातृकापीठरूपका प्रसिद्धः ॥

४. तत्वाध्वाः– षट्त्रिंशत् तत्त्वभरितं चक्रं मूलानुरूपतः कथितं ॥

५. कलाध्वाः– चक्रासनात् पंचसिंहासनोन्नद्ध कलारूपः ॥

६. मन्त्राध्वाः– सबाला भैरवीयुक्ता महात्रिपुरसुन्दरी त्रिपुरान्ताढ्य चक्रं प्राप्य विजृम्भते ॥

## ॥ अन्यत्र क्रमस्तु ॥

**तत्र अध्व शोधनविषये तु मंत्रादि षट्क क्रमस्यैव उपयोगः ॥**
**एतेन कलाध्वनैव पंचपंच प्रकारेण पंचाध्वानः जायंते ॥**

मन्त्र, पद, वर्ण, भुवन, तत्व, कला इत्येष क्रमरूपः ॥

तत्र कलाध्वाः– निवृत्ति, प्रतिष्ठा, विद्या, शांति, शांत्यतीता इति पंचकमयः ॥

अयं कलाध्वा इतर पंचाध्वानः पूर्णयेत् । अयं व्यापकः अन्ये पंचापि व्याप्य तत्व परिपाकस्यैव कला-रूपत्वं । सर्वमपि लोकंतत्वत्रय स्वरूपमिति विभाव्य अध्व शुद्धि समापयेत् ॥ तत्वशुद्धिकरेण शान्त्यतीतादि कलानां पूर्वोक्तप्रकारेणैव कारयेत् ॥

शिव, विद्या, आत्मतत्वमिति त्रय, शक्तितत्वात् शिवतत्वं, शिवतत्वात् विद्यातत्वं, विद्यातत्वात् आत्मतत्वं च जायते ॥ शिवतत्वेन शान्त्यतीता अध्वनश्च व्याप्ता भवंति ॥ अन्यान् अध्वनः विद्यातत्वं व्यापयेत् । आत्मतत्वं सर्वानपि अध्वनः पूरयेत् ॥

**समस्त चक्र चक्रेशियुते देवि नवात्मिके ।**
**आरार्तिकमिदंतुभ्यं गृहाण मम सिद्धये समस्त, नवात्मिक पदार्थः ।**
**श्रीचक्रे नवचक्राः भवंति । तद्यथा ॥**

चक्र, मन्त्र, यन्त्र, तन्त्र, वेद, योग, पीठ, विद्या, सिद्ध इति नामकाः ॥

## चक्रपूजा प्रशस्तकालः

**कुहू पूर्णेन्दु संक्रांति चतुर्दश्यष्टमीषु च ।**
**नवम्यां मंगले मंदे चक्रपूजा शुभप्रदा ॥**

ॐ समस्त प्रकट गुप्त गुप्ततर संप्रदाय कुलोत्तीर्णं निगर्भ रहस्य अतिरहस्य परापररहस्य योगिनी सहितायाः तत्तदावरण, आम्नायदेवता सहित, श्रीमहागणपति, सुब्रह्मण्य, बाला अन्नपूर्णा अश्वारूढ, श्यामा, वार्तालि, तिरस्करिणी, परा, दक्षिणकालिका, धनदा चण्डिका भुवनेश्वर्यादि समस्तदेवता सेवितायाः प्रत्यंगिरा शूलिनी नीलकण्ठ प्रासादमृत्युंजय गरुड प्रसन्नवेंकटेश्वर राधाकृष्ण सीतारामादि समस्तदेवता सेवितायाः षडाम्नाय षड्दर्शन पंचपंचिकादि समस्तदेवता सेवितायाः, सावित्र्यादि रश्मि माला व्यधिष्ठानदेवता सेवितायाः अणिमादि समस्त आवरणदेवता सेवितायाः ब्रह्मास्त्रादि समस्त अस्त्रदेवता सेवितायाः वसिष्ठ अरुंधती, अगस्त्य लोपामुद्रा अत्रि अनसूयादि समस्त कुलाचार्य महर्षिदंपती सेवितायाः मित्रेशादिनाथ देवता सेवितायाः प्रकाशानन्दनाथादि नवनाथ सेवितायाः अग्निहोत्र दशपूर्णमासी चातुर्मास्य निरूढपशुबन्ध ज्योतिष्टोम अप्तोर्याम अतिरात्र वाजपेय पौण्डरीक सौत्रामणिश्येनयाय राजसूय अश्वमेधादि वसोर्धारा शतरुद्रीय सर्ववेदोक्त सर्वयागाद्यधिष्ठातृ देवता सेवितायाः पुत्रकामेष्टि आरोग्यकामेष्टि भूतिकामेष्ट्यादि वेदोक्त समस्त इष्टयधिष्ठातृ देवता सेवितायाः आदित्यादि नवग्रहसेवितायाः इन्द्रादि दशदिक्पालक सेवितायाः षट्युत्तरत्रिंशत् रश्मि देवता सेवितायाः ब्रह्मविष्णुरुद्र ईश्वर सदाशिव परशिव, वामा ज्येष्ठा रौद्री अंबिका शांता परा शक्त्याख्य षट्शिवशक्ति सेवितायाः राजराजेश्वर परमेश्वर महाकामेश्वर सहितायाः राजराजेश्वरी परमेश्वरी महाकामेश्वरी ललिता महात्रिपुरसुन्दरी इति सर्व वेदोक्त महती देव्याख्यायाः महाषोडशी महाशक्त्याख्याः अविनाभाव संबन्ध महायोनि महाबिन्द्वाख्य सर्वसिद्धिप्रद सर्वानन्दमयाख्य परब्रह्म केवलब्रह्मात्मक महात्रिपुर भैरवी चक्रराजस्य ईश्वर्याः तन्मूलभूतायाः केवलानन्दवल्याः ललितायाः प्रसादात् अस्मिन् भूमण्डले सृष्टितः सकल जीवराश्यादि मानुषजन्म पर्यन्तम् शरीर त्रय पचेन्द्रिय ज्ञानेन्द्रिय गुणत्रय अवस्थात्रयादि कारणे च उत्पादित प्रारब्ध सचित आगाम्यादि कर्मत्रयेण अस्मिन् संसारचक्रे पुनःपुनः सम्भावित सम्भविष्यमाण रौरवादि नरकादीनाम् भुरसुवरादि सत्यलोकपर्यंतम् अनुभूयमान स्वर्ग लोक सुखादी भस्मीकृत्य पुनर्जन्मरहितत्वात्, देव्याः पादारविन्दयोः ऐक्य साधनभूत हेतुकराणाम् कार्याणाम् प्रवर्तने बुधि मनोवाक्कायादीनाम् भगवत्याः कारुण्यकटाक्षवीक्षणा अद्य अधुनैव कुर्वन्तु इति शरीरत्रय मनोवाक्काय ज्ञानेन्द्रियादिभिः सह अनेककोटि साष्टागं नमस्कारपुरस्सरम् आशास्महे ॥

## षोडशनित्याः मन्त्रः ॥ कामेश्वरीनित्या ॥

संमोहन ऋषिः । गायत्री छन्दः । क्लीं सौः इति द्विरावृत्या न्यासः ।

ध्यानम्ः--

**पंचकामेश्वरी त्वरिता मन्त्रवत् ॥**

ऐं क्लीं सौः ॐ नमः कामेश्वरी । इच्छाकामफलप्रदे सर्वसत्ववशंकरि सर्वजगत्क्षोभकरि हुं प्रं हुं द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐं ॥

## ॥ भगमालिनी ॥

सुभग ऋषिः । गायत्री छन्दः । हस्क्लें बीजं स्त्रीं शक्तिः स्त्रां स्त्रीं इत्यादि न्यासः ।

ध्यानम्ः—

कदंबवनमध्यस्थां उद्यत्सूर्यसमद्युतिम् ।
नानाभरणसंपन्नां त्रैलोक्याकर्षणक्षमाम् ॥
पाशांकुशौ पुस्तकं च तौ शिखी गतलेखनीम् ।
वरदं चाभयंचैव दधतीं विश्वमातरम् ॥

मनुः ॐ ऐं भग भुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनें भगनिपातिनि सर्व भगवशंकरि भगरुपे नित्यक्लिन्ने भगस्वरुपे सर्वाणि भग नि मे ह्यानय वरदेरेते सुरेते भगक्लिन्ने क्लेदय, द्रावय, अमोघे भगविच्चे क्षुभ क्षोभय सर्व सत्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगमालिन्यै नमः ॥

## नित्यक्लिन्ना ॥

१ ह्रीं २ नित्ये ३ क्लिन्ने ४ पद ५ द्रवे ६ स्वाहा इति मूलेन न्यासः ।

ध्यानम्ः--

रक्तां रक्तांगवसनां चन्द्रचूडां त्रिलोचनाम् ।
विद्युद्वक्त्रां महाघूर्णलोचनां रक्तभूषिताम् ॥
पाशांकुशौ कपालं च महाभीतिहरं तथा ।
दधतीं संस्मरेन्नित्यां पद्मासन विराजिताम् ॥

ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा ॥

## भेरुण्डा ॥

महाविष्णु ऋषिः । गायत्री छन्दः । पराशक्तिर्देवता । भ्रौं बीजं स्वाहा शक्तिः । क्रों कीलकं ।

ध्यानम्—

चन्द्रकोटि प्रतीकाशां स्रवंती ममृतद्रवैः ।
नीलकंठां त्रिनेत्रां च नानाभरण भूषिताम् ।
इन्द्रनील स्फुरत्कांति शिखिवाहन शोभिताम् ।
पाशांकुशौ कपालंच च्छुरिकां वरदाभये ॥
बिभ्रतीं हेमसंबद्ध गारुडागद भूषिताम् ॥

॥ ॐ क्रों भ्रों क्रौं त्रौं च्छौं ज्रौं झ्रौं स्वाहा ॥

## वह्निवासिनी

वसिष्ठ ऋषिः । गायत्रीछन्दः । ह्रीं बीजं । नमः शक्तिः । वह्निवासिनी कीलकं ।
१ ह्रीं २ वह्निवासिनी ३ स्वाहा इति द्विरावृत्या न्यासः ।
ध्यानम्:--

ध्यायेत्तां च सुवर्णाभां नानालंकार भूषिताम् ।
पाशांकुशौ स्वस्तिकं च शक्तिं वरदाभये ।
दधतीं रत्नमुकुट त्रैलोक्यतिमिरापहम् ॥

ह्रीं वह्निवासिन्यै नमः ॥

## महाविद्येश्वरी ॥

ब्रह्मा ऋषिः गायत्री छन्दः । महाविद्येश्वरी देवता । ॐ बीजं । स्वाहा शक्तिः । हृल्लेखा कीलकं ।
१ ॐ ह्रीं क्रों स, २ नित्य ३ क्लिन्ने ४ मद ५ द्रवे ६ स्वाहा इति न्यासः ।

माणिक्य भूषणां नित्यां नानाभूषाविभूषिताम् ।
पाशांकुशौ कपालस्थ सुधापान विघूर्णिताम् ॥

मनुः न्यासवत् ॥

## शिवदूती ॥

रुद्र ऋषिः । गायत्री छन्दः । शिवदूतीदेवता । १ ह्रीं २ शिवदूत्यै ३ नमः इति द्विरावृत्या न्यासः ।
ह्रीं बीजं । नमः शक्तिः । शिवदूती कीलकं ।

दूर्वानिभां त्रिनेत्रां च महासिंहसमासनाम् ।
शंखारिबाणचापांश्च सृणिपाशौ वराभये ॥
दधतीं चिंतयेन्नित्यां शिवदूतीं शिवां पराम् ॥

मनुः न्यासवत् ॥

## त्वरिता

ईश्वर ऋषिः । विराट् छन्दः । पार्वतीदेवता । हुं बीजं । स्त्रीं शक्तिः । क्षें कीलकं । १ चंछे, २ क्षः, ३ क्षस्त्रीं, ४ स्त्रींहुं, ५ हुक्षें, क्षेफट् इति न्यासः ।

श्यामांगीं रक्तसताभि चरणांबुज शोभिताम् ।
वृषलाहि सुमंजीरां कण्ठरत्न सुभूषिताम् ॥
स्वर्णांशुकां स्वर्णभूषां वैश्याहि द्वन्द्वमेखलाम् ।
तनुमध्यां पीनवृत्त कुचयुग्मां वराभये ।
दधतीं शिखिपिच्छानां वलयांगद शोभिताम् ।
गुंजारुणां नृपाहीन्द्र केयूरां रक्त भूषणाम् ।
द्विजनाग स्फुरत्कर्ण भूषां मत्तारुणेक्षणाम् ।
नीलकुंचित धम्मिल्ल वनपुष्पां कलापिनीम् ।
कैराति शिखिपत्राढ्य निकेतन विराजिताम् ।
स्फुरत्सिंहासन प्रौढां स्मरेद्भय विनाशिनीम् ॥

ॐ ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् ॥

## कुलसुन्दरी

ऋष्यादि सर्वं बालामन्त्रवत् ॥

"ऐं क्लीं सौः ।"

## नित्यानित्या

ऋष्यादि सर्वं त्रिपुरेशी मन्त्रवत् ॥

मनुः । ऐं क्लीं सौः हसकलरडीं, हसकलरडीं, हुं हुं हुं द्रां द्रीं क्लीं ब्लूं सः ॥

२. ऐं क्लीं सौः हस्त्रौं हक्लीं हस्त्रौः सौः क्लीं ऐं द्रां द्रीं क्लीं ब्लूं सः नित्यायै नमः ॥

## नीलपताका ॥

ध्यानम् :—

रक्तां रक्तांशुक प्रौढां नानारत्नविभूषिताम् ।
इन्द्रनील स्फुरन्नीलपताकां कमलेस्थिताम् ॥
कामग्रैवेय संलग्न सृणीच वरदाऽभये ।
दधतीं परमेशानीं त्रैलोक्याकर्षण क्षमाम् ॥

मनुः । ॐ हृत्कामेश्वरी कामांकुशे कामपताकिके भगवति नीलपतके भगवति नमोस्तु मे परमगुह्ये क्लीं ह्रीं ह्रीं मदने मदनदेहे त्रैलोक्य मावेशय हुं फट् स्वाहा ।

## ॥ विजया ॥

शिव ऋषिः । गायत्री छन्दः । विजया देवता । ह्रस्फ्रे बीजं । नमः शक्तिः । विजयायै कीलकं । ह्रस्फ्रां, ह्रस्फ्रीं इत्यादि न्यासः ।

ध्यानम्ः—

एकवक्त्रां दशभुजां सर्पयज्ञोपवीतिनीम् ।
दंष्ट्रा करालवदनां नरमाला विभूषिताम् ॥
अस्थिचर्मविशेषाढ्यां वह्निकूटसमप्रभाम् ।
व्याघ्रांबरां महाप्रौढ शवासन विराजिताम् ॥
रणे स्मरणमात्रेण भक्तेभ्यो विजयप्रदाम् ।
शूलं सर्पं च ढक्कासि सृणि घण्टाशनिद्वयम् ॥
पाशमग्निमभीतिं च दधानां विजयां स्मरेत् ॥

ह्रस्फ्रें विजयायै नमः ॥

## सर्वमंगला ॥

छन्दो ऋषिः । गायत्री छन्दः । सर्वमंगला देवता । १ स्त्रौं २ सर्वमंगलायै ३ नमः इति द्विरावृत्या न्यासः ।

शुभ्रवस्त्र मनोरम्यां चन्द्रकुंद समद्युतिम् ।
सुप्रसन्नां शशिमुखीं नानारत्न विभूषिताम् ॥
अनंतमुक्ताभरणां स्रवन्ती ममृतद्रवं ।
वरदाभय शोभाढ्यां स्मरे त्सौभाग्य वर्धिनीम् ॥

स्त्रौं सर्वमंगलायै नमः ॥

## ज्वालामालिनी ॥

ॐ नमो भगवति १ ज्वालामालिनि, २ देवि, ३ सर्वभूतसंहारकारिके, ४ जातवेदसि ज्वलंति, ५ ज्वल २, ६ प्रज्वल २ ह्रूं ह्र र र र र ह्रुं फट् ॥
इति मूलेन संख्याक्रमेण न्यासः ।

ध्यानम्ः—

उद्यद्विद्युल्लता कांति स्वर्णाभरण भूषिताम् ।
महासिंहासनप्रौढां ज्वलामाला करालिनीम् ॥
अरिशंखौ खड्गखेटे त्रिशूलं डमरुं तथा ।
पानपात्रं च वरदं दधतीं संस्मरेद्यजेत् ॥

## विचित्रा ॥

ब्रह्मा ऋषिः । गायत्री छन्दः । विचित्रा देवता । ककारः बीज । स्वरराज शक्तिः । ककार कीलकं । क्षां कां, ॐ कौं इति न्यासः ।

शुभ्रांगीं ज्ञानदां नित्यं विचित्रवसनां सदा ।
विचित्र तिलकां नित्यं विचित्र कुंकुमोज्वलां ।
वरदाभय शोभाढ्यां नानारत्नधरां स्मरेत् ॥

॥ क्कौं ॥

## श्रीविद्या पंचदशी मन्त्र संपुटित मन्त्राः ॥ श्रीविद्यार्णवे ॥

गणपतिः ॥ ॐ श्रीं ह्रीं क्लीं ग्लौं गं कः ५ पदद्यकश्चवृत्तहन् ह ६ उदग्ना अभिसूर्य स ४ सर्वं तदिन्द्र ते वशे गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा ॥

क ५ जातवेदसे...वेदः सनः...त्यग्निः । ह ६ संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ, इलस्पदे समिध्यसे स नो वसून्दाधार । सगच्छध्व सवदध्व स वो मनांसि जनानां । देवाभागं यथा पूर्वं संजनाना उपासते स ४ । स मानो मन्त्रः समितिः समानी समानं मनः सहचित्तमेषां । समानं मन्त्रमभि मन्त्रये वः । समानेन वो हविषा जुहोमि । समानी व आकूतिः समाना हृदयानि वः ।

समानमस्तु वो मनो यथा वः सुहासति ॥

प्रत्यहं जपतो पुंसो यथाशक्ति विशेषतः ।
जगत्संमोहनं वश्यं कांति सौभाग्य पुष्टिदम् ॥

२. भद्रं नो अभिवातस्य मनः क ५ मरुतामोजसे स्वाहा ह ६ इन्द्रो विश्वस्य राजति स ४ शन्नो भव द्विपदे शं चतुष्पदे ॥ भद्रमों अभिमन्त्रस्य गर्भस्यां सुन्दरीभवेत् । कुबेर इव वित्तादयो जायते भुवि मानवः ॥

३. यद्वाग्देवी च चत्वारि स सपंरीद्युगं तता । ऋक् पंचकं समाख्यातं महासार स्वतःप्रदं ॥

१. यद्वा ग्वदन्त्यं विचेतनानि क ५ राष्ट्रीदेवानां निषसाद मन्द्रा ह ६ चतस ऊर्जं पयांसि स ४ कस्विदस्याः परमंजगाम ॥

२. देवीं वाचमजनयन्त देवाः क ५ तां विश्वरूपां पशवो वदंति । ह ६ सानो मन्द्रेषमूर्जं दुहाना स ४ धेनुर्वागस्मापन्नुसष्ट् तं तु ॥

३. चत्वारि वाक् परिमिता पदानि क ६ तानि विदुर्ब्राह्मणा ये मनीषिणः ह ६ गुहा त्रीणि निहिता– नेङ्गयंति स ४ तुरीयं वाचो मनुष्या वदंति ॥

४. स सर्परमति बाधमाना क ६ बृहन्मिमाय जमदग्निदत्ता ह ६ अपूर्व्यस्य दुहिता तताना श्रवो देवेष्व मृतमजुर्यम् । स नर्परोरमन्तु यमेभ्यः क ५ अत्रिः पाचजन्यासु कृष्टिषु ह ६ सासश्व नव्यमायुदधाना ४ या मे पंचस्ति जमदग्नयोदधुः ।। इति पंचमन्त्राः ।।

यश्छन्दसा शरीरं मे यो देवानामितित्रयम् ।
सुन्दरी गर्भगं जप्यात् पृथक् पृथगतन्द्रितः ।।
मेधावी श्रुतिधारीच नीरोगी च प्रियंवदः ।
बहुश्रुतः शास्त्रकर्ता श्रुतान् वेदागमा नपि ।।
न विस्मयतिमर्त्योऽसौ सर्वज्ञो भवति ध्रुवम् ।।

१. यश्छन्दसामृषभो विश्वरूपः क ५ छन्दोभ्योऽमृतात् संबभूव ह ६ स मेन्द्रो मेधया स्पृणोतु स ४ अमृतस्य देवधारणो भूयासं ।।

२. शरीरं मे विचर्षण क ५ जिह्वा मे मधुमत्तमा ह ६ मनसः काम माकूति स ४ वाचः सत्य-मशीमहि ।।

३. यो देवानां प्रथमं पुरस्तात् क ५ विश्वाधिपो रुद्रो महर्षिभिः ६ हिरण्यगर्भं पश्यत जायमानं स ४ स नो देवः शुभया स्मृत्या संयुनक्तु ।

एवापिते यूयमस्मानेवेन्द्राग्नी त्रयं भवेत् ।
चतुर्थी त्वं सोमप्रचेति पंचमी तु प्रजापते ।
एतत्पंच वर्गस्थां सुन्दरीं प्रजपेत् पृथक् ।।
यो नरः तस्य निरतं धन धान्य धरासुतैः ।
गोगजाश्वावि महिष शस्य भूषादि संकुलं ।
लक्ष्मी समावहेन्द्राभ्यां पुत्रपौत्रादिगामिनीं ।

१. एवा पित्रे विश्वदेवाय वृष्णे क ६ यज्ञैर्विधेम नमसा हविर्भिः ह बृहस्पते सुप्रजा वीरवंतः स ४ वयं स्याम पतयोरयीणां ।

२. यूयमस्मान्नयत वस्यो अच्छा क ५ निरंहतिभ्यो मरुतो गृणानाः ह ६ जुषध्वं नो हव्यदातिं यजत्रा स ४ वयं स्यामपतयोरयीणाम् ।।

३. एवेन्द्राग्नी पपांस । सुनस्यं क ५ विश्वास्मभ्यं सञ्जयन्तं वनानि ह ६ तन्नो मित्रो वरुणो माम-हन्तां स अदितिः ।

४. सिन्धुः पृथिवी उतद्यौः ।। त्वं सोम प्रचिकितो मनीषा क ५ त्वं रजिष्ठ मनुनेषि पन्थां ह ६ तव प्रणीति पितरोन इन्द्रो स ४ ।।।

५. प्रजापते न त्वदेतान्यन्यः क ५ विश्वा जातानि परिता बभूव । ह ६ यत्कामास्ते जुहुमस्तन्नो अस्तु स ४ वयं स्याम पतयो रयीणाम् ॥

**अथवा लक्ष्म्यश्वदायि गर्भस्थां सुन्दरीं यजेत् ।**
**धनधान्यैश्च विभवैरन्यैश्चागमवादिभिः ॥**
**आपूरयंती सततं तत्रैव रमते रमा ।**

१. या लक्ष्मीः सिन्धुसंभवा क ६ भूतिधेनुपरूबसूः ह ६ पद्मा विश्वा वसुदेवी स ४ सदा नो जुषतां गृहम् । अश्वदायि गोदायि क ५ धनदायि महाधने ह ६ धनं मे जुषतां देवि स ४ सर्वकामार्थ सिद्धये ॥

**सर्व कामांश्च देहिमे इति ऋग्वेदपाठः ।**
**सहस्रशीर्षेत्यादि यजुर्वेदे प्रसिद्धं । ऋग्वेदे श्रीसूक्तं ॥**
**कला निभ्युच सूक्तस्य मन्त्रपाद चतुष्टयैः ।**
**संपुटीकृत्य जपतां फलान्याचक्ष्महे स्फुटम् ।**
**कलासु च सूक्तः पुरुषसूक्तं ॥ निभ्युचसूक्तं श्रीसूक्तं ।**

१. सहस्रशीर्षापुरुषः ऐं हसकहलह्रीं सहस्राक्षसहस्रपात् क्लीं ६, हसकलह्रीं सभूमिंविश्वतो कृत्वा सौ स ४ अत्यतिष्ठद्दशांगुलम् ॥

२. पुरुष एवेदं सर्वं ऐं हसकहलह्रीं यद्भूतं यच्च भव्यं क्लीं हसकहलह्रीं उतामृतत्वेशानः सौं सकल ह्रीं यदन्ते नातिरोहति ॥

३. एतावानस्यमहिमा ऐं हसकहलह्रीं अतो ज्यायांश्चपुरुषः क्लीं हसकहलह्रीं पादोऽस्य विश्वा-भूतानि सौः सकलह्रीं त्रिपादस्यामृतं दिवि ॥

४. त्रिपादूर्ध्व उदैत्पुरुषः ऐं हसकहलह्रीं पादोऽस्येहाभवात्पुनः क्लीं हसकलह्रीं ततो विष्वङ् व्यक्रामत् सौःसकलह्रीं साशनाशने अभि ॥

५. तस्माद्विराडजायत ऐं हसकहलह्रीं विराजो अधि पूरुषः । क्लीं हसकहलह्रीं स जातो अत्यरिच्यते सौः सकलह्रीं पश्चाद्भूमिमथोपुरः ॥

६. यत्पुरुषेणहविषा ऐं हसकहलह्रीं देवा यज्ञमतन्वत क्लीं हसकहलह्रीं वसन्तो अस्यासीदाज्यं सौः सकलह्रीं ग्रीष्म इध्यः शरद्धविः ॥

७. सप्तस्यासन् परिधयः ऐं हसकलह्रीं त्रिःसप्त समिधः कृताः क्लीं हसकलह्रीं देवा यद्यज्ञ तन्वानाः सौः सकलह्रीं अबध्नन् पुरुषंपशुम् ॥

८. त यज्ञं बर्हिषि प्रौक्षन् ऐं हसकहलह्रीं पुरुषं जातमग्रतः क्लीं हसकहलह्रीं तेनदेवा अयजन्त सौः सकलह्रीं साध्या ऋषयश्चये ॥

९. तस्माद्यज्ञात्सर्वहुतः ऐं हसकह लह्रीं सभृतं पृषदाज्यं क्लीं हसकहलह्रीं । पशूंस्तांश्चक्रेवायव्यान् सौः सकलह्रीं आरण्यान् ग्राम्याश्चये ।

१०. तस्माद्यज्ञात् सर्वहुतः ऐं हसकहलह्रीं ऋचः सामानिजज्ञिरे क्लीं हसकहलह्रीं छन्दांसि जज्ञिरे तस्मात् सौः सकलह्रीं यजुस्तस्मा दजायत ॥

११. तस्मादश्वा अजायन्त ऐं हसकहलह्रीं येकेचोभयादतः क्लीं हसकलह्रीं गावोहि जज्ञिरे तस्मात् सौः सकलह्रीं तस्माञ्जाता अजादयः ॥

१२. यत्पुरुषं व्यदधुः ऐं हसकहलह्रीं कथिधा व्यकल्पयन् क्लीं हसकहलह्रीं । मुखं किमस्य कौ बाहू सौः सकलह्रीं कावूरू पादावुच्येते ॥

१३. ब्राह्मणोऽस्य मुखमासीत् ऐं हसकहलह्रीं बाहूराजन्यः कृतः क्लीं हसकहलह्रीं ऊरू तदस्य यद्वैश्यः सौः सकलह्रीं पदभ्यागम्शूद्रो अजायत ॥

१४. चन्द्रमा मनसो जातः ऐं हसकहलह्रीं चक्षोः सूर्यो अजायत क्लीं हसकलह्रीं मुखादिन्द्र श्चाग्निश्च सौः सकलह्रीं प्राणाद्वायुरजायत ।

१५. नाभ्यादासीदन्तरिक्ष ऐं हसकहलह्रीं शीर्ष्णोः द्यौः समवर्तत क्लीं हसकहलह्रीं । पदभ्यां भूमिर्दिशश्रोत्रात् सौः सकलह्रीं तथालोकाग् अकल्पयन् ।

१६. वेदाहमेत पुरुष महान्तं ऐं हसकहलह्रीं आदित्यवर्णं तमसप्रस्तात क्लीं हसकल ह्रीं सर्वाणिरूपाणि विचित्य धीरः सौः सकलह्रीं नामानिकृत्वाभिवदन् यदारस्ते ।

१७ धातापुरस्ताद्यमुदाजहार ऐं हसकहलह्रीं शक्रः प्रविद्वान् प्रदिशश्चतस्रः क्लीं ह ६, तमेवंविद्वानमृत इह भवति सौः सकलह्रीं नान्यः पन्था अयनाय विद्यते ॥

१८. यज्ञेनयज्ञमयजतदेवाः ऐं हसकहलह्रीं तानि धर्माणि प्रथमान्यासन् क्लीं ह ६, तेहनाक महिमानः सचेते ॥ सौः सकलह्रीं यत्र पूर्वे साध्या संति देवाः ॥

## ॥ श्रीसूक्तं ॥

हिरण्यवर्णां हरिणीं क ५ सुवर्णरजतस्रजां ह ६
चन्द्रां हिरण्मयीं लक्ष्मीं स ४ जातवेदोममावह ॥
लोपाख्यां संपुटी कृत्य पौरुषैश्च जपेद्बुधः ।
श्रीसूक्तैः कामराजाख्यां प्रजपेद्यत्नतो गुरुः ॥

पुरुषसूक्तफलं ॥ प्रथमेनसुतावाप्ति द्वितीया जीवसूर्भवेत् ॥
तृतीयेनचतुर्थेन वन्ध्यादोष विनाशनं ॥
पंचमेनायषष्ठेन पुत्रं दीर्घायुषंलभेत् ।
सप्तमेनतु गर्भस्य स्थिरता ह्यष्टमेनतु ॥
सुखप्रसूति नवमात् गर्भदोषान् विनाशयेत् ।
दशमेन परेणापि पुत्रदोषान् विनाशयेत् ।
द्वादशेन तु कन्यायाः सूतिदोषमपास्य च ॥
पुमपत्यं भवत्येव चतुर्भि स्तत्परैर्ध्रुवम् ॥
सर्वे दोषा विनश्यंति गर्भजामात्र संशयः ॥

## श्रीसूक्तफलम् ॥

प्रथमं संपदां प्राप्तिर्द्वितीयेन पशून् दहेत् ।
तृतीयेन भवेद्धान्यं चतुर्थेन महीं लभेत् ॥
भृत्यान् पंचममन्त्रेण षष्ठेन तु महद्यशः ।
सप्तमाद्राजसन्मा न मष्टमेन धृतिस्थिरा ॥
नवमेन तरंगाप्तिः दशमेन गजाँल्लमेत् ।
एकादशेन वस्त्राणि द्वादशेन सुताँल्लभेत् ॥
त्रयोदशेन रत्नानि चतुर्दश महामनोः
पृथिवीं सस्य संपन्ना श्रियं पंचदशेन तु ।
रुद्र मन्त्रैस्तया कृत्या तत्तत्कर्माणिं साधयेत् ।
श्रीविद्या वृन्दनिवहस्त्वेव संपुटितो यदि ।
पंचाशच्च सहस्राणि दशलक्षमितानि च ।
जायते तत्क्रमं ज्ञात्वा गुरुतः शाश्वतोपिवा ।
विनियुज्यात्प्रयोगेषु तत्तत्कर्मण्यतन्द्रितः ।

## जातवेदस सूक्तमन्त्रः ॥

मरीचिपुत्रः काश्यप ऋषिः । त्रिष्टुप् छन्दः । श्रीजातवेदा अग्नेयदुर्गा देवता ।

१ जातवेदसेसुनवाम । २ सोममरातीयतो । ३ निदहाविवेदः । ४ सनः पर्षदति । ५ दुर्गाणिविश्वा-नावेव । ६ सिन्धुंदुरितान्यग्निः । इति न्यासः ।

ध्यानम्:--

विद्युद्दाम समप्रभां मृगपति स्कधंस्थितां भीषणाम् ।
कन्याभिः करवालखेट विलसद्धस्ताभिरा सेविताम् ।
हस्तैश्चक्रगदासिखेटविशिखा चापं गुणंतर्जनीम् ।
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥

१. जातवेद से...सोमं ह ५ अराती...वेदः ह ६, सनः...नावेव स ४ सिन्धुं.. अग्निः ॥

२. तामग्नि...ज्वलंतींह ५ वैरोचनीं...जुष्टांह ६ दुर्गां...प्रपद्ये स ४ सुतरसि...नमः ।

३. अग्नेत्वं...अस्मान् ह ५ स्वस्तिभिः ह ६ पूश्च ..उर्वी स ४ भवा ..शंभोः ॥

४. विश्वानि...जातवेदः ह ५ सिधुं...पर्षिह ६ अग्नें...गृणानो स ४ अस्माकं...तनूनाम् ॥

५. पृथुना...भुग्रं ह ह अग्नि...सधस्नात् ह ६ सन...विश्वा स ४ क्षाम...अग्निः ॥

## एकाक्षर गणपति मन्त्रः ॥

गणकऋषिः । नियुद्गायत्री छन्दः । श्री विघ्नेश्वरो देवता ।

१ ॐ गणंजयास्वाहा, २ एकदंष्ट्राय हुं फट् । अचलकर्णिने नमः, ४ गजवक्त्राय नमो नमः ५ महोदराय, चण्डायहुंफट् ॥ इति न्यासः ।

अथवा गां, गीं इत्यादि वा न्यासः ।

ध्यानम्:--

रक्ताभः शशिमौलि रंकुशगुणो दन्तवरं धारयन् ।
हस्ताब्जैः द्विरदाननस्त्रिनयनो रक्तांग रागावृतः ॥
बीजापूर बृहत्करोद्र जठरो दानार्द्रगंडस्थलो
विघ्नेशः फणिभूषणो गणपति र्भूयाद्भूवद्भूतये ॥

"ग" २ गं ह ५ गं ह ६ गं स ७ ॥

## महागणपतिमन्त्रः ॥

गणक ऋषिः । नियुद्गायत्री छन्दः । महागणपतिर्देवता । गं बीजं । ह्रीं शक्तिः ॥

ॐ गां, श्रींगीं, ह्रींगूं, क्लींगैं, ग्लौं गौं, गं गः, इति न्यासः ।

ध्यानम्—

बक्राब्जत्रिशिखान् गुणेक्षवधनू रक्तोत्पलं सद्गदाम्
व्रीह्यग्रान्वित बीजपूररदनं कुंभं करैं बिभ्रतम् ।
पद्मोद्यत्करया निजप्रमदया श्लिष्टं जपासन्निभम् ।
सार्धेन्दुं प्रभजे महागणपतिं नेत्रत्रयोद्भासितम् ॥

ॐ श्रीं ह्रीं क्लीं ग्लौं गं ह ५ गणपतये वरवरद ह ६ सर्वजनं मे वशमानय स्वाहा ॥

## क्षिप्रगणपतिमन्त्रः ॥

गणक ऋषिः । विराट् छन्दः । क्षिप्रप्रसादनाय गणपति र्देवता ।

गां, गीं इत्यादि न्यासः ।

सिंदूराभमिभाननं त्रिनयनं हस्तेषु पाशांकुशौ ।
पुष्ट्याश्लिष्टतनुं ध्वजाग्रकटया पद्मोल्लसद्धस्तया ।
तद्योन्याहितपाणि मात्तवसुमत्पात्रो ल्लसत्पुष्करं
बिभ्राणं मधुमत्कपालमनिशं सार्धेन्दुमौलिं भजे ॥

१ गं क्षिप्र प्रसादनाय नमः ।

२ गं ह ५ क्षिप्रप्रसादनाय ह ६ नमः स ४ ॥

## वक्रतुण्डगणपतिमन्त्रः ॥

भार्गव ऋषिः । अनुष्टुप् छन्दः । श्रीवक्रतुंडो देवता ।

१ वं २ क्रं ३ तुं ४ ण्डां ५ यं ६ हुं इति न्यासः ।

ध्यानम्ः—

रम्योद्भिन्नारुणतर मणिव्रात संशोभिकांतिम्
संबिभ्राणं करकिसलयैः पाशमप्यंकुशांगम् ।
साभीतीष्टं त्रिनयनयुतं रत्नमाल्यांकुशाढ्यम्
अंभोजोद्यत्पुटगतममुं संस्मरे वक्रतुण्डम् ॥

ह ५ वक्रतुण्डाय ह ६ हुं स ४ ॥

## लक्ष्मीगणेशमन्त्र: ॥

अन्तर्यामी ऋषि: । नियुद्गायत्री छन्द: । श्रीलक्ष्मीगणेशो देवता ।

श्रां गां, श्रींगीं इत्यादि न्यास:

**हेमाभः पीतवस्त्रः करकमलतलैः संदधच्चक्र शंखौ**
**दंताभीती च नासाधृतकनकघटः पद्म संस्थस्त्रिनेत्रः ।**
**वामांगाविष्ट लक्ष्म्या विधृतकमलया प्रोल्लसद्दक्षदोष्णा**
**श्लिष्टः सौवर्णकांत्या गणप इह महाश्रीकरो वः श्रियोस्तु ॥**

श्रीं गं सौम्याय ह ५ महागणपतये वरवरद ह ६ सर्वजनं मे वशमानय ४ स्वाहा ॥

## हेरंबगणपतिमन्त्र: ॥

गणकऋषि: । गायत्रीछन्द: । श्रीहेरंबोदेवता । गां, गीं इत्यादि न्यास: ।

**मुक्ताविद्यु त्पयोदामृत धुसृणनिभैः पचंभिर्नागवक्त्रैः**
**हेरंबो भावनीयः शशिधरमुकुटो दृप्तसिंहाधिरूढः ।**
**हस्तैः बिभ्रत् त्रिशूलांकुशक जपवटी मुद्गरान्पुंस्कपालं**
**टंकांको मोदकंस्थाब्ददल सदभये दानमर्कांधदीप्तिः ॥**

ॐ ह ५ गूं ह ६ नमः स ४ ॥ ॐ गूं नमः ॥

## शक्तिगणेशमन्त्र: ॥

गणक ऋषि: । नियुद्गायत्री छन्द: । शक्तिगणपतिर्देवता ।

१ ह्रीं २ गं ३ ह्रीं ४ महागणपतयें ५ स्वाहा । ६ सर्वमन्त्र । क्षिप्रगणपति ध्यानं ॥

ह्रीं गं ह्रीं ह ५ महागणपतये ह स्वाहा स ४ ॥

## विरि गणेशमन्त्र:

गणक ऋषि: । गायत्री छन्द: । श्रीविरिविघ्नेश्वरो देवता ।

१ ह्रीं विरिविरि, २ गणपति, ३ वरवरद, ४ सर्वलोकंमे, ५ वशमानय, ६ स्वाहा ॥

क्षिप्रगणपति मन्त्रस्य ध्यानं ।

ह्रीं विरिविरि ह ५ गणपति वरवरद ह ६ सर्वलोकं मे वशमानय स ४ स्वाहा ॥

## शिव पंचाक्षरि ॥

वामदेव ऋषि: । पंक्ति: छन्द: । श्रीपरमेश्वरो देवता ।

ॐ बीज: । नम: शक्ति: शिवायेति कीलकं ।

सर्वज्ञशक्तिधाम्ने । नित्यतृप्त, अनादिबोध, स्वतन्त्र, नित्यमलुप्त, नित्यमनन्त, इति सर्वत्र शक्तिधाम्नेति संयोज्य न्यास: ।

ध्यानम्—

गोक्षीरफेन धवलं रजताद्रिसमप्रभं ।
चारू चंद्रकला राजत् जटामुकुट मंदितम् ॥
पंचवक्तधरं शंभुं प्रतिवक्त्रं त्रिलोचनं ।
शार्दूलचर्मवसनं रत्नाभरण भूषितम् ॥

ॐ नम: शिवाय ॥ २ ह्र ५ ॐ ह ६ नम: स ४ शिवाय ॥

## अघोर मन्त्र: ॥

अघोर ऋषि: । त्रिष्टुप् छन्द: ॥ श्री अघोर रुद्रो देवता ।

ह्रीं बीजं । हुं फट् शक्ति: (ह्रां शक्ति इति केषुचित्ग्रंथेषु ।)

१ ह्रीं स्फुर २ । २ प्रस्फुर २ । ३ घोर घोरतनुरूप । ४ चट २ प्रचट २ । ५ कह २ वम २ । ६ बंध २ घातय २ हुं फट् ॥ इति न्यास: ।

ध्यानम् :—

कालमेघनिभं देवं भीमदंष्ट्रं त्रिलोचनम् ।
भुजंग भूषणं रक्त वसनालेप संयुतम् ॥
परशुं करवालं च बाणां स्त्रिशिखमेव च ।
दधानं दक्षिणैर्हस्तै रूर्ध्वादि क्रमत: परै: ॥
डमरुं खेटकंचापं नृकपालं च पार्वति ।
काम्य कर्मसु रक्ताभ मसितं चाभिचारके ॥
निग्रहे ग्रहभूतादि मुक्त्यै मुक्तानिभं स्मरेत् ॥

ॐ ह्रीं स्फुर २ प्रस्फुर २ घोर घोरतरतनुरूप चट २ प्रचट २ कह २ वम २ बंध २ घातय २ हुं फट् ॥

ॐ ह्रीं स्फुर २ प्रस्फुर २ घोर घोर तनुरूप हृ ५ चट २ प्रचट २ कह २ ह ६ बम २ बंध २ स ४ घातय हुं फट् ॥

## प्रासाद मन्त्रः

वामदेव ऋषिः । पंक्तिः छन्दः । श्रीसदाशिवोदेवता ।

हुं बीजं । औं शक्तिः । ह्रां ह्रीं इत्यादि न्यासः ।

सिन्दूर पुंजक्षोणांगं स्मेर वक्त्रं त्रिलोचनम् ।
मणि मौलिलसच्चन्द्र कलालंकृत मस्तकम् ॥
दक्षिणोर्ध्वकरे टंकं दधानं तदधो करम् ।
बामोर्ध्वकरे हरिणं तदधोमय मादरात् ॥
पीनवृत्त घनोन्तुंग स्तनाग्रे विनिवेश्य च ।
बामांके सन्निवेष्टायाः प्रियाया रक्तपंकजे ॥
नानामरण संदीप्तं दिव्यगंधस्रगंबरम् ॥

ॐ हौं ह्रीं नमः शिवाय ॥

ॐ हौं ह ५ ह्रीं ह ६ नमः स ४ शिवाय ॥

## दशाक्षररुद्र मन्त्रः ॥

ब्रह्मा ऋषिः । विराट् छन्दः । सदाशिवो देवता ।

१ ॐ । २ नमो । ३ भगवते । ४ रुद्राय । ५ ॐ नमो भगवते रुद्राय ।

आकीर्णं दिव्यभोगैरमरदिति सुतैरर्चितम् । शैलकन्या
देहार्धंधारयंतं स्फटिकमणिनिभं व्याघ्रचर्मोत्तरीयं ।
द्वैपी कृत्तिवासं हिमकिरणकला शेखरं नीलकण्ठं ।
हृष्टं व्याप्तं कलाभिर्धृतकपिलजटं भावयेहं महेशम् ॥

ॐ नमो भगवते रुद्राय ।

ॐ ह ५ नमो ह ६ भगवते स ४ रुद्राय ॥

## मृत्युंजय त्र्यक्षरि मन्त्रः ॥

कहोल ऋषिः । नियुद्गायत्री छन्दः । श्रीमृत्युँजयो देवता ।
ॐ बीजं । सः शक्तिः । जूं कीलकं । हां हीं इत्यादि न्यासः ।

शुद्धस्फटिक संकाशं शुभ्र पद्मासन स्थितम् ।
कपर्दिमौलि विलसच्चंद्र खण्ड च्युतामृतैः ।
अभिषिक्त समस्तांग मर्केन्द्वनल लोचनम् ।
दक्षिणोर्ध्वकरे मुद्रां ज्ञानाख्यां तदधः करे ।
दधानं चिंतयेद्देवं मृत्युरोग भयापहम् ।

ॐ जूं सः ॥ २ ॐ ह ५ जूं ह ६ सः स ४ ॥

## श्री दक्षिणामूर्ति मन्त्रः ॥

शुक ऋषिः । गायत्री छन्दः । श्रीदक्षिणामूर्तिर्देवता । आं बीजं । ह्रीं शक्तिः । ॐ ह्रीं दक्षिणामूर्तये ह्रां । ॐ ह्रीं तुभ्यं ह्रीं । ॐ ह्रीं वटमूलनिवासिने ह्रूं । ॐ ह्रीं ध्यानैकनिरतांगाय ह्रैं । ॐ ह्रीं नमोरुद्राय ह्रौं । ॐ ह्रीं शंभवे ह्रः । इति न्यासः ।

ध्यानम्:--

वटविटपि समीपे भूमिभागेनिषण्णं,
सकलमुनिजनानां ज्ञानदातार मारात् ।
त्रिभुवनगुरुमीशं दक्षिणामूर्तिरूपं
जननमरणदुःखं छेददक्षं नमामि ॥

ॐ ह्रीं दक्षिणामूर्तये तुभ्यं वटमूलनिवासिने ध्यानैक निरतांगाय नमो रुद्राय शंभवे ह्रीं ॐ ॥

ॐ ह्रीं दक्षिणामूर्तये तुभ्यं ह ५ वटमूलनिवासिने ह ६ ध्यानैक निरतांगाय स ४ नमो रुद्राय शंभवे ह्रीं ॐ ॥

## पाशुपतास्त्रमन्त्रः

वामदेवऋषिः । पंक्तिः छन्दः । श्रीपशुपतिर्देवता ।
१ ॐ २ क्लीं ३ प ४ शु ५ हुं ६ फट् । इति प्रत्यक्षरं हुं फट् इति संयोज्य न्यासः ।

पंचवक्त्रं दशभुजं प्रतिवक्त्रं त्रिलोचनं ।
अग्निज्वालानिभ श्मश्रु संयुतं भीमदंष्ट्रकं ॥
खड्गं बाणानक्षसूत्रं शक्ति परशुमेव च ।
दधानं दक्षिणैर्हस्तैरूर्ध्वादि क्रमतो गुरुं ॥

खेटचापौ कुंडिकां च त्रिशूलं ब्रह्मदण्डयुक् ।
वामहस्तैश्च बिभ्राणं मध्याह्नार्क समप्रभं ॥
नानाभरण संदीप्तं पन्नगेन्द्रैरलंकृतम् ।
स्फटिकौघनिभं शांतं सर्वरक्षाकरं स्मरेत् ।

ॐ श्लीं पशु हुं फट् ।

ॐ श्लीं ह ५ पशु ६ हुं स ४ फट् ॥

## शरभ मन्त्रः ॥

ब्रह्मा ऋषिः । पंक्तिः छन्दः । श्रीशरभशाल्वादय पक्षिराजो देवता ॥

१ ॐ नमो भगवते । २ शरभशाल्वाय । ३ पक्षिराजाय । ४ मम शत्रून् नाशय २ । ५ हुं फट् ।
६ स्वाहा ॥ इति न्यासः

अष्टापदं पक्षति मूलराजद्वज्रांकुरं हाटकपक्षकूटं
हेमांगमंगीकृत पद्मरागं चञ्चू पुटोल्लासिमुखारविन्दम् ।
सूर्यानलेन्दुद्युतिराजमान नेत्रत्रयोल्लासित पद्मरागम् ।
नीलाश्मदीप्ताखिलरोमसंघं शीतांशुखण्डोज्ज्वलितोत्तमांगम् ॥

विप्राहि द्वन्द्वबद्धोत्तम कपिलजटा भार संचारिगंगा
संगाक्रान्तोत्तमांगात् क्रमगलित पृषत्संघहाराभिरामम् ।
अग्रोद्यन्नागबंध क्रमघटितसठाग्रन्थि पंचांगुलोद्यत्
पुच्छस्थग्रन्थि बाहूद्भवं भुजयुगलोल्लासि मालाभिरामम् ॥

कक्ष्यासंबद्ध वैश्याहिमयुगल ललच्चन्द्र तीव्रांशु लीला
घंटाटोपाकुलाशा दशक्रपतिकुलं वैरिसंघैककालं ।
पाशाकारां सलोलदवृषतलकुलभवाशी विषाधीशभोग
स्फूर्ज त्फूत्कार घोरं खुरपुटनिकर क्षुण्ण सर्वं सहन्तम् ॥
भक्षयंतं पक्षिरूपं भक्तानां वैरि संचयम् ।
शरभं शाल्वरूं च ध्यायेदेकाग्र मानसः ॥

ॐ नमो भगवते शरभशाल्वाय पक्षिराजाय मम शत्रून् नाशय २ हुं फट् स्वाहा ॥

ॐ नमो भगवते शरभशाल्वाय ह ५ पक्षिराजाय ह ६ मम शत्रून् नाशयं २ स हुं फट् स्वाहा ॥

## नारायणाष्टाक्षरी ॥

साध्य नारायण ऋषिः । गायत्री छन्दः । श्रीपरमात्मा देवता ।

प्रथमं मूलेन व्यापकं कुर्यात् । ततः । क्रुद्धोल्काय स्वाहा ।

महोल्काय स्वाहा २, वीरोल्काय स्वाहा ३, द्युल्काय स्वाहा ४, सहस्रोल्काय स्वाहा ५, इति नेत्रत्रयं विना न्यासः ।

ध्यानम्ः--

हस्तैश्चक्रदरौ गदासरसिजे बिभ्राणमर्कोल्लसत्
कान्तिं श्री धरणी विभूषिततलस त्पार्श्वं किरीटान्वितम् ।
श्रीवत्सांक सकौस्तुभोरु पदकं केयूरहारोज्ज्वलम्
राजत्कुंडलमंडितं हृदि भजे पीतांबरं शार्ङ्गिणम् ॥

ॐ नमो नारायणाय ॥

ॐ हसकलह्रीं नमो हसकहलह्रीं नारायणाय सकलह्रीं ॥

## ॥ श्रीवासुदेवमन्त्रः ॥

प्रजापति ऋषिः । गायत्री छन्दः । श्री वासुदेवो देवता ॥

मूलेन व्यापकं । १ ॐ २ नमो ३ भगवते ४ वासुदेवाय । ५ ॐ नमो भगवते वासुदेवाय । इति नेत्रत्रयं विना न्यासः ।

ध्यानम्ः--

मध्ये सुग्धांबुधि द्वीपे दिव्ययोषा निषेविते ।
तत्र संचिन्त्य विपिनमखिलार्तु निषेवितम् ॥
तन्मध्ये कल्पवृक्षं च दिव्यमद्भुत दर्शनम् ।
तस्याधस्त्राद्रत्नमंचं कमलं विमलप्रभम् ।
शरत्पूर्णेन्दु विलसत् प्रभापटल राजितम् ।
तत्र संचिंतयेद्देवं वसुदेवं स्मिताननम् ।
कुंदेन्द्वाभं गदाचक्र पद्म शंख लसत्करम् ।
चन्द्रायुतलसत्कान्त्या मोहयन्तं जगत्त्रयम् ।
केयूरांगद संराजद्दोर्दण्डं रत्न भूषणम् ।
श्रीवत्सांक लसद्रत्नमकुटं कौस्तुभान्वितम् ।

अरविन्ददलाताम्र सरसायुत लोचनम् ।
कुण्डलप्रोल्लसद्गंड मण्डलं पीतवाससम् ।
ग्रैवेयहार संशोभि कम्बुकण्ठं सुकंकणम् ।
विशालवक्षः संराजत्प्रफुल्ल वनमालकम् ।
सनकादिमुनीन्द्रैश्च तत्वनिर्णयकांक्षया ।
निषेवितं दित्यविति जात गंधर्व संचयैः ।
सिद्धविद्याधराद्यैश्च सेवितं च महोरगैः ॥
ॐ नमो भगवते वासुदेवाय ॥

ॐ हसकलह्रीं नमो हसकहलह्रीं भगवते सकलह्रीं वासुदेवाय ॥

## ॥ श्रीवराहमन्त्रः ॥

भार्गव ऋषिः । अनुष्टुप् छन्दः । श्रीवराहो देवता । मूलेन व्यापकं ।

१ एकशृंगाय २ व्योमोल्काय ३ तेजोधिपतये ४ विश्वरूपाय, ५ महादंष्ट्राय इति करतल नेत्रत्रयं विना न्यासः ।

ध्यानम्ः—

जानोः पदावधि सुवर्ण निभंच, नाभे
राजानु चन्द्रधवलं च गलद्धृतन्तं ।
वह्निप्रभं शशिनिभं शिरसो गलन्तं,
मौलिस्थलाद्वियत एन्दुनिभं च कान्तम् ॥

संबिभ्रतं करतलैररि शंख खड्गन्,
खेटं गदां तदनु शक्तिवराऽभयानि ।
सर्वंसहा धरणशोभि सदेकदंष्ट्र
माद्यं वराहमनिशं प्रभजे स्वचित्ते ॥

मनुः—ॐ नमो भगवते वराहरूपाय भूर्भुवःस्वर्पतये भूपतिं त्व मे देहि ददापय स्वाहा ।

ॐ नमो भगवते हसकलह्रीं वराहरूपाय हसकहलह्रीं भूर्भुवःस्वर्पतये सकलह्रीं भूपतित्वं मेदेहि ददापय स्वाहा ॥

## श्रीकर महाविष्णु मन्त्रः ॥

वामदेव ऋषिः । पंक्तिः छन्दः । श्रीकराय देवता ।

ॐ हूं भीषय २ हुं हृदयं। त्तिं त्रासय २ हुं शिरसि। ष्ठं मर्दय २ हुं शिखा। श्रीं प्रध्वंसय २ हुं कवचं। कं रक्षय २ हुं अस्त्रांय ततः रं नेत्रयोः। स्वां उदरे। हां पृष्टे। इति न्यासः।

शंखं चक्रं गदां पद्मं हस्ताग्रेषु विचिंतयेत्॥

ध्यानम्ः—

**कांचनादि समप्रभं कमलासनं कमलेक्षणं।**
**शंख चक्रं गदा सरोजधरं मनोहरदर्शनं।**
**कौस्तुभाकितवक्षसं मुकुटागदादि विभूषणं**
**तार्क्ष्यवाहनमादरात् हृदि भावयामि जगत्पतिम्॥**

उत्तिष्ठ श्रीकर स्वाहा॥

उत्तिष्ठ हसकलह्रीं श्रीकर हसकेहलह्रीं स्वाहा सकलह्रीं॥

## श्रीभोगवामन| महाविष्णुमन्त्रः॥

कपिल ऋषिः। गायत्री छन्दः। भोगवामनोदेवता।

१ ॐ नमो २ भगवते ३ विष्णवे ५ महाबलाय ६ स्वाहा।

संख्या क्रमेण न्यासः।

ध्यानम्ः—

**नीलवर्णश्चतुर्बाहुः शंखचक्र गदाब्ज धृक्।**
**सर्वान्भोगान् ददात्येष भक्तानां भोगवामनः॥**

ॐ नमो भगवते विष्णवे सुरपतये महाबलाय स्वाहा।

ॐ नमो भगवते हसकलह्रीं विष्णवे हसकहलह्रीं सुरपतय सकलह्रीं महाबलाय स्वाहा॥

## नृसिंहमन्त्रः॥

ब्रह्मा ऋषिः। अनुष्टुप् छन्दः। श्रीनृसिंहो देवता।

१ ॐ उग्रं वीरं, २ महाविष्णुं, ३ ज्वलंतं सर्वतोमुखम्। ४ नृसिंहं भीषणं, ५ भद्रं मृत्युं मृत्युं, ६ नमाम्यहम्॥

संख्याक्रमेण न्यासः।

ध्यानम्—

नृसिंहं भजे जानुविन्यस्त बाहुं,
त्रिनेत्रं भुज प्रोल्लसच्चक्र शंखं ।
कृशानूपमज्योतिषा ग्रस्तदैन्यं,
शिरः शोभिदंष्ट्रसुदीप्तजिह्व ॥

उग्रं वीरं महाविष्णुं ज्वलंतं विश्वतो मुखम् ।

नृसिंहं भीषणं भद्रं मृत्यु मृत्यु नमाम्यहम् ॥

उग्रं वीरं महाविष्णुं हसकलह्रीं ज्वलं तं सर्वतोमुखं हसकहलह्रीं नृसिंहं भीषणं भद्रं सकलह्रीं मृत्यु-मृत्युं नमाम्यहम् ॥

## श्रीगोपालमन्त्रः ॥

नारद ऋषिः । विराट् छन्दः । श्रीकृष्णोदेवता । क्लीं बीजं । स्वाहा शक्तिः । श्रीकृष्णाय नमः इति व्यापकं ।

आचक्राय स्वाहा । विचक्राय स्वाहा । सुचक्राय स्वाहा । त्रैलोक्य रक्षणाय चक्राय स्वाहा । असुरांत चक्राय स्वाहा । इति नेत्रत्रयं विना न्यासः ।

ध्यानम्ः—

दरारिचाप सद्बाण गुणां शुककरांबुजं ।
वेणुमादाय हस्ताभ्यां वादयन्तं मुदान्वितं ॥
रवि मण्डलगं कृष्णं ध्यायेदिष्ट फलाप्तये ॥

ॐ क्लीं कृष्णाय गोविन्दाय गोपीजन वल्लभाय स्वाहा ॥

ॐ क्लीं कृष्णाय हसकलह्रीं गोविन्दाय हसकहह्रीं गोपीजनवल्लभाय सकलह्रीं स्वाहा ॥

## श्रीकृष्णमन्त्रः ॥

नारद ऋषिः । गायत्री छन्दः । श्रीकृष्णो दैवता ।

क्लीं बीजं । नमः शक्तिः । कृष्णाय कीलकं ।

पूर्णज्ञानात्मने, पूर्णैश्वर्यात्मने, पूर्णप्रभात्मने, पूर्णानन्दात्मने, पूर्णतेजात्मने । इति नेत्रत्रयं विना न्यासः ।

ध्यानम्:—

ध्यायेद्धरिन्मणिनिभं, जगदेवन्द्यं
सौन्दर्यसार परिशंख दराभयानि ।
दोर्भिर्दधानमजित सरसं च
सत्या समेतमखिल प्रदर्मिदिरेक्षण ॥

ॐ क्लीं कृष्णायनमः ।

ॐ क्लीं हसकलह्रीं कृष्णाय हसकलह्रीं नमः सकलह्रीं ॥

## सौर अष्टाक्षरी ॥

देव भाग ऋषिः । गायत्री छन्दः । श्रीसूर्यो देवता ।

सत्यतेजो ज्वालामणि हुं फट् स्वाहा । ब्रह्मतेजो । विष्णुतेजो । रुद्रतेजो । अग्नितेजो । सर्वतेजो । इति प्रत्येकं ज्वालामणि हुं फट् स्वाहा इति संयोज्य न्यासः ।

ध्यानम्:--

रक्ताब्ज युग्माभयदानहस्तं,
केयूर हारांगद कुंडलाढयम् ।
माणिक्य मौलिं दिननाथमीडे
बन्धूककांति विलसत्त्रि नेत्रम् ॥

घृणिः सूर्यादित्य ॐ ॥

घृणिः ह ५ सूर्य ६ आदित्य स ४ ॐ ॥

## ॥ षडक्षरी ॥

ब्रह्मा ऋषिः । गायत्रीछन्दः । श्रीसवितृदेवता ।

सूक्ष्मरूपाय स्वाहा । सूक्ष्मतेजसे । सूक्ष्माकाराय । सूक्ष्मबालाय । सूक्ष्मकायाय । सर्वत्र स्वाह । योजयेत् । मूलेन अस्त्राय फट् ।

ध्यानम्:--

रक्तपद्म द्वयं हस्तैः बिभ्राणं वरदाभये ।
बन्धूकाभं त्रिनेत्रं च रविं ध्यायेत्सुभूषितम् ॥

खखोल्काय स्वाहा ।

ख ह ५ खो ह ६ ल्काय स ४ स्वाहा ॥

## चतुरक्षरमन्त्रः

ब्रह्माऋषिः । गायत्री छन्दः । श्री सूर्यरूप भुवनेश्वरी देवता ।

१ ॐ २ ह्रीं ३ ॐ ४ ह्रीं ५ ॐ ६ ह्रीं इति न्यासः ।

ध्यानम्ः—

भास्वद्रत्न सहस्रमौलि विलसच्चन्द्रार्ध मुद्योतयत् ।
हस्ताब्जैर्दधदंकुशं गुणवराभीतिं सुतुगस्तनम् ।
पायाद्गालित कांचनांबुजजा विद्युज्ज्वलत्कांतिभिः
विश्वं द्योतयदार्क महतशिशिरं विश्वेशिकाया वपुः ॥

ॐ ह्रीं हंसः ।

ॐ ह ५ ह्रीं ह ६ हं स ४ सः ॥

## त्र्यक्षर सूर्यमन्त्रः ॥

अज ऋषिः । गायत्री छन्दः । श्री सूर्योदेवता । गुह्यादि पादपर्यन्तं ह्रां नमः । कण्ठादि गुह्यांतं ह्रीं नमः । मूर्धादि कंठांतं सः नमः इति विन्यस्य । ह्रां ह्रीं इत्यादि न्यासः ।

अरूण कमलसंस्थं त्रीक्षणं भूरि भूषं ।
ह्यरुणकमलयुग्म मीष्टदाभीतिहस्तम् ।
अरुणतरशरीरं भावयामो दिनेश,
ह्यरुणकर सुसेव्य सर्वदेवौघ वन्द्यम् ॥

ह्रां ह्रीं सः ॥

ह्रां ह ५ ह्रीं ह ६ सः स ४ ॥

## षोडशार्ण भास्कर मन्त्रः ॥

ब्रह्मा ऋषिः । जगती छन्दः । श्रीभास्करो देवता ।

१ ॐ ऐं । २ क्लां क्लीं क्लूं । ३ ह्रा ह्रीं ह्रूं । ४ सः श्री भास्कराय । ६ स्वाहा इति न्यासः ।

माणिक्याढ्य रथारूढं मणिकुण्डल धारिणम् ।
हस्तैश्चाभीष्टदं शंख चक्रपद्मधरं विभुम् ॥
किरीटिनं मेखलिनं कवचिं सुशरीरिणम् ।
नानारत्न समोपेतं ऋषिसंख्याश्च शोभितम् ॥
नक्षत्र ग्रह राश्याद्यैः सेवितं मुनिमण्डलैः ।
सावित्र्या च गायत्र्या सरस्वत्या च शोभितम् ।
नानादेव समायुक्तं भास्करं चिन्तयेद्बुधः ॥

ॐ ऐं क्लां क्लीं क्लूं ह्रां ह्रीं ह्रूं सः भास्कराय स्वाहा ॥

ॐ ऐं ह ५ क्लां क्लीं क्लूं ह ६ ह्रां ह्रीं ह्रूं सः स ४ श्री भास्कराय स्वाहा ॥

## द्वादशाक्षरमन्त्रः

देवभाग ऋषिः । विराट् छन्दः । श्री आदित्यो देवता ।

ह्रां ह्रीं इत्यादि न्यासः । षोडशवर्णवत् ध्यानं ।

ॐ आं ह्रीं श्रीं घृणि सूरिय आदित्य ॐ ॥

ॐ आं ह ५ ह्रीं श्रीं घृणिः ह ६ सूरिय स ४ आदित्य ॐ ॥

## षडक्षर आदित्य मन्त्रः ॥

ब्रह्मा ऋषिः । गायत्री छन्दः । श्री आदित्यो देवता ॥

१ ॐ २ श्रीं ३ ह्रीं ४ क्लीं ५ ग्लौं ६ इति न्यासः । षोडशवर्ण ध्यानं ॥

ॐ श्रीं ह्रीं क्लीं ग्लौं ह्रां ।

ॐ श्रीं ह ५ ह्रीं क्लीं ह ६ ग्लौं स ४ ह्रां ॥

## आत्माष्टाक्षर मन्त्रः ॥

ऋषिः छन्दस न्यासादिकं प्रागेव प्रपंचयागमातृकाविधानेभिहितं ॥

मनुः ॐ ह्रीं हंसः सोहं स्वाहा ॥

ॐ ह्रीं ह ५ हंसः ह ६ सोहं स ४ स्वाहा ॥

## श्रीबालामन्त्रः (त्र्यक्षरी)

श्री दक्षिणामूर्ति ऋषिः । पंक्तिः छन्दः । श्रीबालात्रिपुरसुन्दरी देवता ।

ऐं बीजं । सौः शक्तिः । क्लीं कीलकं । १ ऐं २ क्लीं ३ सौः ४ ऐं ५ क्लीं ६ सौः इति न्यासः ।

भ्रमद्भ्रामर नीलाभ धमिल्लामल पुष्पिकाम् ।
ब्रह्मरंध्रं स्फुरद्भिन्न मुक्तालेखाविराजिताम् ॥
मुक्तालेखा रत्नलग्न तिलकांचित भालिकाम् ।
विशुद्धमुक्ता बिन्द्वाढ्य चन्द्ररेखा किरीटिनीम् ॥

भ्रमद्भ्रमर नीलाभ नयनत्रयराजिताम् ।
सूर्य भास्वन्महारत्न कुण्डलालंकृता पराम् ।
शुक्राकार स्फुरन्मुक्ताहार भूषण भूषिताम् ।
कंकणादि लसद्भूष मणिबन्ध लसत्प्रभाम् ।

प्रबाल लतिकाकार मणिपल्लव शोभिताम् ।
वज्रवैडूर्यमुक्तालि मेखलां विमलप्रभाम् ।
रक्तोत्पल दलाकार पादपल्लव शोभिताम् ।
नक्षत्रमाला संकाश मुक्ता मंजीर मण्डिताम् ।

वामेन पाणिनैकेन पुस्तकं चापरेण तु ।
अभयं च प्रयच्छंतीं साधकाय वरानने ।
अक्षमालां च वरदं दक्षपाणिद्वयेनतु ।
दधतीं चिंतयेद्देवीं वश्य सौभाग्य वाक् प्रदाम् ।
क्षीर कुंदेन्दु धवलां प्रसन्नां संस्मरेत्प्रिये ॥

ऐं क्लीं सौः

ऐं ह ५ क्लीं ह ः सौः स ७ ॥

## संपत्प्रदा भैरवीमन्त्रः

यथा श्री त्रिपुरा बाला तथा त्रिपुरभैरवी ।

संपत्प्रदा नाम तस्या शृणु निर्मलमानसे ॥

ऋषि न्यासः त्रिपुरभैरवीवत् ।

ध्यानम्:--

उद्यद्भानु सहस्रकांतिमरुण क्षौमां शिरोमालिकाम्
रक्तालिप्त पयोधरीं जपवटीं विद्यामभीतिंवरम् ।
हस्ताब्जैर्दधतीं त्रिनेत्रविलस द्वक्त्रारविंदं श्रियम्
देवीं बद्धहिमांशुखण्ड मुकुटां बन्दे सुमंदस्मिताम् ॥

ह्सैं हस्क्लरीं ह्सौः ॥

ह्सैं ह ५ हस्ल्रीं ह ६ ह्सौः स ४ ॥

## त्रिपुर भैरवी मन्त्रः ॥

श्रीदक्षिणामूर्ति ऋषिः । पंक्तिः छन्दः । श्री त्रिपुर भैरवी देवता ।

वाग्भवकूटेति बीजं । शक्तिकूटेति शक्तिः । कामराजकूटेति कीलकं ॥

मूलत्रयकूटेन द्विरावृत्या न्यासः ।

हृदयस्थारुणाम्भोज कर्णिका मध्य संस्थिताम् ।
जपाकुसुमसंकाशा मरुणांबर भूषणाम् ॥
स्मित धौतमहामोहां त्रिनेत्रां चन्द्रशेखराम् ।
विश्व सौंदर्य सर्वस्व विश्वसागररूपिणीम् ॥

आनन्दमधुरां देवीं मदघूर्णितलोचनाम् ।
ब्रह्माब्ज नेत्र रुद्रेश शिवारक्ष्यैर्मुण्डसंज्ञकैः ॥
मुण्डितांगीं महादेवीं मुक्ताजपवटीधराम् ।
पुस्त कालकृतकरां वरदाभयधारिणीम् ॥

रक्त ांगरागसुभगां ध्यायेत्रिपुर भैरवीम् ॥

हसकलरैं हसकलरीं हसौः

हसकलरैं ह ५ हसकलरीं ह ६ हसौः स ४ ॥

## श्री चैतन्य भैरवी मन्त्रः ॥

ऋष्यादि न्यासांतं पूर्ववत् ।

ध्यानम्:--

उद्यद्भानु सहस्राभां नानालंकार भूषिताम् ।
मुकुटोर्ध्वलसज्चन्द्ररेखां रक्तांबरांचिताम् ॥
पाशांकुशधरां नित्यं वामहस्त कपालिनीम् ।
वरदाभयहस्ताढ्यां पीनोन्नतघनस्तनीम् ॥
एवं ध्यात्वा यजेद्देवीं पूर्वसिंहासनस्थिताम् ॥

स्हैं सकलह्रीं स्हौः ।

स्हैं ह ५ सकलह्रीं ह ६ स्हौः स ४ ॥

## कामेश्वरी भैरवीमन्त्रः ॥

ऋष्यादि न्यासांतं पूर्ववत् ॥

ध्यानम्:—

उद्यत्सूर्य सहस्राभां चन्द्रचूडां त्रिलोचनाम् ।
नानालंकार सुभगां सर्ववैरि निकृन्तनीम् ॥
स्रवद्रुधिर मुंडालि कलितां रक्तवाससम् ।
त्रिशूलं डमरूं खड्गं तथा खेटकमेव च ॥
पिनाकं च शरान् देवि पाशांकुशयुगं क्रमात् ।
पुस्तकं चाक्षमालां च शर्वसिंहासन स्थिताम् ॥

स्हैं सकलह्रीं नित्यक्लिन्ने मदद्रवे स्हौः ।

स्हैं ह ५ सकलह्रीं ह ६ नित्यक्लिन्ने मदद्रवे स्हौः स ४ ॥

## नित्याभैरवी मन्त्रः ॥ कामेश्वरी भैरवीवत् ॥

ऋष्यादि न्यासांतं पूर्ववत् ।

ह्स्रण्फ्रें हसकलरीं ह्स्रौः ।

ह्स्रण्फ्रें ह ५ हसकलरीं ह ६ ह्स्रौः स ४ ॥

कौलेश भैरवीमन्त्रः ॥ संपत्प्रदाभैरवी सकाराद्या चेत् ।

सकलसिद्धिदा भैरवीमन्त्रः ॥ संपत्प्रदाभैरवी आद्यंते रेफं विना ॥

एतासां विद्यानां ऋष्यादिकं पूर्ववत् ॥

इमे सकलपूर्वा भुवनेश्वरी भैरवी भेदाः ॥

## भुवनेश्वरी भैरवी ॥

ऋष्यादि न्यासांतं पूर्ववत् । ध्यायेत् देवीं चतुर्भुजां ॥

जपाकुसुम संकाशां दाडिमी कुसुम प्रभाम् ।
चन्द्ररेखा जटाजूटां त्रिनेत्रां रक्तवाससम् ॥
नानालंकार सुभगां पीतोन्नत घनस्तनीम् ।
प्रेतासन समासीनां मुण्डमालाविभूषिताम् ॥
पाशांकुशवराभीती दधानां च शिवां प्रिये ॥

ह्सैं हसकलह्रीं ह्सौः ।

ह्सैं ह ५ हसकलह्रीं ह ६ ह्सौः स ४ ॥

## अघोर भैरवीमन्त्रः ॥

ऋष्यादि सर्वं त्रिपुरभैरवीवत् ॥

अघोरे ऐं घोरे ह्रीं सर्वतः शर्व सर्वेभ्यो घोर घोरतरेभ्यः श्रीं नमस्तेऽस्तु रुद्ररूपेभ्यः क्लीं सौः ॥

## महाभैरवीमन्त्रः ॥

ऋषिः पूर्ववत् । षट्दीर्घ मध्यकूटेन न्यासः । हसकलह्रां इत्यादि ॥

ध्यानम्ः—

आताम्रार्क सहस्राभां लसच्चन्द्र जटास्फुरत् ।
किरीटरत्नविलसच्चित्र चित्रित मौक्तिकाम् ॥
स्फुरद्रुचिर पंकाढ्य मुण्डमाला विराजिताम् ।
नयनत्रय शोभाढ्यां पूर्णेन्दुवदनान्विताम् ॥
मुक्ताहार लताराज त्पीनोन्नत घटस्तनीम् ।
रक्तांबर परीधानां यौवनोन्मत्त रूपिणीम् ।
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम् ॥
वरदानरतां नित्यं महाप्रेतासनस्थिताम् ॥

ह्सैं हसकलह्रीं ह्सौः ।

ह्सैं ह ५ हसकलह्रीं ह ६ ह्सौः स ४ ॥

## ललिता भैरवीमन्त्रः ॥

ऋषि न्यासं पूर्ववत् । क्लां क्लीं इत्यादि न्यासः ।

ध्यानम्ः—

उद्यत्सूर्य सहस्राभां माणिक्य मुकुटोज्ज्वलाम् ।
रत्नकुंडल मुक्तालि पदकांगद भूषणाम् ॥
रत्नमंजीर सुभगां रक्तवस्त्रानुलेपनाम् ।
पाशांकुशौ पुस्तकं च दधती मक्षमालिकाम् ॥
बाल्यलीलापरां देवीं कुमारीरूप धारिणीम् ।
सर्वांग सुन्दरीं ध्यायेत्सर्वसंपत्तिहेतवे ॥

ह्रीं क्लीं ह्स्रौं ।

ह्रीं ह ५ क्लीं ह ६ ह्स्रौः स ४ ॥

## कामेशी भैरवी मन्त्रः । (कामराज सुन्दरी)

कामदेव ऋषिः । गायत्री छन्दः । कामेश्वरी देवता । क्लां क्लीं इत्यादि न्यासः ।

ध्यानम्—

नानालंकार सुभगां मोहयंतीं जगत्रयम् ।
जपाकुसुमसंकाशां धनुर्बाणधरां स्मरेत् ॥

"क्लीं"

## रक्तनेत्र भैरवी मन्त्रः ।

ऋष्यादि बालामन्त्रवत् । सां सीं इत्यादि न्यासः ।

उद्यत्सूर्यसहस्राभां पदकांगद भूषणाम् ।
रत्नमंजीरसुभगां रक्तवस्त्रानुलेपनाम् ॥
पाशांकुशौ पुस्तकं च दधानां चाक्षमालिकाम् ।
उन्मत्त यौवन प्रौढां पीनोन्नतघनस्तनीम् ॥
नितंबिनीं क्षाममध्यां प्रांतरक्तसुलोचनाम् ॥

सैं सकलरीं सौः ।

## नित्याभैरवी मन्त्रः ।

हरलकसहैं हरलकसहीं हरलकसहौं ॥

ध्यानम्ः--

पंचमुण्ड समासीनां मुण्डमाला विभूषिताम् ।
आताम्रार्कायुताभासां रत्नभूषित भूषणाम् ॥
पाशांकुशवरभयान् दधतीं भावयेच्छिवाम् ॥

ऋष्यादि पूर्ववत् । मूलेन द्विरावृत्या न्यासः ।

## षट्कूटाभैरवी मन्त्रः ॥

ऋष्यादी पूर्ववत् । मूलत्रिखण्डैः द्विरावृतया न्यासः ।

ध्यानम्ः----

बालसूर्यप्रभां देवीं जपाकुसुम सन्निभाम् ॥
मुण्डमालावलीरम्यां बालसूर्यसमांकुलाम् ॥
सुवर्णकलशाकार पीनोन्नतघनस्तनीम् ।
पाशांकुशौ पुस्तकं च तथा च जप मालिकाम् ॥
दधतीं भैरवीं ध्यायेत् प्रेतसिंहासनस्थिताम् ॥

हसकलरडैं हसकलरडीं हसकलरडौः ॥

## मृतसंजीविनी मन्त्रः ॥

शुक ऋषिः । गायत्रीछन्दः । मृतसंजीविनी देवी देवता ।

ह्रीं बीज । स्वाहा शक्तिः । हसः कीलक । न्यास मूलेन ।

विनियोगः समाख्यात स्त्रिचतु श्चैकक्कं पुनः ।
षट् चतु द्विककेनैव षडंगानि समाचरेत् ॥

१ ह्रीं हंसः, २ संजीविनि, ३ जूं, ४ जीवंप्राणग्रन्थिं, ५ कुरु स्वाहा ।

ह्रीं हंसः संजीविनि जूं हसः कुरु कुरु कुरु सौः सौः स्वाहा ॥

## मृत्युंजयपरा भैरवी मन्त्रः

शिव ऋषिः । गायत्री छन्दः भैरवी देवता । ह्सैं बीजं । ह्सौः शक्तिः ।

ह्सीं कीलकं । नव शक्त्याऽष्ट वर्णैस्तु षडगानि विन्यसेत् ॥

ध्यात्वा चावाहयेद्देवीं कदंबवन मध्यगाम् ।
पुस्तकं वामहस्तेन दक्षिणेनाक्षमालिकाम् ।
बिभ्रतीं कुंदधवलां कुमारीं चिन्तयेत्परम् ।

वद वद वाग्वादिनि ह्सैं, क्लिन्ने क्लेदिनि महाक्षोभं कुरु ह्स्रीं, ॐ मोक्षं कुरु २ ह्सौः ।

## कमलेश्वरी भैरवी मन्त्रः ।

ऋष्यादि सर्वं भुवनेश्वरी भैरवी मन्त्रवत् ॥

स्हैं सहकलह्रीं स्ह्रौं ॥

## वज्रप्रस्तारिणी भैरवी मन्त्रः ॥

ब्रह्मा ऋषिः । विराट् छन्दः । वज्रेशी देवता । क्रों बीजं । ऐं शक्तिः तार्तीयं कीलकं । न्यासं । आद्यंत बीजं संत्यज्य द्विकं चौकक रूपकम् ।

द्विवांद्विकं द्विकं चौत्र षडंगानि प्रकल्पयेत् ॥

ध्यानम्ः--

ध्यात्वा चावाहयेद्देवीं कदंबवन मध्यगाम् ।
रक्तां चन्द्रकलाचारु मुकुटां वरभूषणाम् ॥
महातारुण्य गर्वाढ्य लोचनत्रय शोभिताम् ।
शोणिताब्धितरत्प्रोत महायन्त्रोपरिस्थिताम् ।
दाडिमं सायकांश्चैव पाशं चैव सृणि तथा ।
चापं कपालं दधतीं शोणमाल्यानुलेपनाम् ।
स्मरेद्रक्ततरां देवीमुपचारैः समर्चयेत् ॥

ह्रीं, क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ॥

## सिद्धकोलेश भैरवीमन्त्र:

ऋष्यादि बालामन्त्रवत् ।

ध्यानम्:—

आताम्रार्क सहस्राभां त्रिनेत्रां चन्द्रसन्मुखीम् ।
चन्द्रखण्डस्फुरद्रत्न मुकुटां क्षाममध्यमाम् ॥
नितंबिनीं स्फुरद्रत्न वसनां रत्नभूषणाम् ।
उन्मत्त यौवनप्रौढां पीनोन्नत घनस्तनीम् ॥
असृक् पंकाढ्य मुंडस्रक् मुँडितांगीं सुभूषणाम् ।
पुस्तकं चाभयं वामे दक्षिणेचाक्ष मालिकाम् ॥
वरदं दधतीं ध्यायेत्प्रेतसिंहासनस्थिताम् ॥

ह्स्रौं ह्स्रीं ह्स्रौः ।

## डामर भैरवी मन्त्रः ॥

ऋष्यादि सर्वं पूर्ववत् ।

ध्यानम्—

बन्धूककुसुमाभासां पंचमुँडाधिवासिनीम् ।
स्फुरच्चन्द्र कलारत्न मुकुटां मुण्डमालिनीम् ॥
त्रिनेत्रां रक्तवसनां पीनोन्नतघनस्तनीम् ।
पुस्तकं चाक्षमालां च वरदं चाभयं क्रमात् ॥
दधतीं संस्मरेन्नित्यं उत्तराम्नाय मानिताम् ॥

ह्सैं ह्सक्लीं ह्सौः

## उग्रतारा, एकजटा, तारा, नीलसरस्वती मन्त्रः ।

सर्वेपि, अक्षोभ्याय ऋषिः । गायत्रीछन्दः । देवता ।

ॐ अखिलवाग्रूपिण्यै । ॐ ह्रीं अखण्डवाग्रूपिण्यै । ॐ ह्रूं ब्रह्मवाग्रूपिण्यै । ॐ ह्रैं विष्णुवाग्रूपिण्यै । ॐ ह्रौं रुद्रवाग्रूपिण्यै । ॐ ह्रः सर्ववाग्रूपिण्यै । इति न्यासः ।

ध्यानम्ः—

विश्व व्यापक वारिमध्यविलसत् श्वेतांबुजन्मस्थिताम् ।
कत्रीखड्गकपाल नीलनलिनै राजत्करां नीलभाम् ।
कांची कुंडलहार कंकणलसत्केयूरमंजीरतां
आप्तै र्नागवरै विभूषित तनूभारक्तनेत्रत्रयाम् ॥

पिंगोग्रैकजटां लसत्सुदसनां दंष्ट्राकरालाननाम्
व्याघ्रत्वक् परिधान शोभित कटिश्वेतास्थिपट्टालिकाम् ।
अक्षोभ्येण विराजमानशिरसं स्मेराननांभोरुहाम्
तारां शावहृदासनां दृढकुचामंबां त्रिलोक्या स्मरेत् ॥

एतासां चतसृणां मन्त्र जपे तु बीजांतरितां पंचदशी कूटत्रयं प्रत्येकं प्रत्येकं संयोज्य जपेत् ॥

उग्रतारा ॥ ऐं ह्रीं श्रीं क्लीं सौः क ५ हुं उग्रतारे ह ६ हुं फट् स ४ ॥

एकजटा ॥ त्रीं क ५ हुं ह्रीं ह ६ हुं फट् स ४ ॥

तारा ॥ ॐ ह्रीं क ५ स्त्रीं ह ६ हुं फट् स ॥

नीलसरस्वती ॥ ह्रीं क ५ स्त्रीं ह ६ हुं स ४ ॥

## सुमुखी मन्त्रः ।

तुंबुरु ऋषिः । गायत्री छन्दः । श्रीसुमुखी देवता । संख्याक्रमेण न्यासः ।
१ ॐ ऐं ह्रीं श्रीं २ उच्छिष्ट ३ चण्डालि ४ मातंगि ५ सर्वलोकवशंकरि, ६ नमः स्वाहा ॥

स्मरेत्प्रथमपुष्पिणीं रुधिर बिंदु नीलांबराम् ।
गृहीत मधुपात्रिकां मदविघूर्ण नेत्रद्वयाम् ॥
घनस्तनभरालसां गलितचूर्णिकांबालिकाम् ।
करस्फुरितवल्लकीं विमलशंख ताटंकिनीम् ॥

ऐं ह्रीं श्रीं ह ५ उच्छिष्टचण्डालि मातंगि ह ६ सर्ववशंकरि स ४ नमः स्वाहा ॥

## राजमातंगी मन्त्रः ॥

श्रीदक्षिणा मूर्ति ऋषिः । गायत्री छन्दः । श्रीमातंगिनी देवता । न्यासः ।

ऐं ह्रीं श्रीं ॐ नमोभगवति श्रीमातंगीश्वरी १ सर्वजनमनोहरि, २ सर्वमुखराजि सर्वमुखराजिनि, ३ सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरि, ४ सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि, ५ सर्वलोकममुकं मे वशमानय ६ स्वाहा । इति मूलेन न्यासः ।

ध्यानम्:—

अमृतोदधि मध्यस्थे रत्नद्वीपे मनोरमे ।
स्वर्णप्राकार संवीते मण्डपे रत्ननिर्मिते ॥
कदंब बिल्वकद्वारि कल्पवृक्षोपशोभिते ।
वेदिमध्ये सुखास्तीर्णे रत्नसिंहासने प्रभो ॥

अष्टपत्रं महापद्मं केसरांतं सकर्णिकम् ।
तन्मध्ये च त्रिकोणं स्या द्वाह्येस्याच्चचतुर्दलम् ।
वेदास्त्र चतुर्द्वारं मंडलं प्रोक्तमुत्तमम् ॥

तन्मध्ये च सुखासीनां श्यामवर्णां शुचिस्मिताम् ।
कदंबमालाभरणां पूजितां च सुरासुरैः ।
प्रलंबालक संयुक्तां चंद्ररेखावतंसिताम् ।
ललाटे तिलकोपेता मीषत्प्रहसिताननाम् ।
किंचित्स्वेदाबुप्रधर ललाट फलकोज्जलाम् ।
वलीतरंग मध्यांता रोमराजि विराजिताम् ।
सर्वाभरण संयुक्तां मुक्ताहार विभूषिताम् ।
नानामणिगणोन्नद्ध कटिसूत्रैरलंकृताम् ।
वलयै रत्नखचितैः केयूरैर्मणिभूषितैः ।
भूषितां द्विभुजां बालां मदघूर्णित लोचनाम् ।
आपीन मंडलाभोग समुन्नत पयोधराम् ।
प्रलंबकर्णाभरणां कर्णोत्तंस विराजिताम् ।

तमालनीलां तरुणीं मधुमत्तां मतंगिनीम् ।
चतुःषष्टिकलारूपां पार्श्वस्थ शुकशारिकाम् ।
कोटिबालार्क संकाशां जपाकुसुम सन्निभाम् ।
एवं वा पीतवर्णां च ध्यायेन्मातंगिनीं पराम् ॥

ऐं ह्रीं श्रीं नमो...सर्वमुखरतिनि ह ५ सर्वराज.. पुरुषवशंकरि ह ६ सर्वदुष्टमृगव शंकरि४ स र्व...स्वाहा ॥

## चण्डमातंगिनी मन्त्रः ॥

दक्षिणामूर्ति ऋषिः । गायत्री छन्दः । चण्डमातंगिनी देवता । ह्रां ह्रीं इत्यादि न्यासः ।

ध्यानम्ः—

मातंगीं नव यावकार्द्रवरणामुल्लासि कृष्णांशुकाम् ।
वीणोल्लासिकरां समुन्नतकुचां मुक्ताप्रवलावलीम् ।
हृद्यांगीं सित शंख कुंडलधरां बिंबाधरीं सुस्मिताम् ।
आकीर्णालक वेणिमञ्जनयनां ध्यायेच्छुक श्यामलाम् ॥

ह्रीं नमः हिलिहिलि मातंगिनी स्वाहा ॥

ह्रीं नमः ह ५ हिलिहिलि ह ६ चण्डमातंगिनी स ४ स्वाहा ॥

## पद्मावती मन्त्रः ॥

ब्रह्मा ऋषिः । गायत्रीछन्दः । श्रीपद्मावती देवता । ह्रां ह्रीं इत्यादि न्यासः ।

ध्यानम्ः--

पद्मासनस्थां नवकुंकुमाभां,
रक्तोत्पले संदधतीं त्रिनेत्राम् ।
आबिभ्रती माभरणानिरूक्तां
पद्मावतीं पद्ममुखीं नमामि ॥

ह्रीं पद्मावती स्वाहा २ । ह्रीं ह ५ पद्मावती ह ६ स्वाहा स ४ ॥

## कामिनी भैरवी मन्त्रः ॥

ऋष्यादि पूर्ववत् ॥

ध्यानम्ः—

आताम्रार्कयुताभासां रत्नभूषणभूषिताम् ।
पाशांकुशाभयवरान् धारयंतीं शवासनाम् ॥
मुँडमालावलीरम्यां चिंतयेद्भैरवीं पराम् ॥

ह्सैं ह्स्क्लीं ह्सौं ॥

## पंचसिंहासन देवताः मन्त्रः ॥

प्रथमं । हैं हकलह्रीं हसौः

द्वितीयं । अहसैं अहसीं अहसौः

तृतीयः । ऐं हसएहसहस्रैं हहहकलह्रीं हहहह्सौः ।

तुरीयः । कल हहससस ह्रीं कलहहससस ह्रीं, कलहहससस ह्रीं ॥

पंचमः । सहहसलक्ष ह्सैं, हसहसलह्सीं, हसलक्षसह स्हौः ॥

श्रीविद्यालक्ष्मी ॥ महालक्ष्मीश्वरी बृंदमण्डितासनसंस्थिता सर्वसौभाग्यजनति ॥

एकाक्षरि लक्ष्मी मन्त्रः । भृगु ऋषिः । निचृद्छन्दः । श्रीः देवता ।

शं बीजं । ईं शक्तिः । रं कीलकं । स्रां स्रीं इत्यादि न्यासः ।

ध्यानम्ः—

तप्तकार्तस्वराभासां दिव्यरत्न विभूषिताम् ।
आसिच्यमानाममृतैः मुक्तारत्नद्रवैरपि ॥
शुभ्राभ्रमेघयुग्मेन मुहुर्मुहुरपि प्रिये ।
रत्नौघबद्ध मुकुटां शुद्धक्षौमांगरागिणीम् ।
पद्माक्षीं पद्मनाभेन हृदि चिन्त्यां स्मरेद्बुधः ॥

"श्रीं"

## महालक्ष्मी मन्त्रः ॥

दक्षप्रजापति ऋषिः । गायत्री छन्दः । महालक्ष्मीर्देवता । श्रीं बीजं ।

ह्रीं शक्तिः ॐ कीलकं । श्रां, श्रीं इत्यादि वा । श्रीं ह्रीं श्रीं इत्याद्यंत संपुटित कमले इत्यादि मूलेन संख्याप्रकारेण नेत्रत्रयं करतलं विना न्यासः ।

ध्यानम्ः—

रत्नोद्यद्वसुपात्रं च पद्मयुग्मं च हेमजम् ।
अग्रय रत्नावली राजदादर्श दधतीं पराम् ॥
चतुर्भुजां स्फुरद्रत्न नूपुरां मुकुटोज्ज्वलाम् ।
ग्रैवेयांगदहाराढ्य कंकणां रत्नकुंडलाम् ॥

पद्मासन समासीनां दूतीभिर्मण्डितां सदा ।
शुक्लांगरागवसनां महादिव्यांगानाम् पश ॥

ॐ श्रीं ह्रीं श्रीं १ कमले २ कमलालये ३ प्रसीद ४ प्रसीद श्री ह्रीं श्रीं ५ महालक्ष्म्यै नमः ।

## त्रिशक्तिलक्ष्मी मन्त्रः ॥

ब्रह्मा ऋषिः । गायत्री छन्दः । त्रिशक्तिर्देवता । श्रीं बीजं । ह्रीं शक्तिः । क्लीं कीलकं ।
श्रीं ह्रीं क्लीं इति द्विरावृत्या न्यासः ।

नवहेमस्फुरद्भूमौ रत्नकुट्टिम मंडपे ।
महापद्मवनांतस्थे रत्नासिंहासनेश्वरे ॥
कमलासनशोभाढ्यां रत्नमंजीरकुंडम् ।
स्फुरद्रत्नलसन्मौलिं रत्नकुंडलमंडिताम् ॥
अनर्घ्य रत्नघटित नानाभूषण भूषिताम् ।
दधतीं पद्मयुगलं पाशांकुशधनुः शरान् ॥
षड्भुजामिंदुवदनां दूतीभी परिवारिताम् ।
चारु चामर हस्ताभी रत्नादर्श सुपाणिभिः ॥
तांबूलसुवर्णपात्रीभि भूषापेटी सुपाणिभि ॥
श्रीं ह्रीं क्लीं ॥

## सर्वसाम्राज्यलक्ष्मी मन्त्रः ॥

हरि ऋषिः । गायत्री छन्दः । महासाम्राज्यदायिनी लक्ष्मीर्देवता ॥

श्रीं सहकलह्रीं श्रीं बीजं । श्रीं शक्तिः । मूलेन श्रां श्रीं इत्यादि संयोज्य न्यासः अथवा । यौ तौ मौतभये नमः हृदये । यौ तौ मौतभये स्वाहा शिरसि । यौ तौ मौतभये वषट् शिखे यौ तौ मौतभये हुं कवचं । यौ तौ मौतभये श्रियै वौषट् नेत्रत्रय यौ तौ मौतभये श्रां नमः फट् अस्त्र ॥

ध्यानम्ः—

अतसी पुष्पसंकाशां स्वर्णभूषणभूषिताम् ।
शंखचक्रगदापद्म शार्ङ्गबाणधरां करैः ॥
षड्भिः कराभ्यां देवेशि वरदाभय शोभिताम् ॥
एवं अष्टभुजां ध्यायेत् ॥

मनुः श्रींसहकलह्रीं ॥

## पंचकल्पलता मन्त्रः ॥

श्रीविद्याकल्पलता । ३ मूलं महाकल्पलतेश्वरी बृंद...जननी ॥

## कामेश्वरी (त्वरिता)

संमोहनऋषिः । गायत्रीछन्दः । त्वरिताकामदा देवता । ऐं बीजं ।
ब्लूं शक्तिः । स्त्रीं कीलकं । मूलस्थ समस्त पंचबीजेन न्यासः ।

ध्यानम्ः—

**रक्तां रक्तदुकूलांग लेपनां रत्नभूषणाम् ।**
**पाशांकुशौ धनुर्बाणान् पुस्तकं चाक्षमालिकाम् ॥**

ह्रीं क्लीं ऐं ब्लूं स्त्रीं ॥

## पारिजातेश्वरी

दक्षिणामूर्ति ऋषिः । गायत्री छन्दः । पारिजातेश्वरी देवता । हस्रैं बीजं ।
ह्रीं शक्तिः । ॐ कीलकं । श्रां श्रीं इत्यादि न्यासः ।

**हंसारूढां लसन्मुक्ताधवलां शुभ्रवाससम् ।**
**शुचिस्मितां चन्द्रमौलिं वज्रमुक्ताविभूषणाम् ॥**
**विद्यां वीणां सुधाकुंभ मक्षमालां च बिभ्रतीम् ॥**

ॐ ह्रीं ह्रां हसकलह्रीं ॐ सरस्वत्यै नमः ॥

## कुमारी (त्रिपुटा)

दक्षिणामूर्ति ऋषिः ।

पंक्ति छन्दः । ऋष्यादि मन्त्रवत् ।

क्लीं बीजं । सौः शक्तिः । ऐं कीलकं ।

क्लीं ऐं सौः इति द्विरावृत्या न्यासं ।

उद्यत्सूर्यसहस्राभां माणिक्यवरभूषणां ।
स्फुरद्रत्नदुकूलाढ्यां नानालंकारभूषिताम् ।
इक्षुकोदण्ड बाणांश्च पुस्तकं चाक्षमालिकाम् ।
दधतीं चिन्तयेन्नित्यं सर्वराजवशंकरीम् ॥
क्लीं ऐं सौः ॥

## पंचबाणेश्वरी ।

मन्मथ ऋषिः । गायत्री छन्दः । कामेश्वरी बाणशक्तिर्देवता । पंचबाणैर्मूले च प्रत्येकं समष्टिश्च न्यायः ।

उद्यद्दिवाकराभासां नानालंकारभूषिताम् ।
बन्धूककुसुमाकार रक्त वस्त्रांगरागिणीं ।
इक्षु कोदण्ड पुष्पेषु विराजित पदद्वयाम् ॥
द्रां द्रीं क्लीं ब्लूं सः ॥

## पंचकोशांबा मन्त्रः ॥

श्रीविद्याः मूलं सर्वकोशेश्वरी वृंद...जननी ॥

## परंज्योतिकोशांबा मन्त्रः

ब्रह्मा ऋषिः । गायत्री छन्दः । परंज्योतिर्मयी देवता । ॐ बीजं स्वाहा शक्तिः ।
हंसः सोहं कीलकं । स्वाहा-हृदये । सोहं शिरसि । हंसः शिखा । ह्रीं कवचं ।
ॐ नेत्रत्रयं । सर्वमन्त्रेण अस्त्रं । इति न्यासः ।

ध्यानम्ः--

अनुग्रहादिर्देवेशि बिन्दुनाद कलात्मकः ।
परा निष्कल देवीयं परब्रह्मस्वरूपिणी ॥
शुक्लांबरपरीधानां शुक्लमाल्यानुलेपनाम् ।
ज्ञानमुद्रांकितां योगिपति वृन्दसेवितां ॥
ज्ञानांनदमयां वन्दे परानिष्कल देवताम् ॥

ॐ ह्रीं हंसः सोहं स्वाहा ॥

## परानिष्कलकोशांबा मन्त्रः ।

ब्रह्मा ऋषिः । गायत्री छन्दः । ब्रह्मादेवता । अं बीजं । ऊं शक्तिः । मं कीलकं ।
अंआं, इंईं, उंऊं, ओंऔं, अंअः । इति स्वर द्वन्द्वेन न्यासः ।
ध्यानं पूर्ववत् ॥ मनुः ॐ हंसः ॥

## अजपाकोशांबा मन्त्रः ॥

अव्यक्त पर ब्रह्मऋषिः । गायत्री छन्दः । परमहंसो देवता । हुं बीजं ।
सः शक्तिः । सोहं कीलकं । नभः स्थानं । श्वेत वर्णं । उदात्तं स्वरः ।
ॐ, सूर्याय, चन्द्राय, निरंजनाय, निराभासाय, अतनतनुवे स्वाहा ।
सूक्ष्मतनुवे स्वाहा । इति न्यासः ।

ध्यानम्:—

अग्नीषोमगरुद्वयं प्रणवकं बिन्दुं त्रिनेत्रोज्ज्वलम्
भास्वद्रुद्रमुखं शिवांघ्रियुगलं कालाग्निबाहुद्वयं ।
उद्यद्भास्वर कोटि कोटि सदृशं हंसं जगद्व्यापकम्
नादब्रह्ममयं हृदंबुजपुटे नीडे सदा भावये ॥

मनुः हंसः

## मातृकाकोशांबा

ब्रह्मा ऋषि गायत्री छन्दः न्यासं ध्यानादिभिः प्रागेव, बहिर्मातृका विमर्शितपुटे द्रष्टव्यम् ।

अं-क-ङं आं　　एं तं नं ऐं
इं चं...ञ ईं　　ओं पं...मं औं
उ ट...ण णं ऊ　　अं यं...क्षं अः　　मनुः अं... ॥

## पंचकामदुधा

श्री विद्या ॥ ३ मूलं महाकामदुधेश्वरी बृंद...जननी ।

## अमृतपीठेश्वरी देवता

शुकः ऋष्य गायत्री छन्दः न्यास ध्यानानि पूर्ववत् ।

१ ह्रीं हंसः, २ संजीवनी, ३ जूं जीवं, ४ प्राणग्रन्थिस्थं, ५ कुरु २, ६ सः स्वाहा ।। न्यासः ।

असिताऋषिः । गायत्री छन्दः सुधासू श्री देवता । ऐं वदवद वाग्वादिनी मे बीजं ।

ॐ मोक्षं कुरु २ ह्रौं शक्तिः क्ली...कुरु २ क्लीं कीलकं ।।

ऐं वद २ वाग्वादिनी, ह्सैं क्लीं क्लिन्ने क्लेदिनि महाक्षोभं कुरु ह्स्क्लरीं सौः ॐ मोक्षं कुरु २ ह्स्रौ ।। बीजशक्ति कीलककूटत्रय द्विरावृत्या न्यासः ।।

## अमृतेश्वरी

ऋष्यादि अभावः

ऐं ब्लूं झ्रौं जूंसः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय २ स्वाहा ।।

## अन्नपूर्णा

ब्रह्मा ऋषिः उष्णिक्छन्दः । अन्नपूर्णेश्वरी देवता । ह्रां बीजं ।

ह्रीं शक्तिः । ह्रूं कीलकं । ह्रां ह्रीं इत्यादि न्यासः ।

उद्यत्सूर्य समाभासां विचित्र नयनोज्ज्वलाम् ।
चन्द्रचूडामन्नदान निरतां रत्न भूषिताम् ।।
सुवर्णकलशाकार स्तनभारनतां पराम् ।
रुद्रताण्डव सानदां द्विभुजां परमेश्वरीम् ।
वरदाभय शोभाढ्यमन्नदानरतां सदा ।।

ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ।।

## ।। पंचरत्नेश्वरी ।।

श्रीविद्या । ३ मूलं महारत्नेश्वरी बंप...जननी

## सिद्धलक्ष्मी रत्नेश्वरी मन्त्रः ।।

ब्रह्मा ऋषिः तदादि ध्यानांतं महालक्ष्मीमन्त्रवत् ।

४ फें फें ह्स्फ्रें ऐं क्ष्म्रीं महाचण्ड तेजः संकर्षणि कालिमन्याने ह्रीं सः स्वाहा । ह्स्फ्रें ह्रीं श्रीं सर्वसिद्धयोगिनि ह्स्ख्फ्रें ह्रीं श्रीं नित्योदितायै सकलकुल चक्रनायिकायै भगवत्यै चण्डि कपालिन्यै ह्रीं श्रीं हूं ह्स्फ्रें ह्रीं ह्रूं हं फें क्ष्रौं क्रो क्लीं सः खफवभरें परमहंसिनिर्वाणमार्गदे देवि विषमोपप्लव प्रशमनि, सकलदुरितारिष्टक्लेशदमनि सर्वापदंभोधि तारिणि, सकलशत्रुप्रमथनि देवि आगच्छ २ दुहस २ वल २ नररुधिरान्त वसा भक्षिणि मम शत्रुन् मर्दय २ स्वाहि २ त्रिशूलेन भिंधि २ च्छिन्धि २ खड्गेन ताडय २ छेदय २ वदकवलह्रीं हसक्षमलवरयूं सहक्षमलवरयीं मम सकल मनोरथान् साधय २ परमकारुणिके देवि भगवति महाभैरवरूपधारिणि त्रिदशवर नमिते महामन्त्रपात प्रणत जनवत्सले देवि महातिकालनाशिनि ह्रीं प्रसीद २ मदनातुरां कुरु २ सुरासुरकन्यकां ह्रीं श्रीं क्रों फट् ठः ठः ह्स्ख्फ्रें फें फें महारत्नेश्वरी बृंद मंडितासन संस्थित सर्वसौभाग्य जननि श्रीमहालक्ष्म्यै नमः । "श्रीं"

## ।। राज मातंगी ।।

मतंगऋषिः । गायत्री छन्दः । मातंगीश्वरी देवता । क्लीं बीजं । ऐं शक्तिः ।

सौः कीलकं । ऐं क्लीं सौः इति द्विरावृत्या न्यासः ।

अंभोजार्पित दक्षांघ्रि क्षौमां ध्यायेन्मतंगिनीम् ।
लसद्वीणा लसन्नाद श्लाघान्दोलित कुंडलाम् ।।
दंतपंक्ति प्रभारम्यां शिवां सर्वांगसुन्दरीम् ।।
कदंबपुष्पदामाढ्यां वीणावादनतत्पराम् ।।
श्यामांगीं शंखवलयां ध्यायेत्सर्वार्थ सिद्धये ।।

ऐं क्लीं सौः ऐं ह्रीं श्रीं नमो भगवति मातंगीश्वरि सर्वजनमनोहरि सर्वराजवशंकरि सर्वमुखरंजिनि सर्वस्त्रीपुरुषवशंकरि सर्वदुष्टमृगवशंकरि सर्वलोकवशंकरि ह्रीं श्रीं क्लीं ऐं ।।

## भुवनेश्वरि

प्रागेव लिखितम् ।।

## ।। वाराही ।।

शिवऋषिः जगती छन्दः । वाराही देवता । ग्लौं बीज । स्वाहा शक्तिः ।

मूलं संख्याक्रमेण न्यासः ।

मनुः– ॐ नमो भगवति १ वार्तालि २, २ वाराहि २, ३ वराहमुखि २, ४ अन्धे अंधिनि नमः, ५ रुंधे रुंधिनि नमः, ६ जंभे जंभिनि नमः मोहे मोहिनि नमः स्तंभे स्तंभिनि नमः सर्वदुष्ट प्रदुष्टानां सर्वेषां

सर्ववाक् चित्त चक्षुर्मुख गति जिह्वा स्तंभनं कुरु २ गोत्रं वशं कुरु २ ऐं ग्लौं ठः ठः टः ठः हुं फट् स्वाहा ॥

ध्यानम्ः—

प्रत्यग्रारुण संकाश पद्मांतर्गतवासिनीम् ।
इन्द्रनीलमहातेजः प्रकाशां विश्वमातरम् ॥
रुण्डं च मुण्डमालाढ्य नवरत्न विभूषिताम् ।
अनर्घ्य रत्नघटित मुकुटश्री विराजिताम् ॥
कौशेयार्घोरुकां चारु प्रवालमणि भूषणाम् ।
हलेन मुसलेनापि वरदेनाभयेन च ।
विराजित चतुर्बाहुं कपिलाक्षीं सुमध्यमाम् ।
नितंबिनी मुत्पलाभां कठोरघनसत्कुचाम् ॥

## देवीउपासकाः ॥

मनुश्चन्द्रः कुबरश्च लोपामुद्रा च कामराट् । अगस्त्य नंदि सूर्यश्च विष्ण स्कंद शिवास्तथा ॥ दूर्वासाश्च महादेव्या द्वादशोपसका स्मृताः ।

धर्मराजोऽनलो नागराजो वायुर्बुधस्तथा ।
ईशानश्च रतिश्चैव तथा नारायणस्तथा ॥
ब्रह्मा जीवो महादेव्वा स्त्रयोदश उपासकाः ।
पंचविंशति संख्याकोपसकानां महेश्वरि ।
उपास्य मन्त्रभेदांश्च प्रवक्ष्यामि समासतः ॥

## उपासकानां नामः मन्त्रः ॥

वरुणः—कएईलह्रीं हकहलह्रीं सहकलह्रीं ।

धर्मराजः—कएकलह्रीं हकहह्रीं सहकलह्रीं ।

वह्निः—कमरूलह्रीं हसलकलह्रीं सकलरलह्रीं ।

नागराजः—हसकलह्रीं हसककहलह्रीं सकलरलह्रीं ।

वायुः—कहरलह्रीं हकलरहलह्रीं सरकलह्रीं ।

बुधः—कएईरलह्रीं हकहलरह्रीं सहकरह्रीं ।

ईशानः—कहलह्रीं हकहललरह्रीं सकलह्रीं ।

रतिः–कएईलह्रीं हसकहलह्रीं सकलह्रीं ।

नारायणः–क ५ ह ६ स ४, स ४ ह ६ क ४ ॥

ब्रह्मा:– क ५ हकहसरह्रीं हसकलह्रीं ।

जीवः–हसकलह्रीं हकहसरह्रीं हसकलह्रीं ।

मनुः–कहएईलह्रीं हकएईलह्रीं सकएईलह्रीं ।

चन्द्रः– सहकएईलह्रीं सहकहएईलह्रीं हसकएईलह्रीं ।

कुबेरः– हसकएईलह्रीं हसकहएईलह्रीं हसहकएईलह्रीं ।

अगस्त्यः– क ५ हसकईलह्रीं सहसकलह्रीं ।

नन्दिः–सएईलह्रीं सहकलह्रीं स ४ ।

इन्द्रः– क ५ ह ६ स ४ ।

सूर्यः– क ५ सहकलह्रीं सहसकलह्रीं, हसकलह्रीं सहकलह्रीं सकहलह्रीं ।

शिवः क ५ ह ६ सहसकलह्रीं कएईल हसकहल सहसकलह्रीं ॥
हसकलह्रीं हसकलह्रीं सकलह्रीं हसकल हसकल सकलह्रीं सकलह्रीं ॥

दुर्वासः– क ५ ह्रीं, ह ६ ह्रीं, स ४ ह्रीं ॥

कामराजः क ५ ऐं क ५ ५, ह्रीं ह ६ श्रीं स ४

लोपामुद्रा १ हसकह ह्रीं ॥ २ ऐं हसकहह्रीं क्लीं हसकहलह्रीं सौः स ४ ॥

पराविद्या ॥ ॐ ऐं क्लीं सौः कएलहह्रीं सौः क्लीं ऐं ॐ ऐं क्लीं सौः हसकलह्रीं, सौः क्लीं ऐं, ॐ क्लीं सौः सकहलह्रीं सौः क्लीं ऐं ॐ ।

एते शुद्धाः २५, अशुद्धाः २५ शुद्धाशुद्धाः २५ शबलाः २५ एवं शतं भेदाः ॥

## श्रीविद्या पंचभेदाः ॥

१. क ५ हसकलह्रीं हकहलह्रीं हसकलह्रीं ।

२. क ५ हसकलह्रीं हकहलह्रीं कहयलह्रीं सहकलह्रीं ।

३. सकहलह्रीं क ५ ह ६ स हकलसह्रीं ।

४. सकहलह्रीं क ५ ह ६ सकलह्रीं ईएकलह्रीं ।

५. कएकलह्रीं क ५ ह ६ सकलह्रीं सहकलह्रीं ।

६. ईएकलह्रीं क ५ ह ६ स ४ हकलसह्रीं ।

७. एईकलह्रीं क ५ ह ६ स ४ सहकलह्रीं ।

८. एईकलह्रीं क ५ ह ६ स ४ हकलसह्रीं ।

९. क ६ हसकलह्रीं हकहलह्रीं स ४ ।

१०. क ५ हसकलह्रीं हसकहलह्रीं स ४ ।

११. क ५ हसकलह्रीं सहकहलह्रीं सहकलह्रीं ।

१२. क ५ हसकलह्रीं सहकहलह्रीं सहकलह्रीं ।

कहलह्रीं क ५ हसकलह्रीं हसकलसह्रीं

कहसलह्रीं क ५ ह ६ हसकलह्रीं स ४ ॥

एताः प्राग्वदस्तथा । अरयाचतर्धा । एवं षट्त्रिंशद्भेदाः पंचम्यः एतासां पंचविद्यानां "श्रीं ह्रीं" इति बीजद्वय संपुटितेन आद्यंतयोः संयोज्य मध्यस्थ कामराजकूटत्रयादौ कामराज बीजं संयोज्य जपो विधेयः ॥

## सुन्दरीभेदाः ॥

| | |
|---|---|
| १. ईएकलह्रीं ह ६ स ४ | प्रथमसुन्दरी । |
| २. एईकलह्रीं ह ६ स ४ | द्वितीयसुन्दरी । |
| ३. क ५ ह ६ स ४ | अनन्तसुन्दरीं । |
| ४. सहकलह्रीं ह ६ स ४ | पश्चिमाम्नायसुन्दरी । |
| ५. हससकलह्रीं ह ६ स ४ | उत्तराम्नायसुन्दरी । |
| ६. हस ह्रीं कहह्रीं सहह्रीं | रुद्रयोगिनी पूर्वाम्नायसुन्दरी । |
| ७. कलह्रीं कहलह्रीं स ४ | दक्षिणाम्नाय सुन्दरी । |
| ८. कहक्षयलह्रीं ह ६ स ४ | ऊर्ध्वाम्नाय शिवसुन्दरी ॥ |
| ९. सहक्षयलह्रीं सहकहलह्रीं स ४ | शक्तिसुन्दरी । |
| १०. हक्षमलह्रीं ह ६ स ४ | सर्वसुन्दरी ॥ |
| ११. सहकलह्रीं हकहलह्रीं कहकलह्रीं | सौभाग्या । |
| १२. हकलसह्रीं कहलसह्रीं कलसहह्रीं | भाषा |
| १३. हसकलह्रीं हलकहसह्रीं स ४ | सृष्टिः |

| | |
|---|---|
| १४. हलकसह्रीं कसहलसह्रीं कहसलह्रीं | स्थिति । |
| १५. हसकलह्रीं हसकसह्रीं हहसलह्रीं | संहृति । |
| १६. लकसह्रीं सहकलह्रीं हससहकह्रीं | निराख्या । |
| १६ अ. कहकलसह्रीं हससहकह्रीं सहकहह्रीं | ,, |
| १७. हकलसह्रीं हकहलह्रीं हसकलह्रीं | स्वप्नावती |
| १८. कहलसह्रीं कहयलह्रीं कससलह्रीं | मधुमती |

१९. क ५ ह ६ स ४ सहकलह्रीं हकहलह्रीं कहकलह्रीं इति पंचम्याः पंचकूटं ।

इमेरावादश कूटा । एव षट्त्रिंशत्पञ्चा द्वाऽष्ट्वादि भेदैः, सह, त्रिचतुष्पंच षट् सप्ताऽष्ट नवकूट योजनेन सुन्दरी भेदाः बहवः संति । जपेतु सर्वासां सुन्दरीविद्यानां आद्यतेषु प्रागुक्त श्रीं ह्रीं हं इति बीजत्रय संपुटीकरण मावश्यकम् ॥

## पराषोडशी तुरीयविद्या

सौः श्रीं ५ ॐ ३ कएईल.हसकहल स ४ सौः ऐं क्लीं ह्रीं श्री सौः ॥

## चरणविद्या ॥

ॐ ऐं ह्रीं श्रीं हंसः शिवः हसौः सोहं तुरीयविद्यामुच्चार्य सच्चिदानन्द ज्योतिरहं प्राग्वत् उच्चार्य ॐ...सच्चिदानन्द महमेवास्मि ॥

चरणविद्या उद्धारः ।
प्रणवं च त्रितारं च हंसः शिवः हसौः पदं ।
सोहं तुरीयविद्यां च सच्चिदानन्दपदं ततः ।
ततः ज्योतिरहं चेति प्रथमं परिकीर्तितम् ॥
प्राग्वत्सर्वमुच्चार्य सच्चिदानन्द शब्दतः ।
ततः ज्योतिरहं देवि द्वितीयं परिकीर्तितम् ॥
ततः प्राग्वत्समुच्चायाऽहमेवास्मीति चोच्चरेत् ॥
तृतीयं तु समुद्दिष्टं चरणत्रयमीरितम् ।
संघट्टमुद्रया मूर्घ्नि विन्यसेद्देशिकोत्तमः ॥

संघट्टमुद्राः—शिवशक्तयात्मक दक्षिणवामकरयोः पृथक् अंगुष्ठरहितांगुलीचतुष्टयाग्र योगरूपा युगपदधोमुखं शिरसि वहेत् ॥

## दीपिनी विद्या

तारं लक्ष्मीं च वाग्बीजं मान्मयं भुवनेश्वरीम् ।
एतज्जप्त्वा ततः पश्चाद्वाग्भवाख्यं समुच्चरेत् ॥
प्रणवं भुवनेशानीं रमां कामं च वाग्भवम् ।
कामराजं ततो जप्त्वा त्रैलोक्यक्षोभकारकम् ॥
ओंकारं चैव वाग्बीजं रमां मन्मथ मायया ।
स्वप्नावतीं महादेवि प्रजपेच्च समाहितः ।
प्रणवं चाधरं कामं रमां च भुवनेश्वरीम् ।
मधुमतीं ततो जप्त्वा मायां श्री कूर्चबीजकम् ।
प्रणवाद्यं च देवेशी हंसबीज पुटीकृतम् ।
एत द्वीजं समुच्चार्य शक्तिकूटं ततो जपेत् ।
एषा तु दीपिनी विद्या अजपा प्राणरूपिणी ॥
जपेदादौ जपेत्पश्चात् सप्तवारमनुक्रमात् ।
कामराजादि विद्यानां दीपिनीं चैव कारयेत् ॥

ॐ ह्रीं हस्ख्फ्रें अं हसक्षमलवरयूं ऐं ॥

हूं हंसः फट् ह्रीं हसक्षमलवरयूं हस्ख्फ्रें ह्रीं ॐ ॥

## त्रिपुरा त्रयोदश विद्या ॥

ऐं नमो भगवति त्रिकोणे त्रिधावर्ते महालिंगालंकृते त्रैलोक्योत्पत्ति स्थिति प्रलयकारिणि सहलह्रीं कन्दर्पानन्ददायिनि सहह्रीं ब्रह्मदण्डरेखे सहह्लौं चित्स्वरूपेण पाशांकुशालंकृते वद वद वाग्वादिनि श्रीं अष्टमपाल-राज्यप्रदे ऐं वं वरदाशिवहस्ते समस्तजनकानन्द कारिणि क्लीं क्लीं कामराजबीजाश्रये द्रां द्रीं क्लीं ब्लूं सः क्षोभय २ क्षोभिणि ह्सौः हसः ह्सौः भय २ अभयप्रदायिनि चतुर्भुजे त्रिनेत्रे प्रेतासनोच्चारिणि महा कपाल-मालालंकृते चन्द्रशेखरे त्रिपुरे भुक्तिमुक्तिफलप्रदे ॐ ऐं ॐ नमः सिद्धं अं आं...क्षं इत्यादि विलोमेनाकारान्तं क्षं... अं द्धंसि मः न ॐ ऐं ॐ सर्वबीजमातः श्रीसमथिनि मम मनोरथं देहि २ स्वाहा ।

एवं जपित्वा ऐंईसौः श्रीमन्त्रराजाय नमः इति त्रैपुरमन्त्रस्य पूजां विधाय त्रिपुरादि महानाम्ना त्रयोदश विद्यां पूजयेत् ॥

१. ॐ ऐं सहौः सहलह्रीं सहह्लौः ऐं सहह्रीं सहह्लूं कामत्रिपुरायै नमः ।

२. ॐ ऐं ह्रीं क्लीं हसौः त्रिपुर भैरव्यै नमः ।

३. ॐ ऐं ह्रीं क्लीं ऐं ह्रीं सः वाक्त्रिपुरायै नमः ।

४. ॐ ऐं प्रें क्लीं सौः महालक्ष्म्यै त्रिपुरायै नमः

५. ॐ ऐं क्लीं मोहिन्यै त्रिपुरायै नमः

६. ॐ ऐं क्लीं ब्लूं स्त्रीं भ्रामरीत्रिपुरायै नमः ।

७. ॐ ऐं ह्रीं क्लीं प्रें हसौः त्रैलोक्यस्वामिन्यै त्रिपुरायै नमः ।

८. ॐ ऐं एं डीं डैं डौं डः हंस्य त्रिपुरायै नमः ।

९. ऐं ऐं ऐं सौः कालिकायै त्रिपुरायै नमः

१०. ऐं ऐं सौः पंडकायै त्रिपुरायै नमः ।

११. ऐं ऐं सौः तालुमध्यमायै त्रिपुरायै नमः

१२. ऐं ऐं सौः कपालांकुरवासिन्यै त्रिपुरायै नमः ।

१३. ठः ठः ठः ।। इति यथा शक्ति जपित्वा ।

ऐं ईं सौः आत्मदेहाय नमः इति रक्तपुष्पैः शिरसि, रक्तगंधाक्षतैश्च सप्तधा संपूज्य, ततः धूप दीप, नैवेद्यं, तस्मिन्नेव त्रैपुरे देहे ऐं ईं सौः इति वनिताक्षोभकरीं महाकामकलां ध्यायेत् ।।

## श्रीचण्डिकाराधनक्रमः ।।

श्रीमान्साधकः सप्तशती दीक्षितो वा गुरुदर्शित क्रियाकलापः सिद्धक्षेत्रे गिरौ रम्ये अथवा क्वचित्पुण्यदेशे वाततापसहां कुटीं निर्माय साधयेत् । सः ब्राह्मे मुहूर्ते समुत्थाय कृतावश्यकः प्रक्षालित करचरणः शुद्धः शुद्धांबरधरः शुद्धासने समुपविश्य ब्रह्मरंध्रगत शुक्लसहस्रारमध्य कर्णिकास्थं स्फटिकाभं ध्यानमुद्राधरं वराभयकरं द्विभुजं शुक्लांबरविभूषणं श्रीगुरुं ध्यात्वा मानसोपचारैः संपूज्य, ॐ अखण्डमण्डलाकारं, अज्ञानतिमिरांधस्य, गुरुब्रह्मा, इतित्रिभिर्मन्त्रैः स्तुत्वा, दण्डवत्प्रणम्य, आज्ञांगृहीत्वा, हृत्पद्मे गुरुपदिष्टां इष्टदेवतां ध्यात्वा मानसैः संपूज्य, ऋष्यादि पूर्वकं दशधा जप्त्वा, श्रीदेव्यै समर्प्य, सर्वस्वरूपे इत्यादि मन्त्रैः स्तुत्वा, प्राणयाम कृत्वा बद्धांजलिः प्रार्थ्य, प्रणम्य, शौचावश्यकं निवर्त्य नद्यादौ गत्वा, विहितदिने, विहितकाष्टेन, ॐ क्लीं कामदेव सर्वजनप्रियायनमः इति दन्तान् विशोध्य, जिह्वाशुद्धि च विधाय जिह्वायां कनिष्ठिकया वाग्भवबीजमुल्लिख्य यथोक्तगण्डूषैर्मुख शुद्धि विधाय, मूलेनाभिमन्त्रित जलेन मुखं प्रक्षाल्य, नाभिमात्रे अंभसि, इमं मे गंगेत्यादि मन्त्रान् पठित्वा स्मार्तक्रमेण स्नात्वा नवार्णमन्त्रेण कुंभमुद्रया स्वशिरः आसिच्य, बहिर्धौते वाससी परिधाय, स्वशाखोक्त वैदिकीं संध्यामुपास्य तर्पणं च विधाय, ओं ह्रीं चण्डिकाये हृदयाय नमः इत्येवं न्यास कृत्वा, ध्यानक्रमेण श्रीदेवीं ध्यात्वा, मूलांते श्रीचण्डिकातृप्यतां इति, अष्टोत्तरशतं, तदर्धं, अष्टविंशतिवारं वा, सुगंधिपुष्प जलेन संतर्प्य, ओं कात्यायन्ये विद्महे...दुर्गा प्रचोदयात् । इति गायत्रीं यथा शक्ति जप्त्वा, जपं देव्यै समर्प्य, जलकुंभं गृहीत्वा,

पूजास्थान मागत्य, बहिः करचरणं प्रक्षाल्य, गंधाक्षतपुष्प धूपदीप नैवेद्यादि पूजापरकरं संपाद्य द्वारपूजां कुर्यात् ॥ तद्यथा ।

बहिर्द्वारि, आसनमास्तीर्थ, भूमौ जलेत त्रिकोण वृत्त चतुरश्रं मंडलं आलिख्य, तन्मण्डलं गन्धाक्षत पुष्पैः ओं द्वारार्घ्यमंडलायनमः इति संपूज्य, अस्त्रक्षालितं साधारं पात्रं संस्थाप्य तस्मिन् सगंधं जलपापूर्य तत्रांकुश-मुद्रया तीर्थमावाहय, गंगेतिमंत्रेण धेनु मुद्रया अमृतीकृत्य मूलेनाष्टवारमभिमंत्र्य जज्जलेन तत्वत्रयेण आचम्य, द्वारस्योर्ध्व शाखायां, दक्षेओं धात्रेनमः वामे ओं विधात्रे नमः अधःशाखायां दक्षे ओं गंगायै नमः, वामे ओं यमु-नायैनमः ऊर्ध्वोदुंबरे, ओं द्वारश्रियै नमः, अधः ओं देहल्य नमः इति सपूज्य, वामांग संकोचेनांतः प्रविश्य, नैर्ऋत्य कोणे ओं वास्तु पुरुषायनमः इति गंधपुष्पाक्षतैः सपूजयेत् ॥

---

ततः आसनाधो भूमौ रक्तचन्दनेन चतुरश्र विलिख्य तत्र पृ पृथिव्यै नमः इति मण्डलं गंधादिभिः संपूज्य, तत्रासनमास्तीर्य पृथ्वि त्वया इति मन्त्रेण तत्र प्राङ्मुखोपविश्य शिखां बद्ध्वा, प्राणायामं सकल्पं च विधाय, तत्वत्रयेणाचामेत् ॥ ततः दक्षे हरिं, वामे ईश्वरं सपूज्य, प्राङ्मुखः शुद्धचित्तः क्वचिन्निमले पीठे चन्दनागरुकुंकुमैः षट्कोणाष्टदलभूपुरात्मकं यन्त्रं विलिख्य, षट्कोणमध्ये ऐं ह्रीं क्लीं इति क्रमेण संलिख्य भूतशुधि कुर्यात् । ततः निरस्तसकलभ्रमो वामे गुरुं, दक्षे श्रीगणेशं, मध्ये श्रीमहालक्ष्मीं ध्यात्वा, प्रणम्य, एकादश न्यासान् कुर्यात् ॥ मातृका, सारस्वत, मातृगण, षड्देवी, ब्रह्मादि, महालक्ष्म्यादि, मन्त्रबीज, विलोममन्त्र, व्यापक, षडंगन्यास, खड्गिनीशूलिनी इति ॥ एवं न्यासान् कृत्वा, योनिमुद्रां प्रदर्श्य, स्वात्मानं देवीरूपं ध्यात्वा तत्र मध्य बीजे श्रीमहालक्ष्मीं सर्वदेवशरीर तेजसोद्भवां रहस्योक्त ध्यानेन श्वेतानना नीलभुजा इत्यादि नानालंकृत भुजामेभि-रायुधैः कमलासना इत्यन्तेन ध्यात्वा, स्वात्मैक्येन विभाव्य, तस्य दक्षिणे प्रथम बीजे श्रीमहाकालीं, दशवक्त्रा दशभुजा इत्यादि निरुच्यं तद्रुधिरं दधौ इत्यनेन ध्यात्वा, श्रीमहालक्ष्म्या वामे तृतीयबीजे श्रीमहासरस्वतीं, दधौचाष्टभुजाबाणान् इत्यादि शंख घण्टां लांगल वसुधाधिपे त्यन्त रहस्योक्त क्रमेण ध्यात्वा (अत्र आयुधानां दक्षिणाधः करमारभ्य वामाधः करपर्यंत इति) वक्ष्यमाणपीठपूजापुरस्सर श्री महालक्ष्मी साङ्गां सावरणां मान-सोपचारैः सपूज्य ॥ मूलाधारे, आत्मान्तरात्मापरमात्मा ज्ञानात्मस्वरूप चतुरश्रं कुंड कुंडं कुंडलि अग्निं प्रज्वलितं ध्यात्वा, मूलमन्त्रमुच्चार्यान्ते अहन्तां जुहोमि स्वाहा, एवं, सूय, पैशुन्यं, काम, क्रोध, लोभ, मोह, मद, मात्स-र्याणि सुषुम्णा स्रुग्युक्त मनः श्रुवेण पृथक् पृथक् हुत्वा, निर्दग्ध निखिलवैरिगणः स्थिरचित्तः मूलमन्त्रं यथाशक्ति जपित्वा, जपं श्रीदेव्यै समर्प्य, बाह्यपूजा कुयात् ॥ तद्यथा ॥ स्वदक्ष भूमौ रक्तचन्दनांभसा त्रिकोण वृत्त चतुर-श्राणि विलिख्य ॐ ऐं ह्रीं व्यापकमण्डलायनमः इति सपूज्य, तत्र क्षालित आधारपात्र संस्थाप्य, ॐ मं वह्नि मण्डलाय दशकलात्मने नमः इति त्रिपादां सपूज्य, ततो अर्घ्यपात्रं अस्त्रेण प्रक्षाल्य, आधारोपरि संस्थाप्य, अं अर्कमण्डलाय द्वादशकलात्मने नमः इति संपूज्य, मं सोम मण्डलाय षोडशकलात्मने नमः इति जलमापूर्यं, तत्र सोममण्डलं विभाव्य, सपूज्य, सूर्यमण्डलात् अंकुशमुद्रया, ॐ ब्रह्माण्डोद्भवेदरतीर्थानि करैः स्पृष्टानि ते खे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ इति तीर्थानावाह्य, धेनुमुद्रया अमृतीकृत्य । गंगे च इति मन्त्राणां पठित्वा, हुं इति अव गुण्ठ्य चक्रमुद्रां प्रदर्श्य, अस्त्रमुद्रया संरक्ष्य, मैस्तयमुद्रां प्रदर्श्य, मूलेनाष्टवारं अभिमंत्र्य, पुनरस्त्रेण संरक्ष्य कवचेनावगुंठ्य मूलमुच्चरन् तेनोदकेन आत्मानं पूजाद्रव्यं च प्रोक्ष्य, आत्मानं गंधादिभिरलंकृत्य देवता भेदेनात्मानं ध्यायन् पीठपूजामारभेत् ।

पूर्वं लिखित यंत्रं क्वचिन्मनोहरे पीठे संस्थाप्य अर्घ्योदकेनाभ्युक्ष्य । षटकोणे ॐ ओंकारपीठाय नमः । अष्टदले ॐ पूं पूर्णगिरिपीठाय नमः । चतुष्कोणे ॐ कामगिरिपीठाय नमः । इति संपूज्य ।

पूजापीठस्य बहिः चतुर्दिक्षु । पूर्वे ॐ गं गणपतये नमः । दक्षिणे ॐ क्षं क्षेत्रपालाय नमः । पश्चिमे ॐ पां पादुकाभ्यो नमः । उत्तरे ॐ वं वटुकाय नमः । ततः आग्नेय्यादिविदिक्षु । आग्नेये ॐ जं जयाय नमः । नैऋत्ये ॐ वि विजयाय नमः, वायव्ये ॐ जयंत्यै नमः । ईशाने ॐ अ अपराजितायै नमः । इति संपूज्य । पीठस्य चतुर्दिक्षु पूर्वादि प्रादक्षिण्येन सपूज्येत् । पूर्वे ॐ वि विष्णुमायायै चें चेतनायै बुं बुद्ध्यै, नि निद्रायै, क्षुं क्षुधायै । दक्षिणे छां छायायै, रां शक्त्यै, तृं तृष्णायै, क्षां क्षांत्यै, जा जात्यै, लं लज्जायै पश्चिमे, शां शांत्यै, श्रं श्रद्धायै, कां कांत्यै, लं लक्ष्म्यै, धृं धृत्यै, वृं वृत्त्यै उत्तरे । स्मृं स्मृत्यै, दं दयायै, पुं पुष्ट्यै, मां मात्रे, भ्रां भ्रांत्यै ततः नालमुले । आधारादि चतुष्टयं पूजयेत् ऊर्ध्वोर्ध्वक्रमेण ॥

ॐ आं आधाराय, कूं कूर्माय, शें शेषाय, पृं पृथिव्यै, नां नालाय, पं पद्माय । इति संपूज्य ज्ञानामृततृप्तात्मा मंडलार्चनमारभेत् ।

अष्टपत्रे पूर्वादीशानांता पूजा प्रादक्षिण्येन ।

पूर्वे । ॐ ब्रं ब्रह्माण्यै हंसवाहनायै नमः । आग्नेये मां माहेश्वर्यै वृषभारूढायै नमः । दक्षिणे ॐ कौं कौमार्यै मयूरवाहनायै नमः । नैऋत्ये ॐ वैं वैष्णव्यै गरुडोपरिसंस्थितायै नमः । पश्चिमे ॐ यं यज्ञवाराह्यै दंष्ट्रोद्धृतवसुधरायै नमः । वायव्ये ॐ नां नारसिंह्यै महास्वनायै नमः । उत्तरे ॐ ऐं ऐन्द्र्यै गजवाहनायै नमः ईशाने ॐ चां चामुंडायै गणनाथपरिवारायै सदा रुद्रेण संयुतायै मुण्डमण्डितायैनमः ।

ततः षट्कोणदेवीं ब्रह्माणीं कर्णिकास्पर्शि कोणमारभ्य, दक्षावर्तेन, अग्रकोणे । ॐ नं नंदजायै हेम गर्भायै नमः । आग्नेये । ॐ रं रक्तदंतिकायै सुरक्तायै नमः । नैऋत्ये ॐ शां शाकंभर्यै नीलायै नमः । पश्चिमे ॐ दुं दुर्गायै सर्वदुःखहारिण्यै नमः । वायव्य ॐ भीं भीमायै दंष्ट्रांचितमुखायै नीलायै पात्रशिरोधरायै नमः । ईशाने ॐ भ्रां भ्रामर्यै तेजोमण्डलदुर्द्धर्षायै वरदायै नमः । इति सपूज्य ॥ स पुष्पांजलिः षट्कोणकर्णिकामध्यगत प्रथम बीजे, श्रीमहाकाली, रहस्योक्तध्यानरूपां, दशवक्त्रां दशभुजा इत्यादि निस्योतद्गिर दधौ इत्यंतं, स्तुत्या ध्यात्वा, ॐ ऐं महाकाल्यै नमः इति यथालाभोपचारैः सपूज्य । मध्य बीजे, श्रीमहालक्ष्मीं रहस्योक्तरूपां श्वेताननां नीलभुजां इत्यादि कमलासनां इत्यंत ध्यात्वा ॐ ह्रीं महालक्ष्म्यै नमः इति संपूज्य । कामबीजें श्रीमहासरस्वतीं, रहस्योक्त, दधौचाष्टभुजा इत्यादि वसुधाधिप इत्यंतं ध्यात्वा ॐ क्लीं महासरस्वत्यै नमः इति संपूजयेत् । श्रीमहालक्ष्म्या वामभागे छिन्नशीर्षं महिषं ध्यात्वा ॐ मं महिषाय नमः इति गंधादि नैवेद्यान्त ोपचारैः सपूज्य । दक्षभागे सिंहं ध्यात्वा ॐ सिं सिंहायनमः इति पूर्ववत् सपूज्य, संतर्प्य यंत्राग्रे सर्वोत्तमं पीठं संस्थाप्य, तत्र रक्तवस्त्रतूलिकादि समास्तीर्य तन्मध्ये पुष्पं दत्वा, योगमुद्रया श्रीमहालक्ष्मीं मध्य बीजे चिरं ध्यात्वा तथा मंडलस्य सर्वशक्तिभ्य, ऐक्य विभाव्य मंडलात्पीठे समाह्वयेत् । मूले श्रीमहालक्ष्मि एह्येहि अ गच्छ २ सन्निधि कुरु २ । ॐ महापद्मवनांतस्थे . . . सान्निध्यं कुरु सिद्धिदे इति मंत्रद्वयेण मूलमुच्चार्य पीठे पुष्पांजलिं क्षिपेत् । तत्र आवाहनी मुद्रां प्रदर्श्य, ॐ देवेशि भक्तसुलभे सर्वावरणसंयुते । यावत्वां पूजयिष्याभि तावत्वं सुस्थिरा भव । इति प्राथ्यं । मूलमुच्चार्य श्रीमहालक्ष्मि इह तिष्ठ तिष्ठ इति संस्थापिनीमुद्रां प्रदर्श्य ।

मूलं श्री महालक्ष्मि इह सन्निधेहि २ इति संविधापनमुद्रया संविधाय। मूलं श्रीमहालक्ष्मि इह संनिरुद्धो भव इति संनिरोमुद्रया संनिरुध्य। मूलं श्रीमहालक्ष्मि इह संमुखी भव। इति संमुखीकरणमुद्रया संमुखीकृत्य। मूलं श्रीमहालक्ष्मि इह अवगुण्ठिताभव। इति अवगुण्ठनमुद्रया अवगुण्ठय ॥

श्रीदेव्यङ्गे षडंगानि विन्यस्य। मूलं श्रीमहालक्ष्मि सकलीकृता भव। इति उक्त्वा। पुनः मूलं श्रीभगवत्यमृतीकृता भव इति देव्या शिरसि धेनुमुद्रां प्रदर्श्य, अमृतवृष्टिं संचिन्त्य। पुनः मूलं श्रीभगवति परमीकृताभव। इति परमीकरणमुद्रां बद्धा परमामृतमयीं भावयेत्। इति नवमुद्रां प्रदर्श्य अर्घ्योदकेन देवीं संप्रोक्ष्य, लेलिहानमुद्रया

आं ह्रीं क्रों श्रीमहालक्ष्म्या प्राणाः इहप्राणाः

" " जीव इह स्थितः

" " सर्वेन्द्रियाणि इहस्थितानि

" " वाक्... प्राणाः इहागत्य सुखं चिरं तिष्ठंतु स्वाहा। इति प्राणान् प्रतिष्ठाप्य। अक्षमाला, कमल, बाण, खड्ग, वज्र, गदा, चक्र, त्रिशूल, परशु शंख, घण्टा, पाश, शक्ति, धर्म, चाप, पानपात्र, कमंडलु, इत्यष्टादशमुद्राः प्रदर्श्य। मूलं श्रीमहालक्ष्म्यै नमः एतत् पाद्यं नमः। पाद्यद्रव्यैः। श्यामाक दूर्वा अब्ज, विष्णुक्रांतिमिश्रित जलं। मूलं इदमर्घ्यं स्वाहा ॥ इति पुष्पाक्षतगंधयुतजलेन ॥ धेनुमुद्रां प्रदर्श्य। मूलं इदमाचमनीयं, जातीलवंगक, कङ्कोलैर्मिश्रितजलेन। मूलं एष मधुपर्कः श्रीमहालक्ष्म्यै वं इति आज्य, दधिमध्वात्मकं। पुनराचमनीय। पूर्ववत् ॥ मूलं श्रीमहालक्ष्म्यै इदं स्नानीयं नमः। इति सर्वांगें सुगंधतैलेभ्यज्य, सुगंधामलकादि-नोद्वर्त्य, शुद्धजलैः स्नापयित्वा पंच मृतैरभिषिच्य, पुनः नानातीर्थजलैरभिषिच्य पूर्ववत् आचमनं, दत्वा, योनिमुद्रां प्रदर्श्य, मूलं इमानि वस्त्राभरणादीनि श्रीमहालक्ष्म्यै निवेदयामि नमः इति दत्वा पुनराचमनीयं।

मुलं श्रीमहालक्ष्म्यै नमः गंधं समर्पयामि इति चंदनकर्पूरकालागरु-आत्मकं गंधं मध्यमानामांगुष्ठेन शिरसि दद्यात्। मूलं श्रीमहालक्ष्मी इमानि पुष्पाणिवौषट्। इति पुष्पाणि शिरसि। ततः मूलेन उत्तमांग हृदाधारपादसर्वांगेषु। पंच पुष्पांजलीन्दत्वा तथैव पुष्पमालामपि समर्प्य, धूप दीपौ दद्यात् ॥

धूप माजनं अस्त्रेण प्रोक्ष्य नमः इत्यभ्यर्च्य, मूलांते श्रीमहालक्ष्मि एषते धूपो नमः इत्युसृज्य, ॐ जयध्वनि मंत्रमातः स्वाहा इति वामभागस्थितां घंटां संपूज्य वामहस्तेन वादयन् मूलं गायत्रीं चोच्चरन् त्रिधोत्तल्य श्रीदेवीं धूपयित्वा देव्या वामे स्थापयेत् एवं मूलं श्रीभगवति एषते दीपं नमः इति दीपं समर्प्य देव्या दक्षिणे स्थापयेत्। उत्तरांगस्तु सर्वेषामर्घोदकेन कार्यः। अथ नैवेद्य देव्याः पुरतः त्रिकोण वृत्तचतुरस्रमंडलं कृत्वा, ॐ ह्रीं आधार शक्तयेनमः इति संपूज्य तदुपरि नैवेद्यपूरितपात्रं संस्थाप्य, अस्त्रेण संरक्ष्य चक्रमुद्रां प्रदर्श्य, यं इति दशवार जपेन तद्दोषान् संशोष्य, रं इति दशवारजपेन दोषान् संदह्य, वं इति दशवारजपेन धेनुमुद्रया अमृती कृत्य मूले-नाभिमंत्रस्य नमः इति तत्र पुष्पं दत्वा मूलांते इदं नैवेद्यं श्रीमहालक्ष्म्यै नमः इति निवेद्य। ॐ अमृतोपस्तरणमसि स्वाहा इति आपोशनं दत्वा, वामहस्तेन ग्रासमुद्रां बद्ध्वा, दक्षिणहस्तेच प्राणादिपंच मुद्राः प्रदर्शयेत्। प्राणाय स्वाहा इति कनिष्टानामांगुष्ठ संयोगः।

अपानायस्वाहा—तर्जनीमध्यमांगुष्ठैः संयोगो ।

व्यानायस्वाहा—मध्यमानामांगुष्ठैः ।

उदानायस्वाहा—तर्जनी मध्यमानामांगुष्ठैः ।

सामानायस्वाहा—सर्वांगुलीभिः ॥ मध्ये मध्ये पानीयं समर्प्य, देवीं भुञ्जानां ध्यात्वा । उत्तरापोशनं दत्वा । हस्तप्रक्षालनं, गंडूषं, पुराचमनीयं दत्वा, तांबूलं अंगीकृत्य, मूलेनाभिमंत्र्य तदुपरि पुष्पं निधाय वामहस्तकच्छपमुद्रया स्पृशन् दक्षिणोर्ध्वादिकेन मूलं इदं, तांबूलं श्रीमहालक्ष्म्यै निवेदयामि इति निवेद्य, श्रीदेवीं सुप्रसन्नां विभावयेत् ॥

ततः प्रणवेन प्राणायामं । नवार्णमंत्रास्य ऋष्यादीन्स्मृत्वा यथासंकल्पं जपं विधाय सरहस्यत्रयेण श्रीचंडिकां सप्तशतमंत्रेण स्तुत्वा, पायसेन तिलसर्पिषाच दशांशं हुत्वा नवार्णेनापि हुत्वा अंते श्रीदेवीं ॐ नमो देव्यै महादेव्यै इति मंत्रेणापि हुत्वा ऋतुभिः फलैरपि हुत्वा, जपं च होमं च श्रीदेव्यै समर्प्य, देवीं प्रणम्य, शूलेन पाहि इति चतुर्भिः मंत्रैः प्रदक्षिणं कृत्वा, श्रीचंडिकाध्यानतत्परः आसने स्थित्वा कृतांजलिः ॐ सर्वस्वरूपे इत्यादि लोकानां वरदाभव इत्यन्तमंत्रैः प्रणम्य संप्रार्थ्य, मनोवांछितं श्रीदेव्यै निवेद्य संहारमुद्रया, श्रीदेवीं स्वहृदयकमलमानयेत् ॥

ततो अर्घ्यपात्रमुत्थाप्य ॐ गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि । यत्र ब्रह्मादयो देवा न विदुः परमं परम् । इति विसृजेत् । निर्माल्यं पवित्रदेशे निःक्षिप्य सुखं विहरेत् ॥

इति खिलमार्कण्डेय क्रमेण, श्री सप्तशतीसर्वस्व ग्रन्थोक्त श्रीचण्डिकाराधनक्रमः ॥

काम्य पूजाक्रमे मूलमंत्र जपदशांश संख्या होमं ॥ तर्पणं मार्जनं ॥

## ॥ श्रीचण्डी नवाक्षरी मन्त्रः ॥

अस्य मंत्रस्य । ब्रह्मविष्णुरुद्रा ऋषयः । गायत्र्युष्णिगनुष्टुप्छन्दांसि । श्रीमहाकाली महालक्ष्मी महासरस्वत्यो देवताः । रक्तदंतिका दुर्गाभ्रामर्यो बीजानि । नंदाशाकंभरी भीमा शक्तयः । अग्निवायुसूर्यास्तत्वानि ।

न्यासः । १ ऐं । २ ह्रीं । ३ क्लीं । ४ चामुण्डायै । ५ विच्चे । ६ ऐं...विच्चे ।

ध्यानम्:--

या देवी मधुकैटभप्रशमनी या माहिषोन्मूलिनी
या धूम्रेक्षण चण्डमुंडदमनी या रक्तबीजाशनी ।
या शुम्भादिनि शुंभदैत्य शमनी या सिद्धलक्ष्मीः परा
सा चण्डी नवकोटि शक्ति सहिता मां पातु विश्वेश्वरी ॥

मातर्मे मधुकैटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्मित धूम्रलोचनवधे हे चण्डमुण्डार्दिनी ।
निश्शेषीकृतरक्तबीजदनुजे नित्ये निशुंभापहे
शुंभध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ॥

मनुः ऐं ह्रीं क्लीं चामुंडाये विच्चे ॥

अपरः--अस्य मन्त्रस्य श्रीमार्कण्डेयो भगवान् ऋषिः । अनुष्टुप् छन्दः ।

श्री चामुंडेश्वरी देवता । ऐं बीजं । ह्रीं शक्तिः । क्लीं कीलकं । शेषं पूर्ववत् ॥

## नवार्ण महामन्त्रस्वरूपं ॥

ॐ ऐं ह्रीं क्लीं महादुर्गे नवाक्षरि नवदुर्गे नवात्मिके नवचण्डीमहामाये महोत्साहे महायोगनिद्रे जये मधु कैटभविद्राविणि महिषासुरमर्दिनि धूम्रलोचनसंहंत्रि चण्डमुण्डविनाशिनि रक्तबीजांतके निशुंभध्वंसिनि शुंभदर्पघ्नि देवि अष्टादशाबाहुके कपालखट्वांगशूलखड्गधारिणि छिन्नमस्तकधारिणि रुधिरमांसभोजिनी, समस्त भूतप्रेतादियोगध्वंसिनि ब्रह्मेन्द्रादिस्तुतेदेवि मां रक्ष २ ममशत्रून् नाशय २ ह्रीं फट् हूं फट् ॐ ऐं ह्रीं क्लीं चामुंडायै विच्चे ॥

अस्य मन्त्रस्य, ऋषि, न्यासादिकंसर्व नवार्णमालामन्त्रवत् ॥

ध्यानम्:--

अरुणकमलसंस्था तद्रजःपुंजवर्णा
करकमलधृतेष्टाभीतियुग्मांबुजा च ।
मणिमकुटविचित्रालंकृताकल्पजातै
भवतु भुवनमाता संततं श्रीः श्रिये नः ॥

इन्दुप्रख्यामिन्दुखण्डार्धमौलिं शंखाभीष्टाभीतिहस्तां त्रिनेत्राम् ।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां देवीं दुर्गां दिव्यरूपां नमामि ॥

पंचाशद्वर्णभेदैर्विहितवदनदोः पादहृत्कुक्षिवक्षो-
देशां भास्वत्कपर्दाकलित शशिकलामिंदुकुंदावदाताम् ।
अक्षस्रक् कुंभचिंतालिखित वरकरां, तीक्ष्णपद्मासनस्थां,
अच्छाकल्पामतुच्छस्तनजघनपदां भारतीं तां नमामि ॥

इति ध्यात्वा, नवार्णवत् पीठमावरणपूजां च कृत्वा जपं कुर्यात् । अस्य सम्पुटित पाठहोमेपि आहुति संख्या सप्तशत्यैव ॥

## ॥ दीपदुर्गा ॥

अस्य मन्त्रस्य । कश्यपब्रह्मा ऋषिः । बृहती छन्दः श्रीदीपदुर्गा देवता ।

ॐ बीजं । स्वाहा शक्तिः । फट् कीलकं ॥ क्रों, ह्रीं, आं, आं ह्रीं क्रों, इति न्यासः ।

**दीपदुर्गे महादेवि अत्याश्चर्य स्वरूपिणि ।
दीपाकृते दिव्यदेहे वद सर्वं जगन्मय ॥**

मनुः । ॐ क्रों ह्रीं आं दुर्गे ह्रीं एह्येहि आवेशय २ ह्रीं दुं दुर्गे आं ह्रीं क्रों ॐ हुं फट् स्वाहा ॥

## ॥ चामुण्डा मन्त्रपूजा प्रयोगः ॥

**ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ॥**

मं मंडूकादि...नमः ॥ नवपीठशक्तीः पूर्वादिक्रमेण । जया, विजया, अजिता, अपराजिता, नित्या, विलासिनी, दोग्ध्री, अघोरा, मंगला ।

यन्त्रं । त्रिकोण षटकोण, अष्टदल, चतुर्विंशतिदल, चतुः षष्टिदल भूपुरं चतुर्द्वारयुतं ॥ ॐ ह्रीं वज्र-नखदंष्ट्रायुधाय महासिंहाय फट् इति पुष्पाद्यासनं ॥

१. त्रिकोणस्य पूर्वकोणे । ब्रह्मासरस्वती, नैरृते विष्णुर्लक्ष्मीः । वायव्ये, शंकरः पार्वती ॥

२. देव्युत्तरे, सिंहः देव्याः दक्षिणे महिषः ॥

३. षट्कोणकेसरेषु प्राच्यादि वामावर्तेन । नन्दजा, रक्तदन्ता, शाकम्भरी, दुर्गा, भीमा, भ्रामरी ।

४. अष्टदलेषु प्राचीक्रमेण । ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, नारसिंही, ऐंद्री चामुंडा ॥

५. चतुर्विंशति पत्रेषु ॥ विष्णुमाया चेतना च बुद्धिर्निद्राक्षुधा तथा । छाया शक्ति परा तृष्णा क्षांति-जातिश्च लज्जया । शांतिः श्रद्धा कीर्तिलक्ष्मी धृतिर्वृत्तिः श्रुतिः स्मृतिः । दयातुष्टि स्ततः पुष्टिस्तथा भ्रांतिरिति क्रमात् ॥

६. चतुः षष्टिदले प्राच्यादि वामावर्तेन ॥ जया च विजया चैव जयन्ती चापराजिता । दिव्ययोगी महा-योगी सिद्धयोगी महेश्वरी । प्रेताशी डाकिनी काली कालरात्रि स्तथैव च । टंकाक्षीरौद्रि वेताली हुंकारी चोर्ध्वके-शिनी ।विरूपाक्षी च शुष्कांगी नरभोजनिका तथा । फट्कारी वीरभद्राच धूम्रांगीकलहप्रिया । राक्षसी घोररक्ताक्षी विश्वरूपा भयंकरी । चण्डमारी च चण्डा च वाराही मुंडधारिणी । भैरवी च तयोर्ध्वाक्षी दुर्मुखी प्रेतवाहिनी ॥ खट्वांगीचैव लंबोष्टी मालिनी मत्रयोगिनी । कालीरक्ता च कंकालीतथा च भुवनेश्वरी ॥ त्रोटकी च महामारी यमदूती करालिनी । केशिनी दमनी चैव रोमगंगा प्रवाहिनी । बिडाली कामुकालाक्षी जयाचाधोमुखी तथा । मुंडाग्रधारिणी व्याघ्री कांक्षिणी प्रेतभक्षिणी धूर्जटी विकटा घोरी कपाली विषलंबिनी । चतुष्षष्टिस्तु योगिन्यः पूजनीयाः प्रयत्नतः ॥

७. भूपुराभ्यन्तरे आग्नेय्यादि चतुर्दिक्षु गं गणेशाय, क्षं क्षेत्रपालाय,

८. भूपुरे । इन्द्रादि दशदिक्पालाः ।

९. " वज्राद्यायुधानि ॥

## दुर्गा पूजाविधानं ॥

ॐ ह्रीं दुं दुर्गा यै नमः

मं मण्डूकादि...नमः । नवपीठशक्तीः पूर्वादिक्रमेण ।

प्रभा, माया, जया, सूक्ष्मा, विशुद्धा, नन्दिनी, सुप्रभा, विजया सर्वसिद्धिदा ॥

ॐ ह्रीं वज्रनखदंष्ट्रायुधाय महासिंहाय फट् इति पुष्पाद्यासनं ॥

यन्त्रं ॥ श्रीचक्रं चतुर्द्वारशोभित भूपुरं, अष्टदलं, पंचदल वर्तुलद्वयांतरं तदन्ते ।

१. भूपुराभ्यन्तरे पूर्वादिचतुर्दिक्षु वामावर्तेन । ॐ ह्रीं दुं गं गणेशाय, ॐ ह्रौं कुमाराय, ॐ प्रीं पुष्प-दन्ताय, ॐ वें विकर्तनाय इति द्वारपालान् ॥

२. वर्तुलाद्बहिरष्टदलेषु प्राच्यादि वामावर्तेन । ब्राह्मी, नारायणी, चामुंडा, अपराजिता माहेश्वरी, कौमारी वाराही, नरसिंही ।

३. तैःअष्टदलाग्रेषु । प्राची क्रमेण वामावर्तेनत्र च । असितांग भैरव, रुरु, चण्ड, क्रोध उन्मत्त, कपाल, भीषण, संहार भैरवान् पूजयेत् ॥

४. ततः नवकोणे, देव्याः दक्षाग्रकोणादारभ्य वामावर्तेन । शैलपुत्री, ब्रह्मचारिणी, चण्डघण्टा, कूष्मांडा स्कंदमाता, कात्यायनी, कालरात्री, महागौरी, सिद्धिदा ॥

५. वृत्ते पूर्वादिक्रमेण वामावर्तेन । अंबिका, अष्टाक्षरा, अष्टभुजा, नीलकण्ठा, जगदंबिका ।

६. तद्बहिर्वृत्ते प्राचीक्रमेण वामावर्तेन । शङ्ख, पद्म, खड्ग, बाणाः, धनुः खेटक, शूल, तर्जनी ॥

७. भूपुरे । इन्द्रादि दशदिक्पालाः ततः वज्राद्यायुधानि च पूजयेत् ॥

## दुर्गा अष्टाक्षरी पूजा आवरणदेवताः ॥

यन्त्रं ॥ चतुर्द्वारं त्रिवृत्तं, अष्टदलं, वृत्तं, षडस्रं, त्रिकोणं, विन्दु ॥

पीठपूजा ॥ ॐ ह्रीं मण्डूकाय, कालाग्निरुद्राय, मूलप्रकृत्यै, आधारशक्त्यै कूर्माय, अनन्ताय, वराहाय, पृथिव्यै इत्युपर्युपरि । सुधार्णवाय नमः मध्ये ॥

नवरत्न विराजित नवखण्डमयद्वीपाय, पद्मरागखण्डाय, स्वर्ण गिरये, नन्दनोद्यानाय, कल्पवनाय, पद्मवनाय, विचित्ररत्नखचित भूमिकायै, चिन्तामणिमण्डपाय, नवरत्नखचितवेदिकायै, रत्नसिंहासनाय, तन्मध्ये सहस्रारपद्माय, प्रकृतिमयपत्रेभ्यो, विकृतिमयकेसरेभ्यो, तन्मध्ये अष्टबीजविभूषितकर्णिकायै, तत्पार्श्वे धर्माय, ज्ञानाय, वैराग्य ऐश्वर्याय, वामतः अधर्माय, अज्ञानाय, अवैराग्याय, अनैश्वर्याय, मध्ये सं सत्वाय, रं रजसे, तं तमसे, मूलंउच्चार्य महिषासनाय, मूलं मातृकाश्च उच्चार्य श्रीयोगपीठाय नमः ॥

१. चतुरश्रे ॥ ॐ ह्रीं दुं सर्वसिद्धिप्रदचक्राय नमः । पूर्वे ३ गणेशाय, ३ ह्रीं कुमाराय, दक्षिणे श्रीं पुष्पदन्ताय, वैं विकर्तनाय, पश्चिम उत्तर भागौ

२. ३ असितांग भैरवयुत ब्राह्मी, रुरु भैरवयुत नारायणी, चण्डभैरवयुत चामुण्डा, क्रोधेशभैरवयुत अपराजिता, ३ उन्मत्तभैरवयुत माहेश्वरी, कपालि भैरवयुत कौमारी, भीषणभैरवयुत वाराही, संहारभैरवयुत नारसिंही । इतिवामवर्तेन ॥

३. षट्कोणे ॥ ३ सर्वाशापरिपूरक चक्रायनमः ॥ वामावर्तेन ॥ ३ शैल पुत्री, ३ ब्रह्मचारिणी ३ चण्ड-घण्टा, ३ कूष्मांडा, ३ स्कन्दमाता, ३ कात्यायनी ॥

४. त्रिकोणे ॥ अग्र, ईशान आग्नेये ॥ ३ सौभाग्यप्रद चक्रायनमः ॥ ३ कालरात्री, ३ महागौरी, ३ देवदूती ॥

५. बिन्दौ । ३ अष्टसिद्धिप्रद चक्रायनमः । मूलमुच्चार्य श्रीनीलकण्ठ श्री दुर्गां (सप्तवारं)

६ बिन्दूपरि । मूलं अंबिका, अष्टाक्षरा, अष्टभुजा, नीलकण्ठ, जगदम्बिका ॥

७ बिन्दूपरि । शङ्खाय, पद्माय, खड्गाय, बाणेभ्यो, धनुषे, खट्वायै, शूलाय, तर्जन्यै, ततः मूलेन सप्तवारं ॥

## दुर्गेस्मृता मन्त्र प्रयोगः ॥

मन्त्र ॥ ॐ नवक्षरि, ॐ ह्रीं श्री क्लीं कांस्तेस्मिता हिरण्य प्राकारामार्द्रां ज्वलंतीं तृप्तां तर्पयन्तीं, पद्मेस्थितां पद्मवर्णां तामिहोपह्वयेश्रियं ।

ॐ ह्रीं श्रीं क्लीं, ॐ ह्रीं श्रीं क्लीं, दुर्गे स्मृता हरसिभीति मशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि । यदन्ति यच्च दूरके भयं विन्दति मामिह । पवमान वितज्जहि । दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकार करणाय सदार्द्रचित्ता ॐ ह्रीं श्रीं क्लीं, ॐ ह्रीं श्रीं क्लीं कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलंतीं तृप्तां तर्पयन्तीं । पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियं । ॐ ह्रीं श्रीं क्लीं चामुण्डायै विच्चे ॥

अस्य मन्त्रस्य । हिरण्यगर्भऋषिः । उष्णिक् छन्दः । श्री महामायादेवता । ॐ शाकंभरी शक्तिः । दुर्गा बीजं । श्रीं वायुस्तत्वं विनियोगः ।

१ ॐ दुर्गेस्मृता...जन्तोः अंगुष्टा
२ स्वस्थैस्मृता...ददासि तर्जनी
३ यदंति...मामिह–मध्यम
४ पवमानवितज्जहि–अनामिका
५ दारिद्र्य...त्वदन्या–कनिष्टिका
६ सर्वोपकार...चित्ता–करतल

एवं हृदयादि ।

**ध्यानम्ः—**

**केनोपमा भवतुतेऽस्य पराक्रमस्य**
**रूपं च शत्रुभयकार्यतिहारि कुत्र ।**
**चित्तेकृपा समरनिष्ठुरताच दृष्टा**
**त्वय्येव देवि वरदे भुवनत्रयेपि ॥ पंचपूजा ॥**

महत्कार्ये लक्षमयुतं, सहस्रमष्टोत्तरशतं जप्त्वा, सकलकार्यसिद्धिर्भवति दशांशक्षीराज्यहवनं, दशांशतर्पणं मार्जनं ब्राह्मण भोजनं च कुर्यात ॥

## जयदुर्गामन्त्रः

अस्य मन्त्रस्य । मार्कण्डेय ऋषिः । बृहतीछन्दः । श्रीजयदुर्गादेवता । ॐ बीजं स्वाहा शक्तिः । रक्षिणीति कीलकं । १ ॐ । २ दुर्गे । ३ दुर्गे । ४ रक्षिणि । ५ स्वाहा । ६ समस्त मन्त्रेण च ।

**कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां,**
**शंखं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहंतीं त्रिनेत्रां ।**
**सिंहस्कंधाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्तीं,**
**ध्यायेद्दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥**

मनुः ॐ दुर्गे दुर्गे रक्षिणि स्वाहा ॥

## ।। सप्तशती कामनापरत्वेन कात्यायनी तन्त्रोक्त प्रयोगाः ।।

१. प्रतिश्लोकं आद्यंतयोः प्रणवसंपुटितेन जपेन मन्त्रसिद्धिः ।

२. प्रणवं व्याहृतित्रयं श्लोकादौ जपेन् मन्त्रसिद्धिः ।

३. सप्तव्याहृतिसंपुटितं जपेन् मन्त्रसिद्धिः ।

४. सप्तव्याहृतिकां गायत्रीं आदावन्ते जपेत् महाफलं ।

५. प्रतिश्लोकं व्याहृतित्रययुतां गायत्रीं जपेत् महाफलं ।

६. प्रतिश्लोकमादावन्ते जातवेदस इति ऋचं जपेत् सर्वकामसिद्धिः ।

७. शताक्षर त्र्यंबकमन्त्रं संपुटीपारायणेन अपमृत्युनिवृत्तिः ।। एतत्पारायणेन, रोगारिक्षय मृत्यून्मूलनमभीप्सितं भवति ।। अपिच, सर्वापदनिवारणं ।। गायत्री, जातवेदसे, त्र्यंबकेति शताक्षरः ।।

८. ११/१२ प्रतिश्लोकं शरणागतदीनार्त संपुटीकरणेन सर्वकार्यसिद्धिः ।

९. प्रतिश्लोकं ।। करोतुसा नः (देवीस्तवे २९) शुभेत्यर्धं पठेत्सर्वकामाप्तिः ।।

१०. एवंदेव्यावरं लब्ध्वेतिश्लोकं पठेत् स्वाभीष्टवरप्राप्तिः ।

११. सर्वापन्निवारणाय दुर्गेस्मृतेति (४/१७) श्लोकं पठेत् ।

१२. अस्यश्लोकं कार्यानुसारेण, केवलजपेन लक्षं अयुतं, सहस्रं, अष्टोत्तरशतं वा जपेत् ।।

१३. केवल । सर्वाबाधा इत्यस्य लक्षजपे, श्लोकोक्तं फलं ।

१४. इत्थ यदा इति श्लोकस्य लक्षजपे महामारीशांतिः ।

१५. ततो वव्रे नृपोराज्यमितिमन्त्रस्य लक्षजपे पुनः स्वराज्यप्राप्तिः ।

१६. हिनस्तिदैत्यतेजांसि इत्यनेनसदीपावलीदान घण्टाबन्धनेच बालग्रह शांति ।

१७. आद्यावृत्तिमनुलोमेन, ततः विपरीतक्रमेण, पुनः अनुलोमेन एवं आवर्तित्रयें ।

१८. सर्वापत्तिनिवाराणय दुर्गेस्मृतेत्मर्धं, ततो यदंति यच्चदूरके इत्यऋचं तदन्ते दारिद्र्यदुःखेत्यर्धं, एवं कार्यानुसारेण लक्षमयुतसहस्रशतंवा जपः ।

१९ कांसोस्मि इति ऋचं संपुटन लक्ष्मी प्राप्तिः ।

२०. प्रतिश्लोकं अनृणा अस्मिन् इति ऋचं पठेत् ऋणपरिहारः ।

२१. मारणार्थं एवमुक्त्वा समुत्पत्येति, प्रतिश्लोकं मारणोक्त आवृत्तिः पठेत् ॥

२२. ज्ञानिनामपि चेतांसि इतिश्लोक जपमात्रेण मोहनमेतन्नम व सिद्धं ॥

२३. रोगानशेषानिति प्रतिश्लोक पाठे रोगनाशः । केवल श्लोक जपमपि कुर्यात् ।

२४. इत्युक्त्वा सा तदा देवि गंभीरेति प्रतिश्लोकं पाठे, पृथक् पृथक् जपेन विद्याप्राप्तिः । वाग्वैकृत-नाशश्च ॥

२५. भगवत्या कृतं सर्वमित्यादि द्वादशोत्तरशत मन्त्रः सर्वकामदः सर्वापन्निवृत्तिदश्च ॥

२६ देवि प्रपन्नार्तिहरे त्यस्य मन्त्रस्य यथाकार्यं लक्षमयुतं सहस्रं, शतं जपे प्रतिश्लोकपाठेवा सर्वा-पन्निवृत्ति सर्वकामाप्तिश्च ॥

एषु प्रयोगेषु, जपं, दीपाग्रे, केवलमेव वा, नमस्कारेण च शीघ्रसिद्धि ॥

२७ प्रतिश्लोकं क्लीं (क्लीं) इति कामराज बीज संपुटेन एवं चत्वारिं शद्दिनं त्रिरावृत्तौ पुत्रप्राप्तिः ॥

२८ एकविंशतिदिनपर्यंतं उक्तरीत्या प्रत्यहं दशावृत्त्या वशीकरणं ।

२९ माया बीज (ह्रीं) पुटितस्य फट् पल्लवमंदितस्य सप्तदिनपर्यंतं त्रयोदशावृत्तौ उच्चाटनं ॥

३० तादृशस्यैव दिनचतुष्टयं एकादशावृत्तौ सर्वोपद्रवनाशः ।

३१ एकोनपंचाशद्दिनपर्यंतं प्रतिश्लोकं श्री बीज (श्रीं) संपुटितस्य पंचदशावृत्तौ लक्ष्मी प्राप्तिः ॥

३२ प्रतिश्लोकं ऐं बीज संपुटितस्य शतावृत्त्या विद्याप्राप्तिः ॥

अथकामनाभेदेन ध्यान भेदः

वश्ये रक्ततरं । पौष्टिके कर्बुरं । उच्चाटने धौम्रं । मारणे कृष्णं । सन्तानेच्छया नीलोत्पलश्यामं सर्वकामनायां रक्ताकारं ।

३३ वश्ये विशेषः । ॐ रक्तचामुण्डे तुरु तुरु अमुकं मे वशमानयस्वाहा । अनेन प्रत्यध्यायं आद्यंतयोः पूजा । सप्तशति अयुतं जपः । अयुत जपमन्त्रेण । होमयेत्कटुतैलेन रक्तचन्दन राजिकाः । सहस्राहुतिमात्रेण वशमानयेत् ॥

मधुनाऽशोकपुष्पैश्च रात्रौ हुत्वातु पूर्ववत् । चक्रवर्ती भवेद्वश्यो चण्डीमन्त्र प्रभावतः ॥ अन्तेशतं ब्राह्मणाः कुमार्यश्च भोजनीयाः ॥

३४ अपरञ्च नवार्णस्य बिल्वमूले मासं जपः । बिल्वदलैः मधुत्रय संयुतैर्होमः । तत् दशांशेन क्षीर-संयुतैः कमलैः होमे लक्ष्मी प्राप्तिः । सफलोयं प्रयोगः ।

ईदृशस्थले नमोदेव्यै इत्यादि मन्त्रेणैव दशांशेन होमः कार्यं इति संप्रदायः ॥

॥ प्रथम चरित्रं ॥

३५ प्रणवं पूर्वमुच्चार्य बीजतत्वं समुच्चरेत् । ततः श्लोकं पठित्वातु श्लोकांते पूर्ववज्जपेत् ॥ अनुलोमं प्रतिलोमं रक्तदंतिका बीजस्य । ॐ ह्सौं नमः– मः न ह्सौं ॐ ॥ बीजतत्वं इति । अनन्तभद्रं भुवनमिंदुबिंदु युगान्वितं । पराबीजमिति ज्ञेयं नाल्पस्य तपसः फलं ॥ चन्द्रबीजं सुचन्द्राय ह्सौं बीजं सुसंस्थितं । एतत्परात्परं तत्वं येन सिद्ध्यतिचोत्तमः ॥ बिनाबीजं महास्तोत्रं न सिध्यति कदाचन । तस्मात्सर्वप्रयत्नेन बीजयुक्तं सदा जपेत् । प्रथमचरित्रे ऋष्यादिकमुच्चार्य पराबीजेन षडंगं इति ॥ नवमुद्रां प्रदर्शयेत् ॥

३६ मध्यचरित्र ॥ प्रणवपूर्वक मायाबीज संपुटितेन जपेत् ॥ ॐ ह्रीं नमः । मः नः ह्रीं ॐ इति ॥ मायाबीजेन षडंगन्यासं । अष्टादशमुद्राः प्रदर्श्य ततः संपुटितेन जपेत् ॥

३७ उत्तमचरित्रं । प्रणवपूर्वक काम बीज संपुटितेन जपेत् । ॐ क्लीं नमः । मः न क्लीं ॐ । ३५, ३६, ३७, चरित्रत्रयप्रयोगाः ॥

३८ पुत्रकामनया एकचत्वारिंशद्दिनपर्यंतं कामबीज संपुटितं प्रत्यहं त्रिरावृत्तिः ।

३९ वश्यार्थे एकविंशद्दिनपर्यंतं कामबीजसंपुटितं प्रत्यहं पंचावृत्तिः ।

४० आकर्षणार्थे द्विचत्वारिंशद्दिनपर्यंतं कामबीजपुठितं प्रत्यहं दशावृत्तिः ।

४१ उच्चाटनार्थे त्रिसप्तदिनपर्यंतं मायापुटितं फट् पल्लवेन आवृत्तिः ।

४२ सर्वोपद्रवनाशनार्थे चतुश्चत्वारिंशद्दिनपर्यंतं मायादौ कूर्चबीजेनपुटितं एकादशावृत्तिः ।

४३ द्रव्यकामार्भैरमाद्यतं नवचत्वारिंशद्दिनपर्यंतं द्विरावृत्तिः ।

४४ ,, शीघ्रकार्य सिद्धचर्ये नवचण्डी विधानं ॥

आदौ अनुलोमं त्रयोदशाध्यायान् पठित्वा, पश्चात् विलोमेन पठित्वा, पुनः शापोद्धारवत् पठित्वा, एवंक्रमेण प्रत्यहं नवचण्डीं कुर्यात् ॥

अल्पकार्ये नवदिनं, मध्यकार्ये एकविंशतिदिनं, महत्कार्ये त्रयस्त्रिंशद्दिनंपर्यंतं मन्त्रसिध्यनन्तरं जपेत् ॥

जपांते पायसतिलाज्य मधु पुष्परस जाती फत्र फल यवव्रीहि सितशर्करायुतैः दशांशेन नवार्णपीठयुते अग्नौ जुहुयात् । तद्दशांशेन हरिद्राकुंकुमजलेन तर्पयेत् । तद्दशांशेन पायसलड्डुकपंचकाद्यै मार्जयेत् । पंचखाद्यानि यथाप्रियाल, खण्ड, कर्जूर, नारिकेल, गोक्षीरं इति ॥ एवं कृते शीघ्रकार्य सिद्धिः ॥ प्रतिमन्त्रं प्रणवपुटितं जपेत् । अत्र न मार्जनं ॥

शापोद्धारपाठ क्रमं ॥ त्रयोदशाध्यायं पटित्वा, ततः द्वादशद्वितीयौ, एकादशतृतीयौ, चतर्थदशमौ, पंचम नवमौ, षष्टाष्टमौ, सप्तमंद्विवारं इति ॥ उत्कीलनं ॥ प्रथमं मध्यमचरितं पठित्वा, ततः प्रथम तृतीयौपठनं उत्कीलनंमिति पुरातनमहर्षिभिरुक्तउत्कीलन ॥

कीलकं मध्यमादौ च पश्चात्कवचमेवच । प्रथमं चरितंजप्त्वा ततश्चरितमुत्तमं ।

तत। परंचार्गलां च कीलकं च ततः परं । एवमुत्कीलनं प्रोक्तं पुरातन महर्षिभिः ॥

४५ व्यस्तसमस्त व्याहृत्यनुलोम प्रतिलोमेन प्रणव पुटितं जपेत् शीघ्रकार्यसिद्धिः । अत्र त्रिमध्वाक्तिम- लैर्होमः । विप्रतीर्थतोयै र्वा, ब्राह्मण भोजनांते मार्जनं ।

४६ श्रीबीजयुतेन सद्योमोहनसिद्धिः ।

४७ मायाबीजेन सर्वेष्टसिद्धिः ।

४८ मम वैरि वशं यातः इति मन्त्रेण, संपुटित पाठेन श्लोकोक्तफलं ।

४९ इत्यं निशम्य देवानां श्लोकं त्रिशतसहस्रंजपेन संपत्समृद्धिर्भवति ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ५० | बन्धमोचने अध्या | १ | श्लोकं ५७ | ६६ | आरोग्यप्राप्त्यै | ११ | २९ |
| ५१ | राजवश्ये | १ | ४५ | ६७ | सर्वबाधाशमनं | ११ | ३९ |
| ५२ | जनवश्ये | १ | ५५ | ६८ | स्तवने– | ११ | १० |
| ५३ | सर्वजनमोहनं | १ | ५६ | ६९ | पीडापरिहारे– | ११ | १२ |
| ५४ | सर्वकार्यसिद्धि | १ | ७६ | ७० | उपसर्गशमने | ११ | ३६ |
| ५५ | दुर्जनमोहनं | १ | ८५ | ७१ | भयमोचने– | ११ | २६ |
| ५६ | सुखप्राप्त्यै, दारिद्र्यभय मोचने । | ४ | १० | ७२ | विषमचित्तशमनं | ११ | ४३ |
| ५७ | सकलकर्मसुकृत्यै | ४ | १६ | ७३ | पुत्रप्राप्त्यै | १२ | २९ |
| ५८ | शत्रु परिहारे– | ४ | २३ | ७४ | शत्रुमुखस्तंभनं | १२ | २९ |
| ५९ | दिग्बन्धने | ४ | २५ | ७५ | देवतामुखस्तंभनं | १२ | ८ |
| ६० | वाक्सिध्यै | ४ | ११ | ७६ | सर्वबाधानाशनं | १२ | २९ |
| ६१ | धनप्राप्ति | ४ | ३ | ७७ | धनधान्यसुखप्राप्त्यै– | १२ | १३ |
| ६२ | आपद्, द्वेषनाशने | ५ | ६ | ७८ | दुःस्वप्नपीडापरिहारं | १२ | १६ |
| ६३ | शत्रुपरिभवार्थं– | ५ | ३८ | ७९ | मन, सिद्धिप्राप्त्यै | १३ | १३ |
| ६४ | मनोत्साहप्राप्ति– | ५ | ५३ | ८० | देवीसन्तोषप्राप्त्यै | १३ | १० |
| ६५ | परप्रयोगशमने | ९ | २९ | ८१ | गतप्रयोगप्राप्त्यै | १३ | १३ |

## ।। लक्ष्मी प्राप्त्यर्थम् ।

## श्री देवी माहत्म्योक्त मंत्र प्रयोगाः डामरतंत्रोक्ताः ।

२/९ १ इत्थं निशम्य, २ देवानांवचांसि, ३ मधुसूदनः । ४ चकार कोपं, ५ शंभुश्च ६ भ्रुकुटी-कुटिलाननौ ।

अस्य मन्त्रस्य । विष्णु ऋषिः । उष्णिक्छन्दः । महालक्ष्मीर्देवता । मम सर्व सम्पदभिवृध्द्यर्थे जपे विनियोगः । संख्याक्रमेण न्यासः । ध्यानम् ।

**हस्तद्वये च कमले धारयन्तीं तुलीया ।**
**हारनूपुर संयक्तां लक्ष्मीदेवीं विचिंतये ॥**

अयुतत्रयस्य जपं । दशांशहोमः ।

## ।। सुपत्नीप्राप्त्यर्थम् ।।

१ पत्नीं मनोरमां, २ देहि ३ मनोवृत्तानुसारिणीं । ४ तारिणीं ५ दुर्गसंसार ६ सागरस्य कुलोद्भवाम् ।

अस्य मन्त्रस्य । ऋषिः छन्दः ध्यानं पूर्ववत् । न्यासं संख्यानुक्रमेण । जपं च पूर्ववत् ।।

## सर्वामयनिवृत्त्यर्थं ।।

२/१२ १ अतीवतेजसं, २ कूटं, ३ ज्वालंतमिव पर्वतम् । ४ ददृशुस्ते ५ सुरातत्रस्त ६ ज्वालाव्याप्त-दिगंतरम् ।।

अस्य मन्त्रस्य । ऋषिः छन्दः, देवता, ध्यानं पूर्ववत् । न्यासं संख्याक्रमेण । जपसंख्या अयुत चतुष्टयम् ।।

## प्रबलवैरिविनाशनार्थम् ।।

३/४० एवमुक्त्वा समुत्पत्य सारूढांतं महासुरं । पादेनाक्रम्य कण्ठे च शूले नैनमताडयत् ।।

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । महाकाली देवता । ध्यानं । खड्ग चक्र कैटभ महासुर-मितिस्थाने वैरिनामं ।।

दशलक्षं जपं । दशांशेन, सर्षपैः कटुतैलेनवा होमः । सहस्र ब्राह्मण भोजनं ।

## सर्वाभीष्टसिध्यर्थम् ॥

११/१० १ सर्वमङ्गलमांगल्ये २ शिवे ३ सर्वार्थसाधिके । ४ शरण्ये ५ त्र्यंबिके गौरि नारायणि ६ नमोस्तुते ॥

अस्य मन्त्रस्य । सदाशिवऋषिः अनुष्टुप्छन्दः । गौरीदेवता । पञ्चलक्षं जपः दशांशं पायसं होमः ।

## सर्वबाधानिवृत्त्यर्थम् ॥

११/३९ १ सर्वबाधा २ प्रशमनं ३ त्रैलोक्यस्याखिलेश्वरि । ४ एवमेव ५ त्वयाकार्यं ६ अस्मद्वैरि-विनाशनम् ॥

अस्य मन्त्रस्य । भगवान्वेदव्यास ऋषि । अनुष्टुप्छन्दः । शुंभासुरध्वंसिनी दुर्गा देवता ।

रिपुनाश, रोगनाशनार्थे जपे विनियोगः सख्याक्रमेण न्यासः ।

लक्षत्रय जपः । आज्येन दशांहोमः ।

## भयनिवृत्त्यर्थ शीघ्रकार्यार्थम् ॥

११/२४ सर्वस्वरूपे सर्वेशि सर्वशक्ति समन्विते । भयेभ्यस्त्राहिनो देवि दुर्गे देविनमोस्तुते ॥

अस्य मन्त्रस्य । महेश्वर ऋषिः । अनुष्टुप् छन्दः । दुर्गादेवता । ह्रां ह्रीं इत्यादिन्यासः ।

**दुर्गेस्मृताहरसि भीतिमशेषजन्तोः**
**स्वस्थस्मृतामतिमतीव शुभां ददासि ।**
**दारिद्र्यदुःख भयहारिणि कात्वदन्या,**
**सर्वोपकारकरणाय सदार्द्रचिन्ता ॥**

चतुर्लक्षं जपः । पायसेन होमः । ब्राह्मण, नव कुमारिकाः सुवासिनी भोजनं ॥

## ॥ भयनिवृत्त्यर्थम् ॥

११/२६ १ ज्वालाकरालमत्युग्र २ मशेषासुरसूदनं । ३ त्रिशूलं, ४ पातु नोदेवि, ५ भद्रकालि, ६ नमोस्तुते ॥

अस्य मन्त्रस्य । भैरव ऋषिः । अनुष्टुप्छन्दः । भद्रकालीदेवता । पंचलक्षजपः । गुग्गुलहोमः ॥

## सर्वरोगआर्तिनिवृत्त्यर्थम् ॥

११/१२ १ शरणागतदीनार्त, २ परित्राणपरायणे । ३ सर्वस्यार्ति हरे, ४ देवि ५ नारायणि ६ नमोस्तु ते ॥

अस्य मन्त्रस्य । विष्णुऋषिः । अनुष्टुप्छन्दः नारायणी देवता ।

मूल मन्त्र सपुटितेन, लक्षत्रयं जपः । दशांश घृताक्ततिलहोमः ।

## सौख्यप्राप्त्यर्थम् ॥

११/११ १ सृष्टिस्थिति विनाशानां, २ शक्ति भूते, ३ सनातनि । ४ गुणाश्रये, गुणमये ५ नारायणि नमोऽस्तु ते ॥

अस्य मन्त्रस्य । विष्णु ऋषिः । अनुष्टुप्छन्दः । नारायणीदेवता । मूलेन न्यासः

नवाक्षरी संपुटिते । लक्षचतुष्टयं जपः । दशांश तण्डुलैः होमः ॥

## आम्नायमंदार ग्रन्थः

## षडाम्नाय मालामंत्रन्यासः ॥

अस्य श्रीषडाम्नायमाला महामन्त्रस्य श्रीदक्षिणामूर्ति ऋषिः । गायत्री पंक्तिः त्रिष्टुप् अनुष्टुभादि नानाछन्दांसि । तत्तदाम्नाय समष्टिरूपिणी श्रीमहात्रिपुरसुन्दरी देवता । ऐं बीजं । सौः शक्तिः । क्लीं कीलकं । श्रीषडाम्नाय पारायणे जपे विनियोगः । कूटत्रय द्विरावृत्या कर हृदयादि न्यासः । ध्यानं ।

ध्यायेत्पद्मासनस्थां विकसितवदनां पद्मपत्रायताक्षीं
हेमाभां पीतवस्त्रां करकलितलसद्धेमपद्मां वरांगीम् ।
सर्वालंकारयुक्तां सततमभयदां भक्तिनम्रां भवानीं
श्रीविद्यां शांतमूर्ति सकलसुरनुतां सर्वसम्पत्प्रदात्रीम् ॥
षडाम्नायमयां देवीं षडाम्नायादि देवताम् ।
मन्त्ररश्मि प्रभांदेवीं वन्दे त्रिपुरसुन्दरीम् ॥

पंचोपचारपूजां कृत्वा, पादुका पंचकपठन पूर्वक माम्नाय पारायण कुर्यात् ॥

## ॥ पादुकापंचकम् ॥

ब्रह्मरंध्र सरसीरुहं दरे नित्यलग्न मवब तमद्भुतं ।
कुण्डली विवर कांडमण्डितं द्वादशार्ण सरसीरुह भजे ॥

तस्य कंदलित कर्णिकापुटे क्लृप्तरेख मकथादि रेखया ।
कोणलक्षित हलक्षमण्डली भावलक्ष्व मवलालयं भजे ॥

तत्पुटे पटुतडित्कडारिम स्पर्धमानमणिपाटल प्रभं ।
चिन्तयामि हृदि चिन्मयंवपु र्नाद बिन्दु मणिपीठमण्डलम् ॥

ऊर्ध्वमस्य हुतभुक् शिखात्रयं तद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मर महाच्चिदोत्कटं व्यामृशामि युगमादि हंसयोः ॥

तत्र नाथ चरणारविन्दयो, संविदामृत झरीमरंदयोः ।
द्वन्द्वमिन्दु मकरंद शीतलं मानसंस्मृति सुमंगलास्पदम् ॥

निषक्त मणिपादुका नियमिताघ कोलाहलं,
स्फुरत्किसलयारुणं नखसमुल्लसिन चन्द्रकम् ।
परामृतसरोवरोदित सरोजसद्रोचिषं,
भजामि शिरसिस्थितं गुरुपदारविन्दद्वयम ॥

नारायणं पद्मभुवं...मानचोस्मि ॥

ॐ नमो ब्रह्मादिभ्यो ब्रह्म विद्या संप्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः ॥

श्रीनाथादिगुरुत्रयं...गुरोर्मण्डलम् ॥

## पूर्वाम्नाय गुरु मंडल, गुरु त्रयमंत्राः ॥

### परमगुरु मन्त्रः

अस्य श्री स्वगुरुमन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीगुरुर्देवता ।
हं बीजं । सः शक्तिः । सोहं कीलकं । हंसामित्यादि न्यासः । ध्यानं ।

वन्दे गुरुपदद्वंद्वमवाङ्मानस गोचरं ।
रक्तशुक्ल प्रभामिश्रमतर्क्यं त्रैपुर महः ॥

मनु ॐ, ऐं ह्रां श्रीं ऐं क्लीं सौः हंसः शिवः सोहं स्वमरूपणनिरूपणहेतवे स्वगुरु श्री...नमः ॥

## परमगुरु

अस्य मन्त्रस्य । सदाशिव ऋषिः । पंक्तिः छन्दः । श्रीपरमगुरुर्देवता । बीजमित्यादि पूर्ववत् । मनुः । ३ ऐं क्लीं सौः सोहं शिवः हंसः स्वच्छन्द प्रकाशविमर्शहेतवेपरमगुरु श्री...नमः ।

## परमेष्ठिगुरु ॥

अस्य मन्त्रस्य श्रीदक्षिणा मूर्ति ऋषिः । पंक्तिः छन्दः । श्रीपरमेष्ठिगुरुर्देवता ।

अन्यत्सर्वं पूर्ववत् । ३ ऐं क्लीं सौः हंसः शिवः सोहं सोहं हसः शिवः स्वात्माराम परमानन्द पंजर-विलीनतेजसे परमेष्ठिगुरु श्री...नमः ॥

## पीठत्रय मन्त्राः

### कामगिरिपीठ मन्त्राः

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्रीछन्दः । ब्रह्माणी देवता । ऐं बीजं । अं शक्तिः ।
क्लीं कीलकं । ह्रां इत्यादि न्यासः । ध्यानं ।

**ब्रह्मात्मशक्ति सहित मरुणं काम संज्ञिकम् ।**
**गिरि पीठमहं वन्दे सर्वसिद्धिप्रदायकम् ॥**

मनुः । ३ ऐं क्लीं सौः अं आं सौः ब्रह्मात्मशक्ति सरस्वत्यै नमः ॥

### पूर्णगिरिपीठ मन्त्रः ।

अस्य मन्त्रस्य । विष्णु ऋषिः । अनुष्टुपछन्दः । नारायणीदेवता । क्लीं बीजं । ह्रीं शक्तिः । नमः कीलकं । श्रां इत्यादि न्यासः । ध्यानम् ।

**लक्ष्मीं क्षीरसमुद्रराजतनयां...मकुन्दप्रियाम् ॥**

मनुः । ऐं क्लीं सौः पूर्णगिरिपीठ विष्ण्वात्मशक्तयै नमः ।

### जालंधरपीठ मन्त्रः ॥

अस्य मन्त्रस्य । रुद्रऋषिः । अतिजगती छन्दः । श्रीगौरीदेवता । सौः बीजं । ऐं शक्तिः । ह्रीं कीलकं । बालया न्यासः । ध्यानं ।

आधारे तरुणार्कबिंबरुचिरे वाग्बीजमग्निप्रभं ।
बीजं मन्मथमिन्द्रगोपकनिभ, हृत्पंकजे संस्थितं ।
रंध्रे ब्रह्मपदे च शाक्तमपरं हेमप्रभा भासुरम् ।
ये ध्यायन्ति पदत्रयं तत्र शिवे, ते यांति सौख्यं पदम् ॥

मनुः ऐं क्लीं सौः श्रीं ह्रीं ऐं जालंधरपीठरुद्रात्मशक्ति गौर्यै नमः ॥

## श्रीशुद्धविद्या मन्त्रः

अस्य मन्त्रस्य । सदाशिव ऋषिः । गायत्रीछन्दः । शुद्धविद्या मनोन्मनी देवता ।

ऐं बीजं । ईं शक्तिः । औः कीलकं । मन्त्र त्रिखण्ड द्विरावृत्या न्यासः । ध्यानं ।

शुद्धस्फटिकसंकाशां शुद्धविद्यां मनोन्मनीं ।
पुस्तकं चाक्षमालां च ज्ञानमुद्रामभीतिकम् ॥
धारयन्तीं शिवां देवीं पशुपाशविमोचनीं ।
सर्वमन्त्र प्रकाशां च मातृकारूपिणीं भजे ।

पंचपूजा । मनुः । ऐं ईं औः ॥

## द्वादशार्धा मन्त्रः ॥

अस्य मन्त्रस्य । परमानन्द भैरव ऋषिः । गायत्री छन्दः । श्रीद्वादशार्धांबा देवता ।

हसकलरडैं बीजं । हसकलरडीं शक्तिः । हसकलरडौं कीलकं । मूलेन द्विरावृत्या न्यासः ॥

तारेशस्फा मौलि त्रिनयन विलसत्पञ्चवक्त्रां शवस्थां
रक्ताकारां नृमुंडावलिकलितमहामालिकालंकृतांगीम् ।
देवीं सृण्यक्षमाला शरपरशुवृहच्छूलपाशाग्रहस्तां
श्रीचापोद्यत्कपाला भयवरदकरां द्वादशार्धां नमामि ॥

मनुः हसकलरडैं, हसकलरडीं, हसकलरडौं ॥

## राजश्यामला (मातंगी) मन्त्रः ॥

अस्य मन्त्रस्य । भगवान् मतंग ऋषिः । पंक्ति छन्दः श्रीराजमातंगीश्वरी देवता ।

ऐं बीजं । सौः शक्तिः । क्लीं कीलकं ।

३ ऐं क्लीं सौः । १ ॐ नमो भगवति राजमातंगीश्वरि, २ सर्वजनमनोहारिणि सर्वमुखरंजिनि, ३ क्लीं ह्रीं श्रीं सर्वराजवशंकरि, ४ सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि, ५ सर्वलोकवशंकरि अभीष्टंमे सर्वजनं मे वशमानय स्वाहा, ६ सौः क्लीं ए श्रीं ह्रीं ऐं ॥ संख्याक्रमेण न्यासः । ध्यानं ॥

मातंगीं मोहनांगींमधुमदमुदितां घूर्णमानाक्षियुग्मां
विद्युद्वक्त्रां कदम्ब प्रसवपरिलसद्वेणिका मात्तवीणां,
बिंबोष्ठीं रक्तवस्त्रां मृगमदतिलकामिन्दुरेखावतंसां,
कर्णोद्यच्छंखपत्रां कटिनकुचभरां नौमि तां श्यामलांबाम् ॥

मनुः पूर्ववत् ॥

## ॥ हसंतिश्यामला ॥

अस्य मन्त्रस्य । मतंग ऋषिः । गायत्री छन्दः । श्रीहसंतिश्यामलांबा देवता ।

ह्रां बीजं । ह्रीं शक्तिः । ह्रूं कीलकं । ह्रां इत्यादि न्यासः । ध्यानं ।

आगुल्फांतावलंबा मरुणमणिनिभां कंचुकीं धारयन्ती,
कादंबर्या कषाया कृतनमनयुगा कंदलन्मंदहासा ।
मेघश्यामा मृगांकोल्लसितकबरिका पाणिपद्मात्तनेत्रा,
मातंगीष्टाहसंती मम भवतु सदा मन्त्रविघ्नाप्रशांत्यै ॥

मनुः ॥ ॐ ह्रीं हसति हसितालापे मातंगी परिचारिके । भय निघ्नापदां नाशं कुरु २ ठः ठः ठः ठः हुं फट् स्वाहा ॥

## ॥ श्रीशुकश्यामला ॥

अस्य मन्त्रस्य । शुक भगवान् ऋषिः । गायत्री छन्दः । श्री शुकश्यामलांबा देवता ।

श्रां बीजं । श्रीं शक्तिः । श्रूं कीलकं । श्रां इत्यादि न्यासः । ध्यानम् ।

निगमसमाहारमाले निर्मलतारालवाल वलयांते ।
प्रतिफलदागम शाखाफल भररसिक शुकोऽस्तु भूत्यै ॥
वीणावाद्य विनोदगीतनिरतां लीलाशुकोल्लासिनीं,
बिंबोष्ठीं नवयावकार्द्र चरणामाकीर्णकेशालकाम् ।
हृद्यांगीं सितशंख कुण्डलधरां सर्वांगभूषोज्ज्वलाम्
मातंगीं प्रणतोऽस्मि सुस्मितमुखीं देवीं शुकश्यामलाम् ॥

मनुः । ॐ नमो भगवते महाशुकाय त्रिभुवनालंकृताय राजमद मर्दनाय शीघ्रं राजानं मे वशमानय स्वाहा ॥

## ॥ श्रीशारिका श्यामला ॥

अस्य मन्त्रस्य । शौनक ऋषिः । अतिजगती छन्दः । श्री शारिका श्यामलांबा देवता । श्रां बीजं । श्रीं शक्तिः । श्रूं कीलकं । श्रां इत्यादि न्यासः । ध्यानम् ॥

श्यामांकरांभोरुहकेलिलग्नां सोमावतंसां स्तुतिपाठमग्नाम् ।
विद्यालिहृद्यां विशदामुपासे शारीं चतुष्षष्टिकलास्वरूपाम् ॥
चतुष्षष्टिकलारावां विद्यां हृदि विराजिताम् ।
भावयन्तीं करे देवीं शारिका देवतां भजे ॥

मनुः । ॐ नमो भगवती शारिके सकल कलाकोविदेदेवि बोधय २ स्वाहा ॥

## ॥ श्रीवीणाश्यामला ॥

अस्य मन्त्रस्य । नारद ऋषिः । गायत्री छन्दः। श्रीवीणाश्यामलांबा देवता । क्लीं बीजं । ह्रीं शक्तिः । सौः कीलकं । वां इत्यादि न्यासः । ध्यानम् ।

कामनानुगुण गानकल्पना कल्पशिल्पतरमंजुलखनां ।
वैणिकी स्तनतटे विहारिणीं वल्लकीं मनसि भावयाम्यहम् ॥

मनुः ॐ नमो भगवती वीं वीणाये मम संगीतविद्यां प्रयच्छ स्वाहा ॥

## ॥ श्रीवेणुश्यामला ॥

अस्य मन्त्रस्य । मतंग ऋषिः । गायत्री छन्दः । श्री वेणुश्यामलांबा देवता । ऐं बीजं । ह्रीं शक्तिः । श्रीं कीलकं । बालामन्त्रेण न्यासः । ध्यानम् ।

बत्के सौरभ सुवासितरंध्रे वस्तुना पटुतरावयवेन ।
गानदोहन कलाकलनादे मानसे भवतु मणिवेणुः ।।

मनुः । ॐ नमो भगवति वें वेणुश्यामले मम साहित्यविद्यां प्रयच्छ स्वाहा ।।

## पदयुगमन्त्रः

अस्य मन्त्रस्य । दत्तात्रेय ऋषिः । अनुष्टुप्छन्दः । श्रीपदयुगं देवता । हुं बीजं ।

सः शक्तिः । सोऽहं कीलकं । कूटत्रय द्विरावृत्या न्यासः । ध्यानम् ।

श्रीं ।। बीजन्नूपुर पादकंकणमहा मुद्रासुलाक्षारसा,
लंकारांकित पादपंकजयुगं श्रीपादुकालंकृतं ।
उद्भास्वन्मुखचन्द्रबिंबरुचिरं राजज्जपासन्निभं
ब्रह्मादि त्रिदशासुरार्चित पदं मूर्ध्निस्मराम्यंबिके ।।

मनुः ।। हसकलह्रीं हसकहलह्रीं सकलह्रीं ।। प्रकाशपद श्री नंमः ।। हसकल हसकहल सकलह्रीं ।। विमर्शपदश्री नंमः ।।

## आनन्दभैरव द्वंद्व मन्त्रः ।।

अस्य मन्त्रस्य । आनन्द भैरव ऋषिः । विराट् छन्दः । श्री आनन्दभैरवद्वंद्वो देवता । हसे इति बीजं । सहेति शक्तिः । मन्त्रांतं कीलकं । इति न्यासः ।

द्वाभ्यामेकेनचैकेन एकेनैकेन वै पुनः ।
द्वाभ्यां मन्त्र गतैर्वर्णै रेवमंगानिकल्पये ।।
सूर्यकोटि प्रतीकाशं चन्द्रकोटि सुशीतलं ।
अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनं ।।

अमृतार्णव मध्यस्थं ब्रह्मविद्योपरि स्थितं ।
वृषारूढं नीलकण्ठं सर्वाभरण संयुतं ।।
कपालखट्वांगधरं घण्टाडमरुवादिन ।
पाशांकुशधरं देवं गदा मुसल धारिण ।।

लोहितं देवदेवेशं भावयेत्साधकाग्रणीः ।
आनन्दभैरवदेवं ध्यायेदानन्द भैरवं ।।

सूर्यकोटि शांतीकाप्र चन्द्रकोटययुतप्रभां ।
हिमकुंदेंदु धवलां पञ्चवक्त्रांत्रिलोचन ॥
अष्टादशभुजैर्युक्तां सर्वानन्दकरोद्यतां ।
प्रहसन्तीं विरूपाक्षीं देवदेवस्य सम्मुखे ॥

मनुः ॐ ऐं ह्रीं श्रीं ह्सक्षमलवरय ऊं सहक्षमलवरय ईं ॥

## मन्त्रोद्धारः ॥

शिवचन्द्रौ मातृकांतं कालशक्रांबुवह्नयः ।
वायुश्चवामकर्णेन योजितो बिंदुनादिना ॥
बीजमेतत्समुच्चार्य तथाचानन्द भैरवं ।
ज्ञेतं शिखामन्त्र युक्तं पुनर्बीजं समालिखेत् ॥
चन्द्रंहित्वाऽऽदिमं कुर्यात्कर्णे वामाक्षियोजयेत् ।
सुधादेव्यैतलो वौषडयमानं ॥

## समयविद्या मन्त्रः

धृतशूलाचडमरुकपालं परशुं धरा ।
चतुर्बाहु महादेवी पश्चिमाम्नायरूपिणी ॥

मनुः ॐ ह्स्ख्फ्रें ह्सौं भगवत्यंबे ह्स्ख्फ्रें कुब्जिके ह्स्रैं ह्स्रीं ह्स्रां अघोरे अघोरे अघोर मुखि च्छ्रां च्छ्रीं किणिकिणि विच्चे ह्सौं ह्स्ख्फ्रें श्रीं ह्रीं ऐं । पश्चिमाम्नाय समयविद्येश्वरि कुब्जिकांबायै नमः ॥

## मुद्रानवक मन्त्रः ॥

अस्य मन्त्रस्य । अष्ट भैरवा ऋषयः । अनुष्टुप् छन्दः । मुद्रानवकं देवता ।

ऐं बीजं । सौः शक्तिः । क्लीं कीलकं । मूलेन न्यासः । ध्यानम् ।

शूलपात्राभयकरा स्सर्वाभरण भूषिता ।
सर्वशांतिकराध्येया मुद्राणामधिदेवता ॥

मनुः । द्रां द्रीं क्लीं ब्लूं सः क्रों ह्स्ख्फ्रें ह्सौं ऐं ॥

## वीरावली पंचक मन्त्रः

अस्य मन्त्रस्य । ब्रह्म विष्णुरुद्रेश्वर सदाशिवा ऋषयः । गायत्री छन्दः । श्री महा पंच बीरावली देवता । लं बं रं यं हं बीजानि । सरस्वती महालक्ष्मी गौर्युन्मनी मनोन्मनीः शक्तयः । सोहं कीलकं । ऐं ह्रीं श्रीं ऐं क्लीं सौः इति न्यासः । ध्यानम् ।

**ब्रह्मा विष्णुश्चरुद्रश्च ईश्वरश्च सदाशिवः ।**
**चतुर्भुजाश्च ध्यातव्या तत्तदायुधसंयुताः ॥**

मनुः ऐं ह्रीं श्रीं ऐं क्लीं सौः ॥ लं ब्रह्म वीरावलि । वं विष्णु । रं रुद्र, यं ईश्वर, हं सदाशिव वीरावली ॥

## तुरीयांबा ।

अस्य मन्त्रस्य । भोगानन्द भैरव ऋषिः । उष्णिक्छन्दः । श्री तुरीयांबा त्रिपुरसुदरी देवता । हं बीजं । ईं शक्तिः । रं कीलकं । मूलेन द्विरावृत्या न्यासः ॥

**पुन्नागांबुज जाति कुंदवकुलैः पुष्पैरलंकारितां,**
**तन्वीमिक्षुधनुः प्रसूनविशिखान् पाशांकुशौ बिभ्रतीं ।**
**कन्यां प्रोद्यदनंत भोगनिलये कल्पे तुरीये शिवे,**
**नादे नादमये परापरमये त्वां भावयाम्यंबिकाम् ॥**

मनुः हसकल हसकहल सकलह्रीं ॥

## पूर्ति विद्या

अस्य मन्त्रस्य । दक्षिणामूर्ति ऋषिः । पंक्तिः छन्दः । श्रीपूर्ति विद्या त्रिपुरसुन्दरी देवता ।

कएईल बीजं । सकलह्रीं शक्तिः । हसकहल कीलकं । कूटत्रयद्विरावृत्या न्यासः ॥

**सर्वविद्यामयां सर्वशक्तिपीठस्वरूपिणीं ।**
**श्रीपूर्तिदेवतां वन्दे श्रीकरीं मुक्तिदायिनीम् ॥**

मनुः । कएईल हसकहल सकलह्रीं ॥

## महार्घांबा मंत्रः ॥

अस्य मन्त्रस्य । चिदानन्द भैरव ऋषिः अतिजगतीछन्दः । श्री महार्घांबा देवता ॥

ऐं बीजं । सौः शक्तिः । ईं कीलकं । (१) ऐं ईं सौः क ४ संसृष्टिनित्येस्वाहा । ह् स्थिति पूर्णे नमः (२) ईं महासंहारकारिण्यै कृशे चण्डकालिफट् । (३) रं हस्ख्फ्रें महानाख्ये ईं ह ६ अनन्तभास्करि महाचण्ड-कालिफट् । (४) हस्ख्फ्रें ईं महासंहारकारिणिकृशेचण्कालिफट् ॥ (५) हुं स्थितिपूर्णे नमः संसृष्टिनित्ये स्वाहा । (६) स ४ रं हस्ख्फ्रें सौः ईं ऐं ॥ इति न्यासः ॥ ध्यानम् ॥

**आधारे तरूणार्कबिंबवदने अत्युग्रदंष्ट्रांतरे,**
**वीणाशलिनि दिव्यभोगनिलये वीणादिगानप्रिये ।**
**नानावर्णमये सरोद्भवशिर स्त्रुग्व्यक्त मालाधरे,**
**श्री विश्वेश्वरिते महार्घमहिमे श्रीशांभवित्वां भजे ॥**

मनुः । ऐं ईं सौः क ४ संसृष्टि नित्येस्वाहा । हुं स्थितिपूर्णेनमः ।

ईं महासंहारकारिणि कृशे चण्डकालि फट् ।

रं हस्ख्फ्रें महानख्ये ईं ह ६ अनन्तभास्करि महाचण्ड कालि फट् ।

रं हस्ख्फ्रें ईं महासंहारकारिणि कृशे चण्डकालि फट् ।

हं स्थिति पूर्णे नमः । संसृष्टिकृत्ये स्वाहा

स ४ रं हस्ख्फ्रें सौः ईं ऐं ॥

## अश्वारूढा

अस्य मन्त्रस्य । सच्चिदानन्द भैरव ऋषिः । गायत्री छन्दः । अश्वारूढांबादेवता ।

आं बीजं । ह्रीं शक्तिः । क्लीं कीलकं । १ आं । २ ह्रीं । ३ क्रों । ४ एह्येहि । ५ परमेश्वरि । ६ स्वाहा । न्यासः ।

**अश्वारूढा कराग्रे नवकनकमयां वेत्रयष्टीं दधाना,**
**दक्षीणेनानयन्तीस्फुरिततनुलता पाशबद्धान् स्वसाध्यान् ।**
**देवी नित्यप्रसन्ना शशिशकलधरा सा त्रिनेत्राभिरामा,**
**दद्यादाद्यानवद्या सकल सुखवर प्राप्ति हृद्यांश्रियं नः ॥**

मनुः आं ह्रीं क्रों एह्येहि परमेश्वरि स्वाहा ॥

## सम्पत्करी मंत्रः ॥

अस्य मन्त्रस्य । श्रीकण्ठ ऋषिः । गायत्रीछन्दः । संपत्सरस्वती देवता । हसौः बीजं । स्वौः शक्तिः । क्लीं कीलकं । षड्बीजैः न्यासः ।

अनेककोटि मातंग तुरंग रथपत्रिभिः ।
सेविता मरुणाकारां वन्दे सम्पत्सरस्वतीम् ॥

मनुः क्लीं हें हसौः हसौः हें क्लीं ॥

## मिश्रांबा मंत्रः ॥

अस्य मन्त्रस्य । सदाशिव ऋषिः । गायत्री छन्दः । मिश्रांबा त्रिपुरसुन्दरी देवता । ऐं बीजं । ह्रीं शक्तिः । क्लीं कीलकं । आं, ईं, ऊं ऐं औं अः इति न्यासः ।

ऐं कारे विद्रुभामे हरिहरपरमे आदिमूलस्वरूपे,
हाहाहीही हरात्मे अमृत सरसिजे अन्नमन्नादरूपे ।
ईं कारेशक्तिमूले इहपरमहिमे ईक्षणध्यानरूपे
नामाद्ये नाथ नाथे नवनवमहिमे नादनादांत मिश्रे ॥

मनुः ॐ ऐं ॥

## साकिन्यादि क्रमः ॥

गणेशब्रह्म विष्णूश्चहरं च तदनन्तरं ।
जीवात्मानं क्रमेणैव गुरुं स परमात्मकं ॥
एतेषु सप्तचक्रेषु स्थितांश्च परमेश्वरीं ।
साकिन्यादि समोपेतां संस्मरे द्योगसिद्धये ॥
तारत्रितयं च देवेशि शिवबीज मतः परं ।
वाग्भवं पञ्चमं प्रोक्तं कामबीजन संयुतम् ॥
पराबीजं समुच्चार्य लक्ष्मी बीजं च संवदेत् ।
हंस मन्त्रेण संयुक्तं भुवनेशीं ततो वदेत् ॥
कादिविद्यां समाभाष्य साकिन्यादिमनून्वदेत् ।
शिरः पद्मे सहस्रारे स्मरेच्चरणमन्त्रकम् ॥

१. ऐं ह्रीं श्रीं ह्रौं ऐं क्लीं सौः श्रीं हंसः ह्रीं क १५ सां हसः मूलाधाराधिष्ठान देवता साकिनीयुक्त श्रीगणनाथ स्वरूपिण्यम्ब श्रीपादुकां पूजयामि नमः ॥

२. ऐं...क १५ कां सोहं स्वाधिष्ठान देवता काकिनीयुक्त ब्रह्म...नमः।

३. ऐं...क १६ लां हंसः सोहं मणिपूरकाधिष्ठान देवता लाकिनीयुक्त विष्णु...नमः।

४. ऐं...क १५ रां हंसः शिवः सोहं अनाहताधिष्ठान ॥ राकिनी...रुद्र...नमः।

५. ऐं...क १६ डां सोहं हंस शिवः विशुद्धाधिष्ठान ॥ डाकिनी जीवेश्वर...रुद्र...नमः।

६. ऐं...क १५ हां हंस शिवस्सोहं हंसः शिवः आज्ञा ॥ हाकिनी...परमात्मा ॥ नमः।

सहस्रारे द्वादशांते सहस्रदलकर्णिकायां

ऐं ३ ऐं ३ हसः शिवः सोहं। ऐं ३ ऐं ३। ॐ। हस्ख्फ्रे। श्रीं...षोडशी। योहमस्मि ब्रह्महमस्मि।

अहमस्मिब्रह्माहमस्मि। तत्त्वमसि। ब्रह्माहमस्मि। सोहं। ब्रह्माहमस्मि। ॐ ब्रह्माहमस्मि। आत्मा वै इदगुंसर्वं। ब्रह्मैवेदगुं सर्वं। स्वंमेतद्ब्रह्मा। सर्वं खल्विदंब्रह्म ॥ ब्रह्मविद्ब्रह्मैव भवति ॥ इति श्रीचरणं स्मरेत् ॥

## महाकामेश्वर भट्टारक मंत्रः ॥

अस्य मन्त्रस्य। परमानन्द भैरव ऋषिः। अमृतविराट् छन्दः। श्री महाकामेश्वर भट्टारको देवता। हसक्षमलवरयऊं बीज। यरलक्षमयऊं शक्तिः। सहक्षसलवरय ऊं कीलकं। हसक्षमलवरयऊं। सहक्षमलवरयऊं। यरलक्षमलय ऊं। इति द्विरावृत्या न्यासः। ध्यानम्।

श्रीदेवि भूषितोत्संगं सांद्रसिन्दूररोचिषं।
हकारादि मनवाच्यं वन्दे कामेश्वरं परम् ॥

मनुः। ऐं क्लीं सौः ॐ ऐं ह्रीं श्रीं हसक्षमलवरयऊं सहक्षमलवरयऊं यरलक्षमयऊं श्रीं ह्रीं ऐं सौः क्लीं ऐं ॥

## तारकविद्या मंत्रः

अस्य मन्त्रस्य। प्रजापति ऋषिः। गायत्री छन्दः। श्रीतारकविद्यांबा देवता।

हं बीजं। ईं शक्तिः। रंकीलकं। ह्रां इत्यादि न्यासः।

उद्यद्दिनद्युतिमिंदुकिरीटां तुंगकुचां नयनत्रय युक्तां।
स्मेरमुखीं वरदां कुशपाशाभीतिकरां प्रभजे भुवनेशीम् ॥

मनुः ॐ ह्रीं ॐ ॥

## चतुष्पाद गायत्री मंत्रः

अस्य मन्त्रस्य । विमल ऋषिः । गायत्री छन्दः । परमात्मादेवता । तत्सवितुवरेण्यं इति बीजं । भर्गोदेवस्य धीमहि इति शक्तिः । धियोयोनः प्रचोदयात् । इति कीलकं । तुरीयपादयुक्ता गायत्री द्वात्रिंशदक्षरा ।

अष्टकुक्षिः । सप्तशीर्षा ।। प्रणवव्यांहृतित्रयेण पादचतुष्टयेन समस्तेन च न्यासः । ततः । १ परो, २ रजसे, ३ असाबदों, ४ परोरजसे, ५ असावदों, रजसे सावदों । इति च न्यासः । ध्यानम् ।

हृदिविकसितपद्मं सार्कसोमाग्नि बिंबम्,
प्रणवमयमचिंत्यं यस्यपीठं प्रकल्प्यं ।
अचलपरम सूक्ष्मं ज्योतिराकाश सारं,
भवतु मम मुदेऽसौसच्चिदानन्दरूपः ।।
देवीं तुरीयगायत्रीं तुर्यातीत पदाश्रयाम् ।
परोरजः प्रकाशात्म चितिरूपांमहं भजे ।।

मनुः । ॐ भूर्भुवस्सुवः तत्स...यात् परोरजसि सावदोम् ।।

गायत्री सम्पुट वच्मि सर्वपापप्रणाशनं ।
खंण्डत्रयं च गायत्र्या श्रीखण्डेषु नियोजयेत् ।।
गायत्री मपि देवेशि विद्याखण्डेषु योजयेत् ।
गायत्री ब्रह्मविद्येयमुद्दिष्टा परमेश्वरी ।।

मनु। ॐ भूर्भुवस्सुवः ऐं क्लीं सौः तत्सवितुर्बरेण्यं कएईलह्रीं, भर्गोदेवस्यधीमहि हसकहलह्रीं धियोयोनः प्रचोदयात् सकलह्रीं, सौः क्लीं ऐं ।।

## कालसंकर्षिणी मंत्रः ।।

अस्य मन्त्रस्य । चण्डकाल भैरव ऋषिः गायत्री छन्दः । श्रीकालसंकर्षिण्यंबा देवता ।

ऐं बीजं । स्वाहा शक्तिः । कालसंकर्षण्यै कीलकं ।। १ ऐं, २ ह्रीं ३ श्रीं ४ सौः ५ क्लीं ६ ऐं न्यासः ।

जगज्जनन पालन क्षपण कोपसानुग्रह,
त्रिनेत्र समयात्मिका षट्कलापशूलायुधा ।।
महाट्टहसितानना तनुतमाल नीलाकृतिः ।
प्रशस्त पुरुषाकृतिः धर तुकालसंकर्षिणी ।।

मनुः । ऐं ह्रीं श्रीं सौं क्लीं ऐं कालसंकर्षिण्यै स्वाहा ॥ श्रीं ह्रीं क्लीं अमृतवर्षिणी पादुकापरमेश्वरी ए वषट् सौः क्लीं ह्रीं श्रीं पादुकापरमेश्वर्यै नमः ॥

## ॥ वार्ताली ॥

यन्त्रं ॥ त्रिकोण पंचास्र षट्कोण अष्टदलं, शतदल, सहस्रदल, तस्योपरि भूपुरं ॥ पीठ देवता । मं मंडूकादि...नमः । नवपीठशक्तीः जयादिमंगलांताः ॥

१. षट्कोण केसरेषु आग्नेय्यादि चतुर्विदिक्षु मध्ये दिक्षु च, षडंगयुवतीः त्रिकोणे ईशान्यादि क्रमेण वार्तल्यै, वाराह्यै, वराहमुख्यै ।

२. पचास्रे आग्नेय्यादि क्रमेण ॥ अंधिन्यै, रुंधिन्यै, जंभिन्यै, मोहिन्यै, स्तंभिन्यै ।

३. पुनः षट्कोणोपरि आग्नेय्यादि क्रमेण शकिनि, राकिनि, लाकिनि, काकिनि, शाकिनि हाकिनि ॥ ततः षट्कोणे दक्षिणेपार्श्वे, स्तभिन्यै दक्षिणहस्तेन वरधरायै, वामकरेणमुसल धरायै नमः स्तंभिनी श्री ॥ षट्कोणेवामे क्रोधिन्यै दक्षहस्ते कपालधारिण्यै नमः ॥ दक्षकोणाग्रे देवीसुतं चण्डं, शूलं नागं च डमरुं कपालंदधतं करैः । इन्द्रनीलनिभं नग्नं जटाभार विराजितं इति ध्यात्वा । देवी सुताय चण्डोच्चण्डायनमः इति पुष्पांजलिः ।

४. अष्टपत्रे पूज्य पूजकयोरंतरालं प्राचीदिशं प्रकल्प्य प्राचीक्रमेण, वार्ताली, वाराही वराहमुखि, अंधिनि, रुंधिनि, जंभिनि, मोहिनि, स्तंभिनि ।

५. शतपत्रेषु प्राचीक्रमेण । एकादशरुद्राः, वीरभद्रादयः, अर्काद्वादश, धात्रादयः वसवोष्टौ, धरादयः, अश्विनौनासत्यदस्रौ, इति त्रयस्त्रिंशद्देवा एकैकत्रे त्रिके पूज्याः । शेषैकपत्रे, जंभिनीस्तंभिनीभ्यां, सिंहाय, महिषाय इति ॥

६. सहस्रपत्रे । क्रौं वाराह्यै नमः इति मन्त्रेण वाराहीमेव पूजयेत् ।

७. भूपुराभ्यन्तरे, प्राची, दक्षिण, पश्चिम उत्तरयोः । वंवटुक, क्षं क्षेत्रपाल, यां योगिनी गं गणपति ।

८, ९. भूपुराद्बहि, इन्द्रादि, तेषां आयुधानि च पूजयेत् ॥

## नकुलीवागीश्वरी मंत्रः ॥

अस्य मन्त्रस्य । कहोळक ऋषिः । गायत्री छन्दः । श्रीनकुलीवागीश्वरी देवता ।

ऐं बीजं । स्वौः शक्तिः क्लीं कीलकं । १ ऐं क्लीं सौः । २ ओष्ठापिधाना नकुली । ३ दन्तै परिवृता-पविः । ४ सरस्वत्येवाच ईशाना । ५ चारुमामिहवादयेत् । ६ सौः क्लीं ऐं । इति न्यासः ॥ ध्यानम् ।

**नकुली वज्रदन्तालि रसाढ्य जिह्वारि दशनी ।**
**भक्तानां हृदयांभोजे भावनीया सरस्वती ॥**

मनुः । ऐं क्लीं सौः ओष्ठापिधाना नकुलीदन्तैः परिवृता पविः । सरस्वत्येव चेशाना चारुमामिह वादयेत् सौः क्लीं ऐं ॥

## पुलिंदिनी मन्त्रः ॥

अस्य मन्त्रस्य । शंकरऋषिः । जगती छन्दः । श्रीपुलिन्दिनी देवता । ई बीजं । स्वाहा शक्तिः । श्रीं कीलकं । आं ई इत्यादि न्यासः । ध्यानम् ।

बर्हालीढक चारुरोमचिकुरां बिंबोज्ज्वलच्चन्द्रिकां,
गुंजाहारलतांशु जालविलसद्गीवामधीरेक्षणाम् ।
माकन्द द्रुमपल्लवारुणपदु कुर्देदुबिंबाननां
देवीं सर्वनयीं प्रसन्नहृदयां ध्यायेत्किरातावृताम् ॥

मनुः । ॐ नमो भगवति श्री शारदादेवि अत्यन्तावक भोज्यक देहि २ एहि आगच्छ २ आगतुकं हृदिस्यं कार्यं सत्यं ब्रूहि २ पुलिंदिनि ई स्वाहा ॥

## रेणुकामन्त्रः ॥

अस्य मन्त्रस्य । भार्गव ऋषिः । पवितः छन्दः । श्रीरेणुकांबादेवता । क्लां बीजं । क्लीं शक्तिः । क्रों कीलकं । क्लां इत्यादि न्यासः ।

वामे शूल कपाल पाशमितरे खड्गं क्वणं डिंडिम
बिभ्राणं करपकजैः त्रिनयनां नानाष्टभूषान्विताम् ।
नानाकोटि युगांत सूर्यसदृशीं नासोज्ज्वलद्भूषणां
वक्षोलंबितहारमुद्रितकरां श्रीरेणुकामाश्रये ॥

मनुः क्लीं नमो भगवति रक्तपंचमी रेणुकादेवि हन २ पच २ अखिलजगन्मे वशं कुरु स्वाहा ॥

## श्रीशूलिनी दुर्गा मन्त्रः ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीशूलिनी दुर्गा देवता । दुं बीजं । स्वाहा शक्तिः ह्रीं कीलकं ।

श्रीं सौः शूलिनि दुर्गे देवसिद्धसुर पूजिते नन्दिनि मां रक्ष २ महायोगीश्वरि हुं फट् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | वरदे | ,, | ,, | ,, | ,, |
| ,, | ,, | युद्धप्रिये | ,, | ,, | ,, | ,, |
| ,, | ,, | विंध्यवासिनि | ,, | ,, | ,, | ,, |
| ,, | ,, | महिषमर्दिनि | ,, | ,, | ,, | ,, |
| ,, | ,, | सर्वसिद्धिप्रदायिनि | ,, | ,, | ,, | ,, |

अष्टसु हस्तेषु दक्षाधः करमारभ्य प्रादक्षण्येन वामाधः कर पर्यंतं, शूल बाण खड्ग चक्र पद्म गदा, धनुः पाश आयुधनि ॥ कन्यास्तु खड्गहस्ताः खेट परीताः ईदृशीं शूलिनीं ध्यायेत् ॥ ध्यानम् ॥

बिभ्राणा शूल बाणास्यरिजलजगदाचापपाशान् कराब्जे,
मेघश्यामा किरीटोल्लसित शशिकला भीषणा भूषणाढ्या ।
सिंहस्कंधाधिरूढा चतसृभिरसि खेटान्विताभिः परीता,
कन्याभिर्भिन्न दैत्या भवतु भव भयद्ध्वंसिनी शूलिनी नः ॥

मनुः । ॐ श्रीं ह्रीं क्लीं क्ष्म्यूं ह ज्वल २ शूलिनि दुष्टग्रह हुं फट् स्वाहा ॥

## ॥ प्रतिक्रियाशूलिनी ॥

जपेत्प्रतिक्रियाख्यां शूलिनीमिष्टसिद्धिदां ।
ऋष्यादिकं यथा मूलं विशेषात्कर्मचिन्तनम् ॥
प्रतिक्रियार्थं सिध्यर्थे विनियोगः करांगयोः ।
न्यासं मूलेन वैकुर्याद्विशेषाद् ध्यानमुच्यते ॥
संवर्तानल कोटि कोटि विलसत्तेजोमयीं भीषणां,
भीरानिः परिवारिताभिरभितो वीरैग्रसद्दिक्चयाम् ।
नामामूर्ति महा प्रयोगनिपुणे द्विड्भिः प्रयुक्ताः पुनः
तानेवाशु विनाशिनीं भयहरीं ध्यायन्महाशूलिनीम् ॥

मनुः । हस्त्रौं मामति दुरिता न्मोचय हस्त्रौं मामतिदुरितान्मोचनरूपिणी ज्वल २ प्रतिक्रियाशूलिनि ग्रासयाशु प्रयोक्तॄन् हन २ हुं फट् स्वाहा ।

ठं द्रैं हुं लं वं रं य ह्रीं स्वाहा ज्वल २ दुष्टग्रह शूलिनि फट् हुं ॥

## आसुरीदुर्गा ॥

अस्य मन्त्रस्य । अंगिरस ऋषिः । विराट् छन्दः । श्रीआसुरी दुर्गा देवता । ॐ बीजं । स्वाहा शक्तिः । हं कीलकं । १ ॐ कटुके कटुकपत्रे हुं फट् स्वाहा । २ सुभगे आसुरि प्रं फट स्वाहा । ३ रक्ते रक्तवाससे हु फट् स्वाहा । ४ अथर्वणस्य दुहितः हुं फट स्वाहा । ५ अघोरे अघोरकर्मकारिके हुं फट् स्वाहा । ६ अमुकस्य गतिंदह २, उपविष्टस्य भग दह २ सुप्तस्य मनोदह २ प्रबुद्धस्य हृदयं दह २ हन २ पच २ तावद्दह तावत्पच यावन्मे वशमायाति हु फट् स्वाहा । इति न्यासः । ध्यानम् ।

शरच्चन्द्रकांतिर्वराभीति शूलं सृणिं हस्तपद्मैर्दधाना म्बुजस्था
विभूषांबराढ्या हि यज्ञोपवीता मुदोऽस्मद्गुरूत्थं करोत्वासुरी नः ॥

मनुः । ॐ कटुके कटुकपत्रे सुभगे आसुरि रक्ते रक्तवाससे अथर्वणस्य दुहितरघोरे अघोरकर्मकारिके

अमुकस्य गतिं दह २ उपविष्टस्य गुदं दह २ सुप्तस्य मनो दह २ प्रबद्धस्य हृदयं दह २ हन २ पच २ तावद्दह तावत्पच यावन्मेवशमायाति हुं फट् स्वाहा ॥

## शीतला मंत्रः ॥

१ अस्य मन्त्रस्य । उपमन्युऋषिः । बृहती छन्दः । श्रीशीतला दुर्गा देवता ।

ह्रीं श्रीं बीजं । नमः शक्तिः । श्रीशीतलायै कीलकं । ह्रीं श्रीं इत्यादि न्यासः ।

**दिग्वाससं मार्जनिकांचशूर्प, करद्वये संदधतीं घनाभाम् ।**
**श्री शीतलां सर्वरुजार्तिहर्त्रीं रक्तांगरागस्रजमर्चयामि ॥**

मनुः ॐ ह्रीं श्रीं शीतलायैनमः ॥

## अपरो शीतला मन्त्रः ॥

ब्रह्माऋषिः । गायत्री छन्दः । श्रीशीतलादुर्गा देवता । श्रीं बीजं । ह्रीं शक्तिः ।

स्वाहा कीलकं । ॐ ह्रीं शीतले स्फोटकादीन्विनाशय २ । विदाहंशमय २ । तन्तून्भेदय २ । ज्वरं हर २ । स्वास्थ्यंकुरु २ । हुं फट् स्वाहा । इतिमूलेन न्यासः । ध्यानम् ।

**नमामि शीतलां देवीं रासभस्थां दिगंबरांस्थ ।**
**मार्जनी कलशोपेतां शूर्पालिकृत मस्तकाम् ॥**

## त्रिशक्ति मन्त्रः

अस्य मन्त्रस्य । विश्वामित्र, मरीच वसिष्टाऋषयः । गायत्री त्रिष्टुबनुभच्छंदांसि । अगोचरं वेदगम्यं परंतेजो देवता । यं ह्लंशः श्रीं बीजानि । ईं स्वरांशः ह्रीं रा शक्तयः । णं वि द्रशः कीलकं ।

तत्सवितुः...देवस्य । धीमहि...यात् । जातवेदसे...वेदः । सन...त्यग्निः । त्रयंबकं...वर्धनं । उर्वारुक...मृतात् ॥ इति न्यासः ॥ ध्यानम् ।

**सत्यं मानविवर्जितं श्रुतिगिरामाद्यं जगत्कारणं,**
**व्याप्तिस्थावरजंगमं मुनिवरैर्ध्यातं निरुद्धेन्द्रियैः ॥**
**अर्काग्नीन्दुमयं शताक्षरवपुस्ताराात्मकं सन्ततं,**
**नित्यानन्दगुणालयं गुणपरं वन्दामहे तन्महः ॥**

मनुः गायत्र्याद्यं यथोक्तं । त्रिष्टुबनुष्टुम्गायत्र्यः ॥ अनुष्टुबाद्यनुष्टुबगायत्रिष्टुमः ॥

तारव्याहृति संरुद्धं जपेन्मन्त्रं शताक्षरं ।
नित्यमष्टोत्तरशतं निश्रेयसफलाप्तये ॥
गायत्र्याद्यं जपेन्मन्त्रं सर्वपापविनाशनं ।
सर्वशत्रुविनाशाय त्रिष्टुबाद्यं जपेदिमं ॥
त्र्यंबकाद्यंच प्रजपेदायुरारोग्य वृद्धये ॥

## प्रत्यंगिरा ॥ (यां कल्पयंति)

यन्त्रं ॥ षट्कोणं, भूपुरं ॥

पीठदेवता: । मं मंडूकादि...नम: । जयादि मंगलांता: नवपीठशक्ती: ॥

ॐ ह्रीं प्रत्यंगिरे पद्मासनाय नम: पुष्पाद्यासनं ॥

१. षट्कोणेषु आग्नेयादि चतुर्विदिक्षु मध्येदिक्षु च । हृदयादि षडंगयुवती:

२. भूपुरे इन्द्रादि...तत: वज्राद्यायुधानि ॥

## ॥ मधुमती ॥

यन्त्रं । वर्तुलद्वयं, अष्टदलं, भूपुरम् ॥

ॐ आधारशक्त्यादि...नम: । जयादि मंगलांता: नवपीठशक्ती: ॥

ॐ सर्वसिद्धिप्रदे वर्णनीये सर्वबुद्धिप्रदे डाकिनीये मधुमत्येह्येहि नम: पुष्पाद्यासनं ॥

१. वर्तुलद्वयांतराले षड्भागं विधाय, आग्नेय्यादि विदिक्षु मध्ये च हृदयादि देवता ।

२. अष्टदलेषु, पूज्यपूजकयोरंतरालंप्राचींप्रकल्प्य प्रचीक्रमेण ।

निद्रा, छाया, क्षमा, तृष्णा, कांति, आर्य्या, श्रुति, स्मृति,

३. भूपुरे इन्द्रादि, तत: वज्राद्यायुधानि ॥

## ॥ बाणेशी ॥

यन्त्रं । वर्तुलद्वयं, अष्टदलं भूपुरम् ॥

मं मंडूकादि...नम: । नवपीठशक्ती: । मोहिनि, क्षोभिणि, त्रास्यै, स्तंभिनि, कर्षिणि, द्राविणि, ह्लादिनि, क्लिन्ना मध्ये क्लेदिनि ॥

१. देव्यंगे आग्नेय्यादि विदिक्षु मध्ये च हृदयादि देवता । दिक्ष्वग्रे द्राविणीमुख्यै ॥

२. अष्टदलेषु पूज्यपूजकयोरंतरालं प्राचीं प्रकल्प्य, प्राचीक्रमेण ।

अनंगरूपा, अनंगमदना, अनंगमन्मथा, अनंगकुसुमा, अनंगमदनपरा, अनंगशिशिरा, अनंगमेखला, अनंगदीपिका ॥

३. भूपुरे इन्द्रादि ततः वज्राद्यायुधानि ॥

## स्वयंवरकला

चक्रं । त्रिकोण चतुरश्र, षट्कोण, अष्टदल, द्विदिग्दल, षोडश, द्वात्रिंशत् चतुषष्टिदलं, वृत्तत्रयं, त्ररेखात्मक भूपुरं

ॐ आं आधारशक्त्यादि परत्वांत पीठदेवताभ्यो नमः । जयादि मंगलांता नवपीठशक्तीः ।

ॐ सर्वसिद्धिप्रदे वर्णनीये सर्वसिद्धिप्र देडाकिनीये स्वयंवरे एह्येहि नमः । पुष्पाद्यासनं ॥

१. त्रिकोणे । पार्वत्यै नमः

२. चतुष्कोणे पूज्यपूजकयोरंतरालं प्राचीं प्रकल्प्य प्राचीक्रमेण, मेघा विद्या लक्ष्मी, महालक्ष्मी ॥

३. षट्कोणे आग्नेय्यादि विदिक्षु मध्य दिक्षु च । हृदयादि षडंगदेवताः

४ अष्टदलेषु प्राचीक्रमेण । अं आं नमः इत्यादि अं अः पर्यंतं द्वे द्वे स्वरौ एकैकदले ॥

५. द्विदिग्दले । प्रथमदिग्दले इन्द्रादि दशपालान् । द्वितीये वज्राद्यायुधानि ॥

६. षोडशदले । ॐ श्रीरमायै नमः इति सर्वेषु दलेषु ॥

७. द्वात्रिंशद्दले । ॐ ह्रीं क्रौं शिवायैनमः इति सर्वत्र ॥

८. चतुषष्टिदले । ॐ श्रीं ह्रीं क्लीं त्रिपुरायै नमः इति सर्वत्र

९. वृत्तत्रयेषु प्रथमवृत्ते ॐ महालक्ष्मै नमः

द्वितीये ॐ भवान्यै नमः

तृतेये ॐ पुष्पसायकायैनमः ।

१०. भूपुराभ्यन्तर चतुर्द्वारे पूर्वादि । विघ्नेशाय क्षेत्रपालाय, भैरवाय, योगिन्यै ॥

## स्वयंवर दुर्गा न्यासः

ॐ ह्रीं जगत्त्रयवश्यमोहिन्यै

ॐ ह्रीं त्रैलोक्यवश्य मोहिन्य

ॐ ह्रीं उरगवश्यमोहिन्यै

ॐ ह्रीं सर्वराजवश्यमोहिन्यै

ॐ ह्रीं सर्वस्त्रीपुरुषवश्यमोहिन्यै

ॐ ह्रीं सर्ववश्यमोहिन्यै

आवरणपूजां कृत्वा ' तुर्लक्षजपः पायसान्नेन दशांशतो होमः ।

एव यो भजते देवीं वश्यास्तस्याखिला जनाः ।

लाजै स्त्रिमधुरोपेतैर्जुहुयादयुतं तु यः ॥

लभते वांछितां कन्यां धनमान समन्विताम् ॥

## नित्यक्लिन्नानित्या

यन्त्रं । षट्कोणं, अष्टदलं भूपुरम् ॥

मं मंडूकादि...नमः । जयादिमंगलांताः नवपीठशक्तीः ॥

ॐ ह्रीं सर्वशक्तिकमलासनायनमः पुष्पाद्यासनं ।

१. षट्कोणेषु । आग्नेय्यादि विदिक्षु मध्ये दिक्षु च हृदयादि षडंगयुवतीः ।

२. अष्टदलेषु पूज्यपूजकयोर्मध्ये प्राचींदिशं प्रकल्प्यप्राचीक्रमेण वामावर्तेन ।

नित्या, निरंजना, क्लिन्ना, क्लेदिनी, मदनातुरा, मदद्रवा, द्राविणी, आकर्षणी ।

३. भूपुरे इन्द्रादि, ततः वज्राद्यायुधानि ॥

## वज्रप्रस्तारिणी

यन्त्रं । षट्कोणं, द्वादशदलं, भूपुरं ॥

म मंडूकादि...नमः । जयादि मगलांता नवपीठ शक्तीः ।

१. षट्केणेषु अग्नेय्यादि विदिक्षु, मध्ये दिक्षु च हृदयादि षडंगयुवतीः ।

२. द्वादशदलेषु प्राच्यादिक्रमेण । हृल्लेखा, क्लेदिनी, क्लिन्ना, क्षोभिणी, मदनातुरा, निरंजना, 'रागवती, मदनावती, मेखला, द्राविणी, वेगवती, स्मरा ॥

३. भूपुराभ्यन्तरे दिक्, विदिक्षु च । पूर्वे ब्राह्मी, दक्षिणे माहेश्वरी, पश्चिमे कौमारी, उत्तरे वैष्णवी, आग्नेये वाराही, निरृते इन्द्राणी, वायव्ये चामुण्डी, ईशाने महालक्ष्मी ॥

४. भूपुरे इन्द्रादि, ततः वज्राद्यायुधानि ॥

## त्रैलोक्यमोहनगौरी

यन्त्रं षट्कोणं, अष्टदलं, भूपुरं ॥

मं मंडूकादि ..नमः जयादि मंगलांताः नवपीठशक्तीः । ॐ ह्रीं त्रैलोक्यमोहन गौरीपद्मासनाय नमः ।

१. षट्कोणेषु । आग्नेय्यादि विदिक्षु च हृदयादिदेवताः ।

२. अष्टदलेषु । पूज्यपूजकयोर्मध्ये प्राचींदिशं प्रकल्प्य, प्राचीक्रमेण ब्राह्म्यादि अष्टमातृकाः ।

३. भूपुरे इन्द्रादि । ततः वज्राद्यायुधानि ॥

## स्वप्नवाराही

यन्त्रं ॥ त्रिकोण षट्कोण, षोडशदल, अष्टदल भूपुरं (एकरेखात्मकम्)

पीठदेवताः । मं मंडूकादि...नमः । नवपीठशक्तीः जयादि मंगलांताः ॥

ॐ ह्रीं वाराहीयोगपीठात्मने नमः इति पुष्पाद्यासनं ।

त्रिकोणमध्ये मूलेन देवीं आवाहनादि पुष्पांतं पूजनम् ॥

१. षट्कोणकेसरेषु । आग्नेय्यादि चतुर्विदिक्षु मध्येदिक्षु च हृदयादिषडंगयुवतीः ॥

२. षोडशदले पूज्यपूजकयोर्मध्येप्राची दिशं, तदनुसारेण अन्यादिशः प्रकल्प्य । प्राच्यादि ॥

वामावर्तेन । उच्चाटिनी, उच्चाटिनीश्वरी, शोषिणी, शोषिणीश्वरी, मारिणी, मरिणीश्वरी, भीषणी, त्रासिनी, त्रासिनीश्वरी, कंपिनी, कंपिनीश्वरी, आज्ञाविवर्तिनी आज्ञाविवर्तिनीश्वरी, वस्तुजातेश्वरी सर्वसंपादिनी ॥

३. अष्टदले प्राचीक्रमेण वामावर्तेन । ब्राह्म्यादि अष्टमातृकाः ।

४. अष्टदलाग्रेषु प्राचीक्रमेण दक्षिणावर्तेन । असितांगादि अष्टभैरवाः

५. भूपुरे इन्द्रादि, ततः आयुधानि च ॥

## स्वप्नेश्वरी

यन्त्रं । षट्कोणं, एकरेखात्मक भूपुरम् ॥

पीठदेवताः मं मंडूकादि नमः । नवपीठशक्तीः जयादि मंगलांताः

षटकोणकेसरेषु आग्नेय्यादि चतुर्विदिक्षु मध्ये दिक्षु च । हृदयादि षडंगयुवती: ॥

भूपुरे इन्द्रादि तत. तेषां आयुधानि ॥

## पृथिवी

चक्रं । षट्कोण अष्टदल, एकरेखात्मक भूपुरम् ॥

पीठदेवता: । मं मंडूकादि...नम: नवपीठदेवता:, विमला, उत्कर्षिणी, ज्ञाना, क्रिया, योगा, प्रह्ण, सत्या, ईशानायै मध्ये अनुग्रहायै नम: ।

ॐ नमो भगवत्यै धरण्यै सर्वात्म संयोग पद्मपीठाय नम: पुष्पाद्यासनं ॥

१. षट्कोणकेसरेषु आग्नेय्यादि चतुर्विदिक्षु मध्येदिक्षु च । हृदयादि षडंग युवती: ॥

२ अष्टदलेषु पूर्वादिचतुर्दिक्षु, आग्नेय्यादि चतुर्विदिक्षु च । आकाश, अग्नि, जल, वायु, आकाशकला, अग्निकला, जलकला, वायुकला इत्यष्टौ ॥

३ भूपुरे । इन्द्रादि दशदिक्पाला: तत. तेषां आयुधानि ॥

## गंगा

यन्त्र: षट्कोणं, अष्टदलं, भूपुरम् (एकरेखा)

पीठदेवता: । मं मंडूकादि...नम: । नवपीठशक्ती: । जयादि मंगलांता: ।

ॐ गंगायै पुष्पासनाय नम: ।

१. षट्कोणषु आग्नेय्यादि चतुर्दिक्षु मध्येदिक्षु च । हृदयादि षडंगयुवती: ।

२. अष्टदलेषु पूज्य पूजकयोरन्तराले प्राचींदिशं प्रकल्प्य, प्राचीक्रमेण वामावर्तेन, रुद्र, विष्णु, ब्रह्मा, सूर्य, हिमाचल, मैनाक भगीरथ, उमापति: ।

३. अष्टदलाग्रेषु पूर्ववत् । मीन, कूर्म, मंडूक, मकर, हंस, चक्रवाक, बक, सारसा ॥

४. भूपुराद्बहि: इन्द्रादि, तत: आयुधानि ॥

मणिकर्णिका विधानमपि पूर्ववत् ॥

## खेचरी

मन्त्रोद्धारः

भेकी तमः परा शक्तिः खेचर्यै चाऽम्बरी ततः ।
मन्त्रोऽयं खेचरी नाम खेचरत्वप्रदायकः ।।
परया पूजयेद्देवीः परिवार गताः प्रिये ।।
मलह्रीं सौः खेचर्यै नमः ।। (म्ल्ह्रींखेचर्यै नमः ।।)

उत्कीलनं

शक्तिमन्ते जपेद्विश्वं प्रथमं परमेश्वरी ।
खेचरीमन्त्रराजस्य स्यादुत्कीलनको मनुः ।।

संजीवनं

खेचरीमन्त्रराजस्य भवेत् संजीवनं शिवे ।
वाणी मादौ परामन्ते जपेन्मांत्रिकसत्तमः ।।

शापमोचनं

तारं खेचरि रुद्रस्य शापं मोचय मोचय ।
परां नीरं महादेवि विद्येय शापहारिणी ।।

यन्त्रं

बिन्दुस्त्रिकोणकं वृत्तं वसुपत्राग्निवृत्तकम् ।
धरागृहं मयाख्यातं खेचरी यन्त्रमुत्तमम् ।।

ध्यानम्

विनिद्रकमलोत्पलैर्मुनिभिरर्चितांघ्रिद्वयां
सितां सितकरांबुजां सितकरोज्ज्वलच्छेखराम् ।
रवीन्दुशिखिलोचनामभयपुस्तकौ बिभ्रतीं
स्मरामि हृदि खेचरीं भुवनमातरं सिद्धिदाम् ।।

संपुटमन्त्रः

विश्वांते सं जपेत् कूटं कूटादौ शरदं जपेत् ।
खेचरी मूलमन्त्रस्य मन्त्रोयं संपुटाभिधः ।।

## षड्देवतामन्त्रः (षोडशार्णमन्त्रः)

ॐ अं कं चं टं तं पं हं लों ह्रीं हंसः हुं फट् स्वाहा ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । अष्टिश्छन्दः । महापर्वत महाब्धि महाग्नि महावायु महेश्वरा, महाकाशः षड्देवताः । हुं बीजं । ह्रीं शक्तिः । ह्रां ह्रीं इति न्यासः ।

नानारत्नार्चिराक्रान्त वृक्षांभः स्रवणैर्युतं ।
व्याघ्रादिपशुभिर्व्याप्तं सानुयुक्तं गिरिं स्मरेत् ॥
मत्स्यकूर्मादि बीजाढयं नवरत्नसमन्वितं ।
घनच्छायं सकल्लोलमकूपारं विचिन्तयेत् ॥

ज्वालावतीसमाक्रांत जगत्रितयमद्भुतं ।
पीतवर्णमहावह्निं संस्मरेच्छत्रुशान्तये ॥
धरासमत्यरेण्वौघ मलिनंरुद्रभूदिवां ।
पवनं संस्मरे द्विश्व जीवनं प्राणरूपतः ॥

नदी पर्वतवृक्षादि फलिता ग्रामसंकुला ।
आधारभूता जगतो ध्येयापृथ्वी मन्त्रिणा ॥
सूर्यादिग्रहनक्षत्र कालचक्रसमन्वितं ।
निर्मलं गगनं ध्यायेत्प्राणिनामाश्रयप्रदम् ॥

एवं षड्देवता ध्यात्वा सहस्राणि तु षोडश ।
जपेन्मन्त्रं दशांशेन षड्द्रव्यैर्होममाचरेत् ॥
ब्रीह्यस्तंदुला आज्यं सर्षपाश्च यवास्तिलाः ।
एतैर्हुत्वायथाभागं पीठे पूर्वोदितोयजेत् ॥

## मधुमती विद्या

श्रीमधुमती स्थावरजंगमाकर्षिणी ठं ठं स्वाहा ॥

कदलीवनमासाद्य लक्षमन्त्रं जपेन्नरः ।
पृथ्वीशाकर्षणं कुर्यान्नात्रकार्या विचारणा ।
त्रैलोक्याकर्षिणी विद्या तस्य हस्ते सदा भवेत् ।
नदीं पुरीं च रत्नानि हेमस्त्रीशैलभूरुहान् ।

आकर्षयत्यंबुनिधिं सुमेरुं च दिगंततः ।
अलभ्यानि च वस्तूनि दूराद् भूमितलादपि ॥

## पद्मावतीमन्त्रः

ॐ ह्रीं पद्मावती त्रैलोक्यवार्तां कथय कथय स्वाहा ॥

वृत्तांतं च सुरस्थानाद्रहस्ये विदुषामपि ।
राज्ञां च कथयत्येषा सत्यं सत्वरमादिशेत् ॥
द्वितीयवर्षपाठेन भवेत्पद्मावती शुभा ॥
ब्रह्मविष्ण्वादिकानां च त्रैलोक्ये यादृशी भवेत् ।
सर्वं वदति देवेशि त्रिकालज्ञः कविः शुभः ॥
त्रिवर्षं संपठन्देवि लभेद्भोगवतीं कलाम् ।

## मृतसंजीविनी

ॐ मृतसंजीविनी मृतमुत्थापयोत्थापय स्वाहा ॥

महाकालेन दृष्टोऽपि चितामध्यगतोऽपिवा ।
स्वाहांतो मनुराख्यातोमृतसंजीवन मकः ।

## स्वप्नवाराही

ॐ ह्रीं स्वप्नवाराहि कालि स्वप्नं कथय अमुकस्यामुकं देहि क्रीं स्वाहा ॥

चतुर्वर्षं पठेद्यस्तु स्वप्नसिद्धिस्ततो भवेत् ।
स्वप्नसिद्धा चतुर्वर्षात्तस्य स्वप्नेसदा स्थिता ॥
चतुर्वर्षस्य पाठेन चतुर्वेदाधिपो भवेत् ।
तद्धस्तजलसंयोगान्मूर्खः काव्यं करोति च ॥
तस्य वाक्यपरिचयान्मूर्तिर्विन्दति काव्यतां ॥
मस्तके तु करं कृत्वा वद वाणीमिति ब्रुवन् ।
साधको वांछया कुर्यात्तत्तथैव भविष्यति ॥
ब्रह्माण्ड गोलके याश्च या काश्चिज्जगतीतले ।
समस्ता सिद्धयो देवि करामलकवत्सदा ॥

साधक स्मृतिमात्रेण यावंत्यः संति सिद्धयः ।
स्वयमायांति पुरतो जपादीनां तु का कथा ॥
विदेशवर्तिनो भूत्वा वर्तते चेटका इव ॥
अमायां चन्द्र संदर्श चन्द्रग्रहणमेव च ।
अष्टम्यां पूर्णचन्द्रत्वं चन्द्र सूर्याष्टकं तथा ।
अष्टदिक्षु तथाष्टौ च करोत्येव महेश्वरी ।
अणिमा खेचरत्वं च चराचरपुरीगतं ।
पादुका खड्गवेताल यक्षिणी गुह्यकादय ।

## श्रीबगलास्त्रपंचकम् ॥ स्तम्भनकारिणी विद्या ॥

अस्य श्रीरणतंभनकारिणी बगलास्त्रमहामन्त्रस्य । वसिष्टऋषिः । पंक्तिः छन्दः । श्रीरणस्तंभनकारिणी बगलामुखीदेवता । लं बीज । ह्लीं शक्तिः । रं कीलकं ।

१ ॐ ह्रीं, २ बगलामुखि, ३ सर्वदुष्टनां, ४ वाचं मुखं पदं स्तंभय, ५ जिह्वांकीलय, ६ बुद्धि विनाशय ह्लीं ॐ स्वाहा ॥ इति न्यासः । ध्यानम् ॥

पीतांबरधरां देवीं द्विसहस्त्रभुजान्वितां ।
अर्धेजिह्वां गदां चार्थे धारयन्तीं शिवां भजे ॥

मनुः ॥ ॐ ह्रीं हुं ग्लौं बगलामुखि ह्रां ह्लीं ह्रूं सर्वदुष्टान ह्रैं ह्रौं ह्रः वाचं मुखं पदं स्तंभय ह्रः ह्रौं ह्रैं जिह्वां कीलय २, ह्रूं ह्रीं ह्लां बुद्धि विनाशय ग्लौं हुं ह्लीं ॐ हुं फट् ।

## उल्का मुखीं मन्त्रः

अस्य श्री जगत्स्तंभनकारिण्युल्कामुखीअस्त्र मन्त्रस्य यज्ञवाराह ऋषिः ।

अनुष्टुप् छन्दः । श्रीजगत्स्तंभनकारिण्युल्कामुखी देवता । ह्लीं बीजं । स्वाहा शक्तिः । ग्लौं कीलकं । न्यासः । पूर्ववत् । ध्यानम् ।

विलयानलसंकाशां वीरावेशनसंयुतां ।
विराणमयीं महादेवीं स्तंभनार्थं भजाम्यहम् ॥

मनु । ॐ ह्लीं ग्लौं बगलामुखि सर्वदुष्ट नां ॐ ह्लीं ग्लौं वाचं मुखं पदं ॐ ह्लीं ग्लौं स्तंभय २ ॐ ह्लीं ग्लौं जिह्वां कीलय २ ॐ ह्लीं ग्लौं बुद्धि विनाशय २ ग्लौं ह्लीं ॐ स्वाहा ॥

## जातवेदोमुखी

अस्य श्री ऋषि देवत स्तंभनकारिणी जातवेदोमुखि महामन्त्रस्य । कालाग्निरुद्रऋषिः । पंक्ति छन्दः । श्रीजातवेद मुखि देवता । ॐ बीजं । ह्लीं शक्तिः । ह्लीं कीलकं न्यास पूर्ववत् । ध्यानम् ।

जातवेदो मुखीं देवीं देवता प्राणरूपिणी ।
भजेऽहं स्तंभनार्थं च चिन्मयां विश्वरूपिणीम् ॥

मनुः । ॐ ह्लीं ह्रीं ह्लीं ॐ बगलामुखी सर्वदुष्ठानां ॐ ह्लीं ह्रीं ह्लीं ॐ वाचं मुखं पदं स्तंभय २ ॐ ह्लीं ह्रीं ॐ जिह्वां कीलय २ ॐ ह्लीं ह्रीं ह्लीं ॐ बुद्धि विनाशय २ ॐ ह्लीं ह्रीं ह्लीं ॐ ॥

## ज्वालामुखी

अस्य श्रीत्रिमूर्तिस्तंभनकारिणी ज्वालामुखी महामन्त्रस्य । अत्रिः ऋषिः । गायत्री छन्दः श्रीज्वालामुखीदेवता । न्यासं पूर्ववत् । ध्यानम् ।

ज्वलत्पुंज जटायुक्ता कालानलसमप्रभाम् ।
चिन्मयां स्तंभनां देवीं भजेऽहं विधि पूर्वकम् ॥

मनुः ॥ ॐ ह्लीं रं रं रं र रं प्रस्फुर २ बगलामुखी ॐ । २ सर्वदुष्टानां ॐ । २ वाचं मुखं पदं स्तंभय २ ॐ । २ जिह्वां कीलय २ ॐ । २ बुद्धि विनाशय २ ॐ । २ स्वाहा ॥

## बृहद्भानुमुखी

अस्य श्रीमाया स्तंभनकारिणी बृहद्भानुमुखीमहामन्त्रस्य । सविताऋषिः । गायत्रीछन्दः ।

श्रीबृहद्भानुमुखी देवता । ह्लीं बीजं । ह्लीं शक्तिः । जों कीलकं । न्यासः पूर्ववत् । ध्यानम् ।

कालानलनिभां देवींज्वलत्पुंज शिरोरुहां ।
कोटिबाहु समायुक्तां वैरिजिह्वासमन्विताम् ॥
स्तंभनास्त्रमयांदेवीं धृढपीनपयोधरां ।
मदिरामेदसंयुक्तां बृहद्भानुमुखीं भजे ॥

मनुः ॐ ह्लीं ह्लीं ह्लं ह्लें ह्लीं ह्लीं ह्लं ह्लें ह्लीं ह्लः बगलामुखि ॐ १२ सर्वदुष्टानां ॐ १२, वाचं मुखं पदं स्तंभय ॐ १२ जिह्वां कीलय ॐ १२ बुद्धि विनाशय ॐ स्वाहा ॥

## ब्रह्मास्त्रस्तंभिनी काली ॥

अस्य श्रीस्तंभनास्त्रविभेदिनी कालिका महामन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः ।

श्रीस्तंभनास्त्रविभेदिनी काली देवता । लं बीजं । ह्रीं शक्तिः । रं कीलकं ।

१ ग्लौं हुं ऐं ईं श्रीं कालि कालि । २ महाकालि एह्येहि । ३ कालरात्रि आवेशय २ । ४ ईं स्फुर २ । ५ प्रस्फुर २ । ६ स्तंभनास्त्रशमनि हुं फट् स्वाहा । संख्याक्रमेण न्यासः । ध्यानम् ।

**कलीं कराल वन्दनां कलाधरधरां शिवाम् ।**
**स्तंभनास्त्रेक संहारीं वन्देऽहं भद्रकालिकाम् ॥**
**स्तंभनास्त्रेप संहारां ज्ञानमुद्र समन्वितां ।**
**वीणापुस्तक संयुक्तां कालरात्रि नमाम्यहम् ॥**
**बगलास्त्रैप संहारां विश्वतोमुख शोभितां ।**
**भजेऽहं कालिकां देवीं जाडच्यध्वंसनकारिणीम् ॥**

मनुः । ग्लौं हुं ऐं ईं श्रीं कालि कालि महाकालि एह्येहि कलरात्रि आवेशय २ ईं ईं स्फुर २ प्रस्फुर २ स्तंभनास्त्र शमनि हुं फट् स्वाहा ॥

## बृहद्वारही

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । श्री बृहद्वारही देवता । ग्लौं बीजं । ऐं शक्तिः ।

ठः ठः ठः ठः कीलकं ॥ ऐं ग्लौं ऐं ॐ नमः भगवति वार्तालि २ । २ वाराहि २ । ३ वराहमुखि २ । ४ अन्धे अन्धिनि नमः । रुंधेरुंधेधिनि नमः । ६ जंभे जंभिनि नमः । इति न्यासः ।

**रक्तांबुजे प्रेतवरासनस्थामर्धोरुकामार्भटिकासनस्थां ।**
**दन्ष्ट्रोल्लसत्पोत्रिमुखारविन्दां कोटीर संच्छिन्न हिमांशुरेखां ॥**
**ह लं कपालं दधतीं कराभ्यां वामेतराभ्यां मुसलेष्टदौ च ॥**
**रक्तांबरां रक्तपट तरीयां प्रवालकर्णाभरणां त्रिनेत्रां ॥**
**श्यामां समस्ताभरणस्रगाढ्यां वाराहिसंज्ञां प्रणतोस्मि नित्यं ॥**

मनुः ॥ ऐं ग्लौं ऐं ॐ नमो भगवति वार्तालि २ वाराहि २ वराहमुखि २ ऐं ग्लौं ऐं अन्धे अन्धिनि नमः रुंधेरुंधिनि नमः जंभे जंभिनि नमः मोहे मोहिनि नमः स्तंभे स्तंभिनि नमः ऐं ग्लौं ऐं सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्त चक्षुर्मुख गति जिह्वास्तभनं कुरु २ शीघ्रं वश्यं कुरु २ ऐं ग्लौं ऐं ठः ठः ठः हुं फट् स्वाहा ॥

## पुनः सरस्वती

पुनः सरस्वती चार्वङ्ग्यपि विभूतिश्च त्र्यक्षं सरस्वत्यै ततः। नमोन्ते परमेशानि मया प्रोक्तं नगात्मजे।
ऐं ह्रीं ॐ सरस्वत्यै नम ॥

अनलप्रिया ॥ तारं लज्जा वाग्भवं च मध्येऽनलप्रियेततः। त्र्यक्षं विश्वं तथांते च पर्वतेश्वरनंदिनि ॥
देव्याश्चत्वारि भेदानि सरस्वत्या वरानने ॥ ॐ ह्रीं ऐं अनलप्रिये ॐ नमः ॥

ताराभेदः १. ॐ ऐं हूं ह्रीं ऐं हूं तारे फट् स्वाहा ॥ २. ॐ ह्रीं ऐं हूं उग्रतारे (उग्रतारिणि) फट् स्वाहा ॥
३. ओ स्त्रीं ऐं हूं एकजटे फट् स्वाहा। ४. ॐ ह्रीं ऐं हूं नीलसरस्वती फट् स्वाहा।
५. ॐ ह्रां स्त्रीं ह्रीं ऐं हूं उग्रतारे फट् स्वाहा ॥

भुवनेश्वरीभेदाः १. ॐ भैरव्यै नमः। २. ॐ ह्रीं भीमरूपायै नमः। ३. ॐ ह्रीं श्रीं भीमायै नमः। ४. ह्रीं
श्रीं क्लीं भुवनेश्वर्यै नमः।

मातंगीभेदः ॐ क्रीं श्रीं प्रीं प्रीं च्छ्रीं उच्छिष्टचण्डालिनिदेवी महापिशाचिनि मातंगी देवी क्रींठः ह्रींठः ऐंठः
स्वाहा ॥ द्वाविंशत्यक्षरो मन्त्रः सुमुख्या स्वाहान्तो वा ॥

ॐ उच्छिष्टचण्डालिनी सुमुखी देवी महापिशाचिनी ह्रीं ठः ठः ॥

चक्रिणी ॐ क्रीं च्छ्रीं महाचक्रिणि ऐं ठः स्वाहा ॥

कुब्जिका ॐ श्रीं प्रीं कुब्जिकेदेवि ह्रीं ठः स्वाहा ॥

शाम्बरी ॐ प्रीं देवी शांबरी क्रीं ठः स्वाहा ॥

शारिबाभेदद्वयं १. ततः अपर्णामूलं। ॐ हूं च्छ्रीं आं शां देव्यै अपर्णायै नमः। २. हैमवतीश्वरी मूलंः ॐ ह्रीं
श्रीं हैमवतीश्वरी ह्रीं स्वाहा ॥

ज्वालामुखी भेदाः। तत्र अंबिकामूलं ॐ ह्रीं मातरंबिके हूं फट् स्वाहा। अथ भगरूपिणी। ॐ श्रीं देवी
भगरूपिणि हूं फट् स्वाहा। भीडा भेदविहीना इत्यलं ॥

शारदा। तारं माया च मदनं शरद्विज्ञेयमीश्मकं। मन्त्रं च षट्शिरो ज्ञेयं ततः पल्लवमुद्धरेत्।

कामेश्वरीमन्त्रः माया च हरिणाक्षी च चन्द्रः शीतांशुरेव च। मदनर्मिध्वान्तौद्यौ संयोज्य स्तनबीजकम् ॥
मनु सप्तशिरोज्ञेयः ततः पल्लवमुद्धरेत्। जृंभणाख्ये ततो देवी कामेश्वरी तथैव च ॥
ततो बाणदेवतेपिह्यन्ते नारमुदाहृतं। कामेश्वर्या महादेव्या द्वाविंशत्यक्षरो मनुः ॥
ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं जंः जृम्भ (जंब) णाख्ये कामेश्वरी बाणदेवते स्वाहा ॥

ध्यानं ॥ त्रिलोचनां सूर्यसहस्रशोभां सिंहासनस्थां द्विभुजां धृतासिम्।
पीतांबरां विष्णुमहेशसेव्यां कामेश्वरीं तां हृदये स्मरामि ॥

## ।। श्री कात्यायनी कल्पः ।।

ॐ ह्रीं कात्यायनि स्वाहा ।। (अष्टाक्षरी) ।।

अस्य मन्त्रस्य । कपिलमुनि ऋषिः । गायत्री छन्दः । चण्डिकाकात्यायनी देवता ।।

ह्रीं श्रीं बीजं । स्वाहा शक्तिः ।। ॐ ह्रीं श्रीं इति अक्षरत्रयेण न्यासः ।

ॐ ह्रीं श्रीं अंगुष्टा इत्येव । ध्यानम् ।।

**ॐ सव्यपाद सरोजेनालंकृतोरु मृगाधिपां ।**
**वामपादाग्र दलितमहिषासुरनिर्भराम् ।**
**सुप्रसन्नां सुवदनां चारुनेत्रत्रयान्वितां ।**
**हारनूपुरकेयूर जटामुकुट मण्डितां ।।**
**विचित्रपट्टवसनामर्द्ध चन्द्र विभूषितां ।**
**खड्गखेटकवज्राणि शूलं च विशिखं तथा ।**
**धारयन्तीं धनुः पाशं शंख घण्टे सरोरुहं ।**
**बाहुभिर्ललितैर्देविकोटि चन्द्रसमप्रभां ।**
**खभाहृतैर्दिविषदौ वरैराकाशसंस्थितैः ।**
**स्तूयमातां मोदमानैर्लोकपालादिभिः सदा ।।** पंचपूजा ।।

पुरश्चरणं लक्षजपं, तत्तद्दशांशेन होमतर्पणमार्जन, भोजनं ।। ततः प्रयोगार्थं । कार्तिकस्य सितेपक्षे नवम्यामारभेज्जपं । प्रत्यहं सहस्र जप्त्वा संप्राप्य नवमीं सितां । सहस्रं मासमेकंतु जपेन्नित्यं यथाविधि । मालतीवकुलैः कुन्दै मन्त्री मधुर संप्लुतैः । सहस्रत्रितयं हुत्वा वागीशो जायतेऽचिरात् ।।

## कात्यायनी ।। मं महा

यन्त्रं षट्कोणं, भूपुरम् ।

पीठपूजा । मं मंडूकादि...नमः । नवपीठ शक्तीः पूर्वादिक्रमेण । प्रभा, माया, जया, सूक्ष्मा, विशुद्धा, नंदिनि, सुप्रभा, विजया, मध्ये सर्वसिद्धिदा ।।

१. षट्कोणेषु आग्नेयादि चतुर्दिक्षु, देव्यापुरतः पश्चिमे च ।

२. भूपुराभ्यन्तरे प्राच्यादि चतुर्दिक्षु । शकिनी, योगिनी, खचरी, शाकिनी ।।

३. भूपुराद्बहि । इन्द्रादि दशदिक्पालाः

४. ,, तेषां आयुधानि ।।

## ज्वालामुखीं

मन्त्रोद्धारः

तारं लज्जां श्रियंचैव ज्वालामुखि ममेति च ।
सर्व शत्रून् भक्षय द्विरन्ते कूर्चंहरं पयः ॥
ॐ ह्रीं श्रीं ज्वालामुखि मम सर्वशत्रून् भक्षय २ फट् स्वाहा ॥
तारेण पूजयेद्देवि परिवारगताः पराः ॥

उत्कीलनं

रमामादौ जपेद्देवी मन्त्रांते सकलां जपेत् ।
ज्वालामुखीमनोरेष मन्त्रोऽस्त्युत्कीलन क्षमः ॥

संजीवनं

ज्वालामुखीमन्त्र एष परः संजीवनाभिधः ।
वग्भवं प्रणमादौ च ठद्वयांते जपेत्पराम् ॥

शापमोचनं

तारं रमां परां ज्वालामुखी भैरवलांचनं ।
कूर्चं नीरं महादेवी विद्येयं शापहारिणी ॥

यन्त्रं

मध्ये शून्यं तदुपरि शरत्कोणमालिख्य देवि
तत्राधस्तात् त्रिकमथ बहिर्दिग्दलं वृत्तमेकं ।
वस्वश्रं द्विः कदलजशर द्वत्त भूगेहयुक्तं
ज्वालामुख्या जगति जयताच्चक्रमेतन्महेशि ।

आदौषट्कोणमुद्धृत्य चोर्ध्वरेखां निकर्षयेत् ।
अधोरेखां समाकृष्य पार्श्वाभ्यां च निकर्षयेत् ॥
अधोरेखां क्षिपेदूर्ध्वं ऊर्ध्वरेखां क्षिपेदधः ॥
मध्ये त्रिकोणबिंदौ श्रीज्वालामुख्या महालयम् ।
ततो वृत्तकमालिख्य लिखेदष्टारमुत्तमं ।

षोडशारं समुध्दृत्य वृत्तैकोपरि पार्वति ।
वृत्तत्रयं पुनर्न्यस्य लिखेद् भूपुरकं पुनः ।
ज्वालामुख्या इदं यन्त्रं त्रैलोक्योद्धारणक्षमं ॥
मध्ये कुर्यात्त्रिकोणैकं न्यसेद्बिंदुं शिवालयं ।
मध्ये यत्तु त्रिकोणंस्यात् सुन्दरीभवनं स्मृतं ॥
ऊर्ध्वं त्रिकोणमन्यत्स्यात् दक्षिणाकालिकालयम् ।
ततः मध्ये इत्यादि योजनीयं ॥

ध्यानम्

ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयाधिष्ठितां,
ज्वालाडंबरभूषितां सुवदनां नित्यासदृश्यां जनैः ।
षट्चक्रांबुजमध्यगां वरशरांभोजाभयान् बिभ्रतीं,
चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहं ॥

उद्यच्छीतकरांशुसंनिभमुखीमापीनस्तुंगस्तनीं,
सद्यः फुल्लसरोजपाशममलं वामेकरे बिभ्रतीम् ।
दक्षेऽभीतिवरौ त्रिवर्णविलसद्गात्रांगयष्टिं परां,
रुद्रोब्जस्थत्रिकोणमध्य विगतां ज्वालामुखीमाश्रये ॥

शीतद्युतिसन्निभां शशिकलाचूडां त्रिनेत्रां शिवा,
हृत्षट्कार सरोज पीठ विगतां माध्वीरसाघूर्णितां ।
त्र्यर्णोद्भासितसर्वगात्रलतिकां ज्वालादिकन्याकुलां
रज्यत्पादयुगां त्रिलोकजननीं ज्वालामुखी नौम्यहम ॥

ज्वालापरीतास्यशिरोरुहांतां, सरोजशंखासिगदाधरां च ।
सिंहासनस्थापितपादयुग्मां ज्वालामुखीं सद्धृदये स्मरामि ॥

संपुटमन्त्रः

कूर्चमादौहरं चांते जपेन्मूलं महेश्वरी ।
ज्वालामुख्या अयंमन्त्रः संपुटाख्योऽस्ति पार्वति ॥

## वज्रयोगिनी

मन्त्रोद्धारं

परार्णं वज्रयोगिन्यै ठद्वयं प्रणवादितः ।
मन्त्रोऽयं सर्वसिद्धीशः साधकानां जयप्रदः ॥
ॐ ह्रीं वज्रयोगिन्यै स्वाहा ॥
माया बीजेन देवेशि परिवारान् समर्चयेत् ॥

उत्कीलनं

परामन्ते जपेद्देवी वज्रयोगेश्वरीमनोः ।
उत्कीलनाख्यो मन्त्रोऽयं मन्त्रसिद्धिफलप्रदः ॥

सजीवनं

संजीवनमनुर्देवि वज्रयोगेश्वरीमनोः ।
मठमन्ते मठ चादौ जपेत्पार्वति कौलिकः ॥

शापमोचनं

तारं परां परां तारं वज्रयोगिनि प्रोद्धरेत् ।
शिवशापं मोचयापोविद्येयं शापहारिणी ॥

यन्त्रं

बिंदुस्त्रिकोणं च बहिषडस्रं वृतैकवसुश्रं वृत्तयुक्तं ।
धरागृहं यन्त्रमिदं महेशि श्रीवज्रशद्धांकितयोगिनीयम् ॥

ध्यानं

इन्द्वग्निसूर्यनयनां पाशांकुशधरां शिवाम् ।
द्विभुजां सिंहमध्यस्थां भजेऽहं वज्रयोगिनीम् (अभयंकरीम्)

संपुटमन्त्रः

तारादौ सकलां दद्यादन्ते तारं जपेत्प्रिये ।
संपुटो वर्णितोदेवि श्रीवज्रयोगिनीमनोः ॥

## कालरात्रि आसुरी आवरण पूजा

देवी रहस्ये—

यन्त्रं । बिन्दु त्रिकोण षट्कोण, वृत्तद्वय, अष्टदल वृत्तद्वय, षोडशदल वृत्तद्वय, त्रिरेखात्मक चतुर्द्वारयत भूपुरं ॥

पीठदेवताः मं मंडूकादि नमः । नवपीठ शक्तीः । जयादि मंगलांताः ॐ कालरात्रि योगापीठात्मने नमः ॥

१. त्रिकोणे पूज्यपूज्यकयोरंतरालं प्राचींतदनुसारेण प्राचीक्रमेण वामावर्तेन । संमोहिन्यै, मोहिन्यै, विमोहिन्यै ॥

२. षट्कोणकेसरेषु आग्नेय्यादि चतुर्विदिक्षु, मध्येदिक्षु च षडंगयुवतीः ।

३. वृत्तद्वयांतराले वामावर्तेन । अ आं नमः इत्यादि अं अः नमः पर्यंतं ॥

४. अष्टदलेषु । वामावर्तेन । ब्राह्म्यादि अष्टमातृकाः ।

५. पुनर्वृत्तद्वयांतराळे । कं नमः ख नमः इत्यादि ळं नमः क्षं नमः ॥

६. षोडशदलेषुवामावर्तेन । ऊर्वशी, मेनका, रम्भा, धृताची, मंजुघोषा, सहजन्या, सुकेशी, तिलोत्तमा, गांधर्वी, सिद्धकन्या, विद्याधरी, किंपुरुषा, यक्षिणी, पिशाची ॥

७. वृत्तद्वयांतराले । परमात्मने, ऐं सरस्वती, ह्रीं गौर्यै, क्लीं कामायै, श्रींरमायै, द्रां द्राविण्यै, द्रीं क्षोभिण्यै, क्लीं वशीकरिण्यै, ब्लूं कर्षिण्यै, सः संमोहिन्यै ।

८. भूपुराभ्यन्तरे । प्राच्यादिक्रमेण । वृत्तस्यबहिः । अणिमा, लघिमा, महिमा, ईशिता, वशिता, कामपूरणी, गरिमा, प्राप्तिः ।

९. भूपुरस्य प्रथमरेखायां पूर्वादिचतुर्दिक्षु । इच्छाशक्ति, क्रियाशक्ति, ज्ञानशक्ति । मध्यरेखायां । पूर्ववत् । रुद्र, विष्णु, ब्रह्मा ।

अन्तरेखायां । सत्वाय, रजसे, तमसे ।

१०. भूपुरबाह्ये ॥ गणेश, क्षेत्रपाल, वटुक, योगिनी ।

११. भूपुराद्बाह्ये ॥ इन्द्रादि दशदिक्पालाः ।

१२. ,, तेषां आयुधानि ॥

१३. देवी पार्श्वे प्राच्यादि चतुर्दिक्षु । प्राच्यां-मायायै, कालरात्र्यै, वटवासिन्यै,

दक्षिणे । गणेश्वर्यै, काह्लाराख्यायै, व्यापिकायै ।

पश्चिमे । अलर्क वासिन्यै, मायाराज्ञ्यै, मदनप्रियायै ।

उत्तरे रत्यै, लक्ष्म्यै, काह्लेश्वर्यै इति ॥

# कालरात्री

मन्त्रोद्धारः

प्रणवं वासना माया मन्मथः कमला ततः ।
मध्ये नामांचले सर्वं वश्यं कुरुद्वयं वदेत् ॥
वीर्यं देहि पुनर्नाम गणेश्वर्याश्मरी स्मृता ॥
ॐ ऐं ह्रीं क्लीं श्रीं कालरात्रि सर्ववश्यंकुरु २ वीर्यंदेहि
गणेश्वर्यै नमः ॥

तारचन्द्रेण संपूज्य परिवारांस्ततो यजेत् ॥

उत्कीलनं

विश्वांते वाग्भवं दद्यात् काममादौ जपेत्प्रिये ।
कालरात्रिर्मनो देवि स्यादुत्कीलकोमनुः ॥

सजीवनं

गणेश्वरीकालरात्र्याः स्यात् संजीवको मनुः ।
कूर्चमादौ हरांते मां जपेत्साधकसत्तमः ॥

शापमोचनं

तारं वाणीं च डिम्बं च कालरात्रि शिवस्य च ।
शापं मोचय नीरं च विद्येयं शापहारिणी ॥

यन्त्रं

बिन्दुस्त्रिकोण रसकोण सुवृत्त नाग-
पत्रकलार विलसद्दहनोरुवृत्तम् ।
भूमन्दिरत्रयमिदं गिरिपुत्रि यन्त्रं-
श्रीकालरात्रिनिलयं परमार्थदंस्यात् ॥

ध्यान

शूलाब्जपाशांकुशपद्महस्तां चतुर्भुजां धूम्रनिभां त्रिनेत्राम् ।
सिंहासनस्थां घृतपीतवस्त्रां ध्यायेन्महेशीं हृदि कालरात्रीम् ॥

संपुटमन्त्रः

कुरु बीजं जपेदादौ विश्वांते प्रणवं पठेत् ।
कालरात्रि मनोरेष मन्त्रः संपुटकारणं ॥

## भीडा

मन्त्रोद्धारं

तारं परा रमा वेदी चन्द्रमन्मथसत्तयः ।
भीडा भगवतीत्येवं हंसरूपिणि ठद्वयम् ॥
ॐ ह्रीं श्रीं ह्स्त्रें ऐं,क्लीं सौः भीडा भगवति हंसरूपिणि स्वाहा ॥
परारमार्णदेवेशि परिवारान् प्रपूजयेत् ॥

उत्कीलनं

वेदी बीजं पठेदादौ नामान्ते प्रणवं जपेत् ।
भीडामन्त्रस्य मन्त्रोऽयमुत्कीलनफलप्रदः ॥

संजीवनं

एष संजीवनो मन्त्रो भीडाभगवतीमनोः ।
तारमन्ते रमामादौ जपेत्साधकसत्तमः ॥

यन्त्रं

बिंदुस्त्र्यश्रं काश्रमिश्रं सुवृत्तं वस्वश्रं स्यात् तद्बहिः षोडशारं ।
वृत्तत्रयं भूमिगेहत्रयाढ्यं भीडायन्त्रं सर्वसिद्धिप्रदं स्यात् ॥

ध्यानम्

उद्यच्छीतांशुरश्मिद्युतिचयसदृशीं फुल्लपद्मोपरिष्ठां
वीणानागेन्द्रशंखायुधपरशुधरां दोर्भिरीडयैश्चतुर्भिः ।
मुक्ताहारांशुनानामणि युत हृदयां शीधुपात्रं वहंतीं
वन्दे भीडां भवानीं प्रहसितवदनां साधकेष्टप्रदात्रीम् ॥

शापमोचनं

तारं परां रमां भीडे ध्रुवशापं विमोचय ।
मोचयापो महादेवि विद्येयं शापहारिणी ॥

संपुटमन्त्रः

तारं शक्ति मनोरन्ते ठद्वयं प्रथमं पठेत् ।
संपुटाख्योस्त्ययं मन्त्रो भीडाया देवदुर्लभः ॥

## सुमुखी मन्त्रः (द्वाविंशत्यक्षरी)

अस्य मन्त्रस्य भैरव ऋषिः । गायत्री छन्दः । सुमुखी देवता ।

१ उच्छिष्टचांडालिनि, २ सुमुखी, ३ देवि, ४ महापिशाचिनि, ५ ह्रीं, ६ ठः ठः ठः ॥

संख्याक्रमेण न्यासः । ध्यानम् ।

ॐ गुंजानिर्मित हारभूषितकुचां, सद्यौवनोल्लासिनीं,
हस्ताभ्यां नृकपाल खड्गलतिके रम्ये मुदा बिभ्रतीम् ।
रक्तालंकृति वस्त्रालेपनलसद्देहप्रभां ध्यायतां
नृणां श्रीसुमुखीं शवासनगतां स्युः सर्वदा संपदः ॥

पुरश्चरणं लक्ष जपः । किंशुकपुष्पैः समिद्भिर्वा दशांशहोमः ॥

## सुमुखी यन्त्रं ॥ पंचकोणं

पीठदेवताः मं मंडूकादि...नमः । नवपीठशक्तीः । जयादि-मंगलान्ताः ॥

ॐ ह्रीं सुमुखी योगपीठात्मने नमः ॥

१. पंचकोणे । पूज्य पूजकयोरन्तराल प्राचीं तदनुसारेण प्राचीक्रमेण ।

चन्द्रायै, चन्द्राननायै, चारुमुख्यै, चामीकरप्रभायै, चतुरायै ॥

२. अष्टदलेषु प्राचीक्रमेण । ब्राह्म्यादि अष्टमातृकाः

३. षोडशदलेषु प्राची क्रमेण । कलायै, कलानिधये, काल्यै, कमलायै, क्रियायै, कृपायै, कुलायै, कुलीनायै, कल्याण्यै, कुमार्यै, कलभाषिण्यै, करालाख्यायै, किशोर्यै, कोमलायै, कुलभूषणायै, कुलदायै,

४. भूपुरे इन्द्रादि दशदिक्पालाः । तेषां आयुधानि च ॥

## लघुश्यामा

क्लीं किंपुरुष...नमः गुह्ये । क्लीं पिशाच...नमः आधारे ॥

मन्त्रवर्ण न्यासः ॥ अं नमः दक्षबाहुमूले । नं नमः दक्षकूर्परे । मं नमः [illegible] । उं नमः दक्षहस्तांगुलिमूले । च्छि नमः दक्षहस्तांगुल्यग्रे । ष्टं नमः वामबाहुमूले । चां [illegible] । [illegible] नमः वाममणिबधे । लि नमः वामहस्तांगुलिमूले । नीं नमः वामहस्तांगुल्यग्रे । सुं नमः दक्षपादमूले । मि नमः

दक्षजानुनि । सं नमः दक्षगुल्फे । बं नमः दक्षपादांगुलिमूले । वं नमः दक्ष पादांगुल्यग्रे । शं नमः वामपाद मूले । कं नमः वामजानुनि । रिं नमः वामगुल्फे । खां नमः वामपादांगुलिमूले । ह्रां नमः वामपादांगुल्यग्रे । ध्यानम् ।।

माणिक्याभरणान्वितां स्मितमुखीं नीलोत्पलाभां वरां
रम्यालक्तकलिप्तपादकमलां नेत्रत्रयोल्लासिनीम् ।
वीणावादनतत्परां सुरनुतां कीरच्छदश्यामलाम्
मातंगीं शशिशेखरामनुभजेत्तांबूलपूर्णाननाम् ।।

अस्यपुरश्चरणं एकलक्षजपं । मधूकपुष्पैः समिद्भिर्वा दशांशहामः ।।

## मातंगीदशाक्षरमन्त्रः

ॐ ह्रीं क्लीं हुं मातंग्यै फट् स्वाहा ।।

अस्य मन्त्रस्य । श्री दक्षिणामूर्ति ऋषिः ।विराट् छन्दः । मातंगी देवता ।

ह्रीं बीजं । हुं शक्तिः । क्लीं कीलकं । ह्रां ह्रीं इत्यादि षडङ्गन्यासः । ध्यानम्–

श्यामांगीं शशिशेखरां त्रिनयनां वेदैः करै र्बिभ्रतीं,
पाशं खेटमथांकुशं दृढमसिं नाशाय भक्तद्विषाम् ।
रत्नालंकरणप्रभोज्ज्वलतनुं भास्वत्किरीटां शुभां,
मातंगीं मनसा स्मरामि सदयां सर्वार्थ सिद्धि प्रदाम् ।।

पुरश्चरण काले तु प्रतिदिनं षट्सहस्रं जपेत् ।। तद्दशांशं हुवेदाज्यैं शकरामधुभिः सह । ब्रह्मवृक्षोद्भवैः काष्टैः साधकः शक्तिभिः सह ।।

## महातुरी

मन्त्रोद्धारं

प्रणवस्तारका ज्योतिस्तारा मध्येऽभिधं न्यसेत् ।
अन्तेऽश्मरी महादेवि मन्त्रोऽयं शत्रुसूदनः ।।
ॐ त्रुं त्रौं त्रों महातुर्यैं नमः ।।
प्रणवेनार्चयेद्देवीपरिवारान् यथाक्रमम् ।।

प्रणवं तारका ज्योतिस्ताराद्यन्ते नम इति ।
तुर्यामूलमिदंप्रोक्तं स्वतन्त्रे शम्भुना स्वयम् ।। (त्रुं त्रां त्रों)
ऋक्षं भं तारका ज्योति स्तारा बीजानि पंच च ।।

उत्कीलनं

त्रिःपठेदश्मरीप्रान्ते प्रणवं साधकोत्तमः ।
तुरीमन्त्रस्य मन्त्रोऽयमुत्कीलनफलप्रदः ।

सजीवनं

तुर्यामन्त्रस्य निर्णीतः संजीवनमनुः परः ।
वह्निबीजं जपेदन्ते शक्तिमादौ महेश्वरि ॥

शापमोचनं

तारं तारां च तुर्ये तु शिवशापं विमोचय ।
तारकं ठद्वयं देव विद्येयं शापहारिणी ॥

यन्त्र

बिंदुस्त्रिकोणं नवयोनियुक्तं वृत्तांचितं नागदलं सुवृत्तम् ।
धरागृह वह्नितुटीभिरीड्यं तुर्यालय चक्रमिदं प्रदिष्टम् ॥

ध्यान

नानारत्ननिबद्धचन्द्रशकलां मौलौ जटाभिर्वृते
पाशांभोजधरां हिमांशुधवलां दोर्भ्यां द्विबाहु शिवाम् ।
सूर्येन्द्वग्निविलोचनां स्मितमुखीं प्रेतासने संस्थितां
ब्रह्मोपेन्द्रमहेश्वरैश्च नमितां देवीं भजेऽहं तुरीम् ॥

संपुटमन्त्रः

तारं दद्यान्मनोरन्ते जपेत्पार्वति साधकः ।
महातुर्या मनोरेष संपुटाख्योस्ति सिद्धिदः ॥

## प्रत्यंगिरा मंत्रः

१ ॐ ह्रीं यां कल्पयंति नोऽर्यः, २ क्रूरां कृत्या, ३ वधूमिव, ४ ह्रां ब्रह्मणा, ५ अपनिर्णुद्मः, ६ प्रत्यक्कर्तारमृच्छतु, ह्रीं ॐ ॥

ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । देवी प्रत्यंगिरादेवता ।

ॐ बीजं । ह्रीं शक्तिः । संख्याक्रमेण न्यासे, ह्रीं इति पृथक् पृथक् पूर्वं संयोज्य न्यसेत् ॥ ततः वर्ण न्यासः ।

ॐ ह्रीं यां ह्रीं शिरसि, ॐ ह्रीं कल्पयंति ह्रीं भ्रूमध्ये, ॐ ह्रीं नो ह्रीं मुखे, ॐ ह्रीं अरयः ह्रीं कंठे, ह्रीं क्रूरां ह्रीं दक्षहस्ते, ॐ ह्रीं कृत्यां ह्रीं वामहस्ते, ॐ ह्रीं वधू ह्रीं हृदि, ॐ ह्रीं मिव ह्रीं नाभौ, ॐ ह्रीं ह्रां ह्रीं दक्षोरौ, ॐ ह्रीं ब्रह्मणा ह्रीं वामोरौ, ॐ ह्रीं अपनिर्णुदः ह्रीं दक्षजानुनी ॐ ह्रीं प्रत्यक् ह्रीं वामजानुनि, ॐ ह्रीं कर्तार ह्रीं दक्षपादे, ॐ ह्रीं मृच्छतु ह्रीं वामपादे । ध्यानम्–

आशांबरा मुक्तकचा घनच्छविर्ध्येया सचर्मासिकराविभूषणा ।
दंष्ट्रोग्रवक्त्राग्रसिताहितान्वया प्रत्यंगिरा शंकरतेजसेरिता ॥

## प्रत्यंगिरामाला मंत्रः

ॐ ह्रीं नमः कृष्णवाससे शतसहस्रहिंसिनि सहस्रवदने महाबले अपराजिते प्रत्यंगिरे परसैन्य परकर्म विध्वंसिनि परमन्त्रोत्सादिनि सर्वभूतदमने सर्वदेवान् बन्ध २, सर्वविद्याश्छिंधि २ क्षोभय २ परयन्त्राणि स्फोटय २ सर्वशृंखलास्त्रोटय २ ज्वलज्वालाजिह्वे करालवदने प्रत्यंगिरे ह्रीं नमः ॥

ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । देवी प्रत्यंगिरादेवता । ॐ बीजं ह्रीं शक्तिः । ॐ ह्रीं इत्येकाक्षरेण न्यासः । ध्यानम्–

सिंहारूढाधिकृष्णा त्रिभुवनमवहद्रूपमुग्रं वहंती
ज्वालाभुग्रां वसना नववसनयुगं नीलमण्याभकांतिः ।
शूलं खड्गं वहंती निजकरयुगले भक्तरक्षैकदक्षा
सेयं प्रत्यंगिरा संक्षपयतु रिपुर्निर्मिताम्नोऽभिचारान् ॥

अयुतजपः तिलराजिकाभिर्दशांशतहोमः ॥

## प्रत्यंगिरा मंत्रः सप्तत्रिंशदक्षरः ॥

१ ॐ ह्रीं यां कल्पयंति नोरयः, २ क्रूरांकृत्यां, वधूमिव ।

४ ब्रह्मणा, ऽपनिर्णुदः, ६ प्रत्यक्कर्तारमृच्छतु ह्रीं ॐ ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । प्रत्यंगिरा देवता ॐ बीजं ह्रीं शक्तिः । संख्याक्रमेण न्यासः । ततः । शिरो भ्रूमध्य वक्त्रेषु कण्ठे बाहुद्वये हृदि । नाभावूर्वोर्जानुनोश्च पदानि पदयोर्न्यसेत् ॥ ध्यानम् ।

आशांबरा मुक्तकचा धनच्छवि र्ध्येया सचर्मासिकराहिभूषणा ।
दंष्ट्रोग्रवक्त्रा ग्रसित हित न्वया प्रत्यंगिरा शंकरतेजसेरिता ॥

इत्यक्षरं जपेन्मन्त्रं अयुतं तद्दशांशतः । आत्मार्थमराज्जयाज्य हविर्भिजुहुया त्तत ॥ एवं सिद्धमनु- ॥

## माला मंत्रः

ॐ ह्रीं नमः कृष्णवाससे शतसहस्रसिनि सहस्रवदने महाबले अपराजिते प्रत्यंगिरे परसैन्यपरकम विध्वंसिनि परमन्त्रोत्सादिनि सर्वभूतदमनि सर्वदेवान् बन्धय २ सर्वविद्याश्छिधि २ क्षोभय २ परयन्त्राणि स्फोटय २ सर्वशृंखला स्त्रोटय २ ज्वलज्वाला जिह्वे करालवदने प्रत्यंगिरे ह्रीं नमः ॥

## धूम्रवाराही

मन्त्रोद्धारं

चन्द्र वाह्लीकमोहार्ण चन्द्रा मध्येऽमिधं न्यसेत् ।
चन्द्रो मठं पद्मयुग्मं हरं नीरमयं मनुः ॥
वाराभा मोहबीजेन पूजयेत् परिवारगान् ॥
ऐं ग्लौं लं ऐं नमो भगवति वार्तालि (वार्त्तालि) वाराहि देवते
वराहमुखि ऐं ग्लौं ठः ठः फट् स्वाहा ॥

उत्कीलनं

मठमादौ जपेद्देवि ठद्वयांते हरं तथा ।
वाराही मन्त्रराजस्य मन्त्रोऽस्युत्कीलनामिधः ॥

संजीवनं

मन्त्रोऽयं धूम्रवाराह्या मनोः संजीवनामिधः ।
हरितं मूलमन्त्रांते जपेदादौ च मन्मथम् ॥

शापमोचनं

तारं रमां च वाराहि नारदाङ्कं विमोचय ।
मठं नीरं महादेवि विद्येयं शापहारिणी ॥

यन्त्रं

त्रिकोणं सबिंदु पुनः स्यात्त्रिकोणं,
ततः सप्तवारं त्रिकोणं प्रकुर्यात् ।
गजाश्रं कलारं हि वृत्तत्रयांकं–
धरासद्मयन्त्रं वराहेश्वरीयम् ॥

ध्यानं

चंद्रार्धचूडां द्विभुजां भुजभ्यां शूलांकुशौ श्याममुखीं वहंतीम् ।
सूर्याग्निचंद्रीकृतनेत्रपद्मां ध्यायेद्हृदब्जे विमलां वराहीम् ॥

संपुट मन्त्रः
**मठ बीजं जपेदादौ मन्त्रांते पंकजं जपेत् ।**
**मंत्रोयं धूम्रवाराह्याः संपुटाख्यो मयोरितः ॥**

## ब्रह्मगायत्री पूजा विधानं ।

ॐ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो योनः प्रचोदयात् ॥

मं मण्डूकादि परतत्वांतपीठदेवताभ्यो नमः । नवपीठ शक्तीः पूर्वादि ॐ रां दीप्तायै, रीं सूक्ष्मायै, रूंजयायै, रें भद्रायै, रैं विभूत्यै, रों विमलायै रौं अमोघायै, रं विद्युतायै, मध्ये रः सर्वतोमुख्यै नमः इति ॥

ॐ ब्रह्मविष्णुरुद्र बिबात्मकाय सौराय योगपीठाय नमः । पुष्पाद्यासनं ॥

ॐ आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि । गायत्रिः छन्दसां मातर्ब्रह्मयोने नमोस्तु ते इति आवाहनं । यन्त्रं ॥ त्रिकोणं, तद्बहि वर्तुलं, तद्बहि अष्टदलं, तद्बहि वर्तुलं अष्टदलं, वर्तुलं, तद्बहिः अष्टदलं, चतुर्द्वारोपशोभित चतुरश्र भूपुरम् ॥

१. त्रिकोणे । पूर्वे गायत्रीं, निर्ऋतिकोणे सावित्रीं, वायुकोणे सरस्वतीं च पूजयत् ॥

२. त्रिकोणद्बहिः वर्तुलांतराले । दक्षिणे ब्रह्माणं, ऊर्ध्वे विष्णुं, वामे रुद्रं च पूजयेत् ॥

३. त्रिकोणाद्बहि प्रथम अष्टदलेषु पूर्वादि चतुर्दिक्षु । आदित्य, भानु, भास्कर, रवि, विदिक्षु, ऊषा, पज्ञा, प्रभा, संध्यायै नमः इति ॥

४. ततो अष्टदलेषु प्राच्यादि क्रमेण । प्रह्लादिनी, प्रभा, नित्या, विश्वंभरा, विशालिनी प्रभावती, जया, शांति इति ।

५. अष्टदलमलेषु प्राच्यादि क्रमेण, कांति, दुर्गा, सरस्वती, विश्वरूपा, विशाला, ईशा चापिनी, विमला, इत्यष्टौ ॥

६. ततो अष्टदलमध्येषु । प्राच्यादि ॥ अपहारिणी, सूक्ष्मा, विश्वयोनी, जयावहा, पद्मालया, परा, शोभा, पद्मरूपा ।

७. अष्टदलाग्रेषु । ब्राह्म्यादि महालक्ष्मीपर्यन्तं ॥

८. भूपुराभ्यन्तरे पूर्वाद्यष्टदिक्षु । सों साम, बुं बुध, गुं गुरु, शुं शुक्र, भौं भौम, शं शनैश्चर, रां रा कें केतु ॥

९. भूपुराद्बहिः । इन्द्रादि दशदिक्पालाः वज्राद्यायुधानि च ॥

## ॥ बंदी ॥

यन्त्रं । षट्कोणं, अष्टदलं भूपुरम् ॥

पीठ देवता: आधारशक्त्यादि परतत्वांत पीठ देवताभ्यो नमः । जयादि-मंगलांत:

१. षट्कोणकेसरेषु आग्नेय्यादि विदिक्षु, मध्ये दिक्षु च हृदयादि षडंगयुवती: ॥

२. अष्टदलेषु । पूज्यपूजकयोर्मध्येप्राचीं प्रकल्प्य, प्राच्यादि वामावर्तेन ॥
काली, तारा, भगवती, कुब्जा, शीतला, त्रिपुरा, मातृका, लक्ष्मी,

३. भूपुरे इन्द्रादि, ततः आयुधानि ॥

## कामेशी

यन्त्रं । मध्येवर्तुलं, चतुर्दिक्षुदलं, वर्तुलं, अष्टदलं भूपुरम् ॥

मं मंडूकादि...नमः । नवपीठशक्ती: । मोहिनि, क्षोभिणि, त्रास्यै, स्तंभिनि, कर्षिणि, द्राविणि, ह्लादिनि, क्लिन्ना, मध्ये क्लेदिनि ।

ह्रीं क्लीं ऐं ब्लूं स्त्रीं कामेशी योगपीठाय नमः ।

१. देव्यंगे आग्नेय्यादि चतुर्दिक्षु, मध्ये च हृदयादि षडंग युवतीः ॥

२. चतुर्दलेषु । पूज्यपूजयोरंतरालं प्राचीं प्रकल्प्य, प्राचीक्रमेण ।

मकरध्वजाय, कंदर्पाय, मन्मथाय, कामदेवाय इति मनोभवं पूजयेत् ॥

३. अष्टदलेषु प्राचीक्रमेण, अनंगरूपा, अनंगमदन, अनंगमन्मथा, अनंगकुसुमा, अनंगमदनपरा, अनंगशिशिरा, अनंगमेखला, अनंगदीपिका ॥

४. भूपुरे, इन्द्रादि, ततः वज्राद्यायुधानि ॥

## ॥ पराशक्तिः ॥

मन्त्रोद्धारः

तारं रमा परा कामः शक्तिर्वस्त्रं ततोऽभिधम् ।
वाग्भवं ठद्वयं देवि मंत्रराजोऽयमीरितः ॥
ॐ श्रीं ह्रीं क्लीं सौः ह्सौः पराशक्तयै ऐं स्वाहा ।
मूलेन पूजयेदन्या देवीस्तत्परिवारगाः ॥

उत्कीलनं

शक्ति मादौ मनोर्देवि वासनामंचले जपेत् ।
पराशक्तेमनोर्देवि कीलदोषापहो मनुः ॥

संजीवनं

एष संजीवनो मन्त्रः पराशक्तिमनोः स्मृतः ।
वाग्भवं प्रणवादौ च काममन्ते जपेत् शिवे ॥

शापमोचनं

तारं शक्तिः पराशक्ते शिवशापं विमोचय ।
विमोचय शरन्नीरं विद्ययं शापहारिणी ॥

यन्त्रं

बिंदु स्त्रिकोणं वृत्ताढ्यं वसुपत्राग्नि वृत्तकं ।
भूगृहं यंत्रमेतत्ते पराशक्त्यार्जया स्मृतं ॥

ध्यानं

वाग्भवं प्रथमं देवि प्रणवं ठद्वयांचले ।
पराशक्तिमनोरेष मन्त्रः संपुटकारणं ॥

## गौरी

मन्त्रोद्धारं

प्रणवं कमला माया वाल्हीकं च शिवं ततः ।
गौरि शर्वो वनं देवि मंत्रः सर्वार्थसिद्धिदः ॥
ॐ श्रीं ह्रीं ग्लौं गं गौरि गीं स्वाहा ॥
रमया परिवाराश्च पूजयेत् साधकोत्तमः ॥

उत्कीलनं

मठमादौ मनोर्देवि प्रणवं ठद्वयांचले ।
मन्त्रं जपेदयं मंत्रो गौरी मंत्रस्य कीलहृत् ॥

संजीवनं

गौरी मंत्रस्य मंत्रोयं स्यात्संजीवनकाभिधः ।
कूटमन्ते विश्वमादौ जपेत् पार्वति साधकः ॥

शापमोचनं

तार शिवं गौरि भृगोः शापं मोचय मोचय ।
नीरमन्ते मनोर्देवि विद्येयं शापहारिणी ॥

यन्त्रं

मध्ये त्रिकोणं स्वयुतं (युगं)
षडस्रं वृत्तं तया नागदलाग्निवृत्तम् ।
भूमन्दिरं कौलकुलेष्ट तत्व,
भूतं सुचक्रं कमितं हि गौर्याः ॥

मन्त्रोद्धारः

प्रणवं कमला चैव माया वाल्हीकमेवच ।
शिवबीजं तथा देवि गौरि शर्वश्च ठद्वयं ः।
भगवत्या महागौर्या बालस्तु द्वादशाक्षरः ॥
ॐ श्रीं ह्रीं ग्लौं गं देवि गौरि गीं स्वाहा ॥

संपुटमन्त्रः

मठमादौ महादेविठद्वयांते शिवं जपेत् ।
गौरीमन्त्रस्य मन्त्रोयं संपुटो वर्णितो मया ॥

## सर्वसंपत्प्रदगौरीमन्त्रः

ॐ ह्रीं रुद्रदयिते योगेश्वरि हुं फट् स्वाहा ॥

अस्य मन्त्रस्य । अजऋषिः । अनुष्टुप्छन्दः । सर्व संपत्प्रदगौरीदेवता । ह्रां ह्रीं इत्यादि न्यासः ।

ध्यानम्–

हेमाभां बिभ्रतींदोर्भिर्दर्प्पणांजनसाधने ॥
पाशांकुशौ सर्वभूषां तां गौरीं सर्वदा स्मरेत् ॥ (भजे)
एकलक्षं जपेन्मन्त्रं तद्दशां शंहुवेद्धृतैः ।
धर्मादि कल्पिते पीठे पीठशक्तोरिमा यजेत् ॥

## (म. द.) त्रैलोक्यमोहनगौरीमन्त्रः (एकषष्टवर्णमन्त्रः)

ह्रीं नमो ब्रह्मश्रीराजिते राजपूजित जय विजये गौरि गांधारि, त्रिभुवन, वशंकरि सर्वलोकवशकरि, सर्व स्त्री पुरुष वशंकरि, सुसु दुदु घेघे वावा, ह्रीं स्वाहा ॥

अस्य मन्त्रस्य अजऋषिः । निचृद्गायत्री छन्दः । गौरी त्रैलोक्यमोहिनी देवता ह्रीं बीजं । स्वाहा शक्तिः । ह्रंस्वाक्षरेण न्यासः ।। चतुर्दश दशाष्टष्ट दशैकादश वर्णकैः । दीर्घाढ्य मायया युक्तैः षडंगानि समाचरेत् । मूलेन व्यापकं कृत्वा ध्यायेत्त्रैलोक्यमोहिनीम् ।। ध्यानम्–

**गीर्वाणसंघार्चितपादपंकजारुणप्रभा बालशशांकशेखरा ।**
**रक्तांबरालेपनपुष्पयुङ्मुदे सृणिं सपाशं दधती शिवास्तु नः ।।**

(मूलं) १ ह्रीं नमो ब्रह्मश्रीराजिते राजपूजिते, २ जयविजये गौरि गांधारि, ३ त्रिभुवन वशंकरि, ४ सर्वलोकवशंकरि, ५ सर्वस्त्रीपुरुषवशंकरि, ६ सुसु दुदु घेघे वावा ह्रीं स्वाहा ।।

अयुतं प्रजपेन्मन्त्रं सहस्रं घृतसंयुतैः । पायसैर्जुहुयात्पीठे प्रागुक्त गिरिजां यजेत् ।।

अन्यमन्त्रः ह्स्लैं ब्यूं १ राजाधिमुखि, २ वश्यमुखि ह्रीं श्रीं, ३ देवि देवि, ४ महादेवि, ५ देवाधिदेवि, ६ सर्वजनस्य मुखं मम वश्य कुरुकुरु स्वाहा ।।

ऋषि च्छन्दोदेवतास्तु पूर्ववत्परिकीर्तिताः । ११ हृदेकादशभिः प्रोक्तं शिरः स्यात्, ७ दश वर्णकैः । ४ शिखावर्माभिवेदार्णैः ५ पंचभिर्नेत्रमीरितं । १७ अस्त्रं सप्तदशार्णैःस्याद्ध्यान जप्यादि पूर्ववत् ।। अङ्गमन्त्रास्तु-दीर्घाढ्य भुवनेशीपरा मताः ।।

करतल कवचहीनं न्यासः ।।

## भवानी

मन्त्रोद्धारं

**तारं रमा रमा तारं तारं माया रमा रमा ।**
**हुं फडन्तः समाख्यातो मन्त्रः सर्वार्थसाधकः ।।**
**ॐ श्रीं श्रीं ॐ ह्रीं श्रीं श्रीं हुं फट् ।।**
**माबीजैः पूजयेद्देवि परिवारगताः पराः ।।**

उत्कीलनं

**तारत्रयं पठेदन्ते मा-त्रयं प्रथमं जपेत् ।**
**भवानी मन्त्रराजस्य मन्त्रोऽयं कीलदोषनुत् ।।**

सजीवनं

**भवानी मूलमन्त्रस्य भवेत्संजीवनं परम् ।**
**मायामुच्चार्य देवेशि त्रिरादौ त्रिरन्थांचले ।।**

शापमोचनं

**तारं रमां रमां तारं रुद्र शापं विमोचय ।**
**कूर्चंहरं वरदेवि विद्येयं शापहारिणी ।।**

यन्त्रं

बिंदुस्त्रिकोणं च षडश्रयुक्तं वृत्तं च नागारकलादलाङ्कम् ।
वृत्तत्रयं भूसदनत्रयस्यात् श्रीचक्रमानंदपदं भवान्याः ।।

ध्यानम्

अरिशंख कृपाणखेटबाणान् सुधनुःशूलक तर्जनीर्दधानाम् ।
भयदां महिषोत्तमांगसंस्थां नवदूर्वासदृशीं भजे भवनीम् ।।

संपुटमन्त्रः

रमां तारं पठेदन्ते कूर्चमादौ महेश्वरि ।
भवानीमूलमन्त्रस्य संपुटोयं मयोरितः ।।

## अन्नपूर्णेश्वरीमन्त्रः (विंशत्यक्षरोमन्त्रः)

ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ।

अस्य मन्त्रस्य द्रुहिण ऋषिः । कृतिश्छन्दः । अन्नपूर्णेशीदेवता ।

ह्रां ह्रीं इत्यादि न्यासः । ॐ नमः मुखे । ह्रीं नमः वामनेत्रे । भगवति नमः दक्षकर्णे । माहेश्वरि वामकर्णे । अन्नपूर्णे नमः लिंगे । स्वाहा नमः गुदे ।।

इति वर्ण न्यासः कृत्वा ध्यायेत् ।।

तप्तस्वर्णनिभा शशांकमुकुटा रत्नप्रभासुरा,
नानावस्त्र विराजिता त्रिनयना भूमीरमाभ्यां युता ।
दर्वी हाटकभाजनं च दधती रम्योच्चपीनस्तनी,
नित्यन्तं शिवमाकलय्य मुदिता ध्येयान्नपूर्णेश्वरीम् ।।

पुरश्चरणं लक्षजपः । घृतमिश्रितचरुणा दशांशतो होमः ।
अन्यमन्त्राः ।

१. ॐ ह्रीं नमो भगवति माहेश्वर्यन्नपूर्णे स्वाहा । अष्टादशाक्षरोमन्त्रः ।
२द्वि २नेत्र ४वेद ४वेदाब्धि २नेत्रार्णैरङ्गमीरितम् ।।

२. ॐ ह्रीं श्रीं क्लीं, नमो भगवति, माहेश्वरि ममाभिमतमन्नं देहि देह्यन्नपूर्णे स्वाहा (३१ अक्षरः)
४युगांग६ २वेद सप्ताब्धि४ ६षडर्णैरङ्गकल्पना ।

३. ॐ श्रीं ह्रीं नमो भगवति प्रसन्नपारिजातेश्वर्यन्न पूर्णे स्वाहा । चतुर्विंशत्यक्षरोमन्त्रः ।
रामाक्षिवेदनिधिभिर्वेदद्वर्णैः षडंगम् ।

४. ॐ श्रीं ह्रीं नमो भगवति माहेश्वरि प्रसन्नवरदेऽन्नपूर्णे स्वाहा । पंचविंशत्यक्षरोमन्त्रः

स्थाद्राम षड्युग्षड्नेत्रास्त्रत्षडंगकम् ।
एषांचतुर्णां मन्त्राणां अन्यत्सर्वंपूर्ववत् ॥

## आम्नायमंदारे ॥ अन्नपूर्णेश्वरि मन्त्रः

अस्य मन्त्रस्य । सदाशिव ऋषिः । जगतीछन्दः । श्रीअन्नपूर्णेश्वरी देवता ।

ह्रीं वीजं । श्रीं शक्तिः । क्लीं कीलकं । ह्रां इत्यादि न्यासः ।

मनुः । ह्रीं श्रीं क्लीं ॐ नमो भगवत्यन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा ।

उद्यत्सहस्रद्युतिबिंबगौरामुत्तुंगपीनस्तलंबहाराम् ।
माणिक्य दर्वी मधुपात्रहस्तां स्मरामि तां तत्स्मरवैरिकांताम् ॥
आदायदक्षिण करेण सुवर्णदर्वीं दुग्धान्नपूर्ण मितरेण च रत्नपात्रं ।
अन्नप्रदान निरतां नवहेमवर्णां–
अंबां भजे कनकभूषण भूषितांगीम् ॥

## अन्नपुर्णा

मन्त्रोद्धारं

तारं परापि कमला कामं विश्वं ततो वदेत् ।
भगवति माहेश्वरि चान्नपूर्णे च ठद्वयम् ॥
ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ॥
आदि बीजद्वयेनैव पूज्या देव्याः समीपगाः ॥

उत्कीलनं

विश्वमादौ जपेत् देवि वनांते मदनं पठेत् ।
अन्नपूर्णामनोरेष स्यादुत्कीलनो मनुः ॥

संजीवनं

अन्नपूर्णा मनोर्येन भवेत्संजीवनं परं ।
वाणीमन्ते जपे दादौ कामराजं च साधकः ॥

यन्त्रं

त्रिकोणं रसारं त्रिकोणं त्रिकोणं,
त्रिकोणं त्रिकोणं त्रिकोणं हि वृत्तं ।
ततो नागपत्रार्चितं चाग्निवृत्तं,
धरामंदिरं चान्नपूर्णेष्टचक्रम् ।।

ध्यानं

चन्द्रार्धमौलिं द्विभुजां त्रिनेत्रां शूलाक्षमाले द्विभुजे वहंतीम् ।
एणासनस्थां भुजगोपवीतां तामन्नपूर्णां हृदये स्मरामि ।।

संपुटमन्त्रः

तारं कामं मनोरते दद्यात्मार्वति साधकः ।
अन्नपूर्णामनोरेष मनुस्यात्संपुटामिधः ।।

## ।। अन्नपूर्णा ।।

यन्त्रं ।। त्रिकोण, षट्कोण, चतुर्दल, अष्टदल, षोडशदल, एकरेखा भूपुरम् ।।

पीठदेवताः । मं मंडूकादि...नमः । नवपीठशक्तीः । जयादि मङ्गलांताः ।

ॐ ह्रीं अन्नपूर्णे पद्मासनाय नमः पुष्पाद्यासनम् ।।

१. त्रिकोणे । आग्नेय्यादि क्रमेण । ॐ ह्रौं नमः शिवाय, वायुकोणे, ॐ नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि दापय स्वाहा । वराह श्री ।

ईशाने ॐ नमो नारायणाय-नारायण श्री ।

२. षट्कोणकेसरेषु आग्नेय्यादि चतुर्विदिक्षु मध्येदिक्षु च । हृदयादि षडंगदेवताः षट्कोणाद्बहिः देवीवामे । ॐ ग्लौं मह्यन्नाधिपतये ममान्नं प्रदापय स्वाहा । ग्लौं पृथिव्यैनमः पृथिवीश्री ।।

देवीदक्षिणे । ॐ श्रीं अन्नं मह्यन्नं मे देह्यन्नाधिपतये ममान्नं प्रदापय स्वाहा श्रीं महालक्ष्म्यै नमः । महालक्ष्मी श्री ।।

३. चतुर्दले, पूज्यपूजकयोर्मध्ये प्राचीं दिशं प्रकल्प्य प्राचीक्रमेण चतुर्दिक्षु अपरा, ह्रीं भुवनेश्वरि । श्रीं कमला, क्लीं सुभगा ।।

४. अष्टदलेषु प्राचीक्रमेण ब्राह्म्यादि अष्टमातृकाः ॥

५. षोडशदलेषु प्राचीक्रमेण अं अमृता, मां मानदा, तुं तुष्टि, पुं पुष्टि, प्रीं प्रीति, रं रति, ह्रीं ह्रियै, श्रीं श्रियै, स्वां स्वधायै, स्वां स्वाहायै, ज्यों ज्योत्स्नायै, हें हैमवत्यै, छां छायायै, पूं पूर्णिमायै, निं नित्यायै, अं अमावास्यायै ।

६. भूपुराद्बहिः इन्द्रादि, ततः तेषां आयुधानि ।

## महिषमर्दिनी

यन्त्रं । षट्कोणं, अष्टदलं, एकरेखात्मक भूपुरम् ॥

पीठदेवताः । मं मंडूकादि...नमः । नवपीठशक्तीः जयादि मंगलांताः ॥

१. षट्कोणेषु । आग्नेय्यादि विदिक्षु मध्येदिक्षु च । हृदयादि नेत्रहीन पंचांग देवताः ॥

२. अष्टदलेषु पूज्य पूजकयोर्मध्ये प्राचींदिशंप्रकल्प्य पूर्वादिक्रमेण ।

आं दुर्गायै, ईं वरवर्णिन्यै, ऊं आर्यायै, ॠं कनकप्रभायै, लृं कृत्तिकायै, ऐं अभयप्रदायै, औं कन्दायै, अः सुरूपायै ।

३. अष्टदलाग्रेषु प्राचीक्रमेण । यं चक्राय, रं शंखाय, लं खड्गाय, वं खेटकाय, शं बाणाय, षं धनुषे, सं शूलाय, हं कपालाय ॥

४. भूपुरे इन्द्रादि, ततः तेषां आयुधानि ॥

## रेणुकाशबरी

चक्रं । षट्कोणं, अष्टदलं, एकरेखात्मक भूपुरम् ॥

पीठ देवताः । मं मंडूकादि...नमः । नवपीठशक्तीः । जयादि मंगलांताः ।

ॐ सर्वबुद्धिप्रदे वर्णनीये सर्वसिद्धिप्रदे ॐ रेणुकाशबरि एह्येहि नमः । पुष्पासनं ॥

१. षट्कोणेषु । आग्नेय्यादि चतुर्विदिक्षु मध्ये विदिक्षु च, हृदयादि षडंग युवतीः ॥

२. अष्टदलेषु । पूज्यपूजकयोर्मध्ये प्राचीं दिशं प्रकल्प्य, प्राच्यादि क्रमेण ।

हुंकारि, खेचरि, चण्डास्या, च्छेदिनि, क्षेपणा, स्त्री, हुंकारि, क्षेमकारि ॥

३. भूपुरे । इन्द्रादि दशदिक्पालाः, ततः आयुधानि च ॥

## श्रीदुर्गामन्त्रः

मन्त्रोद्धारः

तारं मायां चाक्रिकं चक्रिदूर्वा वायव्यर्णां विश्वमन्ते भवानि ।
दुर्गायास्ते वर्णितो मूलविद्यामंत्रोद्धरो गोपितोऽष्टाक्षरोयम् ॥
ॐ ह्रीं दुं दुर्गायै नमः ॥

ऋष्यादि

ऋषिरस्य स्मृतोदेवि मन्त्रस्याद्यो महेश्वरः ।
छन्दोऽनुष्टुब्देवता च श्रीदुर्गाष्टाक्षरा स्मृता ॥
चाक्रिकं बीजनामानि माया शक्तिरिति स्मृता ।
तारं कीलकमाशानां विश्वं बन्धनमीश्वरि ॥
तारामायाक्षरैर्देवि न्यासं षड्दीर्घमाणिभिः ।

ध्यानम्

दूर्वानिभां त्रिनयनां विलसत्करीटां
शंखाब्ज खड्गवार खेटक शूल चापान् ।
संतर्जनीं च दधतीं महिषासनस्थां
दुर्गां नवारकुल पीठगतां भजेऽहम् ॥

यन्त्रम्

बिंदुस्त्रिकोणं रसकोर्णबिंबं वृत्ताष्टपत्रांचित वह्नि वृत्तम् ।
धरागृहोद्भासितमिन्दुचूडे दुर्गाश्रयं यन्त्रमिदं प्रदिष्टम् ॥

उत्कीलनम्

विश्वमादौ मनोर्दद्यात् तारं दद्यात्तथांचले ।
मनुरुत्कीलनाख्योयं सर्वसिद्धिप्रदः शिवे ॥

संजीवनम्

चाक्रिकं नाम बीजं तु दद्यादादौ मनोः शिवे ।
तदग्रे नाम विन्यस्य तार माये तदग्रतः ॥
मनोरन्तेऽश्मरीं दद्यान्मनुः संजीवनामिधः ॥

## पंचरत्नेश्वरी मन्त्रः

दुर्गामनुः

तारं माया चाक्रिकं चक्रिदूर्वा वायव्याद्यं विश्वमंते भवन्ति ।
दुर्गायास्ते वर्णितोमूलविद्या मंत्रोद्धारोगोपितोऽष्टाक्षरोयम् ॥

शारदा

तारं माया कामराजश्च शक्तिः स्तंमं तस्माद्भगवत्यै च नाम ।
भूतिस्तस्मादंचले टद्वयंस्यात् प्रोक्तं मुकुत्यै शारदा मंत्र एषः ॥

शारिका

तारं परा मातर्टसिधुरार्णाः स्वं शर्मतोमध्यगतं च नाम ।
अन्तेऽश्मरी पार्वति शारिकायास्त्रयोदशार्णो मनुरस्ति गोप्यः ॥

सुमुखी

वाक् काम उच्छिष्ट पदं विभाव्य चण्डालिनीवै सुमुखीवदेवि ।
महापिशाची सकलात्रयाब्जं वनंमनुःस्यात् सुमुखीप्रियोऽयम् ॥

बगलामुखि

तारं मठं बगलामुखि सर्वदुष्टानां वाचं मुखं स्तंभयद्विः ।
पदं जिह्वां कीलय द्विर्मठं वा तारं नीरं ब्रह्मणोऽस्त्यस्त्रविद्या ॥
पंचस्वपि महादेवि साधकेषुकलौ युगे ।
पंचरत्नेश्वरीं दत्वा पुरश्चर्यां फलं लभेत् ॥
श्रीदुर्गोपासकश्चैकः शारदोपासकः परः ।
शारिकोपासकस्त्वन्यो मातंग्यास्त्वपरः शिवे ॥
पंचमो बगलामुख्याश्चैकत्र मिलिताश्चते ।
इत्येषा गुप्तविद्येयं प्रभावसहिताकलौ ॥
पञ्चरत्नेश्वरी ग्राह्या पुरश्चरण सिद्धये ॥

## शान्तिदुर्गा ॥ द्वादशाक्षरी ॥

ॐ ह्रीं श्रीं दुं दुर्गां देवीं शरणमहं प्रपद्ये ॥

अस्य मन्त्रस्य । शेष पर्यंकशयि । नारायण ऋषिः । जगती छन्दः । दुर्गा परमेश्वरी देवता । दुं बीजं । गां शक्तिः । देवी इति कीलकम् ।

ॐ दुं, गां, देवीं, शरणं, अहं, प्रपद्ये । इति न्यासः । ध्यानम्—

निर्जित्य दैत्यानखिलानृजगद्द्रुहान् शांतामनंतोरग भोगशायिनी,
भक्ताखिलोपद्रव हेतुरंजनीं दुर्गांदेवीं शरणमहं प्रपद्ये ॥

## मूलदुर्गा

ॐ ह्रीं दुं दुर्गायै नमः ।

अस्य मन्त्रस्य । नारद ऋषिः । गायत्री छन्दः । मूलदुर्गा परमेश्वरी देवता ।

ह्रीं बीजं । दुं शक्तिः । ह्रां ह्रीं इत्यादि षडंगन्यासः । ध्यानम्—

दुर्गां ध्यायति दुर्गतिप्रशमनींदूर्वादलश्यामलाम् ।
चन्द्रार्द्धोज्ज्वल शेखरां त्रिनयनामापीत व क्षोरुहां ॥
शंखं चक्रमिषून् धनुश्चदधतीं कोदण्डबाणांशयोः ।
मुद्रे वाम करप्रदेशकटि बधाऽभीष्टदांवाभयोः ॥

## पंचबाणेश्वरी मन्त्रयन्त्रविधिः ॥

"१द्रां २द्रीं ३क्लीं ४ब्लूं ५सः" ।

संमोहन ऋषिः । गायत्री छन्दः । पंचबाणेश्वरी देवता । संख्यांक्रमेण न्यासः । ध्यानम्—

अथते संप्रवक्ष्यामि पंचबाणेश्वरी मनुं ।
यन्त्रां पञ्चदलैश्चादौ कृत्वा तत्र तु संलिखेत् ॥
ससाध्यं काम बीजं च दलेषुतु लिखेत्क्रमात् ।
अग्न्यादि प्रादक्षिण्येन द्रां द्रीं क्लीं ब्लूं स इत्यपि ।
वृत्तद्वयंतु तद्बाह्ये कृत्वा वीथीद्वय भजेत् ।
वेष्टयेत्प्रथमां वीथीं द्रां द्रीं क्लीं ब्लूंस इत्यपि ।
द्वितीयां मातृकावर्णैस्तद्बहिश्चतुरस्रक ।
चतुरस्त्रेशकोणात्रु कामबीजं समालिखेत् ॥
सुवर्णनिर्मितेपट्टे कस्तूर्यायंत्रमालिखेत् ।
कण्ठे वा दक्षिणेबाहौ धृतंतु सर्ववशीकरम् ॥
दद्याद्यथेप्सितान्कामान्साधकायरणेद्रुतम् ॥

उद्यद्भास्वत्संनिभा १ रक्तवस्त्रा । २ नानालंकृतांगीवहंती । ३ हस्तैः पाशं चांकुशंचापबाणौ बाणेशीनः स्कामपूर्ति विदत्ताम् ॥ पंचलक्षजपः । दशांशतो हामादीनि । दध्रियुक्तै रशोकस्य पुष्पैः होमः ॥

## शारिका

मन्त्रोद्धारः

तारं मायां श्रियं कूर्चं सिन्धुरं शर्म प्रोद्धरेत् ।
नामाश्मरीं मनोरन्ते मंत्रोऽयं भुविदुर्लभः ॥
ॐ ह्रीं श्रीं हूं फ्रां ॐ शां शरिकायै नमः ।

तारं परा मातरसिंधुरार्णाः खं शर्मतो तन्मध्यगतं च नाम ।
अन्तेऽश्मरी पार्वति शारिकाया स्त्रयोदशार्णा मनुरस्ति गोप्यः ॥

उत्कीलनम्

सिंधुरं संजपेदादौ मायामंते महेश्वरि ।
शारिका मंत्रराजस्य स्यादुत्कीलको मनुः ॥

सजीवनं

शारिका मूलमंत्रस्य भवेत्संजीवनं प्रिये ।
कामराजं जपेदादौ मायाबीजं तथाञ्चले ॥

शापमोचनम्

तारं च सिंधुरं देवि शारिका ब्रह्मलांछ नम् ।
मोचय द्वयमापश्च विद्येयं शापहारिणी ॥

यन्त्रम्

खत्रिकोणवसु कोणसुवृत्तोद्व-द्-द्योत नागदल वृत्तमंडलं ।
भूगृहं शिखरवीन्दुभाञ्चितं यंत्रमेतदुदितंशिलालयम् ॥

ऋषिः छन्दः

मंत्रस्यास्य ऋषिः प्रोक्तो महादेवी महेश्वरि ।
त्रिष्टुप्छन्दः समाख्यातं शारिका देवता स्मृता ॥
शर्म बीजं रमाशक्तिः सिन्धुरं कीलकं स्मृतं ॥
तार परा रामा बीजेः षड्दीर्घोच्चार रूपकैः
न्यासं कुर्यात् षडंगादि येन देवीमयो भवेत् ॥

ध्यानम्

श्री शंखचक्रमुसलाम्बुजयुग्म (ब्ज युगांक) हस्तां
नागेन्द्रहार वलयांकित कण्ठमालां
सिन्दूर कुंकुम सहस्रमरीचिदीप्ति ।
श्रीशारिकां त्रिनयनां हृदये स्मरामि ॥

संपुटमन्त्रः

सिधुरं साधको दद्यान्मनोरन्ते महेश्वरि ।
शारिकामूलमंत्रस्य मंत्रः संपुटकाभिधः ॥

## शारिका–अवरणदेवताः

यन्त्रं, त्रिरेखाचतुर्द्वारयुतभूपुरं, त्रिवृत्तं, अष्टदलं, वसुकोणं, त्रिकोणं, बिंदु ॥

पीठपूजा ॥ मंडूकाय, कालाग्निरुद्राय, मूलप्रकृत्यै, आधारशक्त्यै, कमठाय, अनंताय, पृथिव्यै, सुधार्णवायै, रत्नसिंहासनाय, सूर्यसोमवह्नि मडलेभ्यो, हसौः सदाशिवमहाप्रेतासनाय,

१. भूपुरचतुर्द्वार प्रथमरेखायां । ॐ ह्रीं श्रीं गं गणपति, धं धर्म, वं वरुण, कुं कुबेर ॥
द्वितीयरेखायां । इन्द्रादि दशदिक्पालाः
तृतीयरेखायां । तेषां आयुधानि ॥

२. त्रिवृत्ते । प्रथमरेखायां मूलं दिव्यौघपराख्य गुरु पंक्ति श्री
,, द्वितीये ,, ,, सिद्धौघ ,, ,,
तृतीये ,, ,, मानवौघ ,, ,,
तत्रैव स्वगुरु, परमगुरु, परमेष्टिगुरु, परमाचार्य ॥

३. अष्टदलेषु ॥ स्वाग्रदलादारभ्य वामावर्तेन ब्राह्म्यादि अष्टमातृकाः अष्टदलेषु । केसरेषु । दक्षावर्तेन अष्टभैरवाः ।

४. वसुकोणे अपा, कामा, चार्वंगी, टक्कारिणी, तारा पार्वती, यक्षिणी, शिवा ॥

५. त्रिकोणे अग्रकोणमारभ्य । कालिका, ईशाने त्रिपुर सुन्दरी, आग्नेये दुर्गा ॥

६. मूलेन बिंदौ ॥

## इन्द्राक्षी

मन्त्रोद्धारः

प्रणवं कमलां मायां वाग्भवं शक्ति मन्मथौ ।
इन्द्राक्षि वज्रहस्ते च हरमन्तेऽग्निवल्लभा ॥
ॐ श्रीं ह्रीं ऐं सौः क्लीं इन्द्राक्षि वज्रहस्ते फट् स्वाहा ॥
आदि बीजत्रयेणैव पूज्या श्री चक्रदेवताः ॥

त्र्यक्षं कुंतीद्वयं देवि कूर्चयुग्मं तथैव च ।
अस्य बीजं परां पद्मां चर्माणं च ततोऽभिधाम् (ग्लौं)
इन्द्राक्षि वज्रहस्तेऽन्ते लक्ष्मीं लज्जां च पुष्करं ।
तीर युग्मं रसने द्वे त्रासश्चंद्रो हरं वनं ।
इन्द्राक्ष्या देवदेव्याश्य ह्यष्टाविंशाक्षारो मनुः ॥
ॐ क्रीं क्रीं हूं हूं ग्लौं ह्रीं श्रीं ऐं इन्द्राक्षि वज्तहस्ते ।
श्रीं ह्रीं ग्लौं हूं हुं क्रीं क्रीं ॐ ऐं फट् स्वाहा ॥

उत्कीलनं

शक्ति बीजं पठेदादौ ठद्वयांते च मन्मथम् ।
इन्द्राक्षीमंत्रराजस्य स्यादुत्कीलनको मनुः ॥

संजीवनं

इन्द्राक्षीमूलमंत्रस्य संजीवनमनुः परः ।
मृत्स्ना बीजं जपेद्देवि प्रणवं च वनाञ्चले ॥

शापमोचनं

तारं वाणी शरत्कामिन्द्राक्षि ब्रह्मलांछनम् ।
मोचय द्वयमापश्च विद्येयं शापहारिणी ॥

यन्त्रं

बिन्दु स्त्रिकोणज षडस्र षडस्र युक्त
षट्कोण वृत्त वसुपत्र कलाश्रमिश्रम् ।
भूगेहबिंबमनले न शशिप्रभाभ
मिन्द्राक्षिणी प्रियतरं जयचक्रमेतत् ।

ध्यानम्

मालास्यंकुशपद्मयुग्मक धरां चक्षुःसहस्त्राङ्कितां
मत्तैरावणपृष्टगां शशिमुखीं त्रैलोक्यरक्षापरां ।
दोर्मिर्गानरतां स्फुटांबुजनिभां ब्रह्मादिदेवैः स्तुतां
इन्द्राक्षीं जनमातरं हृदि भजे कारुण्यरूपां पराम् ॥

संपुटमन्त्रः

शक्तिमादौ पठेन्मंत्री वाणीमंते महेश्वरि ।
इन्द्राक्ष्याः वज्रहस्तायाः मंत्रोयं सपुटाभिधः ॥

## श्री कालिन्दीमंत्रः

१ ॐ २ ह्रीं ३ श्रीं ४ क्लीं ५ कालिन्दीदेव्यै ६ नमः ।। एकादशाक्षरो मन्त्रः ।।

अस्य मन्त्रस्य । सौभरिर्ऋषिः । अनुष्टुप् छन्दः । यमुना देवता ।

ह्रीं बीजं । श्रीं शक्तिः । क्लीं कीलकं । संख्याक्रमेण न्यासः । ध्यानम्–

**ॐ श्यामामंभोजनेत्रां सघनघनरुचिं रत्नमंजीरकूज-**
**त्कांचीकेयूरयुक्तां कनकमणिमये बिभ्रतीं कुण्डले द्वे ।**
**भ्राजच्छ्रीनीलवस्त्रां स्फुरदमलचलद्धारभारां मनोज्ञां,**
**ध्याये मार्ताण्डपुत्रीं तनुकिरणचयोद्दीप्तदीपाभिरामाम् ।।**

पुरश्चरणं एकादशलक्षजपः दशांशहोमः । मनसईप्सितं ददाति ।।

## अथर्ववेदोक्त आसुरी मंत्रः (दशोत्तर शताक्षरः)

१ ॐ कटुके कटुकपत्रे, २ सुभगे आसुरि, ३ रक्ते रक्तवाससे, ४ अथर्वणस्य दुहितः, ५ अघोरे अघोर कर्मकारिके, ६ अमुकस्य गति दह २ उपविष्टस्य गुदं दह २ सुप्तस्य मनोदह २ प्रबुद्धस्य हृदयं दह २ हन २, पच २ तावद्दह तावत्पच यावन्मे वशमायाति हुं फट् स्वाहा ।।

अस्य मन्त्रस्य अंगिर ऋषिः । विराट् छन्दः । आसुरी देवता ।

ॐ बीजं । स्वाहा शक्तिः । हुं कीलकं । अस्य संख्याक्रमेण प्रति न्यासांते हुं फट् स्वाहा, इति पदत्रयं योजनीयं ।। ध्यानम्–

**ॐ शरच्चंद्रकांतिर्वराभीतिशूलं सृणिं हस्तपद्मैर्दधानाम्बुजस्था ।**
**विभूषाबराढ्या हियज्ञोपवीता मुदेऽथर्वपुत्री भवत्वासुरी नः ।।**

पुरश्चरणमयुतजपः धृताक्तराजिकया दशांशतोहोमः ।
मन्त्र उपयोग प्रयोगाः उत्तर वर्तन्ते ।।

## महिषमर्द्धिनी मंत्रः (अष्टाक्षरी)

महिषमर्द्दिनि स्वाहा ।।

अस्य मन्त्रस्य । नारद ऋषिः । गायत्री छन्दः । महिषमर्द्दिनी देवता ।

ॐ महिष हिंसके हुं फट् । महिषशत्रीशांगि हुं फट् महिषंभीषय भीषय भीषय हुं फट्, महिषं हन हन देवि हुं फट्, महिषसूदिनि हुं फट्, इति करतल नेत्र विना पचांग न्यासः । ध्यानम्–

गारुडोपलसन्निभां मणिमौलिकुंडलमंडितां
नौमिफालविलोचनां महिषोत्तमाङ्गनिषेदुषीम् ।
चक्र शंख कृपाण खेटक बाण कार्मुकशूलकां
स्तर्ज्जनीमपि बिभ्रतीं निजबाहुभिः शशिशेखराम् ॥

पुरश्चरणं अष्टलक्षजपः । दशांशहोमंतिलैः ॥

## रेणुकाशबरी मंत्रः (पंचाक्षरमंत्रः)

१ ॐ २ श्रीं ३ ह्रीं ४ क्रों ५ ऐं ॥

अस्य मन्त्रस्य । भैरव ऋषिः । पंक्ति छन्दः । रेणुकाशबरी देवता ।

१ ॐ नमः, २ श्रीं नमः, ३ ह्रीं नमः, ४ क्रों नमः, ५ ऐं नमः, ६ ॐ श्रीं ह्रीं क्रों ऐं इति न्यासः ।

ध्यानम्–

हेमाद्रिससानावुद्याने नानाद्रुममनोहरे ।
रत्नमण्डपमध्यस्थवेदिकायां स्थितां नुवेत् ।
इत्युद्यानं ध्यात्वा, ततः देवी ध्यानं ।
गुंजाफलाकल्पितहाराभ्यां श्रुत्योः शिखंडं शिखिनो वहंतीम् ।
कोदंडबाणौ दधतीं कराभ्यां कटिस्थवल्कां शबरीं स्मरामि ॥

पुरश्चरणं पंचलक्षजपः । बिल्वकाष्टदीप्ताग्नौ बिल्वफलैः दशांशतो होमः ॥

## श्रीवनदुर्गा मंत्रः

(ह्रीं श्रीं क्लीं दुं)

ॐ (ऐं ह्रीं श्रीं दुं) उत्तिष्ठ पुरुषि, किं स्वपिषि भयं मे समुपस्थितं, यदि शक्यमशक्यं वा तन्मे भगवति शमय स्वाहा ।

अस्य मन्त्रस्य । आरण्यक ईश्वर ऋषिः । अनुष्टुप् छन्दः । अन्तर्यामी नारायण किरातरूपधर ईश्वरो वनदुर्गा देवता । दुं बीजं । ह्रीं शक्तिः ।

क्लीं कीलकं । सर्वदुःख विमोचनार्थे जपे विनियोगः ॥

ॐ ह्रीं श्रीं क्लीं दुं उत्तिष्ठपुरुषि–रुद्रतेजोज्वलज्वालामालिनि हसिनि ह्रां अंगुष्ठा

| | | | |
|---|---|---|---|
| किं स्वपिषि | ब्रह्मतेजो | ,, ,, | पद्मिनि ह्रीं तर्जनी |
| भयं मे समुपस्थितं | विष्णुतेजो | ,, ,, | चक्रिणि ह्रूं मध्यमा |
| यदिशक्यमशक्यं वा | सूर्यतेजो | ,, ,, | गदिनि ह्रैं अनामिका |
| तन्मे भगवति | अग्नितेजो | ,, ,, | त्रिशूलिनि ह्रौं कनिष्ठका |
| शमय स्वाहा | सर्वतेजो | ,, ,, | त्रिशूलधारिणि ह्रः करतल |

एवं हृदयादि न्यासः । ॐ क्लीं पशु हुं फट् स्वाहा इति दिग्बंधः । ध्यानम्–

दिग्बंधनं ।। भर्गा दुर्गमपंच दुर्गमनुभिः प्रापचिका प्राभवां
नंदाद्योतकरीं भवाच्युत विधि प्राधान्य रक्षाकरीं ।
दिक्पालासुर शक्ति भैरव महामन्त्र ग्रहेशावृतां
दत्तव्यां भुवि मां त्रिकोण विजयी मारोग्य दिग्बंधनम् ।।

महाविद्यां हृद्यांसकलदुरित ध्वंसनकरी,
पिशाच व्यालोग्र ग्रहरिपुग्रहोच्छेदनकरीं ।
महामन्त्रज्वाला पठुलपठु दिग्बंधनकरीं पठद्यः
सप्राप्तो न्यदखिलमैहिकामुष्मिक फल ।। (सुखं) ।।

ध्यानम् :

सौवर्णांबुज मध्यगां त्रिनयनां सौदामिनी सन्निभां
शंखं चक्र वराभयानि दधतींमिंदुगोज्वलां बिभ्रतीम् ।
ग्रैवेयांगदहार कुण्डल धरामाखण्डलाद्यै स्तुतां
ध्यायेद्विन्ध्य निवासिनीं शशिमुखीं पार्श्वस्थ पचाननाम् ।।

पंचोपचार पूजा । ततः मुद्राः प्रदर्शयेत् ।

स्तंभन चतुरश्रं चं मत्स्यं गोखुर मेव च । योनि मुद्रेतिपंचैताः दुर्गामुद्रा प्रकीर्तिता । ततः द्रां द्रीं, क्लीं ब्लूं, सः, इत्याख्य, शोषण, संमोहन, संदीपन, सन्तापन, वशीकरण मुद्रां प्रदर्शयेत् ।। ततः मूल जपेत् ।

एवं ध्यात्वा जपेल्लक्ष चतुष्कं तद्दशांशतः । जुहुयाद्धविषा मन्त्री गालिभिः सर्पिषातिलैः ।।

## वनदुर्गायन्त्रं

पद्मं भानुदलान्वितं प्रविलिखेत्तत्कर्णिकायां पुन,
स्तारं शक्तिगबीज साध्यसहितं तत्केसरेषु क्रमात् ।
मर्हिन्या मनु संभवान् युगलशो वर्णान्पुनः पत्रगान्
मन्त्रार्णान्गुणशो विधाय विलिखेदन्त्यं तदन्त्ये दले ॥
मातृ कावर्ण संबीतं भूपुरद्वयमध्यगं
यन्त्र विन्ध्य निवासिन्याः प्रोक्तं सर्व समृद्धिदम् ॥

## शूलिनीदुर्गा

ॐ दुं ज्वलज्वल शूलिनी दुष्टग्रहान हुं फट् स्वाहा ॥ (अष्टादशार्णः)

अस्य मन्त्रस्य । दीर्घतमसः ऋषिः । ककुप्छन्दः । शूलिनी दुर्गा देवता ।

दुं बीजं । स्वाहा शक्तिः । फट् कीलकं ।

१ ॐ शूलिनीदुर्गे हुं फट् । २ ॐ शूलिनीवरदे हुं फट् । ३ ॐ शूलिनी विन्ध्यवासिनि हुं फट् । ४ ॐ शूलिनी असुरमर्दिनि युद्धप्रिये हु फट् । ५ ॐ शूलिनी देवसिद्धपूजिते नंदिनि रक्षरक्ष महायोगेश्वरि हुं फट् । ६ ॐ शूलिनी महायोगेश्वरि हुं फट् इति न्यासः । ध्यानम्–

अध्यारूढां मृगेन्द्रं सकलजल धर श्यामलां पद्महस्तैः
शूलं बाणं कृपाणमरिजलजगदाचाप पाशान्वहंतीम् ।
चन्द्रोत्तंसां त्रिनेत्रां चतसृभिरसिमत्खेटकं बिभ्रतीभिः
कन्याभिः सेव्यमानां प्रतिभट भयदां शूलिनीं भावयामि ॥

ॐ शूलिनी ज्वल फट् ज्वल हुं दुष्टग्रह स्वाहा । क्षुद्र भूतबाधा निवृत्तिः ।

ॐ शूलिनी ज्वल फट् ज्वल दुष्टग्रह ज्वल स्वाहा । उच्चाटन, संहार, सर्वारिष्टनिवृत्तिः ॥

ॐ नमो भगवति विश्वलोचने सकलदृक्दोषं मोचय २ शूलिनी हु फट् स्वाहा । दृष्टि दोष निवारणं ।

## स्वयंवरदुर्गा

नमो ह्रीं योगिनि योगिनि योगेश्वरि २ योगभयंकरि अखिल स्थावर जंगमस्य मुखं हृदयं मम वशं आकर्षय २ स्वाहा ।

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । जगती छन्दः । गिरिवर पुत्री स्वयंवरा देवता । ह्रां ह्रीं इत्यादि न्यासः । ध्यानम् ।

शंभुं जगन्मोहनरूपपूर्णं, विलोक्यलज्जाकुलितां स्मिताढ्याम् ।
मधूकमालां स्वमखीकराभ्यां संबिभ्रतीमद्रिसुतां भजेहम् ॥

हेमाभामपति वागतीतगुण शीलांतामशिल्पाकृतिं
प्रेमारोहमनोहरां करलसत्कल्याणदामान्विताम् ।
श्यामामीश्वर मुद्यतां वरयितुं त्रैलोक्यसम्मोहिनीं
कामापादन कल्पवल्लिमनिशं वन्दे परां देवताम् ॥

बालार्कायुत सुप्रभां करतले रोलबमालाकुलां
मालां संदधतीं मनोहरतनुं मन्दस्मितोद्यन्मुखीम् ।
मन्दं मन्दमुपेयुषीं वरयितुं शंभुंजगन्मोहिनीं
वन्दे देवमुनींद्र वन्दितपदाऽभीष्टार्थदां पार्वतीम् ॥

विधृतवरणमाल्या सर्वरत्नांगभूषा
निखिल नयनचेतो हारि रूपाढ्य देवा ।
भवतु भवदभीष्टप्राप्तये शैलकन्या
पुरुषयुवतिवश्यां कृष्टि नित्यप्रहर्षा ॥

## सुमुखी

मन्त्रोद्धारः

वाग्भवं कामराजं च तयोच्छिष्ट पदंवदेत् ।
चण्डालिनीति प्रोच्चार्य सुमुखीदेविचोद्धरेत् ।
महापिशाचिनीचेति मायार्णं पंकजत्रयं ।
वह्नि जायाञ्चलो मन्त्रो गोपनीयो महेश्वरि ॥

ऐं क्लीं उच्छिष्टचण्डालिनि सुमुखीदेवि महापिशाचिनी ठः ठः ठः स्वाहा ॥

वाक् काममुच्छिष्टपदं विभाव्य चण्डालिनी वैसुमुखी च देवि ।
महापिशाची सकला त्रयाब्जं वनं मनुः स्यात् सुमुखी प्रियोऽयम् ॥

उत्कीलनं

मयामादौ वनांते च वाग्भवं साधको जपेत् ।
सुमुख्या मन्त्रराजस्य भवेदुत्कीलनं तथा ॥

संजीवनं

सुमुखी मन्त्रराजस्य भवेत् संजीवनं प्रिये ।
तारद्वयं जपेन्मन्त्री मन्त्रांते मान्त्रिकेश्वरि ॥

शापमोचनं

वाग्भवं कामराजं च शिवशापं विमोचय ।
परां नीरभिर्यविद्या सुमुख्याः शापहारिणी ॥

यन्त्रं

बिंदुं चानलकोणगं च विलिखेत् बाणाश्रकोणांकितं
वृत्तं नागदलेन मण्डितमथो श्रीषोडशारांकितं ।
सद्वृत्तत्रयसंयुतं च धरणीगेहांकितं पार्वति
श्रीचक्रं सुमुखीप्रियं विजयतात् भोगापवर्गप्रदम् ॥

संपुटमन्त्रः

पद्मत्रयं पठेदादौ मायामन्ते महेश्वरि ।
देव्याउच्छिष्टमातंग्याः संपुटाख्योस्त्ययंमनुः ॥

## श्रीलक्ष्मी मन्त्रः शारदातिलके

मनुः । १ ॐ श्रों । २ ऐं श्रीं । ३ क्लीं श्रीं वा । परमात्मस्वरूपिणी श्रीर्देवता (२) शक्ति स्वरूणो । (३) काम्यफलप्रदायिनी इत्यर्थः । तयोः एकं ग्राह्यं ॥

तस्य मन्त्रस्य । भृगु ऋषिः निचृछन्दः । श्रीः देवता । शकारो बीजं । ईकारः शक्तिः । क्लां क्लीं इत्यादिना, अथवा ॥ १ महाश्रियै महाविद्युत्प्रभे स्वाहा । २ प्रिये विजये स्वाहा । ३ गौरि महाबले बन्ध २ स्वाह । ४ घृति स्वाहा । ५ महाकाये पद्महस्ते हुं फट् ॥ इति वा । १ श्रियै स्वाहा । २ श्रीं फट् । ३ श्रीं नमः । ४ श्रियै प्रसीद नमः । ५ श्रीं फट । इति पचांग न्यसं । क्लां इत्यादि न्यासे नेत्राभ्यां वौषट् इति च महाश्रियै इत्यादिन्यासें, नेत्र, अस्त्रविना च । श्रियै स्वाहा न्यासे नेत्रं, विना न्यसेत् ॥ ध्यानम्–

कान्त्या कांचनसन्निभां हिमगिरिप्रख्यै श्चतुर्भिगजैः
हस्तोत्क्षिप्तहिरण्मयामृतघटै रासिच्यमानां श्रियम् ।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां
क्षौमाबद्ध नितंबबिंबलसितां वन्देऽरविंदस्थिताम् ।।
भानुलक्षं जपेन्मंत्र दीक्षितो विजितेन्द्रियः ।
श्रियमभ्यर्चयन्नित्यं सुगंधि कुसुमादिभिः ।

तत्सहस्र होमं, मधुराप्लुत तिलैः, अथवा बिल्वै, तत्फलै, होमयेत् ।

तत्राप्येकैकेन द्रव्येण चतुःसहस्रं होतव्यम् । अथ च साधकोत्तमो, कमलवासिनी

महालक्ष्मी, श्रीसूक्तैः सकृत् हुत्वा, पश्चात् मूलेन होमयेत् ।।

## मन्त्रांतरं ।। अष्टाक्षरी ।।

मनुः ।। आं श्रीं ह्रीं: क्लीं, क्लीं ह्रीं: श्रीं क्रों ।।

अज ऋषिः । गायत्री छन्दः । श्री त्रिशक्तिस्वरूपिणी महालक्ष्मी देवता ।
श्रीं बीजं । सौः शक्तिः । क्लीं कीलकं । ह्रां इत्यादि न्यासः । ध्यानम्–

आनंदरूपिणींदेवीं पाशांकुशधनुःशरान् ।
बिभ्रतीं दोर्भिररुणां कुचार्तां हृदि भावयेत् ।

जपं अष्टलक्षं । तत्सहस्र तिलहोमः ।

## मन्त्रांतरं ।। अष्टाक्षरी ।।

मनुः । कामिनि रंगिनि स्वाहा ।

संमोहन ऋषिः गायत्री छन्दः । सर्व संमोहिनी लक्ष्मी देवता । मूलेन द्विरावृत्या न्यासः । ध्यानम–

श्यामांगीं वल्लकीं दोर्भ्यां वादयंतीं सुभूषणां ।
चंद्रावतंसां विविधगानैर्मोहयंतीं जगत् ।।

जपम् अयुतद्वयं । दशांशं मधूकजैः त्रिमध्वक्तैः ।।

## ऐकाह्निक प्रसन्न महालक्ष्मीमन्त्रः

अस्य महामन्त्रस्य । विश्वामित्र ऋषिः गायत्री छन्दः । रक्तदंतिका बीजं । अग्निस्तत्वं । महारुद्र इति शक्तिः । भ्रमरांबेति कीलकं । राजमोहिनि महामाये ऐं । विश्वमोहिनि महादुर्गे ह्रीं ॥ ऐश्वर्यदायिनि महालक्ष्मि क्लीं । चित्ररूपधारिणि चामुण्डायै ऐं । भूतभविष्यज्ञानरूपिणि विच्चे । विद्युत्प्रभे ह्रीं दुं दुर्गायै ॥ अस्त्रायफट् ।

गजारूढे महालक्ष्मि क्ष्रां ह्रां इन्द्रदिशं बन्ध २
मेषारूढे वडबानले क्ष्रीं ह्रीं अग्निदिशं ॥

महिषारूढे महिषासुरमर्दिनि क्ष्रूं ह्रूं यमदिशं ॥
नरवाहिनि नररक्षिणि क्ष्रैं ह्रैं नैऋतिदिशं ॥
मकरवाहिनि मधुपायिनि क्ष्रौं ह्रौं वरुणदिशं ॥
मृगवाहिनि भ्रमररूपिणि ब्लूँ वौं वायव्यदिशं ॥
अश्ववाहिनि गांधर्वरूपिणि क्ष्रं ह्रंः कुबेर दिशं ॥
वृषभवाहिनि अभदायिनि क्ष्रः ह्रः ईशानदिशं ॥
पक्षिवाहिनि आकाशगामिनि खें श्लें ऊर्ध्वदिशं ॥
नागवाहिनि पातालगामिनि प्रां ष्ट्रां अधोदिशं ॥
वायुवाहिनि त्रिगुणात्मरूपिणि आं क्षां अवांतरदिशं ॥ ध्यानम् ।

देवीश्वरीं भगवतीं त्रिगुणात्मरूपां ।
माया प्रपंचनकरीं मधुकैटभघ्नीं ।
रक्तावलिप्रियकरीं सकलर्थहंत्रीं
त्वां मानतोस्मि परिपालय मे कुटुंबम् ॥

मूल । ॐ तत्स ऐं वितुर्वरे ह्रीं ण्यं भर्गो क्लीं देवस्यधी चामुण्डायै महि धियोयो विच्चे नः प्रचोदयात् ॥
यन्त्रं ॥ षट्कोणं, अष्टदलं एकरेखात्मक भूपुरं । एकरेखात्सकं ॥

## कुलवागीश्वरि ॥

मन्त्रोद्धारं

तारं कामो ङिम्बलक्ष्मीः कूर्चं कांक्षाभिधं ततः ।
जंद्वः पद्मः स्पृहा पद्मो वेश्या पद्मावनं मनुः (ततः) ॥

ॐ क्लीं ह्रीं श्रीं हुं झं झषहस्ते कुलवागीश्वरि ऐं ठः झं ठः (फ्रीं)
अथवा खीं ठः स्वाहा ॥
कामेन पूजयेद्देवि परिवारान्यथाक्रमं ॥

उत्कीलनं

वेश्याभादौ वनांते च डिबबीजं जपेच्छिवे ।
उत्कीनाख्योमत्रोऽयं कुलवागीश्वरीमनोः ॥

संजीवन

भवेत् संजीवन देवि कुलवागीश्वरीमनोः ।
काममादौ महादेवि जपे दते रमां शिवे ॥

शापमोचनं

तारं व्योम रमां कांक्षां कुलवागीश्वरि स्फुटम् ।
शिवशापंच मुँचापो विद्येयं शापहारिणो ॥

यन्त्रं

त्रिकोण स बिंदुं शराश्रसवृत्तं, ततो नागपत्रांचितं षोडशारम् ।
त्रिवृत्तं धरासद्म पद्मास्पदंते, सुयंत्रं प्रदिष्टं च वागीश्वरीष्टम् ॥

ध्यानं

त्रिशूलासिधरां दोर्भ्यां रक्तास्यां वह्निसन्निभाम् ।
त्र्यक्षां सिंहासनगतां कुलवाश्वरीं भजे ॥

संपुट मन्त्रः

स्पृहामादौ जपेद्देविवनांते पंकजं जपेत् ।
मन्त्रोयं संपुटोख्योस्ति कुलवागीश्वरी मनोः ॥

## लक्ष्मी

पीठपूजा । मं मंडूकादि...नमः नवपीठशक्तीः । विभूत्यै, उन्मन्यै, कांत्यै, सृष्टयै, कीर्त्यै, कीर्त्यै सन्नत्यै, पुष्टयै, पीठमध्ये ऋद्धयै ॥ श्रीं कमलासनाय नमः ॥

१. षट्कोणकेसरेषु ॥ आग्नेय्यादि चतुर्विदिक्षु मध्येदिक्षु च, हृदयादि षडंगदेवताः ॥

२. अष्टदलेषु पूज्यपूजकयोर्मध्ये प्राचीं, तदनुसारेण अन्यादिशः प्रकल्प्य, प्राच्यादि चतुर्दिक्षु ।

विदिक्षु च । पूर्वे वासुदेवाय, दक्षिणे संकर्षणाय, पश्चिमे प्रद्युम्नाय, उत्तरे अनिरुद्धाय । अग्निकोणे दमकाय, निर्ऋति-सलिलाय, वायव्ये गुग्गुलवे, ईशान्ये कुरंटकाय देव्या दक्षिणे शंखनिधये, वसुधा, वामे पद्मनिधये, वसुमत्यै ॥

३. पत्राग्रेषु । पूर्वादिक्रमेण । बलाप्त्यै, कमलायै, वनमालिकायै, विभीषिकायै, शांकर्यै, वसुमालिकायै ।

४. भूपुरे-इंद्रादि दशदिक्पालाः ५, ततः तेषां आयुधानि ॥

## लक्ष्मी २७ अक्षरमन्त्र आवरणपूजा ॥

यन्त्रं, पीठपूजा पूर्ववत् ॥

१. षट्कोणकेसरेषु अग्नि निर्ऋति वायु ईशानकोणेषु हृदयादि कवचांतं, ततः देवी पश्चिमे अस्त्रं नेत्र विना, स्त्रीं ह्रीं श्रीं, आद्यंतं, ततः अङ्गदेवतां उच्चारयेत् ॥

२. अष्टदलेषु पूज्यपूजकयोरंतराले प्राचीं दिशं प्रकल्प्य, प्राच्यादिक्रमेण ।

श्रीधराय हृषीकेशाय, वैकुंठाय, विश्वरूपाय, वासुदेवाय, संकर्षणाय, प्रद्युम्नाय, अनिरुद्धाय ॥

३. अष्टदलाग्रेषु । भारत्यै, पार्वत्यै, चान्द्र्यै, शच्यै, दमकाय, सलिलाय, गुग्गुलवे, कुरंटकाय ॥

४. अष्टदलाग्रेषु । अनुरागाय, संवादाय, विजयाय, वल्लभाय, मदाय, हर्षाय, बलाय, तेजसे इति अष्टबाणान्, प्रतिनामांते, महालक्ष्मीबाणाय नमः इति संयोजयेत् ॥

५. भूपुरे इन्द्रादीन् । वज्रादीन् च पूजयेत् ।

## लक्ष्मी (द्वादशाक्षरी)

चक्रं । त्रिकोणं षट्कोणं, अष्टदलं, भूपुरं । एकरेखात्मकं

पीठ पूजादिसर्वं पूर्ववत् ॥

१. षट्कोणाद्बहिः देवी दक्षिणे-शंकरानंदाय । वामे पुष्पधन्वने नमः ।

२. षट्कोणे आग्नेय्यादि विदिक्षु, मध्ये दिक्षु च, षडंगयुवतीः ।

३. अष्टदलेषु पूज्यपूजकयोर्मध्ये प्राचीदिशं प्रकल्प्य, पूर्वादि क्रमेण । उमायै, श्रियै, सरस्वत्यै, दुर्गायै, धरण्यै, गायत्र्यै, देव्यै, उषायै ।

४. देव्यादक्षिणे शंकरानन्दाय समीपे जह्नुसुतायै, वामे पुष्पदंतसमीपे सूर्यसुतायै ॥ पुनः देव्यादक्षे शंखनिधये, वामे पद्मनिधये ।

५. अष्टदलाग्रेषु ॥ सूर्याय, सोमाय, भौमाय, बुधाय, बृहस्पतये, शुक्राय, शनैश्चराय, राहवे केतवे ।

६. भूपुराभ्यन्तरे । ऊर्ध्वभागे, ऐरावताय, पुंडरीकाय, वामनाय, कुमुदाय, अंजनाय, पुष्पदंताय, सार्वभौमाय, सुप्रतीकाय ॥

७. भूपुरे इंद्रादिदशदिक्पालाः, तेषां आयुधानि च ॥

## ज्येष्ठालक्ष्मी

यन्त्रं । षट्कोणं, अष्टदलं भूपुर (एकरेखात्मक)

पीठपूजा । मं मंडूकादि...नमः । नवपीठशक्तीः । लोहिताक्ष्यै, विरूपायै, करालयै, नीललोहितायै, समदायै, वारुण्यै, पुष्टयै, अमोघायै, मध्ये विश्वमोहिन्यै ॥

१. षट्कोणेषु-आग्नेय्यादि चतुर्विदिक्षु मध्येदिक्षु च । हृदयादि षडङ्गदेवताः ।

२. अष्टदलेषु पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य, प्राचीक्रमेण । ब्राह्म्यादि अष्ट मातृकाः ।

३. भूपुरे इंद्रादि दशदिक्पालाः । वज्राद्यायुधानि ॥

## वासुधालक्ष्मी

यन्त्रं । षट्कोणं, अष्टदलं, भूपुरम्

पीठपूजा । मं मंडूकादि...नमः । नवपीठशक्तीः । विमलायै, उत्कर्षिण्यै, ज्ञानाय, क्रियायै, योगाय, प्रह्वायै, सत्यायै, ईशानायै, मध्ये, अनुग्रहायै ॥

१. षट्कोणे, आग्नेयादि चतुर्विदिक्षु मध्ये दिक्षु च । हृदयादि षडङ्गदेवताः ।

२. अष्टदलेषु, पूज्य पूजकयोर्मध्ये प्राचीं प्रकल्प्य, प्राचीक्रमेण ।

पृथिवि, अग्नि, जल, मारुत, आग्नेय्यादि विदिक्षु । निवृत्ति, प्रतिष्ठां, विद्या, शांति ॥

३. अष्टदलाग्रेषु । प्राचीक्रमेणा वलाका, विमला, कमला, वनमाला, विभीषा, मालिका, शांकरि, वसुमालिका ।

४. भूपुरे इंद्रादि दशदिक्पालाः, तेषां आयुधानि च ॥

## लक्ष्मी (कमलात्मिका मन्त्रः

"श्रीं" इत्येकाक्षरी ॥

अस्य मन्त्रस्य । भृगुर्ऋषिः । निचृच्छन्दः । श्रीलक्ष्मीर्देवता । श्रां श्रीं इत्यादि न्यासः ।

कान्त्या कांचनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैः
हस्तोत्क्षिप्त हिरण्मयामृतघटैरासिच्यमानांश्रियं ।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां,
क्षौमाबद्धनितंबबिंबलसितां वन्देऽरविन्दस्थिताम् ॥

पुरश्चरणं द्वादशलक्षजपः द्वादशसहस्रकमलपुष्पहोम् ॥

## चतुरक्षरलक्ष्मीमन्त्रः

ऐं श्रीं ह्रीं क्लीं ॥

अस्यमन्त्रस्य ऋषिन्यासादिकंसर्व पूर्ववत् ॥ ध्यानं ।

माणिक्यप्रतिमप्रभां हिमनिभैस्तुंगैश्चतुर्भिर्गजैः
हस्ताग्राहितरत्नकुंभसलिलैरासिच्यमानां मुदा ।
हस्ताब्जैर्वरदानमंबुजयुगाभीतीर्दधानां हरेः
कांतां कांक्षितपारिजातलतिकां वंदे सरोजासनाम् ॥

पुरश्चरणं द्वादशलक्षं जपः । होमंपूर्ववत् ॥

## दशाक्षरमन्त्रः

ॐ नमः कमलवासिन्यै स्वाहा ।

अस्य मन्त्रस्य । दक्ष ऋषिः । विराट् छन्दः ।

ॐ देव्यै, ॐ पद्मिन्यै, ॐ विष्णुपत्न्यै, ॐ वरदायै, ॐकमलायै, इति करतल नेत्रत्रयं विना न्यासं ।
ध्यानं ॥

ॐ आसीना सरसीरुहे स्मितमुखी हस्तंबुजैर्बिभ्रती
दानं पद्मयुगाभये च वपुषा सौदामिनीसन्निभा ।
मुक्ताहार विराजमान पृथुलोत्तुंगस्तनोद्भासिनी,
पायाद्वः कमला कटाक्षविभवरानंदयंती हरिम् ॥

दशलक्षं जपं ॥ मधुराक्तैः सरोरुहैः दशांशं हवनं ॥

## सिद्धलक्ष्मी

मन्त्रोद्धारः

तारं रमायुगं माया हरितं चन्द्रमन्मथौ ।
शक्तिर्नामाऽस्मरौ मन्त्रः सिद्धलक्ष्म्या उदाहृतः ॥
ॐ श्रीं श्रीं ह्रीं ह्सौः (स्हौः) ऐं क्लीं सौः सिद्धलक्ष्म्यै नमः ॥

उत्कीलनं

हरितं प्रथ मंदेवि विश्वांते वाग्भवं जपेत् ।
सिद्धलक्ष्मीर्मनोर्देवि मन्त्रोऽस्युत्कीलनाभिधः ।

संजीवनं

सिद्धलक्षीमनोरेष स्यात् संजीवनको मनुः ॥
काङ्क्षमादौ रमामन्ते जपेत् साधकस्स्तमः ॥

शापमोचनं

तारं रमां सिद्धलक्ष्मि सिद्धशापं विमोचय ।
वाणी शरत् स्मरौ नीरं विद्येयं शापहारिणी ॥

यन्त्रं

बिंदुस्त्रिकोणषट्कोण वृत्ताष्टदलमण्डितम् ।
त्रिवृत्तं भूगृहं यन्त्रं सिद्धलक्ष्म्या मया स्मृतम् ॥

सपुटमन्त्रः

कामराजं जपेदादौ विश्वांते वाग्भवं जपेत् ।
सिद्धलक्ष्मी मनोरेष संपुटो वर्णितो मया ॥

## महालक्ष्मी

मन्त्रोद्धारं

तारं परां रमां कामं वाग्भवं शक्तिबीजकं ।
महालक्ष्मि प्रसीदेति युग्म मा पंकजत्रयम् ।
स्वाहांतोऽयं महामन्त्रो महालक्ष्मीपदप्रदः ॥

ॐ ह्रीं श्रीं क्लीं ऐं सौः महालक्ष्मि, प्रसीद २ श्रीं ठः ठः स्वाहा ।
आदिबीजत्रयेणैव पूज्याः परमशक्तयः ॥

हरिणाक्षि परा त्र्यक्षं लक्ष्मीबीजत्रयं त्विदम् ।
विपरीततया प्रोक्तं सत्वरं फलदायकं ।
क्षामा शंकापि नीरं तदन्ते प्रोक्तं शिष्यसत्तम ॥
ॐ ह्रीं श्रीं लक्ष्मि महालक्ष्मि सर्वकामप्रदे सर्वसौभाग्यदायिनि अभिमत प्रयच्छ सर्वे सर्वगते सर्वस्वरूपे सर्वदुर्जयविमोचिनि ह्रीं सौः स्वाहा ।

उत्कीलनं

रमामादौ मनोर्दद्यात् पद्म त्रय समाञ्चले ।
महालक्ष्मी मनोर्देवि मन्त्रोऽयमुत्कीलनाभिधः ॥

संजीवनं

महालक्ष्मी मनोर्देवि भवेत्संजीवनं परं ।
कूर्चमादौ परामन्ते जपेत्साधकसत्तमः ॥

शापमोचनं

तारं रमां महालक्ष्मि विष्णुशापं विमोचय ।
तुरगं नीरं सौशानि विद्येयं शापवारिणी ॥

यन्त्रं

स्वं वह्न्यारगतं च कारसदलं वृत्तं बहिः शोभनं
बाह्ये नागदलं कलारविलसद्वृत्तत्रयोद्भासितं
भूगेह त्रयशोभितं तव मया निर्मितमेतत्परं
श्रीचक्रं परमार्थदायि च महालक्ष्मीप्रियं सिद्धिदम् ॥

ध्यानम् :

लक्ष्मीं पद्मासनगतकटिं सूर्यशीतांशुनेत्रा--
मुद्यद्भास्वत्कनकरुचिभिः पद्मशङ्खादिपाणिम् ।
नानामुक्तामणि सुकलशां भूषितांगीं द्विबाहु
नित्यं लोकत्रितय फलदां सौम्यकं संस्मितपूर्वम् ॥

संपुटमन्त्रः

वाग्भव प्रथमं दद्यादन्ते दद्याच्च मन्मथम् ।
देवतायाः महालक्ष्म्याः संपुटाख्योऽस्त्ययं मनुः ॥

## सप्तविंशत्यक्षर लक्ष्मीमन्त्रः

ॐ श्रीं ह्रीं १ कमले २ कमलालये ३ प्रसीद ४ प्रसीद श्रीं ह्रीं श्रों ५ महालक्ष्म्यै नमः ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । श्री महालक्ष्मीर्देवता । श्रीं बीजं । ह्रीं शक्तिः श्रीं कीलकं । ॐ श्रीं ह्रीं श्रीं इति पार्श्वद्वये सपुटित, संख्याक्रममूलेन, करतल नेत्रहीन न्यासः ॥ ध्यानम् ।

सिंदूरारुणकांतिमब्जवसतिं सौंदर्यवारांनिधिं,
कोटीरांगदहार कुंडल कटीसूत्रादिभिर्भूषिताम् ।
हस्ताब्जैर्वसुपत्र मब्ज युगलादर्शौ वहंतीं परा
मावीतां परिचारिकाभिरनिशं ध्यायेत्प्रियां शार्ङ्गिणः ॥

पुरश्चरणं लक्षजयः । मधुरोक्षित बिल्वफलैः दशांशहोमः ॥




## द्वादशाक्षर लक्ष्मीमन्त्रः

१ ऐं २ ह्रीं ३ श्रीं ४ सौं ६ जगत्प्रसूत्यै नमः ॥

अस्यमन्त्रस्य । ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीजगन्मातृमहालक्ष्मीः देवता । श्रीं बीजं । विनियोगायनमः । मूलेन करौ संशोध्य । सख्या क्रमेण कर न्यासः । मूलेन व्यापकन्यासं । ॐ ऐं नमः मूर्ध्नि । ॐ ह्रीं नमः मुखे । ॐ श्रीं नमः हृदये । ॐ क्लीं नमः गुह्ये । ॐ सौं नमः पादयोः । हृदये कर दत्वा । ॐ जं नमः त्वचि । ॐ गत् नमः रक्ते । ॐ प्रं नमः मांसे । ॐ सूं नमः मेदसि । ॐ त्यैं नमः अस्थिन ॐ नं नमः मज्जायां । ॐ मं नमः शुक्रे । पुन करन्यासः ।

ऐं ज्ञानाय, अंगुष्टा । ह्रीं ऐश्वर्याय तर्जनी । ॐ श्रीं शक्तये मध्यमा ।

ॐ क्लीं बलाय अनामिका । ॐ सौं कनिष्टिका । ॐ जगत्प्रसूत्यै नमस्तेजसेकरतल । एवं हृदयादि न्यासः । ध्यानंस्मरणं कुर्यात् ॥

चंपकाशोकपुन्नागपाटलै रुपशामितं ।
लवंगमालती बिल्वदेवदारुनमेरुभिः ॥
मंदार पारिजाताद्यैः कल्पवृक्षैः सुपुष्पितैः ।
चंदनैर्कर्णिकारैश्च मातुलिंगश्च वंजुलैः ॥

दाडिमीलकुचांकोलैः पूगैः कुरवकैरपि ।
कदलीकुंन्दमन्दार नालिकेरैरलंकृतैः
अन्यै सुगंधि पुष्पाद्यै वृक्ष संघैश्च मण्डितं ।
मालती मल्लिका जातीकेतकी शपत्रकैः ॥

पारन्ती तुलसो नंद्यावर्तैर्दमनकैरपि ।
सर्वर्तुकुसुमोपेतैर्नमद्भिरुपशोभितम् ।।
मंदमारुतसंभिन्नकुसुमामोदिदिङ्मुखं ।
तस्य मध्ये सदोत्फुल्लैः कुमुदोत्मलपंकजैः ।।
सौगधिकैश्च कल्हारैर्नवैः कुवलयैरपि ।
हंससारसकारंडैर्भ्रमरैश्चक्रनामभिः ।।
अन्यैः कलकलारावैर्विहगैरुपशोभितं ।
महासरसि तन्मध्ये पुलिनेऽतिमनोहरे ।।
परितः पारिजाताद्यं मण्डपं मणिकुट्टितं ।
उद्यदादित्यसंकाश भास्वरं शशिशीतलम् ।।
चतुर्द्वारसमायुक्तं हेमप्राकारशोभित ।
रत्नोपक्लृप्तिसशोभिकपाटाष्टकसंयुतम् ।।
नवरत्नसमाक्लृप्तं तुंगगोपुरतोरणं ।
हेमदण्डसमालबिध्वजावलिपरिष्कृतम् ।।
नवरत्नसमाबद्धस्तम्भराजिविराजितं ।
सहस्रदीपसंयुक्तदीपदण्डविराजितम् ।।
तप्तहाटकसंक्लृप्तवातायनमनोहरं ।
नान वर्णांशुकाद्बद्ध सुवर्णशतकोटिभिः ।।
किंकिणीमल्लिकायुक्त पताकाभिरलंकृतं ।
जातरूपमयैरत्नविचित्रैरतिविस्तृतैः ।।
माणिक्यरत्नवैदूर्यस्वर्णमालावलीयुतैः ।
अन्तरांतरसबद्धरत्नदृष्टिमनोहरैः ।।
विचित्रैश्चित्रवर्णैश्च वितानैरुपशोभितं ।
सर्वरत्नसमायुक्त हेमकुट्टिममुज्ज्वलम् ।।
केतकीमालतीजातीचंपकोत्पलकेसरैः ।
मल्लिकातुलसीजातीनद्यावर्तकदबकैः ।।
एतैरन्यैश्चकुसुमैरलंकृतमहीतल ।
अगुरुकाश्मीर कस्तूरी मृगनाभितमालकैः ।।
चन्दनागरु कर्पूरैरामोदितदिगतरं ।
एव संचित्य मनसा मंडप सुमनोहरम् ।।

तन्मध्येभावयेन्मन्त्री पारिजातं मनाहरं ।
तस्या धस्तात्स्मरेन्मन्त्री रत्नसिंहासन शुभम् ।।
तस्मिन्संचिनयेद्देवीं महालक्ष्मीं मनोरमाम् ।।
इत्युद्यानस्मरणं कृत्वा महालक्ष्मीं ध्यायेत् ।

ध्यानम् ।

बालार्कद्युतिमिंदुखंडविलसत्कोटीरहारोज्ज्वलां,
रत्नाकल्पविभूषितां कुचनतां शालैः करैर्मंजरीम् ।
पद्मं कौस्तुभरत्नमप्यविरतं संबिभ्रतीं सस्मितां,
फुल्लांभोजविलोचनत्रययुतां ध्यायेत्परां देवताम् ।।

पुरश्चरण द्वादशलक्षजपः ।

## एकादशाक्षर सिद्धलक्ष्मी मंत्रः

ॐ १ श्रीं २ ह्रीं ३ क्लीं ४ श्रीं ५ सिद्धलक्ष्म्यै ६ नमः ।।

अस्य मन्त्रस्य । हिरण्यगर्भ ऋषिः । अनुष्टुप्छन्दः । श्रीमहाकाली महालक्ष्मी महासरस्वत्यो देवताः । श्रीं बीजं । ह्रीं शक्तिः । क्लीं कीलकं ।

मम सर्वक्लेशपीडापरिहारार्थं, सर्वदुःखदारिद्र्यनाशनार्थं, सर्वकार्यसिध्यै श्रीसिद्धलक्ष्मीमन्त्रजपे विनियोगः ।। संख्याक्रमेण न्यासः ।। ध्यानम् ।

ब्राह्मीं च वैष्णवीं भद्रां षड्भुजां च चतुर्मुखीं ।
त्रिनेत्रां खड्गशूलाब्जपद्म चक्र गदाधराम् ।।
पीतांबर धरां देवीं नानालंकार भूषितां ।
तेजः पुंजधरां श्रेष्टां ध्यायेद्बालकुमारिकाम् ।।

पुरश्चरणं एकलक्षजपः । जपादौ जपांते च स्तोत्र पठेत् ।।

अस्य सिद्धलक्ष्मीस्तोत्रस्य, ऋषि, छन्दस् देवता पूर्ववत् ।। न्यासः ।।

ॐ श्रीं सिद्धलक्ष्म्यै, अंगुष्ठा । ॐ ह्रीं विष्णुतेजसे तर्जनी । ॐ क्लीं अमृतानन्दाः मध्यमा । ॐ श्रीं दैत्यमालिन्यै अनामिका । ॐ ह्रीं तेजप्राकाशिन्यै कनिष्ठिका ।

ॐ क्लीं ब्राह्म्यै, वैष्णव्यै, रुद्राण्यै करतल । एव हृदयादि । मूलेन दिग्बंधन ।। ध्यान पूर्ववत् ।।

ओंकारं लक्ष्मीरूपंतु विष्णुं हृदयमव्ययं ।
विष्णुमानन्दमव्यक्तं ह्रींकारं बीजरूपिणीम् ॥
क्लीं अमृतानंदितीं भद्रां सदात्यानन्ददायिनीं ।
श्रीदैत्यशमनीं शक्ति मालिनीं शत्रुमर्दिनीम् ॥
तेजःप्रकाशिनीं देवीं वरदां शुभकारिणीं ।
ब्रह्मीं च वैष्णवीं रौद्रीं कालिकारूपशोभिनीम् ॥

## पद्मावती

मन्त्रोद्धारं ।

तारं परा रमाकामा वीची पद्मावतीति च ।
मम वरं देहि युग्मं हरं नीरमय मनुः ॥
ॐ ह्रीं श्रीं क्लीं ब्लूं पद्मावति मम वरं देहि २ फट् स्वाहा ।

उत्कीलनं

वीचि बीजं जपेदादौ ठद्वयांते च तारकम् ।
पद्मावती मनोर्देवि मन्त्रोऽस्त्युत्कीलनाभिधः ॥

संजीवनं

पद्मावती मनोरेष स्मृतः संजीवनो मनुः ।
वागुरां पंकजांतेच प्रणवादौ परां जपेत् ॥

शापमोचनं

तारं मायां च पद्म च पद्मावति हरेस्तथा ।
शाप मुंच युग नीरं विद्येय शापहारिणी ॥

यन्त्रं

बिंदुस्त्रिकोण वसुकोण सवृत्तनाग पत्रादि षोडशदलानलवर्तुलं च ।
भूमंदिरत्रयभिदं सकलार्थदं स्यात् पद्मावतीप्रियतरं जयचक्रमेतत् ॥

संपुटमन्त्रः

कामराजं जपेदादौ वनांते सकलां जपेत् ।
पद्मावती मनोरेष मन्त्रः स्यात्संपुटाभिधः ॥

## सिद्धलक्ष्मीस्तोत्रं

अकारे लक्ष्मीरूपं तु उकारे विष्णुमव्ययं ।
मकारः पुरुषोऽव्यक्तो देवी प्रणव उच्यते ॥
सूर्यकोटि प्रतीकाशं चन्द्रकोटि समप्रभम् ।
तन्मध्ये निकरं सूक्ष्म ब्रह्मरूप व्यवस्थितम् ।
ओंकारं परमानन्दं सदैव सुखसुन्दरीम् ।
सिद्धलक्ष्मि मोक्षलक्ष्मी आद्यलक्ष्मि नमोस्तु ते ॥
सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यंबिकेगौरि नारायणि नमोस्तु ते ॥
प्रथमं त्र्यंबिकी गौरी द्वितीयं वैष्णवी तथा ।
तृतीयं कमला प्रोक्ता चतुर्थं सुन्दरी तथा ॥
पञ्चमं विष्णुशक्तिश्च षष्टं कात्यायनी तथा ।
वारहीसप्तमं चैव ह्यष्टमं हरिवल्लभा ॥
नवमं खड्गिनी प्रोक्ता दशमंचैव देविका ।
एकादशं सिद्धलक्ष्मी द्वादशं हंसवाहिनी ॥
एतत्स्तोत्रवरं देव्या ये पठंति सदा नरः ।
सर्वापद्भ्यो विमुच्यन्ते नात्र कार्या विचारणा ॥
एकमासं द्विमासंच त्रिमासं माश्चतुष्टयं ।
पञ्चमासं च षण्मासं त्रिकालं यः सदा पठेत् ॥
ब्राह्मणः क्लेशितो दुःखी दारिद्र्य भयपीडितः ।
जन्मांतरसहस्रो त्थैर्मुच्यते सर्वकिल्बिषैः ॥
दरिद्रो लभते लक्ष्मीमपुत्रः पुत्रवान्भवेत् ।
धन्यो यशस्वी शत्रुघ्नो वह्निचौरभयेषु च ॥
शाकिनीभूतवेतालसर्पव्याघ्रनिपातने ।
राजद्वारे सभास्थाने कारागृहनिबन्धने ॥
ईश्वरेण कृत स्तोत्रं प्राणिनां हितकारकं ।
स्तवन्तु ब्रह्मणा नित्यं दारिद्र्यं न च बाधते ॥
सर्वपापहरा देवि सर्वसिद्धप्रदायिनी ॥

इति श्री ब्रह्म पुराणे ईश्वर विष्णु संवादे श्री सिद्धलक्ष्मीस्तोत्र विधानम् ॥

## ज्येष्ठालक्ष्मी मन्त्रः ॥

१ ऐं ह्रीं श्रीं, २ ज्येष्ठालक्ष्मि ३ स्वयंभुवे ४ ह्रीं ५ ज्येष्ठायै ६ नमः॥ धनवृद्धिकर सप्तदशाक्षरमंः ।

ब्रह्मा ऋषिः । अष्टिश्छन्दः । ज्येष्ठालक्ष्मीर्देवता । ह्रीं बीजं । श्रीं शक्तिः ।

संख्याक्रमेण न्यासः तता मन्त्र वर्ण न्यासः । ॐ ऐं नमः शिरसि । ह्रीं नमः भ्रूमध्ये श्रीं नमः मुखे । ज्येष्ठालक्ष्म्यै नमः हृदि । स्वयंभुवेनमः नाभौ । ह्रीं नमः आधारे । ज्येष्ठायैनमः जानुनि । नमो नमः पादयोः । ध्यानम् ।

उद्यद्भास्करसन्निभा स्मितमुखी रक्तांबरालेपना
सत्कुंभं धनभाजनं सृणिमथो पाशं करैर्बिभ्रती ।
पद्मस्था कमलेक्षणा दृढकुजा सौंदर्यवारां निधि
ध्यातव्यासकलाभिलाषफलदा श्रीज्येष्ठलक्ष्मीरियम् ॥

पुरश्चरण लक्षजपः । आज्याक्त मिश्रितपायसेन दशांश होमादिभिः ।

## वसुधालक्ष्मीमन्त्रः ॥ अष्टाविंशत्यक्षरमन्त्रः ।

ॐ ग्लौं श्रीं अन्नं मह्यन्नं मे देह्यन्नाधिपतये ममान्नं प्रदापय स्वाहा श्रीं ग्लौं ॐ ॥

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । निन्चृद्गायत्री छन्दः । वसुधाश्री देवता ।

ग्लौं बीजं । श्रीं शक्तिः ।

ॐ अन्नं महि ग्लां श्रीं अंगुष्टा । ॐ अन्नं मे देहि ग्लीं श्रीं तर्जनी ।

ॐ अन्नाधिपतये ग्लूं श्रीं माध्यमा । ॐ ममान्नं प्रदापय ग्लैं श्रीं अनामिका ।

ॐ स्वाह ग्लौं श्रीं कनिष्टिका । एवं हृदयादि, करतल, नेत्रं, विना ॥

स्वर्णदीपे देवीं ध्यायेत् ।

ॐ कल्पद्रुमाधो मणिवेदिकायां समास्थिते वस्त्रविभूषणाढ्ये ।
भूमिश्रियौ वांछितदानदक्षे संचिन्तयेद्देवमुनीन्द्रवंद्ये ॥

अस्य पुरश्चरणं लक्षजपः । धृतान्नेन दशांशहोमः ॥

## रुद्रमन्त्रः त्रिंशदक्षरोमन्त्रः

१. नमो भगवते रुद्राय श्मशानवासिने चण्डयोगिने स्वाहा ।

करंज वृक्षमारुह्य जपेदष्टसहस्रकं ।
तप्तं चांगं धृताक्तैश्च दशांशं होमचरेत् ।
तप्त चांगं कल्केन आपादांतं विलेपयेत् ।
जपांते पूर्वत्स्वप्ने कथयेत्साशुभाशुभं ॥

२. ॐ नमो भगवते रुद्राय कर्णपिशाचाय स्वाहा । अष्टादशाक्षरो मन्त्रः ।

अलाबु मूलिकां पुष्ये तथा सार्पाक्षिमूलिकां ।
संग्राह्य मंत्रितां यत्नाद्रक्तसूत्रेण वेष्टयेत् ।
मन्त्रण मूर्घ्नि बघ्नीया द्वदत्येव शुभाशुभम् ॥

३. ॐ भगवन् देवदेवेश शूल भृद्गृषवाहन । इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वते ॥

ॐ नमोऽजाय त्रिनेत्राय पिंगलाय महात्मने । वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥

स्वप्ने कथम मे तथ्यं सर्वकार्यष्वशेषतः । क्रियासिद्धि विधास्यामित्व त्प्रसादान्महेश्वर ।

स्नानादिक कृत्वा हरिपादांबुजं स्मृत्वा कुशासनादि शय्यायां यथासुखं स्थित्वा, मन्त्रेण अष्टोत्तर-शतवारं शिवं संप्रार्थ्य निद्रां कुर्यात् ॥

ततः स्वप्नं दृष्टं निशि प्रातर्गुरवे विनिवेदयेत् । अथवा स्वयमेव विचारयेत् ॥

## सरस्वतीमन्त्राः

१. ॐ नमः पद्मासने शब्दरूपे ऐं ह्रीं क्लीं वदवद वाग्वादिनि स्वाहा (वागीश्वरी मन्त्रः)

२. क्लीं वदवद चित्रेश्वरि ऐं स्वाहा (चित्रेश्वरी)

३. सें कुलजे ऐं सरस्वति स्वाहा (कुलजा)

४. ऐं ह्रीं श्रीं वद वद कीर्तीश्वरि स्वाहा (कीर्तीश्वरी)

५. ऐं ह्रीं अन्तरिक्ष सरस्वति स्वाहा (अन्तरिक्ष)

६. व्लूं वें वद वद त्रिं त्रीं हुं फट् (नीला)

७. ऐं हैं किणि किणि विच्चे (किणी)

८. ह्स्ख्फ्रें ह्सौं ह्स्फ्रीं ऐं ह्रीं ह्रीं द्रां ह्रौं क्लीं ब्लूं सः घटसरस्वति-
घटे वद वद तर तर रुद्राक्षया ममाभिलाषं कुरुकुरु स्वाहा। (घट सरस्वती)

इत्यष्टौ मन्त्रान् स्वप्नार्थं जपेत् ॥ ततः स्वप्न दत्वा कार्यं कथयति ॥

## कर्णपिशाचिनी मन्त्राः ॥

१. ॐ नमः कर्णपिशाचिनि मत्तकरिणि प्रवेशे अतीतानागतवर्तमानानि सत्यं कथय मे स्वाहा ॥ (षट्त्रिंशदक्षरोमन्त्रः)

२. ॐ ह्रीं सः नमो भगवति कर्णपिशाचिनि चंडवेगिनिवद वद स्वाहा।

३. ॐ क्रों स नामशक्ति भगवति कर्णपिशाचिनि चण्डरोषिणि वद वद स्वाहा।

४. ॐ हंसौ हंसः नमो भगवति कर्णपिशाचिनि चण्डयोगिनि स्वाहा।

५. ॐ भगवति चण्डकर्णपिशाचिनि स्वाहा।

६. ॐ ह्रीं चीं चिंचिनि पिशाचिनि स्वाहा ॥

प्रयोगः ॥ एतान् मन्त्रान्, पूर्वाभिमुखेन. अयुतं जपेत्। होमं १०८ धृतावर्ते रक्तकुष्टैः। पुनः होमांते पुनः अयुतं। सर्वं रात्रौ कुर्यात् ॥

षष्टमन्त्रस्य प्रयोगं। पूर्वसेवायुतं जप्त्वा होमं कुर्यात् प्रयत्नतः।

सिद्धे मन्त्री प्रकुर्वीत प्रयोगानिष्टसिद्धये ॥ रोचनाकुंकुमक्षीरैः पद्ममष्टदलं लिखेत्। विरजस्के भूर्जपत्रे मायाबीजं दले दले। लिखित्वा धारयेन्मूर्घ्नि इमं मन्त्रायुतं जपेत्। अतीतानागतं सर्वं स्वप्ने वदति देवता ॥

## चामुण्डा मन्त्रः

ॐ ह्रीं आगच्छागच्छ चामुण्डे श्रीं स्वाहा ॥

मृद्गोमयेन लेपित भूमौ कुशासनोपरि पूर्वाभिमुखेन उपविश्य, देवीं कोटिसूर्यमधीं, मनसा ध्यात्वा, पंचोपचारैः संपूज्य, अक्षमालया अयुतं, ततः अर्द्धरात्रिपर्यंतं करतलेन जपं कुर्यात्।

अर्द्धरात्रे गते देवीं वार्ता वक्ति शुभाशुभाम् ॥

## पृथ्वी मन्त्रः

१ ॐ नमो, २ भगवत्यै ३ धरण्यै ४ धरणीधरे ५ धरे ६ स्वाहा । एकोनविंशत्यक्षरः ॥

अस्य मन्त्रस्य । वराह ऋषिः । निवृच्छन्दः । वसुधा देवता । सख्याक्रमेण न्यासः । ध्यानम् ।

**श्यामां विचित्रांशुकरत्नभूषणां पद्मासनां तुंगपयोधरानताम् ।**
**इन्दीवरे द्वे नवशालिमंजरीं शुके दधानां वसुधां भजामहे ॥**

पुरश्चरणं लक्षजपः । सर्पिषा पायसेन दशांशतो होमः ॥

## गंगामन्त्रः विंशत्यक्षरः

१ ॐ नमः, २ शिवायै ४ नारायण्यै ४ दशहरायै ५ गंगायै ६ स्वाहा ।

अस्य मन्त्रस्य । वेदव्यास ऋषिः । कृतिश्छन्दः । गगा देवता ।

संख्याक्रमेण न्यासं । ध्यानम् ।

उत्फुल्लामलपुण्डरीकरुचिरा कृष्णेशविध्यात्मिका,
कुंभष्टाभयतोयजानि दधती श्वेतांबरालंकृता ।
हृष्टास्या शशिशेखराखिलनदीशोणादिभिः सेविता,
ध्येया पापविनाशिनी मकरगा भागीरथी साधकैः ॥

पुरश्चरणं लक्षजपः । तिलाज्येन दशांशतो होमः ।

१ अन्यमन्त्राः ॥ १ ॐ नमो, २ भगवति, ३ ऐंहि लिहिलिमिलिमिलि, ४ गंगे मां पावय पावय, ५ स्वाहा ।

२. १ ऐं हिलि २, २ मिलि २, ३ गंगे मां, ४ पावय २, ५ स्वाहा ।

३. १ ॐ २हिलि २, ३ मिलि २, ४ गंगे ५ देवि ६ नमः ।

४. १ ॐ ह्रीं श्रीं, २ नमो ३ भगवति, ४ गंगे दयिते, ५ नमो, हुं फट् ।

एषां चतुर्णां मन्त्राणां संख्याक्रमेण न्यासं । ऋषि, ध्यानपूजादिकं सर्वं पूर्ववत् ॥

## मणिकर्णिकामन्त्रः चतुर्दशाक्षरोः

१ ॐ २ ऐं ह्रीं, ३ श्रीं क्लीं, ४ ॐ मणि ५ कर्णिके ६ नमः ॐ ।

अस्य मन्त्रस्य । वेदव्यास ऋषिः । शक्करीछन्दः । श्रीमणिकर्णिकादेवता ।

संख्याक्रमेण न्यासः । ध्यानम् ।

फुल्लेन्दीवरनिर्मितां करतले मालामसव्ये करे
बीजापूरफलं सितांबुजमयीं मालां दधाना हृदि ।
श्वेतक्षौमवृता शरद्विधुनिभा त्र्यक्षा निबद्धांजलि
ध्यातव्या मणिकर्णिका रविसमा तोयेशकाष्ठामुखी ॥

पुरश्चरणं त्रिलक्षजपः । पुण्डरीकैस्त्रिमध्वक्तै यजेत्तां गंगया समाम् ॥

## शीतलामन्त्रः । नवाक्षरोमन्त्रः ॥

ॐ ह्रीं श्रीं शीतलायै नमः

अस्य मन्त्रस्य । उपमन्यु ऋषिः बृहती छन्दः । शीतलादेवता ।

ॐ ह्रीं श्रीं इत्यक्षरत्रयेण न्यास कुर्यात् ।। ॐ ह्रां श्रीं अगुष्टा । इत्येवं ॥ ध्यानम् ।

ॐ दिग्वाससं मार्जनिकां च शूर्पं करद्वये संदधतीं घनाभाम् ।
श्रीशीतलां सर्वरुजार्तिहर्त्रीं रक्तांगरागस्रजमर्चयामि ॥

पुरश्चरणं अयुतजपः । पायसान्नेन दशांशतो होमः ॥

## शत्रुशापनिवृत्तिपूर्वक सन्तानप्रददुर्गा मन्त्रः ॥

मनुः ॥ ॐ श्रीं ह्रीं क्लीं दुर्गायै नमः स्वाहा । कात्यायनाय...दुर्गिः प्रचोदयात् ॥

शत्रु शाप परिहारार्थं दुर्गादेवीं प्रपूजयेत् । तस्या देव्याःप्रसादेन आयुष्मंतं सुतं लभेत्

दुर्गासूक्तेन मन्त्रेण ध्यानादि च यथाक्रमं । षोडशैरुपचारैश्च प्रतिसूक्तं पुनः पुनः ॥

संपूज्यांते मूल मन्त्रं जपेत्पुत्रार्थमेव च ।

अस्य मन्त्रस्य हयग्रीव ऋषिः । अनुष्टुप्छन्दः श्री दुर्गा देवता । क्लां बीजं । क्लीं शक्तिः । क्लूं कीलकं । क्लां इत्यादि न्यासः । ध्यानम् ।

मातस्त्वं तु त्रिमूर्तीनां पदगा परमेश्वरि ।
महिषध्वसिनि दुर्गे मम पाषं व्यपोहय ॥
शत्रुशाप निवार्य त्वं जन्मांतरकृतं ह्यघं ।
दीर्घायुष्यं पुत्रस्य मे देहि दुर्गे प्रसीदतु ॥

इति ध्यात्वा मूलमन्त्रं जपेत्संख्या पुरस्सरं । गायत्री सहितं मन्त्रं दुर्गादेव्यास्तु यत्नतः ।

जपेत्षोडशसाहस्रं, तर्पणं होममेव च । भोजनं ब्राह्मणानां च दशांशक्रमतो यजेत् ।

यन्त्रदानं ।। दुर्गायन्त्रं ब्राह्मणाय दद्याच्चेदनघे प्रिये ।

दीर्घायुषं सुतं लब्ध्वा मोदते भुवि मानवः ।।

## बलाऽतिबलामन्त्राः

ॐ ह्रीं बले महादेवि ह्रीं महाबले क्लीं चतुर्विधपुरुषार्थ सिद्धि प्रदे तत्सवितुर्वरदात्मिके ह्रीं वरेण्यं भर्गोदेवस्य वरदात्मिके अतिबले सर्वदयामूर्ते बले सर्वक्षुद्भ्रमोपनाशिनि धीमहि धियोयोनजाते प्रत्युर्याः यो प्रचोदयात्मिके प्रणवशिरस्कारात्मिके हुं फट् स्वाहा ।।

अस्य मन्त्रस्य । विराट्पुरुष ऋषिः । गायत्रीछन्दः । गायत्री बलातिबला देवता । अ बीजं । उं शक्तिः । म कीलक । क्षुद्रादि निरसने विनियोगः ।

क्लां क्लीं इत्यादि न्यासः । ध्यानम् ।

**अमृतकरतलार्द्रौ सर्वसंजीवनाढ्यौ**
**अघहरणसुदक्षौ वेदसारे मयूखे ।**
**प्रणवमयविकारौ भास्कराकारदेहौ,**
**सततमनुभवे हं तौ बलातिबलेशौ ।।**

## एकाक्षर कामराज मन्त्रः

अस्य मन्त्रस्य । सुदर्शन ऋषिः । विराट्छन्दः । श्रीकामेश्वरो देवता ।

क बीजं । ल शक्तिः । ई कीलकं ।...जपे विनियोगः ।

कं, लं, ईं, ईं लं, कं, इति न्यासः । ध्यानम् ।

**ध्याये हं कामिनीं कामरूपिणीं सर्वसंस्थितां**
**धर्माधर्मानुसारेण कामितार्थं फल प्रदां ।।**

क्लीं ।।

## एकाक्षर माया मन्त्रः

अस्य मन्त्रस्य । वेदव्यास ऋषिः । विराट् छन्दः । श्रीपरदेवता ।

हं बीजं । रं शक्तिः । ई कीलकं । हं, रं, ईं, ईं, र, हां इति न्यासः । ध्यानम् ।

रागद्वेषाद्यधर्माणां नाशयायुध धारिणीं ।
दयासत्याद्यलंकार धारिणीं देवतां भजे ॥

ह्रीं ॥

## एकाक्षर परा बीज मन्त्रः

अस्य मन्त्रस्य । वसिष्ठ ऋषिः । विराट् छन्दः । श्रीपराशक्तिर्देवता ।

उं शक्तिः सं बीजं । शक्तिः । विसर्गः कीलकं । सां, ऊं सी, ऊ...ऊं सः इति न्यासः । ध्यानम ।

ध्याये शक्ति परांदेवीं सर्ववस्तु नियामिकां ।
अंतर्यामि स्वरूपां तां सर्वबुद्धि प्रवर्तनीं ॥

सौः ॥

## एकाक्षर वाग्देवता मन्त्रः

अस्य मन्त्रस्य सत्यव्रत ऋषिः । विराट् छन्दः । श्रीसरस्वती देवता

अं बीजं । इं शक्तिः । बिन्दुः कीलकं । ओं अं, ओं इ, ओं आं, ओं अं अं इं आं इति त्रिरावृत्या न्यासः । ध्यानम् ।

ध्यायेन्द्वां परमां शक्ति यथा सर्वमिदं ततं ।
सगुणां निर्गुणां चैव कार्यभेदे सदैव हि ॥ श्रीवाग्देवतायै नम

मनुः ऐं

## लोपामुद्रा मन्त्रः

अस्य मन्त्रस्य । दक्षिणामूर्ति ऋषिः । अनुष्टुप्छन्दः । श्रीलोपामुद्रांबा देवता । हसकल ह्रीं बीजं । हसकहल ह्रीं शक्तिः । सकलह्रीं कीलकं । कूटत्रय, द्विवारेण न्यासः ॥

बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनां ।
पाशांकुशधनुर्बाणान् धारयन्तीं शिवां भजे ॥

मनुः हसकलह्रीं हसकहलह्रीं सकलह्रीं ॥

## कामकला मन्त्रः

अस्य मन्त्रस्य । मन्मथ ऋषिः । जगती छन्दः । श्रीकामकलांबा देवता । ई बीजं । ई शक्तिः । ईं कीलकं । आं इत्यादि न्यासः ।

पंकज प शेक्षु धनुःकिंशुक शाल्यग्रष्पु शाणधराम्
सतता भयवरहस्तां कलये कामकलाधरीमंबाम् ॥

मनुः । हसकलह्रीं हसकहलह्रीं सकलह्रीं कलह्रीं लह्रीं ह्रीं ई ॥

## मालिनी मन्त्रः

अस्य मन्त्रस्य । ब्रह्मा ऋषिः । गायत्रीं छन्दः । श्रीमालिन्यंबा देवता । हलो बीजानि । स्वरा शक्तयः । बिंदवः कीलकं ।

अं क खं गं घं ङं आं । इं च छं ज झं ञं ईं । उं ट ठं ड ढं ण ऊं । एं तं थ दं धं नं ऐं । ओं प फ मं औं । अं यं रं लं वं शं षं स ह ळं क्षं शं अः । इति न्यासः । ध्यानम् ।

पंचाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो
देशां भास्वत्कपार्दां कलितशशिकला मिंदुकुंदावदाताम् ।
अक्षस्रक्कुंभचितालिखितवरकरां त्रीक्षणां पद्मसंस्थां
अक्षाकल्पामतुच्छ स्तनजघनपरां भारतीं तां नमामि ॥

मनुः । ओं अं आं इं ईं...ळं क्षं ॥

## स्वप्नवाराही मन्त्रः ॥

१ ॐ ह्रीं, २ नमो वाराही, ३ घोरे ४ स्वप्न, ५ ठः ठः, ६ स्वाहा । पंचदशाक्षरी

अस्य मन्त्रस्य । ईश्वर ऋषिः । जगती छन्दः । स्वप्नवाराही देवता ।

ॐ बीजं । ह्रीं शक्तिः ठः ठः कीलकं । मम भीष्ट स्वप्न कथानार्थे जपे विनियोगः । संख्याक्रमेण न्यासः । ध्यानम् ।

**ॐ मेघश्यामरुचिं मनोहरकुचां नेत्रत्रयोद्भासितां ।**
**लोकास्यां शशिशेखरा मचलया दंष्ट्रातले शोभितां ।**
**बिभ्राणां स्वकरांबुज रसिलतां चार्मासिपाशंसृणिं**
**वाराही मनुचिंतयेद् मयवरा रूढां शुभालंकृतिम् ॥**

पुरश्चरणं । लक्षजपः । तिलमिश्रित नीलपद्मेन दशांशहोमं, तत्तद्दशांशं तर्पणमार्जनब्राह्मण भोजनानि कुर्यात् ॥

## स्वप्नेश्वरी मन्त्रः

१ ॐ श्रीं, २ स्वप्नेश्वरि, ३ कार्यं, ४ मे ५ वद ६ स्वाहा ॥ (त्रयोदशाक्षरी)

अस्य मन्त्रस्य । उपमन्युऋषिः । बृहती छन्दः । स्वप्नेश्वरी देवता ।

संख्याक्रमेण न्यासः । ध्यानम् ।

**वराभये पद्मयुगं दधानां करैश्चतुर्भिः कनकासनस्थां**
**सितांबरां शारदचन्द्रकांतिं स्वप्नेश्वरीं नौमि विभूषणाढ्याम् ॥**

पुरश्चरणं लक्षं, बिल्व पत्रैर्होमः दशांशं ॥

## स्वप्नमातंगि मन्त्रः । चतुर्विंशत्यक्षरो मन्त्रः ॥

ॐ नमः स्वप्नमातंगिनि सत्यभाषिणि स्वप्नं दर्शय दर्शय स्वाहा ।

**प्रति दिनं निर्जल व्रतेनसह रात्रिसमये अष्टोत्तरशतवारं जपेत् ।**
**एवं मंडलमेकं जप्तश्चेत् रात्रौ स्वप्ने मुख्यकार्याणि वदति ॥**

## मणिभद्र मन्त्रः त्रयस्त्रिंशदक्षरोमन्त्रः

ॐ मणिभद्राय चेटकाय सर्वकार्यसिद्धये मम स्वप्नदर्शनानि कुरुकुरु स्वाहा ॥

रात्रौ तैलदीपाग्रे उपविश्य दीपं मूलमन्त्रेण १०८ अर्चनं, स्वादु भक्षण फलानि निवेदनं। १०८ जपं। एव प्रतिदिनं कृतश्चेत्, देवता स्वप्ने सर्व वदति ॥

## चण्डयोगिनी मंत्रः अष्टादशाक्षरोमंत्रः

ह्रां थ्रीं सः नमः श्मशानवासिनि चण्डयोगिनि स्वाहा ॥

रात्रौ अयुतं जप्त्वा, दशांशहोमं, घृताक्तै रक्तपुष्पेण, पुनः अयुतं जपेत्।

## यक्षिणी मन्त्रः षोडशाक्षरः

ॐ ह्रीं श्रीं वाली ल, बाहुली क्षां क्षीं क्षं क्षें क्षः स्वाहा।

पूर्वमुखो अयुतं जपेत्। एकमुक्तव्रतं कुर्यात्। जपांते कुशशय्यायां सुप्तः तदा शुभाशुभं स्वप्ने पश्येत्।

## घण्टाकर्णी मन्त्रः त्रिंशदक्षरोमंत्रः

ॐ यक्षिणि आकर्षणि घंटाकर्णे घंटाकर्णे विशाले मम स्वप्नं दर्शय दर्शय स्वाहा ॥

रात्रौ सहस्रं जपेत्। एकादशदिनांतरे स्वप्ने वदति न संदेहः ॥

## कुब्जिका।

मन्त्रोद्धारं।

तारं रमा व गुरार्णं नाम मध्ये ततः परा।
पदगा वन्मय मंत्रः सर्वसिद्धिफलप्रद ॥
वागुरार्णन देवेशि पूजयेत् परिवारगाः ॥
ओं ह्रीं श्रीं प्रीं कुब्जिकेदेवि ह्रीं ठः स्वाहा ॥

उत्कीलनं

वागुरां संजपेदादौ वनांते सकलां जपेत्।
कुब्जिकामत्रराजस्य मत्रोऽयं कीलदोषहृत् ॥

संजीवनं

कुब्जिकामूलमंत्रस्य मंत्रोयं जीवनाभिधः
वाह्नीकं प्रणवादौ च मूलान्तेपि शिवं जपेत् ।।

शापमोचनं

तारं मायां कुब्जिकेच जह्नुशाप विमोचय ।
नीरमते वहादेवि विधेयं शापहारिणी ।।

यन्त्रं

बिंदुस्त्रिकोणं रसकोणयुक्तं वृत्तं ततो नागदलार वृत्तं ।
धरागृहं सर्वरहस्यगर्भं श्रीकुब्जिकायंत्रमिदं मयोक्तम् ।।

संपुटमन्त्रः

वागुरं प्रणवादौ च वनांते पंकजं जपेत् ।
कुब्जिकामूलमंत्रस्य मत्रोयं संपुटाभिधः ।।

## ।। यक्षिणी साधन प्रयोगः ।।

ईश्वर उवाच ।। वसंते साधयेद्धीमान् हविष्याशी जितेंद्रियः ।
सदा ध्यान परो भूत्वा तद्दर्शन महोत्सवः ।।

उटजे प्रांतरेवापि कामरूपे विशेषतः ।
स्थनेष्वेकतमं प्राप्य साधयेत्सुसमाहितः ।।
अनेन विधिना साक्षाद्भवत्येव न संशयः ।
देव्यास्तु सेवकाः सर्वे परं चात्राधिकारिणः ।।
तारक ब्रह्मणो नित्यं विना ह्यत्राधिकारिणः ।
अग्निहोत्री विशेषेण साधयेद्यक्षिणीः शुभाः ।।
सर्वासां यक्षिणीनां तु ध्यानं कुर्यात्समाहितः ।
भगिनी मातृ पुत्री स्त्री रूपतुल्या यथेप्सिता ।।
तत्रादौ षट्त्रिंशद्यक्षिणी नामानि किं कर्णीतन्त्रे ।।

अथातः सम्प्रवक्ष्यामि यक्षिणीनां सुसाधनं ।
यस्मिन् सिद्धे मनुष्याणां सर्वे सिध्यन्तिहृद्गताः ।
षट्त्रिंशद्यक्षिणीनां तु नामानि प्रवदाम्यथा ।।
विचित्रा विभ्रमा हंसी भिक्षिणीजनरंजिका ।
विशालामदना घण्टाकालकर्णी महाभया ।।

माहेंद्री शखिनी चांद्री श्मशानी वटयक्षिणी ।
मेखला विकला लक्ष्मीः कामिनी शतपत्रिका ॥
सुलोचना सुशोभाढ्या कपाली च विलासिनी ।
नटी कामेश्वरी चैव स्वर्णरेखा सु सुन्दरी ॥
मनोहरा प्रमोदा तु रागिणी नखकेशिका ।
नेमिनी पद्मिनी सुवर्णवतीदेवी रतिप्रिया ॥
इमाः षट् त्रिंशदाख्याता यक्षिण्यश्च सुसिद्धिदाः ॥

## सर्वयक्षिणीनां साधनें मुद्रादयः

षट्त्रिंशद्यक्षिणी साधने सूचनामाह । यदि षट्त्रिंशद्यक्षिणी समयेन तिष्ठति तदा क्रोधमन्त्र पठित्वा, क्रोधमुद्रयाऽऽकर्षयेत् । तदा शीघ्रमागच्छति । यदि नागच्छति अक्षिण मूर्ध्नि वा स्फुटति, तत्क्षणान्म्रियते महानरके पतति ॥ क्रोध मन्त्रः ॥ ॐ जूं कट्ट कट्ट अमुकयक्षिणि ह्रीं यः यः हुं फट् ॥ सहस्रं जपेत् ॥

क्रोधमुद्रां मुष्टिं कृत्वा कनिष्ठाद्वयं वेष्टयेत् । तर्जनीं प्रसार्याकुंचयेत् ।

एषा प्रतिहत क्रोधमुद्रांकुशमुद्रया क्षणेन त्रैलोक्यमप्याकर्षयेत् ॥

परममुद्रा ॥ समकरतलपाणि कृत्वा मध्यमांगुल्यौ विपरीते अनामिकानिर्गते बाह्यतः संस्थाप्य, तर्जन्याभिनिविष्ट कनिष्टागर्भ संस्थिता-परममुद्रा ॥

अनया बद्धमात्रया सर्वयक्षिण्यः आगच्छन्ति ।

आवाहनं । अस्या एव मुद्राया वामांगुष्टेन आवाहनं ।
तत्रमन्त्रः ॐ ह्रीं आगच्छ अमुकयक्षिणि स्वाहा ।

विसर्जनं । अस्याएव मुद्राया वामांगुष्टं विसर्जयेत् ।
मन्त्रः । ॐ ह्रीं गच्छ अमुकयक्षिणि शीघ्रं पुनरागमनाय स्वाहा ।

अभिमुखीकरणं । मुष्टितर्जनीं मध्यमांगुलिं प्रसारयेत् ।
तत्रमन्त्रः । ॐ महा यक्षिणि मैथुनप्रिये स्वाहा ॥

स्थानिद्धयकरणं । मुष्टिं कृत्वा प्रसार्याकुंचयेत् ।
तत्र मन्त्रः । ॐ कामेश्वरि स्वाहा ॥

हृदयमुद्रा हस्तं घटाकारेण संस्थापय्येत ॥ मन्त्रः ॥ ह्रीं ॥

गंध पुष्प धूपदीप मुद्राः ॥ मुष्टिं कृत्वा तर्जनीं मध्यमां प्रसारयेत् ॥
तत्रमन्त्रः ॐ सर्वमनोहारिणि स्वाहा । इति ज्ञात्वा यक्षिणीं साधयेत् ॥

**विचित्रा साधन** ॥ मन्त्रः । ॐ विचित्रे चित्ररूपिणि सिद्धिं कुरुकुरु स्वाहा ॥
अन्यः ॐ विचित्ररूपे सिद्धिं कुरुकुरु स्वाहा ।
पुरश्चरण लक्षजपं । वटवृक्षतले स्थानं । बन्धूककुसुमैः मध्वाज्यक्षीरमिश्रितैः । दशांशं-
यःनिकुंडेतु हुत्वा देवी प्रसीदति । इष्टं प्रयच्छति ॥

**विभ्रमा साधनं** ॥ ॐ ह्रीं विभ्रमरूपे विभ्रमं कुरुकुरु एह्येहि भगवति स्वाहा ॥
जपेल्लक्षद्वयं मन्त्री श्मशाने निर्भयो मनुं । दशांशं आज्येच होमं ॥
पञ्चाशन्मानुषाणां च दत्तेः सा भोजनं सदा ॥
अन्यविधानं । घृतावत गुग्गुलैर्होमे दशांशेन कृते सति । विभ्रमा तोषमायाति पंचाशन्मा-
नुषाधैस्सह । ददाति भोजनं दिव्यं प्रत्यहं शंकरोब्रवीत् ॥

**हंसी साधनं** ॥ ॐ हंसी हंसः ॐ नें ह्रों स्वाहा । ह्रां ह्रीं)
प्रवेशे नगगः स्थास्तुः लक्षसंख्यं जपेच्छुचिः । पद्मपत्रघृतोपेतमन्ते होमं दशांशतः ।
प्रयच्छत्यंजनं हंसी येन पश्यति भूनिधि । शुद्धश्चेत्तं च गृह्णाति न विघ्नैं परिभूयते ।

**भिक्षिणी साधनं** ॥ ॐ ऐं महानादे भिक्षिणि ह्रां ह्रीं स्वाहा ॥
त्रिपथस्थो जपेन्मन्त्रं लक्षसंख्यं दशांशतः । घृताक्त गुग्गुलैर्होमो भिक्षिणी चिंतितप्रदा ॥
अन्यमन्त्रः । ऐं महामदे भीषणे ह्रां ह्रूं स्वाहा ॥

**जनरंजिनी साधनं** ॥ ॐ क्लें जनरंजिनी स्वाहा ॥
कदंबाधो जपेन्मन्त्रं लक्षद्वयं च साधकः । (१) घृताक्तागुग्गुलै होमः देवी सर्वार्थदा
भवेत् ॥ (घृतमधुशर्करा गुग्गुलैः)

**विशाला साधनं** ॥ ॐ ऐं विशाले ह्रीं श्रीं क्लीं स्वाहा ॥
अपरमन्त्रः ॐ ऐं विशाले ह्रां ह्रीं क्लीं स्वाहा ॥
चिंचाधरो स्थित्वा शुचिर्लक्षं जपेन्मनुं । शतपत्रैर्दशांशेन जुहुयात्तोषिता ततः ॥ रसं ददाति
येनासौ निरोगा युष्ट्रमाप्नुयात् ॥
अन्यमन्त्रः । ॐ ह्रीं विशाले ह्रां ह्रूं क्लीं एह्येहि स्वाहा ॥

मदना साधन ॥ ॐ मदने मदने देवि ममालिंगय संगं देहि देहि श्रीं स्वाहा ॥
लक्षसंख्यं जपेन्मन्त्रं राजद्वारे शुचिस्मृता । सक्षीर मालतीपुष्पैः कृते होमे दशांशतः ।
मदनायक्षिणी सिद्धा गुटिकांतं प्रयच्छति । तथा सुखस्थया दृश्योऽप्यदृश्यःस्याच्चिरं नरः ॥

घंटायाक्षिणी साधनं ॥ ॐ ऐं पुरं क्षोभय क्षोभय भगवति गंभीरस्वरे क्लें स्वाहा ॥ (२२) सुघंटां वादये-न्मन्त्री जपेन्मन्त्राऽयुतद्वयं । ततः क्षोभयतेघण्टायक्षिणी लोकान् दर्शनादेव साधकः ॥

कालयाक्षिणी साधनं ॥ ॐ क्लें कालकर्णे के ठः ठः स्वाहा
लक्षसंख्यामनुं जप्त्वा पलाशमरुजैर्गणैः (पलाशखण्डैः) मधून्मत्तैः कृतो होमः कालकर्णी प्रसीदति । सौम्याधरास्य वदन भोगस्तंभ करी भवेत् ।
नतं तां स्वरेद्दियां त्रिविधाश्चर्यकारिणीम् ॥

महाभया साधनं ॥ ॐ ह्रीं महाभये हुं फट् स्वाहा ॥
नरास्थिनिर्मितां मालां गले पाणौ च कर्णयोः । धारयेज्जपमालां च तादृशीं तु श्मशानतः ।
लक्षमेकं जपेन्मन्त्र साधयेन्निर्भयः सुधीः । ततो महाभया सिद्धा ददात्येव रसायनं ।
तेन भक्षितमात्रेण पर्वतानपि चालयेत् ।
वली पलित निर्मुक्तः चिरजीवी भवेन्नरः ॥

माहेन्द्री साधनं ॥ (१) ऐं क्लीं ऐन्द्रि माहेन्द्रि कुलुकुलु चुलुचलु हंसः स्वाहा ॥
(२) ॐ माहेन्द्रि कुलुकुलु हंसः स्वाहा ।
शक्रचापोदये (इन्द्रधनुष्उदयकाले) लक्षं निर्गुडीतलमध्यगः ।
जपेन्मन्त्रं ततस्तुष्टा देवी पातालसिद्धिदा ।

शंखिनी साधनं ॥ ॐ शंखधारिणि शङ्खाभरणे ह्रां ह्रीं क्लीं क्लीं श्रीः स्वाहा ।
ॐ ह्रीं शङ्खधारिणी शङ्खाभरणे ह्रां ह्रीं क्लीं आं स्वाहा ॥
मन्त्रायुतं जपेन्मन्त्री प्रातः सूर्योदये सति । माससमेकं जपेदेवं पूजां कुर्याद्दिनेदिने ।
शुद्धसंलिप्तपट्टे तु शुभ्रपुष्पैः सपायसैः । दशांशं होमयेत्साज्यैः इंधनैः करवीरकैः सैः
ददाति शंखिनी तुष्टा नित्यं रूप्यकपंचकं ।

**चांद्री (चन्द्रिका) साधनं** ।। ॐ ह्रीं चन्द्रिके हसः स्वाहा ।
ॐ ह्रीं चन्द्रिके हसः क्लीं स्वाहा ।
शुक्लपक्षे जपेत्तावद्यावदृश्येत चन्द्रमाः । प्रतिपत्पूर्वपूर्णांतं तावल्लक्षमिमंजापेत् ।
अमृतं चन्द्रिका धत्ते पीत्वा यदनरो भवेत् ।।

**श्मशानी साधनं** ।। ॐ हूं ह्रीं स्फ्रूं श्मशानवासिनि श्मशाने स्वाहा ।
चतुर्लक्षमिमं मन्त्रं श्मशाने प्रजेच्छुचिः । नग्नो यत्तस्तदा तुष्टा पटं यच्छतियक्षिणी
तेनोद्यतो नरो देवि विचरेद्वसुधातले । निश्चयेनानुगृह्णाति न विघ्नैः परिभूयते ।

**वटयक्षिणि** ।। १ एह्येहि, २ यक्षियक्षि, ३ महायक्षि, ४ वटवृक्षनिवासिनि ।
५ शीघ्र मे सर्वसौख्य, ६ कुरु कुरु स्वाहा ।।
अस्य मन्त्रस्य । विश्रवा ऋषिः । अनुष्टुप् छन्दः यक्षिणी देवता ।
संख्याक्रमेण न्यासः । ध्यानम् ।

**अरुण चन्दन वस्त्रविभूषितां,**
**सजलतोयद तुल्यतनूरुहां ।**
**स्मरकुरंङ्गदृशं वटयक्षिणीं**
**क्रमुकनागलतादलपुष्कराम् ।।**

**तद्देवता यन्त्रे दिनं आवरण पूजां कृत्वा,**
**ततः तन्मन्त्र द्विलक्षजप पुरश्चरणं कृत्वा,**
**बन्धूकपुष्पेण दशांशतःहोमं ।**
**एवं कृते मन्त्रसिद्धो भवति ।।**

ततः वटाधः प्रतिदिनं सहस्र जपेत् । एवं सप्तदिनानि ।

तदा सप्तदिनांतरे सिद्धो भवति ।।

एतेअ परमन्त्राः (१) ॐ ह्रीं वटवासिनि यक्षकुल प्रसूते वटयक्षिणि एह्येहि स्वाहा ।

(२) ॐ वटवासिनि यक्षकुलप्रसूते वटयक्षिणि एह्येहि स्वाहा ।।

लक्षत्रयं तदा सिद्धा स्याद्देवी वटयक्षिणी । त्रिपदस्थो वटाधस्थो रात्रौ मन्त्रं जपेत्सदा ।। वस्त्रालंकरणे दिव्ये सिद्धि रसरसायनं ।। दिव्यांजनं च सा तुष्टा साधकाय प्रयच्छति ।।

**मेखला साधनं ॥** ॐ क्रौं मदनमेखले नमः स्वाहा ॥

अस्य पूजादिकं सर्वं वटयक्षिणीवत् ज्ञेय ॥

**चतुर्दशाहपर्यंतं मधूकाधस्थले शुभे ।**
**प्रजपेदयुतं नित्यं सहस्रं हवनं चरेत् ॥**
**मधूकपुष्पैर्मध्ववर्तस्तत्काष्टैश्च हुताशने ॥**
**सन्तुष्ठेवं कृते देवी प्रयच्छेत्तं जनं सुभं ।**
**येनाक्त नेत्रो मन्त्री वै निधिं पश्येद्धरातलम् ॥**

अपरमन्त्रः । ॐ ह्रूं मदनमेखले नमः स्वाहा ॥

मधुवृक्षतले मन्त्रं चतुर्दशदिनावधि । प्रजपेन्मेखला तुष्टा ददात्यंजनमुत्तमं ॥

**विकला साधनं ॥** ॐ विकले ऐं ह्रीं श्रीं क्लैं स्वाहा ।

निजगृहे त्रिमासमध्ये लक्षं जपेत् । करवीरपुष्पैः दशांशतो होमः ।

अथवा, सुराधान्यतो होमः । सिद्धि ददाति । मनो वांछितं ददाति ॥

अन्यमन्त्रः । ॐ विकले ऐं द्रीं श्रीं क्लें स्वाहा । (सर्वपूर्ववत्)

**लक्ष्मी साधनं ॥** ॐ श्रीं ह्रीं क्लीं महालक्ष्म्यै नमः ।

वटवृक्ष समारूढो जपेदेकाग्र मानसः । महालक्ष्मीर्यक्षिणी च स्थिरा लक्ष्मीश्च जायते ॥

अयुतजपेन सिद्धिः ॥

अन्यमन्त्रः । ॐ ऐं लक्ष्मीं वं श्रीं कमलधारिणि हंसः स्वाहा ॥

लक्षं जपेत् । करवीर पुष्प दशांशतो होमः । तदा प्रसन्ना भवति । रसायनं ददाति ॥

**मानिनी साधनं ॥** ॐ ऐं मानिनि ह्रीं एह्येहि सुन्दरि हस हम मिहसंगमः स्वाहा ॥

चतुष्पथे स्थितो लक्षं सपादं प्रजपेदणु । बुवाहु कुसुमैरक्तैर्होमयेत घृतमिश्रितैः ।

मानिनी जायते सिद्धा दिव्यखड्गं प्रयच्छति । तत्प्रभावेन लोकेस्मिन्नखण्डं राज्यमाप्नुयात् ॥

**शतपत्रिका साधनं ॥** ॐ ह्रां शतपत्रिके ह्रां ह्रीं श्रीं स्वाहा ॥

शतपत्र वनांतस्थो लक्षसंख्यं जपेन्मनुं । क्षीराज्यं होमयेद्यस्तु रससिद्धिच भूनिधिम् ॥

अथवा । कमलवने, सेवंतिवने वा लक्षं प्रजपेत् ।

यवधृतदशांशतो होमेन सिद्धा भवति । दिव्यरसायनं च ददाति ॥

**सुलोचना साधनं ।** ॐ क्लीं सुलोचनादि देवि स्वाहा ।

नदीतीरे स्थितो लक्षत्रयं मन्त्रं जपेदनु ।
घृतहोमे दशांशेन हुते देवी प्रसीदति ॥
ददाति पादुकायुग्मं यदारूढो भुवस्तलं ।
मनःपवनवेगेन याति चायाति वेगवत् ॥

**सुशोभना साधनं ।** ॐ अशोक पल्लवाकार करतले शोभनेदिवि श्रीं क्षः स्वाहा ।

रक्तमाल्यांबरो मन्त्री चतुर्दशदिनं जपेत् ।
ततः सिद्धिर्भवेद्देवि शोभना भोगदायिनी ॥

**कपालिनी साधनं ॥** ॐ ऐं कपालिनि आं ह्रीं क्लीं क्लें क्लों हससकल ह्रीं फट् स्वाहा ॥

महाव्रतधरो नित्यं कपालौदनभोजनः ।
लक्षद्वयजपस्यांते कपालं लभते मुनिः ॥
आकाशगमनं दूराच्चछ्रवणं रूपवर्तनं ।
दूरदर्शनमित्यादि साधकस्य प्रजायते ॥

मतांतरे ॥ ॐ ह्रूं ह्रां कालि करालिनि ह्रौं क्षां क्षीं क्षौं फट् ॥

श्मशाने प्रतिदिनमष्टोत्तरशतं जपेत् । अजामांसरक्तपुष्पेण बलिं दद्यात् ।

एवं कृते सप्तदिनांतरे कपालिनी सिद्धा भवति । मनोवाञ्छित पदार्थं ददाति ॥

अग्नि गुरु ब्राह्मणेषु व्ययमकृत्वा यदि पृथिव्यां निखनेत्, तदा रुष्टा भवति । कदापि न ददाति ॥

**विलासिनी साधनं ॥** ॐ विरूपाक्षविलासिनि आगच्छ ह्रीं प्रिया मे भव प्रिया मे भव क्लीं स्वाहा ॥

सरस्तीरे जपन्मन्त्रमर्द्धलक्षप्रमाणतः ।
घृतगुग्गुलु होमेन देवी सौभाग्यदयिनी ॥

**नटिनी साधनं ॥** ॐ ह्रीं नटिनि स्वाहा ।

ततो वक्ष्ये महाविद्यां विश्वामित्रेण धीमता । ज्ञाता या साधिता विद्या बला चातिबला प्रिये ।

अशोकतलं गत्वा चन्दनेन सुमण्डलं कृत्वा मध्ये मूलं विलिख्य। मूलेल देवीं समभ्यर्च्यं, धूपं च दत्वा ध्यायेत् ॥

ॐ त्रैलोक्यमोहिनीं गौरीं विचित्रांबरधारिणीम् ।
विचित्रालंकृतां रम्यां नर्तकीं वेषधारिणीं ॥
एवं ध्यात्वा जपेन्मन्त्रं सहस्रं च दिने दिने ।
मासांते जप संप्राध्य कुर्यात्तस्याश्च पूजनं ।
अर्द्धरात्रे भयं दत्वा किंचित्साधकसत्तमे ।
सुदृढं साधकं ज्ञात्वा याति सा साधकालयम् ।
विद्याभिः सकलामिश्च, किंचित्स्मेरमुखी नतः ।
वरं वरय शीघ्रं त्वं यत्ते मनसि वर्तते ।
तच्छ्रुत्वा साधकश्रेष्टो भावयेन्मनसाऽधिकं ।
मातरं भगिनीं वापि भार्यां वा प्रीतिभावतः ।
कृत्वा सन्तोषयेद्भक्त्या नटिनी तत्करोत्यलं ।
मातास्याद्यदि सादेवी पुत्रवत्पालयेत्सदा ।
सिद्धिद्रव्यं सुवर्णशतं सा ददाति दिने दिने ।
अतीता मागतां वार्तां सर्वां जानाति साधकः ॥
भार्यास्याद्यदि व देवी ददाति विपुलं धनं ।
अन्नाद्यैरुपहारैश्च ददाति काममोजनं ।
एतत् सुवर्णशतं तस्मै सा ददाति ध्रुवं प्रिये ।
यद्यद्वांछित साधकस्य ददाति नात्र संशयः ॥

अन्यमन्त्रः ॥ ॐ ह्रीं नटि महानटि स्वरूपवति स्वाहा ।

पूर्णाशोकतले गत्वा, चन्दने न सुमण्डलं । कृत्वा देवीं समभ्यर्च्य धूपं दत्वा सहस्रकं । मन्त्रमावर्तयेन्मासं सिशायां भोजनं ततः । रात्रौ पूजा शुभा कार्या जपेन्मन्त्रं निशार्द्धके । नटी देवी समागत्य निदानं रसमंजनं ॥ ददाति मंत्रिणे मन्त्र दिव्ययोगेन निश्चितं ॥

अन्यमन्त्रः । ॐ ह्रीं आगच्छागच्छ नटि स्वाहा—

कुंकुमेन भूर्जपत्रे मण्डलं कृत्वा तन्मध्ये मूलमन्त्रं विलिख्य, गंधाक्षतपुष्पधूपदीपविधिना

संपूज्य, त्रिसंध्यं त्रिसहस्रं जपेत् । मासमेकं यावत् ततः पौर्णमास्यां पूजां विधिवत्कर्तव्या । घृतदीपं प्रज्वालयेत् । सकलरात्रिपर्यंतं जपेत् । प्रभाते नियतसमये आगच्छति । सुन्दरमाभूषणं ददाति । नृत्यं करोति ॥

**सुवर्णरेखा साधनं ॥** ॐ वर्कशाल्मले सुवर्णरेखे स्वाहा ।

एकलिंगं समभ्यर्च्य खण्डकेनाति भाविता । पूर्वं संध्यां समभ्यर्च्य कृष्णादि सुमतिर्जपेत् । सहस्राष्टमितं मासं तदन्ते निशि भोजनं । जपेत्तं च पुनः मंत्रं अर्द्धरात्रे प्रयच्छति ॥ दिव्यालंकरणं देवि निधानं निजमुत्तमम् ॥ षण्मासं पूजिता दिव्यदेहं तस्य करोति सा ॥

**सुरसुन्दरी साधनं ॥** १ ॐ २ आगच्छ ३ सुर ४ सुन्दरि ५ स्वाहा ॥

ध्यानम् ।

पूर्णचन्द्राननां गौरीं विचित्रांबर धारिणीं ।
पीनोन्नतकुचारामां सर्वज्ञामभयप्रदां ॥ विधानं ॥
अथातः संप्रवक्ष्यामि यक्षिणीसाधनोत्तमम् ।
सर्वार्थसाधनं नाम देहिनां सर्वसिद्धिदम् ।
म त्यस्यार्चनं कृत्वा यक्षेशो भुवनाधिपः ।
ता प्रसाद्य प्रवक्ष्यामि सुराणां सुन्दरि प्रिये ॥
अस्याभ्यर्चने चैव राजत्वं लभते नरः ।

प्रातः समुत्थाय स्नानादिकं समाप्य, आचम्य । ॐ सहस्रार हुं फट् इति दिग्बन्धनं कृत्वा, मूलेन प्राणायामं कृत्वा, पूर्वोक्तवत् षडंगं कृत्वा, ध्यात्वा, मूले पाद्यादिकं शुभं दद्यात् ।

पुनर्धूप तथा दीप नैवेद्यं मूलमन्त्रतः ।
गन्धचन्दन तांबूलं, कर्पूर रसशोभितं ।
यत्नतः पूजयेन्मन्त्रं त्रिसंध्य च दिने दिने ।
स‌हस्रैक प्रमाणेन ध्यायेद्देवीं सदाबुधः ।
मा न्ते दिवसं प्राप्य बलि पूजां सुश नां ।
सुदृढं साधकं मत्वाऽऽयति सा साधकालये ।
सु रुसा साधकाग्रे सदा स्मेर मुखी ततः ।
दृष्ट्वा देवीं साधकेंद्रो दद्यात् द्यादिकं शुभं ।
चन्दनां सुमनसो दत्वा भिलाषितं वदेत् ।
मातरं भगिनीं वापि भार्यावा भक्तिभावता ॥

यदि माता तदा वित्तं द्रव्यं च सुमनोहरे ।
भूपतित्वं प्रार्थितं यत्तद्दधाति दिनेदिने ।
पुत्रवत्पालितं लोके सत्यं सत्यं सुनिश्चितं ।
स्वसा ददाति वित्तं च दिव्यं वस्तु तथैव च ।
दिव्यकन्यां समानीय नागकन्यां दिने दिने ।
भ्रातृवत्पालितं लोके नामभिस्तु मनोगतैः ।
भार्यासमाद्यदि सा देवि साधकस्य मनोहरा ।
राजेन्द्रं सर्वराज्ञां तु विदद्यात्साधकोत्तमं ।
स्वर्गलोके च पाताले गतिर्भवति नान्यथा ।।
यद्यद्दधाति सा देवी कथितुँ नैव शक्यते ।।
तयां स.र्धंचसंभोगं यदि दैवन्करोति सः ।
अन्य स्त्री गमनंत्याज्यमन्यथा नश्यति ध्रुवं ।।

मन्त्र भेदः ।। ॐ आगच्छागच्छ सुरसुन्दरि स्वाहा (किंकिणीतन्त्रे)

ॐ ह्रीं आगच्छ सुरसुन्दरि स्वाहा (मन्त्रमांडाकारोक्तं)

ॐ नमो आगच्छ सुरसुन्दरि स्वाहा । (प्राकृतग्रंथोक्तं)

अस्यविधानं । मूलेन न्यासं कृत्वा । ध्यायेत् ।।

पूर्णचन्द्राननां गौरीं विचित्रांबरधारिणीं ।
पीनोन्नत कुचावामां सर्वज्ञामभय प्रदां ।।
एकलिंगं समीपे पूजनंकृत्वा,
शर्कराज्यगुग्लोदंशांतो होमः । त्रिसंध्यं पूजयेत् ।।

त्रिसहस्रं प्रतिदिनं जपेत् । मासाभ्यन्तरे आगतायै चन्दनोदकेनार्दयं देयम् ।।

मातृ भगिनी भार्याकृत्यं करोति । यदा माता भवति सिद्धद्रव्यं दधाति । यदि भगिनी भवति तदादेव कन्याधिकां भार्यां मानीय ददाति यदि भार्यां भवति तर्हि सर्वैश्वर्यं सर्वेषां परिपूरयेत् । वर्जयेदन्य स्त्रिया सहशयनं ।।

अन्यथा विनश्यति । तथा च किंकिणीतन्त्रे । एकलिगं...।।

दत्वार्घ्यं प्रणतं मन्त्री कृते सात्वं किमिच्छसि । देविदारिद्र्यदग्धोस्मि तन्मेनाशय २,

तस्मै ददाति सातुष्टा निधानं चिरजीवितं ।। मन्त्रकोशेलक्षजपः पंचामृतदशांशतोहोमः ।
अष्टमीतिथौ कुमारीपूजनं, भूशय्या एकान्नं क्षाराम्लादि वर्ज्यं ।
चिंतितं ददाति ।।

**मनोहरा साधनं** ।। ॐ ह्रीं आगच्छ मनोहरे स्वाहा ।।

ॐ आगच्छ मनोहरे स्वाहा ।

नदी तीरं समासाद्य कुर्य्यात्स्नानादिकं ततः । पूर्ववत्सकलं कार्यं चन्दनेमण्डलं लिखेत् ।

स्वमन्त्रं तत्र विलिख्य आवाह्य, ध्यायेन्मनोहरां ।। ध्यानम् ।

**कुरंगनेत्रां शरदिंदुवक्त्रां बिंबाधरां चन्दनगन्धमाल्याम् ।**
**चीनांशुकां पीनकुचां मनोज्ञां, श्यामां सदाकामकरां नमामि ।।**
एवं ध्यात्वा यजेद्देवीमगरु धूप दीपकैः ।
गंधपुष्परसैश्चैव तांबूलद्यैश्च मध्यतः ।
दत्वायुतं प्रतिदिनं जपेन्मन्त्रं प्रसन्नधीः ।
मासांते दिवसं प्राप्य कुर्यात्स जप मुत्तमं ।
आनिशीथं जपेन्मन्त्रं ज्ञात्वा साधक निश्चयं ।
दत्वा च साधकाभ्यासे सुप्रसन्ना मनोहरा ।
चन्दनोदकपुष्पेक फलेन च मन हरा ।
ततोऽर्चिता प्रसन्ना स्यात्गृह्णाति प्रार्थितं यत् ।।

स्वर्णभारं साधकाय सा ददाति दिने दिने । सावशेषं व्ययं कुर्यात्स्थिते सा तु न दास्यति ।।
अन्यस्त्री गमनं गत्वा महापातकव न भवेत् । सत्यं सत्यं पुनः सत्यं तवाग्रे सत्यमीरितं ।
अव्याहत गतिस्तस्य भविष्यति न संशयः ।
इति ते कथिता विद्या स गोप्या या सुरासुरैः । तवस्नेहे च भक्तया च वक्ष्येन्यत् परमेश्वरि ।।

**प्रमदासाधनं** ।। ॐ ह्रीं प्रमदे स्वाहा ।।

ॐ ह्रीं प्रमोदायै स्वाहा ।।

मनु ऋषिः । गायत्री छन्दः । प्रमदा देवता ह्रीं शक्तिः ।।

१ ॐ ह्रां ह्रीं, २ ॐ ह्रीं प्रं, ३ ॐ ह्रूं मं, ४ ॐ ह्रैं दें, ५ ॐ ह्रौं स्वां, ६ ॐ ह्रः ह्रां
इति न्यासः । ध्यानम ।

**केयूरमुख्याभरणाभिरामं वराभये संदधतीं कराभ्याम् ।**
**संक्रंदनाद्यामरसेव्यपादां सत्कांचनाभां प्रमदां भजामि ।।**

एवं ध्यात्वा सर्वतो भद्रमण्डले, परतत्वांत पीठे देवता: संस्थाप्य तत्र विधानोक्तप्रकारेण यन्त्रं संस्थाप्य, आवरण पूजां कृत्वा पुरश्चरणं षट्लक्षजपं कुर्यात् । जपदशांशं घृतेन होमः । ततः सिद्धि भजति । ततः प्रयोगार्थं,

अर्द्धरात्रे समुत्थाय सहस्रैकंजपेन्मनुं । मासमेकं ततो देविनिधिं दर्शयति ध्रुवं ॥

**अनुरागिणी साधनं ॥** (१) ॐ ह्रीं आगच्छानुरागिणि मैथुनप्रिये स्वाहा ।
(२) ॐ ह्रीं अनुरागिणि मैथुनप्रिये स्वाहा । (३) ॐ ह्रीं आगच्छ अनुरागिणि स्वाहा ॥

कुंकुमेन भूर्जपत्रे देवी प्रतिमां विलिख्य, तस्य उदरे अष्टदलमालिख्य, तन्मध्ये मन्त्रं विलिख्य, प्राणप्रतिष्टां कृत्वा ध्यायेत् ।

ॐ शुद्धस्फटिक संकाशां नानारत्न विभूषितां ।
मंजीरहारकेयूर रत्नकुण्डलमण्डितां ॥

एवं ध्यात्वा मूलमन्त्रेण त्रिसंध्यमभ्यर्चयेत् ।
प्रतिपद्दिनमारभ्य पूजयेत्कुसुमादिभिः ।
धूपदीप विधानैश्च त्रिसंध्यं परिवर्तयेत् ॥

पूर्णिमां प्राप्य गंधाद्यैः पूजयेत्साधकोत्तमः । धृतदीपं ततो धूपं नैवेद्यं च मनोहरं । रात्रौ च दिवसे जाप्यं कुर्याच्च सुसमाहितः । अर्धरात्रे गता देवि समागत्य प्रयच्छति । मनसाभीष्टदं प्रयच्छति ॥

**नखकेशिका साधनं ॥** ॐ ह्रीं नखकेशिके कनकावति स्वाहा ॥

अपामार्ग समीपे गत्वा, एकविंशति दिनपर्यंतं पूजांकृत्वा मनुं जपेत् ।
निशार्द्धे वांछितं कामं देवी तस्य प्रयच्छति ॥

**नेमिनी (भामिनी) प्रिया साधनं ॥** ॐ ह्रीं महायक्षिणि भामिनि प्रिये स्वाहा ॥

दिनत्रयं निराहारः सति सोमग्रहे जपेत् ।
यावन्मुक्ति ततो जप्त्वा लभेदिच्छितमुत्तमं ॥
चन्द्रग्रहणात्पूर्वं दिनत्रयं निराहारो भूत्वा,
ग्रहणमोक्षपर्यंतं जपेत् । मनोवांछितं भवति ॥

**पद्मिनी साधनं ॥** ॐ ह्रीं आगच्छ पद्मिनि वल्लभे स्वाहा । आगच्छ पद्मिनि स्वाहा ॥
ॐ ह्रीं पद्मिनि स्वाहा ॥ ध्यानम् ।

**पद्मांगनां श्यामवर्णां पीनोन्नतपयोधरां ।**
**कोमलांगीं स्मेरमुखीं रक्तोत्पलदलेक्षणां ॥**

नानाभरण पद्मावति स्वाहा ॥

भूर्जपत्रे देवीप्रतिमां कुंकुमेन विलिख्य, तद्वक्षस्थले मूलं विलिख्य, ध्यात्वा, संपूज्य, त्रिसंध्यं, त्रिसहस्रं जपेत् । एवं एकमासः । पूर्णिमायां रात्रौ, संपूज्य, घृतदीपं दर्शयित्वा सकलरात्रिपर्यंतं जपेत् । प्रभाते नियतसमये, आगच्छति, साधकस्य मार्या भवति । तदपिच भूषणाद्यं, दिनेदिने प्रयच्छति । त्यक्त्वा मार्यां साधकं हि तोषयेद्विविधैः सुखैः ॥ पुरश्चरणं द्वादशक्षलजपं । दशांशतोहोमः ।

अष्टमहासिद्धि दद्याति ॥

अन्य मन्त्राः । ॐ पद्मावति स्वाहा ।

ॐ नमो धरणींद्रे पद्मावति आगच्छागच्छ कार्यं कुरु २ सत्यमेव कुरु २ स्वाहा ।
ॐ पद्मावति पद्मकोशे वज्रवज्रांकुशे प्रत्यक्षा भवति भवति ॥

**स्वर्णावती साधनं ॥** ॐ कनकवति मैथुनप्रिये स्वाहा ।
ॐ ह्रीं आगच्छ कनकवति स्वाहा ।
ॐ ह्रीं रक्तवर्मिणि आगच्छ कनकवति स्वाहा ।
ध्यानम् ।

**प्रचण्डवदनां गौरीं पक्वबिंबाधरां प्रियां ।**
**रक्तांबरधरां रामां सर्वकामफलप्रदाम् ॥**

अन्य मनुः । ॐ कनकावति करवीरके स्वाह । विधानं ॥ कृष्णापक्षाष्टमीमारभ्य अमावास्यापर्यन्तं प्रतिदिनं त्रिसहस्रं जपेत् ।
निंबसमिदाज्यैर्दशांशतोहोमः । होमभस्मनाभिमन्त्रितेन तिलकं कुर्यात् ।
मन्त्रसिद्धोभवति । अदृश्यो भवति । मनोवांच्छित सर्वं मवाप्यते ॥

रतिप्रिया । ॐ ह्रीं आगच्छ रतिसुन्दरि स्वाहा । ॐ अगच्छ रतिकरि स्वाहा । ध्यानम्–

सुवर्णवर्णां गौरांगीं सर्वालंकारभूषितां ।
नूपुरांगदहाराढ्यां भजेऽहं पुष्करेक्षणां ॥

एवं ध्यात्वा, कुमारीं (देवीं) मूल मन्त्रेण गंधाक्षततांबूलजातीफलैःसह पूजयेत् । एवं एकमासं, जपेत् ।

ज्ञात्वादृढं साधकेंद्रं निशीथे याति सुन्दरी ।
साधकाज्ञानुरूपेण सा प्रयाति दिनेदिने ।
त्यक्त्वा भार्यां भजेत्तां तु अनयथा च विनश्यति ॥

कामेश्वरी साधनं । आगच्छ कामेश्वरि स्वाहा । ॐ ह्रीं आगच्छागच्छ कामेश्वरि स्वाहा ॥
ध्यानम्–

कामेश्वरीं शशांकास्यां खेलत्खंजनलोचनां ।
मदालोलगतिं कांतां भजे सुमशिलीमुखाम् ॥

भूर्जपत्रे गोरोचनया प्रतिमां विलिख्य तां देवीं पूजयेत् । घृतदीपं दत्वा शय्यामारुह्य एकाकी सहस्र जपेत् । मासांते वा पूजयेत् । तत्र अर्द्धरात्रे नियतमागच्छति । अन्नांदेहीति भाषते । साधकस्य भार्या भवति प्रतिदिनं शयने दिव्यालंकारं परित्यज्य गच्छति । परस्त्री वर्जनीया ॥

षट्त्रिंशत् यक्षिणी साधनं संपूर्णम् ॥

## वटयक्षिणी

यन्त्रं । षट्कोणं, अष्टदलं, भूपुरं ॥

पीठदेवताः मं मंडकादि...नमः । नवपीठशक्तीः । मानदा, नवता, मधुरा, मधुरानना, नर्मदा, भोगदा नन्दा, मध्या प्राणदा ॥

१. षट्कोणेषु, आग्नेय्यादि चतुर्विदिक्षु मध्येदिक्षु च हृदयादि षडंगयुवतीः ।

२. अष्टदलेषु पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य, प्राचीक्रमेण वामावर्तेन ।
सुनन्दा, चंद्रिका, हासा, सुलापा, मदविह्वला, आमोदा, प्रमोदा, वसुदा ॥

३. भूपुरे । इन्द्रादि– ततः तेषां आयुधानि ।

## प्रमदायक्षिणी

चक्रं । षट्कोण, अष्टदल, भूपुरं ॥

पीठ देवताः । आधारशक्त्यादि परतत्वांतपीठदेवताभ्यो नमः । नवपीठ शक्ती। जयादि मंगलांताः ॥

१. षट्कोणेषु । आग्नेय्यादि चतुर्विदिक्षु मध्ये दिक्षु च । हृदयादि षडंग युवतीः ।

२. अष्टदलेषु पूज्यपूज्यकयोर्मध्ये प्राचीं, प्रकल्प्य, प्राचीक्रमेण वामावर्तेन सुनन्दा, चन्द्रिका हासा इत्यादि वटयक्षिणीवत् ।

३. भूपुरे इंद्रादि– ततः आयुधानि च ॥

## रतिप्रियाधनदायक्षिणी

चक्रं । षट्कोण, दशदलं, वर्तुलं भूपुरम् ॥

ॐ ह्रीं सर्वशक्तिकमलासनाय नमः ।

१. षट्कोणकेसरेषु आग्नेय्यादि...मध्ये च हृदयादि षड्गयुवती ।

२. दशदलेषु पूज्यपूजकयोमध्ये प्राचीं दिशं प्राचीक्रमेण वामावर्तेन । महालक्ष्मी, पद्मा, श्री, हरिप्रिया, हरा, पद्मप्रिया, कमला, अब्जा चंचला, लोला ।

३. भूपुरे इन्द्रादि...ततः आयुधानि च ॥

## धनदारतिप्रियायक्षिणीसाधनं

ॐ रं श्रीं धं धनदे रतिप्रिये स्वाहा ॥

अस्य धनेदेश्वरी मन्त्रस्य । कुबेर ऋषिः । पंक्तिच्छन्दः । श्रीधनदेश्वरी देवता ।

धं बीजं । स्वाहा शक्तिः । श्रीं कीलकं । धनदेश्वरी प्रसादसिध्यर्थे, समस्तदारिध्रनाशनाय, श्री धनदेश्वरी मन्त्रजपे विनियोग. ॥ धा इत्यादि षडंगन्यासः ॥ ध्यानम् ।

**हेमप्राकारमध्ये सुरविटपितटे रक्तपीठाधिरूढां**
**ध्यायेत्तां यक्षिणीं सत्परिमलकुसुमोद्भासिधम्मिल्लभारां ।**
**पीनोत्तंगस्तनाढ्यां कुवलयनयनां रत्नकांति कराभ्यां,**
**ब्राह्म्यद्रक्तोत्पलाढ्यां नवरविवसनां रक्तभूषांगरागां ॥**

तद्यन्त्रं । मध्ये षटकोणं, तद्बहिः दशदलं । ततः भूपुरं । एवं यन्त्रं । तत्र पद्मे मूलं, कोणेषु आग्नेय्यादि चतुर्दिक्षु मध्येदिक्षु च षडंगदेवींश्च, दशदलेषु पूज्यपूजकोर्मध्ये प्राचींदिशं, तदनुसारेण अन्यादिशं प्रकल्प्य वामावर्तेन । महालक्ष्म्यै, पद्मायै, श्रियै, हरिप्रियायै, हरायै, पद्मप्रियायै, कमलायै, अब्जायै, संचलायै, लोलायै,

इति देवतां संपूज्य, भूपुरे इन्द्रादि दशदिकपालान्, तेषां आयुधानंन च पूजयेत् ।। इत्यावरणपूजां कृत्वा, लक्षजपं पुरश्चरणं तद्दशांश होम तर्पण मार्जन ब्राह्मण भोजनं । एतद्यत्रं ताम्रपात्रे विधातव्यं । तत्रपूजांकुर्यात् । पायसान्नं निवेदयेत् । रक्त प्रवालमालायां जपं कुर्यात् । रक्तवस्त्रं धारयेत् ।। होम, घृताक्तेनेक्षुदंडे च मधुना च दशांशं जपकाल । रात्रौ च जप्यते साष्टसहस्रं प्रयोगार्थं ।।

अपरमन्त्रः ॐ क्लीं ह्रीं ऐं ॐ श्रीं महायक्षिण्यै सर्वैश्वर्य प्रदात्र्यै श्रीं क्लीं ऐं ॐ स्वाहा ।।

एतत् धनदां, कवचं स्तोत्रं पूजाविधानं च विस्तारेण दृष्टव्यं ।।

## चन्द्रद्रवा वटयक्षिणी साधनं ।।

मनुः । ॐ ह्रीं नमश्चन्द्रद्रवे कर्णाकर्णं कारणे स्वाहा ।।

वटवृक्षं समारूह्य लक्षमेकं जपेन्मनुम् ।
मंत्रिते सप्तभिर्मंद्री कांजिके क्षालयेन्मुखं ।।
यामद्वयं जपेद्रात्रौ वरं यच्छति यक्षिणी ।
रसं रसायन दिव्यं क्षुद्रकर्माण्यनेकधा ।।
सिद्धानि सर्वकार्याणि नान्यथाशंकरोदित ।।

मतांतरे । ॐ नमो भगवते रुद्राय चन्द्रयोगिने स्वाहा ।।

पुरश्चरणं लक्षजपः । अन्यत्सर्वं पूर्ववत् ।।

## धनदापिप्पलयक्षिणी प्रयोगः ।।

मनुः ॐ ऐं क्लीं धनकुरु २ स्वाहा । अन्यः ४ धन कुरु २ स्वाहा ।

अश्ववृक्षसमारूढो जपेदेकाग्रमानसः ।
धनदां यक्षिणींचैव धनं प्राप्न तिमन्त्रवित् अयुतं जपेत्सिद्धिः ।।

अन्यमन्त्रः । ॐ ह्रां ह्रीं श्रीं क्लीं नमः ।।

## धनदापिप्पलयक्षिणी मन्त्रः

अश्वत्थाधे द्वात्रिंशत्सहस्रं जपेत् ।
दधि दुग्धंचं नैवेद्यंदत्वा सिद्धोभवति ।।
ततोभूत प्रेतपिशाचादयो वश्या भवंति ।
सेवां कुर्वंति । यक्षिण्याधिपतिर्भवति ।।

## पुत्रदा आम्रयक्षिणी प्रयोगः ॥

मनुः ॐ ह्रां ह्रीं ह्रूं पुत्रं कुरु २ स्वाहा ।

चूतवृक्षसमारूढो जपेदेकाग्रमानसः ।
अपुत्रो लभते पुत्रं नान्यथा शंकरोदितं ॥

अयुतं जपेत् ।

## अशुभक्षयकरी धात्रीयक्षिणी प्रयोगः ॥

ॐ ऐं क्लीं नमः ।

धात्रीमूलसमारूढो जपेदेकाग्रमानसः ।
अशुभक्षयकारिण्या यक्षिण्या मनुमुत्तमम् ।

अयुत जपेत् ।

## विद्यादात्रीऔदुंबर यक्षिणी प्रयोगः ॥

ॐ ह्रीं श्रीं शारदायै नमः ।

औदुंबरसमारूढो जपेदेकाग्रमानसः ।
जपेत्पुत्तक सांसिद्धिं सर्वविद्याः चतुर्दश ॥

अयुतं जपेत ॥

## विद्यादात्रीनिर्गुण्डीयक्षिणी प्रयोगः ॥

ॐ सरस्वत्यै नमः ।

निर्गुण्डी मूल मारूढः जपेदेकाग्रमानसः ।
विद्याप्राप्तिर्भवेन्नित्यं नान्यथा शंकरोदित ॥

अयुतं जपेत् ॥

## जयार्कयक्षिणी प्रयोगः ॥

ॐ ऐं सर्वकार्य साधनं कुरु स्वाहा ॥ जयं कुरु २ स्वाह ॥

अर्क मूल समारूढो जपेदेकाग्रमानसः ।
यक्षिणीं च जयां नाम सर्वकार्यकरीं सदा ॥

अयुतं जपेत् ।

## सन्तोषाश्वेत गुंजायक्षिणी प्रयोगः ॥

ॐ जगन्मात्रे नमः ।

श्वेतगुंजा समारूढो जपेदेकाग्रमानसः ।
सन्तोषाख्या यक्षिणी तु ददाति वांछितं फलं ॥

अयुतं जपेत् ॥

## राज्यदा तुलसी यक्षिणी प्रयोगः

ॐ क्लीं नमः ।

तुलसीमूलमारूढो जपेदेकाग्रमानसः ।
अकस्मात् राज्यमाप्नोति नान्यथा शंकरोदितं ॥ आयुतं जपेत् ॥

## राज्यदांडकोलयक्षिणी

ॐ ह्रौं नमः ।

अंकोलवृक्षसमारूढो जपेदेकाग्रमानसः ।
राजाधिराजो भवति नान्यथा शंकरोदितं ॥ अयुतं जपेत् ॥

## कुशयक्षिणी

ॐ वाङ्मयायै नमः ।

कुशमूलसमारूढो जपेदेकाग्रमानसः ।
सर्वकार्याणि सिध्यंति नान्यथा शंकरोदितं ॥ अयुतं जपेत् ॥

## वाक्सिद्धि अपामार्ग यक्षिणी

ॐ ह्रीं मारत्यै नमः ॥

अपामार्गसमारूढो जपेदेकाग्रमानसः ॥
वाचांसिद्धिमवाप्नोति भवेत् सत्य पुनः पुनः । अयुतं जपेत् ॥

## क्षीरार्णवायक्षिणी ॥

ॐ नमो ज्वालामाणिक्य भूषणायै नमः ।

निजगृहे द्वारवेदिकायां स्थित्वा रात्रौ पंचदशशतं जपेत् ।

दशदिनांतरे प्रसन्ना भवति । घृतक्षीरदधिकदलीफलानि ददाति ॥

## उच्छिष्टयक्षिणीसाधनं ॥

जगत्त्रयमातृके पद्मनिभे स्वाहा ।

अनेनमन्त्रेण सर्वावस्थायां पंचविंशति सहस्रं प्रतिदिनं जपेत् प्रसन्नाभवति ॥

अन्न वस्त्रेण परिपूर्ण करोति ॥

## चन्द्रामृतयक्षिणी

ॐ गुलुगुलु चन्द्रामृतमयि अवजालितं हुलु २ चन्द्रनीरे स्वाहा ।

गृहेवारण्याय, एकांते लक्षमेकं जपेन्मनुं ।
पुष्पधूपादिभिः पूजां नित्यं कुर्यात् प्रयत्नतः ।
पचामृतैर्दशांशेन हुते देवी प्रसीदति ॥
दीनाराणां सहस्रैस्तु प्रत्यहं तोषयिष्यति ॥

## स्वामीश्वरी यक्षिणी

ॐ ह्रीं आगच्छ स्वामीश्वरि स्वाहा ॥

एकांते तु शुचौदेशे त्रिसंध्यं त्रिसहस्रकं ।
मासमेकं जपेन्मन्त्रं ततः पूजां समारभेत् ।
पुष्पधूपादिनैवेद्यैः प्रदीपैः घृतपूरितैः ।
रात्रावभ्यर्चयेत्सम्यक् सुस्थिरः सुमनाः सुधीः ॥
अर्द्धरात्रे गते देवि समागत्य प्रयच्छति ।
रसं रसायनं दिव्यं वस्त्रालंकारभूषणं ॥

## महामायाभोगयक्षिणी

ॐ नमो महामाया महाभोगदायिनी हुं स्वाहा ।

पंचसहस्रं प्रतिदिनं जपेत् ।

मृष्टान्नं भुक्त्वा पंचमेवघृत च तेन दशांशतोहोमः ॥

ततोदेवी प्रसन्नाभवति । वरं ददाति ॥

सर्वस्त्रियः स्वस्त्री वा वश्या भवति ॥

राजमान्यो भवति । वश्यो नृमतिदिनं ददाति ।

तत्याग साधनं ॥ अहोत्यागी महात्यागी अर्थं देहि मे वित्तं वीरसेवितं ह्रीं स्वाहा ।

मतांतरे ॥ ॐ अहोत्यागी मम त्यागार्थं देहि मे वित्तं वीरसेवितं स्वाहा ॥

चतुर्लक्षमिमं मन्त्रं जपेत्यागी प्रसीदति ।

ददाति चिंतितानर्थान् तस्मै भोगांश्चमन्त्रिणे ॥

## सर्वांग सुलोचना

ॐ कुवलये हिलि २ कुरु २ सिद्धि सिद्धेश्वरि ह्रीं स्वाहा ॥

राजमान्यो, वश्योभवति नृपतिश्च पंचमुद्राः प्रतिदिनंददाति ॥

लक्षत्रयं जपेन्मन्त्रं दशांशंगुग्गुलुंहुनेत् ।

लाक्षामुत्पलकं वाथ दत्वा सर्वांगलोचनं ॥

पट्टीपट्टे वा संलिख्य होमांते चिंतितासदा ॥

## भूतलोचनासाधनं ॥

ॐ भूते सुलोचनेत्वं ॥

लक्षमुत्पल शाखोक्तं हुत्वा मन्त्रमिमं जपेत् ।

लक्षैकदशमावर्त्या हुत्वा मध्ये शशिग्रहे ।

अथवा मालतीपुष्पैः हुत्वा भानुसहस्रकं ।

भानुभुक्तेभवेद्यावत् पूर्णांते सिध्यति ध्रुवं ॥

सहस्रं तु जपाद्यंते सहस्राणां तु भोजनम् ॥

## जलपाणिसाधनं ॥

ॐ ह्रीं जलपाणिनि ज्वल २ हुं ब्लुं स्वाहा ॥

शाकयूष पथः सक्तु भक्षः श्वेततम.सने,
देवतां पूजयेन्नित्यं जपेल्लक्षत्रयोदशं ॥
पायसं होमयेत्पश्चात् सहस्रेणैव सिध्यति ॥
नित्यं लोकसहस्रस्य भोजनं सा प्रयच्छति ॥
लक्षाणिदिव्यवस्त्राणि दत्ते सा शंकरोदिता ॥

## मातंगेश्वरि साधनं

ॐ ह्रीं श्रीं क्लीं मातंगेश्वर्यै नमः । ॐ ह्रीं ॐ क्लीं नमो मातंगेश्वरि नमः ।

घृतदीपसम्मुखे लक्षं जपेत् । दशांशतो होमः । प्रसन्ना भवति । स्त्री राजलक्ष्मी महिषीत्याद्यभीष्ट-जातं ददाति ॥

## विद्यायक्षिणी

ॐ ह्रीं वेदमातृभ्यः स्वाहा ।

पंचविंशति सहस्रं जपेत् । पंचमे वा दशांशतो होमस्तदा, विद्या प्राप्ता भवति ॥

## हटेलेकुमारी

ॐ नमो हटेले कुमारि स्वाहा ।

द्विसहस्रं प्रतिदिनं जपेत् । ततः सप्तदितांतरे बन्धमुक्ती भवति ॥

दुग्धाज्येन दशांशतो होमः । कुमारी भोजनं च कुर्यात् । तदा प्रसन्नाभवति ॥

## बन्दीसाधनं

१ ॐ २ हिलि ३ हिलि ४ बन्दी ५ देव्यै ६ स्वाहा ॥

भैरव ऋषिः । त्रिष्टुप् छन्दः । बन्दी देवता । संख्याक्रमेण न्यासः । ध्यानम् ।

**सतोयपाथोदसमानकांति मंभोजपीयूषकरीरहस्तां ।**
**सुरांगना सेवितपादपद्मां भजामि बन्दीं भवबन्धमुक्त्यै ॥**

दिनं अयुतजपं । एकविंशति दिनं ।

**ब्रह्मचर्यरती मन्त्री गणेशार्चनपूर्वकं ।**
**कारागृहनिबद्धस्य मोक्ष एवं कृते भवेत् ॥**

तन्द्ययन्त्रे पूजां विधिवत्कार्या ।

## ॥ अथ रुद्रमन्त्रानुवाक प्रयोगाः ॥

ॐ नमो भगवते रुद्राय ॥

ॐ नमस्ते रुद्रमन्यव इति मन्त्रस्य । कश्यप ऋषिः । अनुष्टुप्छन्दः । श्री रुद्रो देवता । ध्यानम् ।

**आकर्णाकृष्टे धनुषि ज्वलन्तीं देवीमिषुं भास्वति संन्दधानम् ।**
**ध्यायेन्महेशं महनीयवेषं देव्या युत मोधतनुं युवानम् ॥**

पुरश्चरणं ॥ द्वादशरात्रं, कृछ्रं चरित्वा, एकादशसहस्रं अभिहितदिनानि निरन्तरं जपन् कृत पुरश्चरणो भवति ॥ ततो अनेनैव प्रदक्षिणं नमस्कारं च कुर्यात् । ततः दक्षिणामूर्तिसन्निधौ एकादशसहस्रं जपात् अशेष पापं नाशयति । लक्षजपात् सप्तजन्मकृतपापं नश्यति । तस्मिन्नेव दक्षिणमूर्ति सन्निधौ अग्नि निधाय घृतपायसं श्रपयित्वा स्वाग्नौ जुहुयात् । साक्षाद्देव पश्यति । तस्मिन्नेव सर्वतो अरत्निमात्रं अग्नि कुण्डं कृत्वा कापिलेनघृतेन शतसहस्रं जुहुयाद्गाणापत्यं लभते ॥

यातइषु रिति मन्त्रस्य । आत्रेय ऋषिः अनुष्टुप्छन्दः । शम्भुर्देवता । ध्यानं ॥

**ध्यायेद्देवं सस्मितं स्यन्दनस्थं, देव्या सार्धं तेजसा दीप्यमानं ।**
**इष्विष्वासालंकृताभ्यां भुजाभ्यां शूराकार स्तूयमानं सुरौघैः ॥**

एतन्मन्त्रं द्वादशदिनानि चरुभोजी जपित्वा कृतपुरश्चरणो विनियोक्तुं योग्यो भवति ॥

अन्नार्थी ततः तिलतण्डल यावकामलकलकं एकादशसहस्रं जुहुयात् ॥

एतेन दुर्भिक्ष निवारणार्थं तिलतण्डुलमिश्रितचरुणा शतसहस्रमाहुतीः कुर्यात् ॥ सुभिक्षमभिजायते ॥

याते रुद्रेति मन्त्रस्य । काश्यप (स्वराट्) ऋषिः । स्वराडनुष्टुप् छन्दः । शम्भुर्देवता । ध्यानम् ।

**स्मेराननं चन्द्रकलावतंसं गंगाधरं शैलसुता सहायम् ।**
**त्रिलोचनं भस्म भुजंग भूषं ध्यायेत्पशूनां पतिमीशतारं ॥**

हविष्याशी त्रिरात्रं जपन् कृतपुरश्चरणो भवति ॥

अथ एतया गोशांतिं कुर्यात् । गोष्ठमध्ये सर्वतः हस्तमात्र मग्नि कुण्डं विधाय मथिताग्नौ वैकंकत अपामार्ग समिधां दधिमधुघृताक्तानां अयुतं जुहुयात् ॥ गो शांतिं प्रवक्ष्यामः । ब्राह्मणौ घटजलमभिमंत्रितं सर्वगंधाधिवासितं कृत्वा शतसहस्रं जपित्वा गाः प्रोक्षेत् । गवां शांतिर्भवति ।

यामिषुं, शिवेन वचसात्वा-एतन्मन्त्रद्वयस्य गोतम ऋषिः । गायत्री छन्दः । रुद्रो देवता । ध्यानम् ।

**साङ्ग्राभिकेन वपुषा प्रविराजमानं,**
**देवं पुरत्रयविनाशन मदहासं ।**
**दैत्यान्दिध मक्षु मचलेश्वर चापपाणि**
**ध्यायेत्पुरारिमथ भूमिरथाधिरूढम् ॥**

पुरश्चरणं । एकविंशति दिनानि निरन्तरं जपः । ततः कृतपुरश्चरणः एताभ्यां अकालमरणे प्रतिघातं कुर्यात् ।

ताभ्यां तिलव्रीहि गोधूम यवानां दधि मधु घृताक्तानां लक्षं जुहुयात् ॥ एकविंशति दिनानि । अकालमरणभयं न भवति ॥ नवभिर्दिनैः उपद्रवान्नश्यति ॥

अध्यवोचदिति मन्त्रस्य । कण्व ऋषिः । अनुष्टुप् छन्दः । शम्भुर्देवता ॥ ध्यानम्–

**चन्द्रार्धमौलिं कालारिं नागयज्ञोपवीतिनम् ।**
**ज्वलत्पावकसंकाशं ध्यायेद्देवं त्रिलोचनम् ॥**

अर्द्धकृच्छ्रं चरित्वा, ततः पंचदिनानि शाकमूलयवचरुभोजी, दिवाऽऽवश्यकार्यविरोधेन तिष्ठन् निरन्तरं जपन् कृतपुरश्चरणो भवति ॥

ततो अनेन रक्षां कारयेत् ॥ सर्वरक्षार्थं तण्डुलदूर्वायवैश्चसमैराज्यसिक्तैः आहमतोग्नौ, मथितेवा नित्यवदष्टसहस्रहोमः । विशेषेण आर्द्रायां अयुत होमः तस्मिन्नेव तिलगुडपयोमिश्रित चरुणा अष्टसहस्रहोमेन दीर्घायुर्भवति ॥ सर्वत्रकाले दक्षिणां दद्यात् । ततः तत्र अग्नौ पुरतः मन्त्रकलश, सौवर्णं, राजतं वा स्थापयित्वा, कलशे अग्नौ च देवमावाह्य तत्सन्निधौ होमःकार्यः ॥ होमांते कलशोदकेन प्रोक्षयेत् ।

गुरुः नित्यं विशेषकारी राजा कृतरक्षो भवति । ततः वाल्मीकपथंगच्छन् कार्पासबीजालवण सिद्धार्थान्, एकादशवारं जपित्वा यां दिशंगच्छेत्तां वर्जयित्वा, अन्यासु दिक्षु प्रक्षिपेत् ॥ ततः शुद्धोजपन् गच्छेत् ।

व्याघ्र तस्कर ब्रह्मराक्षस यक्ष भूतादिभ्यो मुच्यते ।

रोगनाशनार्थं । आतुरः सर्षपान् सप्तभिमंत्र्य शिखां स्थापयेत् ।

आरोग्यं भवेत् । श्वेतसर्षपैः एवं कृतैः कुमारग्रहादिभ्यो मुच्यते ।

नागरं पलमात्रं अभिमंत्र्य पयसि क्षिप्त्वा क्वाथयित्वा, आत्माग्नावष्टसहस्रं वा अष्टोत्तरशतंवा हुत्वा शेषं पिबेत् । गर्भरोगान्नश्यति ॥

असौयस्ताम्र, असौ यो वसर्पति इति मन्त्रद्वयस्य मरुत्वान् (काल) ऋषिः ।

आस्तार पंक्तिः छन्दः । द्वितीयमन्त्रः षट्पदा जगती छन्दः । आदित्यरूपी भगवान् देवता ।

ध्यानम्–

**मण्डलांतरगतं हिरण्मयं भ्राजवानवपुषं शुचिस्मितम् ।**
**चण्डदीधिति मखण्डितद्युतिं चिन्तयेन्मुनिसहस्रसेवितम् ॥**

पुरश्चरणं कृछ्रमेकं चरित्वा षोडशदिनानि निरन्तरं जपेत् ।

एताभिः अनावृष्टयां, सत्यां वृष्टयर्थं कार्यं । ब्राह्मणान् पंचसिद्धनाहूयतैः कार्यं । तेषां उष्णीषवसन कर्णवेष्टनकण्टाभरणानि दद्यात् ।

सिद्धं होमद्रव्यं तिलतण्डुलयवानों दधि मधुघृतक्तानां शतसाहस्रं जुहुयात् ॥

वेतस समिधां क्षीराक्तानां तद्वत् । तेषां पंचानामेको जपेत् ॥

चत्वारो जुहुयादेकादश दिनानि दीक्षित्वा, अंत्यदिने रक्ततामरसैः अष्टसहस्र प्रत्येकं आराधयेत् । सकृज्जपित्वा कर्मकालेन व्यावृत्योस्पृशंश्च वीक्ष्यासीत । अन्यथा प्रायश्चित्त भवेत् ॥

आसमाप्ते अग्निरक्षा कर्तव्या । अवसानदिने भगवानादित्यो महावृष्टिं प्रमुंचति । वेतस पुष्पाणां अयुतं जुहुयात् । सविता वरं ददाति ।

उद्यन्तं अस्तंयंतमादित्यमेताभ्यामुपतिष्टेत । कण्ठदघ्नें जलेस्थिवा मनःकामं आसंवत्सरं ददाति । जपापुष्पाणां मध्वक्तानां एकविंशतिसहस्र जुहुयात् ।

सवितु। प्रसादात् जातिस्मरत्वं लभते । चतुर्वेदिकुले जनिः। ध्यानम्–

**मण्डलांतरगतं हिरण्मयं भ्राजमान वपुषं शुचिस्मितं ।**
**चण्डदीधितिमखण्डविद्युतिं चिन्तयेन्मुनिसहस्र सेवितम् ॥**

नमोऽस्तु इति मन्त्रस्य । श्रीरुद्रऋषिः । त्रिष्टुप् छन्दः । श्रीरुद्रो देवता । ध्यानम्–

**शरच्चंद्रप्रकाशेन वपुषा शीतलद्युतिं ।**
**ध्यायेत्सिंहासनासीनमुमया सहितं शिवम् ॥**

पुरश्चरणं । पंचदशदिनानि हविष्याशी निरन्तरं जपेत् ।

शिवसमीपे पश्चिम द्वारालयं कुंभमरत्निमात्रं सर्वतो विधाय मथिताग्नौ अर्कपुष्पैः अमावास्यामारभ्य दशदिनावधि प्रत्यहं सहस्रं हुत्वा घृतपायस देवाय निवेदयेत् । सर्वार्थसिद्धिस्यात् ॥

पुत्रकामानां अनेन च क्रिया वक्ष्यते ॥ पंचदिनानिदीक्षित्वा शंभोरालये, नदीतीरे व गोष्ठे वा गृह्णीयात् ॥ देवालयश्चेत् देवस्योपरि अन्यत्रकुंभे आवाह्य तत्पश्चिमभागे अग्निं संस्थाप्य शमी समिधां पत्राणां, दधिमधुघृताक्तानां प्रत्यहं एकादशसहस्र जुहुयात् । दिनत्रयं, पंचदिनानिया दीक्षित्वा कार्यं । प्रतिदिनमष्ट सहस्रं, तदर्धं अष्टशतं वा तामरस पुष्पाणि उपरि विन्यसेत् । तदभावे पत्रं वा । एवं कृत्वा अन्त्यदिने अष्टसहस्र तदर्धं, अष्टशतं वा ब्राह्मणान्भोजयेत् । द्रव्यत्यागं विशेषेण कुर्यात् ।

एकादशरुद्ररूपान् भोजयित्वा तेषां किंचिद्वस्तुप्रदाय दक्षिणतः, देवसन्निधौ दक्षिणां, भूमि, सुवर्णं, कुण्डलादीन्, सह दिव्यभोजनं च दद्यात् ।

याव द्दक्षिणा भूमिः तावदविच्छिन्ना संततिः परंपरा च भवति ।

आसंवत्सरात् संततिः भवति ॥

प्रमुंचधन्वनः, अवतत्यधनुः, विज्यंधनुः इति मन्त्राणां नारद ऋषिः ।

अनुष्टुप् छन्दः । श्रीरुद्रो देवता ध्यानम्–

**उद्यद्भास्वरकोटिप्रकाशमादीप्तदहनमूर्धानं ।**
**भीषण भुजंगभूषं ध्यायेद्विविधायुधं रुद्रं ॥**
**रुद्रं सुरनियन्तारं शूकखड्वांगधारिणं ।**
**ज्वालमालावृतं ध्यायेद्भक्तानामभयप्रदम् ॥**

कृछ्रं चरित्वा आत्मानं संशोध्य नवदिनानि जपेत् । सिद्धो भवति ।

एताभिः युद्धकाले भूपतेः आयुधान्यभिमंत्र्य, कुशकण्टकानां सहस्रं जुहुयात् । युद्धोपनीता शत्रवो हीयन्ते ॥

याते हेतिः, नमस्ते अस्त्वायुधाय, परिते धन्वनः, इति मन्त्राणां श्रीरुद्र ऋषिः । अनुष्टुप् छन्दः । श्रीरुद्रो देवता । ध्यानम्–

**प्रणदमर मौलि संधमाला कुसुमरजोरुण पादपद्म युग्मं ।**
**अनुःरतमनु मरेद्भवान्या सह जगतां पितरं पिनाकपाणिम् ॥**

एताभिरपि संग्रामकाले तैलमेकादशप्रदीप सहस्राहँ द्रोण्यां प्रक्षिप्य तत्र देवमावाह्य लोकपालैस्सहाराध्य, स्पृष्ट्वातैलं सप्तदिनानि प्रतिदिनं अष्टसहस्रं जपेत् । तेन सिद्धतैलेन प्रदीपान् एकादशसहस्रमारोप्य शत्रुराज्ये प्रत्यासन्ने राजान विना सेनानीः पुरोगच्छेत् । दृष्ट्वा दीपज्वालां शत्रुसेना नावतिष्ठते । एतत्प्रभावादेव शत्रवो विनश्यंति ॥

अन्यदपि एताभिरेव अरातिनगरे सिद्धवेषधारिणो ब्राह्मणाः शक्ताः मन्त्रसिद्धाः शत्रोरभिचारं कुर्युः । राजायपयुंक्ते वस्तु तदेताभि दृष्ट्वा, स्पष्ट्वा च, स्पर्शनदर्शनायोग्यं तन्मुखाच्छ्रुत्वा आभिचारोऽस्त्विति जपेयुः । मन्त्रांतेऽन्यदपि शंखुं निधाय, नगरचतुष्पथे देवालये देवारामेऽन्यतरस्मिन्नपि नगरांगभूते सहस्रमभिमंत्रितं खनेयुः ।

तन्नगरं शम्भुकोपात् संवत्सरान्नाशयति व्याधिना ॥

एव कारयितुराचार्यस्य राज्यसमं देयं । सर्वत्र मन्त्रप्रभावात्सिध्यति ।

प्रमाणबुध्या कार्यं ।

**अनुवाकः २.**

नमो हिरण्यबाहवे इत्यनुवाकस्य मण्डक ऋषिः । महागायत्री छन्दः ।

श्रीरुद्रोदेवता । ध्यानम्–

**मुक्तालंकृतसर्वांगं इन्दुगंगाधरं हरम् ।**
**ध्यायेत्कल्पतरोर्मूले समासीनं सहोमया ॥**

अर्द्धकृच्छ्रं चरित्वा अष्टसहस्रं चरुभोजी जपेत् ॥ तावत् शंभोरालयं एकादशप्रदक्षिणा। प्रतिसंध्यं कुर्यात् । जपसमाप्तौ देवमाराध्य तत्सन्निधौ एकादश ब्राह्मणान् भोजयित्वा कृत पुरश्चरणो भवति ॥

**मारणं ॥**

शत्रूणां मारणकामो रक्तसर्षपांस्तैलाक्तान् अयुतं जुहुयादृतावृत्तौ ॥

तेनकर्मणा शत्रवो नश्यति । सर्षपपिष्ठमादाय देवमनुलिप्य शत्रुनामग्रहणपूर्वकं जपेदष्ट सहस्रं । एकादशरात्रेण शत्रूणां राज्ञो महाज्वरो जायते ।

तेनैव ते नश्यति ।

**वश्यं ॥**

अथ, वशीकर्तुकामः पालाशाश्वत्थवैकंकतापामार्गाणां मधुघृताक्तानां अयुतं जुहुयात् । क्रमशोवर्णतुष्टयं वशमानयति ॥

**राज्यं ॥**

राज्यकामः कुसुमसौगन्धिकोत्पलानां मधुयुतं अयुतंजुहुयात् । राज्याश्रयं उपतिष्टते ॥

**श्रीः ॥**

श्रीकामः पंकजानामयुतं जुहुयात् । श्रीमान् भवति ।

**मेधा ॥**

मेधाकामः पालाशपुष्पं कलिलाज्येनाक्तं अयुतं जुहुयात् । मेधावी भवति ॥

**शत्रुजयं ॥**

शत्रून्जेतुकामः एकादशसहस्रं जपं कुर्यात् । शत्रवो विजिता भवन्ति ॥

प्रतिदिनं अष्टोत्तरशतं, अष्टविंशति वा प्रदक्षिणनमस्कारांश्च यावज्जीवं कुर्यात् । इहलोके सुखी भूत्वा, अन्ते कैलासमाप्नोति ॥

**अनुवाकः ३.**

नमः सहमानाय इत्यनुवाकस्य भगवानेव ऋषिः । बृहती छन्दः श्रीरुद्रो देवता ॥ ध्यानम्–

पंचविंशतिनक्षत्रो मायूरकृतशखरः ।
अकलंकशरत्पूर्णचन्द्रबिंब समाननः ॥
प्रातर्विबुद्धपद्माभं वसानः चर्म कोमलं ।
सव्यापसव्य विधृत कृत माला विभूषितः ॥
धर कदंब पुंजेन नाभिदेशप्रलंबिना ।
आजंघं प्रेक्षणोयेन प्रेक्षणोयोरि शत्रुभिः ॥

रूपयौवन संपन्न मूर्तेव वनदेवता ।
पुष्पिताशोक पुन्नाग सहकार शिखोपमा ॥
भूधरस्यचचावंगी कन्यालंकार शोभिता ।
आदर्शमूर्तिश्शोभानां वन्यानामिव निर्मला ॥
तस्याहस्ते धनुर्धृत्वा शरमेकंच निर्मलं ।
तदीयमंशमालंब्य श्लिष्टं वामेन बाहुना ॥
सुगंधिपुष्पस्तबकमाघ्रायघ्राय पाणिना ।
वीज्यमानो मन्दमन्दं नवपल्लवशाखया ।
समावृतो बालकैश्च श्वभिश्चापि मनोहरैः ।
गच्छद्भिरग्रतो दृप्तै ध्यातव्यो जगतां गुरुः ॥
एवं रूपो महात्तेजाः किरातवपुरीश्वरः ॥

कृच्छ्रं चरित्वा पंचसहस्र जपात् कृतपुरश्चरणो भवति ॥

जनपद व्याधिषु राजा शांति कारयेत् । सिद्धैर्ब्राह्मणैः एकादशभिरीश्वरालये जपः कार्यः । पंचभिः जपः । पंचभिर्होमः । एवं ब्राह्मणः तिलौदनं प्रतिनमस्कार जुहुयात् । शतसहस्रं जपः । एवं कृते व्याधिर्नश्यति ।

व्याधौ वाहनावासे अपामार्ग तण्डुलै राज्यमिश्रैः अष्टसहस्रं जुहुयात् ॥

अनुवाकः ४.

'नमः आव्याधिनीभ्यो' इत्यनुवाकस्य दुर्वास ऋषिः । महाविराट् छन्दः । शंभुर्देवता । ध्यानम्—

भस्म द्धूलित सर्वांगं जटामण्डलमंडितं ।
ध्यायेद्देव वृषारूढं गणेशयुतं हरम् ॥

कृच्छ्रं द्वादशरात्रं तदर्द्धं च कृत्वा नवसहस्रं जपेत् । ततः शिवालये अष्टसहस्रं प्रदक्षिणं कुर्यात् । यावत्प्रदक्षिणासमाप्तिः तावन्निरन्तर जपेत् । तदा कृतपुरश्चरणो भवति ॥ अत्र दिनादयो न प्रेक्षितव्याः । यदा रुचि स्तदा कर्तव्यं ॥

राजयक्ष्मा ।

तद्व्याधियुतो मर्त्यः सिद्ध द्विजं वृत्वा शांति कुर्यात ॥

ततो वृतो विप्रः कारयितुरग्नौ तत्गृहैकदेशे कुण्डं बाहुमात्रं विधाय तस्यपुरो वेदिं कृत्वा तत्र नवं घटं जलपूर्णं तन्तुवेष्टितं निधाय, देवं अनेनानुवाकेनावाह्य, गंधादिभिरभ्यर्च्य, गन्धं, कर्पूरं पुष्पं तामरसधूपं उशीरादिदशांगं, दीपंसर्पिषा समर्प्य, एवमाराध्य आत्मानमपि तत्वमाराद्य एकादशदिनानि दीक्षित्वा कुर्यात् ॥

प्रारम्भ दिने मन्त्रपुष्पांतं कृत्वा, अनुवाकेनैव एकादशकृत्वः प्रतिनमस्कारं आज्येन हुत्वा तत्सन्निधावेकविंशतिसहस्र जपेत् ।

तदा तत्प्रभति यावदन्तं अग्निः संरक्ष्यः । ततोपि परश्वः । नित्यकार्यं कृत्वा, तिल लाज दूर्वा व्रीहि यवैः आज्य मधुसिक्तै रेकादशकृत्वो अनुवाकेन होमः । त्रीणि दिनानि, प्रतिदिनं मधुसर्पिषा जुहुयात् ततो द्विने सप्तमाष्टमौ, अश्वत्थापामार्ग समिद्भिः पूर्ववत् होमः ॥

ततः एकदिनं आउदयात् सायांतं, आवश्यकनित्यकर्माऽविरोधेन निरन्तरं अनुवाकं जपेत् ॥ ततो नवमे मधुसर्पिषा हामः । दशमे आउदयात् अस्तमनांतं जपः । ततः समाप्तिदेने अनेनानुवाकेन अष्टसहस्रकमल पुष्पै प्रतिनमस्कारं देवमाराधयेत् । ततो गौरीं आराध्य, ब्राह्मणं व्याधिविमोचनमस्तु इति वाच्य । दानकाले। राज्ञः अष्टसहस्र, तदर्द्धं, अष्टशत वा, इतरेषां, अष्टशतं, तदर्धं, पंचविंशति निष्कवा । एवं एकस्य पृथक्दानं ततः कर्मदक्षिणां दातव्या ।

प्रतिदिनं एकनिष्कं । ततः सर्वदक्षिणेति धेनुर्देया । एवं समाप्य देवं विसर्जयेत् । ततो घटजलेन तं स्नापयेत् । प्रोक्ष्येद्वा । एतेन राजयक्ष्मा नश्यति । शंभुप्रसादेन दीर्घायुर्भवति ।

**मेहरोगः ॥**

स्वाग्नौ मधुसर्पिषा प्रतिनमस्कारं नवसहस्रमाहुतीर्जुहुयात् ।

**कुष्ठं ।**

शतसहस्र संख्यख्या अनुवाकं जपेत् ।

**ज्वरं ।**

ज्वरादि सन्निपाते, ब्राह्मणः नाभिमात्रजलेस्रोतसि स्थित्वा रक्तकमलपुष्पं अष्टसहस्रंनमस्कारं प्रतिनमस्कारं क्षिपेत् । शेषेण भृंगिरिटि पूजाकर्तव्या । महाज्वरो नश्यति ॥

राजयक्ष्मनिर्हरणं घोरत्वात् ब्राह्मणो विद्वानेव गुरुर्भवेत् ॥

**अनुवाकः ५. ६.**

नमोभवाय च, नमो ज्येष्टाय च इत्यनुवाकयो। श्री रुद्र ऋषिः महाविराट् महापंक्तिश्च च्छन्द सी ॥ शम्भुर्देवता । ध्यानम्–

**गौरीकरांबुज न्यस्त स्वर्णशैलशरासनं ।**
**इषुहस्तं रथारूढं नरनारीतनुं स्मरेत् ॥**

त्रिरात्रं चरुभोजी स्यात् ॥ जपेदयं निरन्तरं एकादशदिनानि कृतपुरश्चरणो भवति ॥ ततः कर्मोच्यते ।

**लक्ष्मीप्राप्ति ॥**

एताभ्यां श्वेतकमलैः प्रतिनमस्कारं मासं लिंगस्योपरिक्षिपेत् एकादश कृत्वः । राज्यश्रीवर्धते । ब्राह्मणान् एकादशसंख्यान् भोजयेत् देवतादक्षिणामूर्तेस्सकाशे ।

राज्ञां शत्रुबाधानिवृत्यर्थं प्रयोगः श्रीरुद्रभाष्ये द्रष्टव्यः ॥

**सन्तानप्राप्ति ॥**

वन्ध्यानां अनपत्यानां एताभ्यां स्वाग्नौ प्रतिनमस्कारं उदुंबरसमिधां दधिमधुघृताक्तानां एकविंशति सहस्रं जुहुयात् । नमस्कार गणित कलशैः तंतुभिर्वेष्टितैः जलपूर्णैः प्रतिनमस्कारमभिषिचेत् ।

जपेदष्टसहस्रं । एताभ्यामेव देवमभिषिचेत् सप्तनाडीकामात्रं ॥

प्रदक्षिणमष्ट सहस्रं । एताभ्यां पिष्टपिंडमभिमन्त्र्य प्राशयेत् । एताभ्यां शमी पत्रैः नद्यांस्रोतसि वा प्रतिनमस्कार एकादशकृत्वो जपेत् ॥

एतैः प्रयोगैः शुद्धानां रुद्रसमानोः पुत्रो भवति । स्त्रीपुंसोरष्टत्रिंशदष्टचत्वारिंशद्वर्षादूर्ध्वमपि प्रयुंजानयोः पुत्रो जायते ।

यस्तु स्वेव शंकरो भवति । शिवभक्तो जायते । तस्य हस्ते शूलांको भवति ॥

एताभ्यां घृतपायसं स्रावयित्वा अष्टसहस्रं जुहुयात् । तदाऽन्यजन्मनि ब्राह्मणो जायते । एताभ्यां सूत्रमभिमंत्र्य गर्भिणी हस्ते बध्नीयात् । तदागर्भनाशो नस्यात् ।

**क्रूरग्रह नाशनं ॥**

एताभ्यां क्रूरग्रहादि ग्रस्तानां भस्म धूपरक्षां कारयेत् ।

रात्रौ च शिखां बध्नीयात् । कुमारग्रह भयं न भवति ॥

अनुवाकः ७.

नमो दुंदुभ्याय च । अस्यानुवाकस्य । रोमश ऋषिः । अनुष्टुप् छन्दः । श्रीरुद्रो देवता । ध्यानम्–

**जटाभिर्लम्बमानाभि नृत्यन्त मभयप्रदम् ।**
**देवं शुचिस्मितं ध्यायेत् व्याघ्रचर्मपरिष्कृतम् ॥**

एकोपवासं कृत्वा अष्टशतं जपेत् । कृतपुरश्चरणो भवति ।

वश्यं ॥

चातुर्वर्ण्यवश्यकामः अश्वत्थोदुंबर वट प्लक्ष समिधां दधिघृताक्तानां अयुतं जुहुयात् ॥

मेधा ॥

कपिलाज्येन पंचसहस्रं जुहुयात् । मेधावी भवति ।

पुष्टिः ॥

पुष्टिकामो अपूपं नवसहस्रं जुहुयात् ।

आरोग्यं ॥

आरोग्यकाम खादिराणां दधिमधुघृताक्तानां पंचसहस्रं जुहुयात् ॥

रूपकामः

अयुतं चूतपल्लवान् दधिमधुघृताक्तानां जुहुयात् ॥

श्रीकामः

कांत रे स्व आकार प्रमाणमग्निकुडं खनित्वा तत्र मथिताग्नौ श्वेतकमलानां दध्याक्तानां पंचसहस्रं जुहुयात् । साक्षात् श्रीरूपस्तिष्ठति । तस्याः प्रसादेन तदन्वयो यावद्भूः तावद्वर्तते ॥

वस्त्रकामः ।

कार्पासपटकामः कार्पासबीजै मध्वक्तैः अयुतं जुहुयात् ॥

गो कामः ॥

धेनुकामः गवां व्रजेह्येतमनुवाकं जपन् प्रदक्षिणमयुतं कुर्यात् ॥

पुत्रकामः ।

पलाशसमिधां दधिमधुघृताक्तनां अयुतं जुहुयात् ॥

**आयुः**

दुर्वाणां घृताक्तानां अयुतं प्रतिवर्षं जुहुयात् ।। शतायुर्भवति ।।

**विद्या ।**

अश्वत्थसमिधां आज्याक्तानां शतसहस्रं जुहुयात् । सर्वविद्या पारंगोभवति ।।

**राजमुक्ति ।।**

सौगन्धिकानां मध्वक्तानां पंचलक्षं जुहुयात् । सम्राडभिजायते ।।

आदौ चांद्रायणं चरित्वा एतमनुवाकं विंशतिसहस्रं जपित्वा, ततः परं पंचसहस्रांतं प्रदक्षिणं, प्राणायामं कृत्वा, ततः पश्चात् स्वाग्नौ शंभुसन्निधौ पालाशाश्वत्थसमिधां मधुघृताक्तानां लक्षत्रयं जुहुयात् शंभुप्रसादात् मुक्तो भवति । अन्ये च तत्कुलजाता रौरवेपि पच्यमानाः शिवपुरे रमंते यावत् इन्द्रपंचकमतीतं भवति ।। तत्कुलजाता यावदियं पृथिवी तावद्वर्धन्ते ।।

ॐ नमः सोमाय च...प्रखिदते च पर्यन्तं एकोमन्त्रः । अस्य मन्त्रस्व भार्गव ईश्वर ऋषिः । महानुष्टुप् छन्दः । श्रीरुद्रो दैवता । ध्यानम्–

(तृतीयानुवाकवत्) कृछ्रद्वयं चरित्वा आदौ पंचशतं जपेत् । कृतपुरश्चरणो भवति ।

एतन्मन्त्रप्रयोगेण, चक्रवर्तिस्थानप्राप्त्यर्थं, राज्ञस्वशत्रु, सनगर नाशनार्थं, कैलासप्राप्त्यर्थं, ग्रन्थे उपदेशः विस्तारेणोक्तः ।।

नमो वः किरिकेभ्यो देवानाहृदयेभ्यः ।

नमो विक्षीणकेभ्यो ,, ,,

नमो विचिन्वत्केभ्यो ,, ,,

नमः आनिर्हतेभ्यो ,, ,,

नमः आमीवत्केभ्यो ,, ,, एताः पंचसमुदाय एको मन्त्रः ।।

अस्य अग्नि ऋषिः । त्रिष्टुप् छन्दः । श्रीरुद्रो देवता । ध्यानम्–

विश्वतः पाणि पादाब्जं विश्वताक्षिशिरोमुखं ।
ज्वलंतं विश्मावृत्य तेजोराशिं शिवं स्मरेत् ।।

पराकं चरित्वा चत्वारिंशत्सहस्रं जपेत् । कृतपुरश्चरणो भवति ॥

अनेन मन्त्रेण दुःसाध्यं किंचिन्नविद्यते । मन्त्रप्रभावात् सर्वं संपद्यते ॥

अनेन काम्यकर्मोच्यते ॥ देवस्यदक्षिणामूर्तेः सन्निधौ आत्माग्नौ मथिताग्नौ वा, लाजतिलानां लक्षं जुहुयात् । सुवर्णमुत्पद्यते ।

अपामार्ग, वेणुबीजानां दधिमधुघृताक्तानां अयुतं जुहुयात् । सुवर्णसहस्रमुत्पद्यते ।

**कन्याकामः ॥**

गुग्गुलेन स्वेष्ट कन्यासमाकृतिं कृत्वा तामुपलभ्य पंचसहस्रं जपित्वा ततस्तांछित्वा षट्सहस्रं जुहुयात् । सर्वाभरणभूषितां स्त्रीं लभते ॥

**राज्यलक्ष्मी ॥**

पद्मोत्पल कुमुदानां लक्षं जुहुयात् राज्यलक्ष्मीः प्रत्यक्षा भवति ॥

**भूतादिवश्यं ॥**

पलाशांकुराणां पयोआक्तानां लक्षं जुहुयात् । यक्ष राक्षस भूत पिशाचादयो दृश्यानुवश्या भवति ।

**स्पर्शवेदी**

महाकांतारभूतले अग्निकुंडं विधाय मथिताग्नौ बिल्वफलानामयुत जुहुयात् ॥

बिल्वपत्राणां घृताक्तानां मुष्टिमात्राणां पंचसहस्रंजुहुयात् । बिल्वफलाकारं सुवर्णमुत्पद्यते । स्पर्शवेदी पिण्डो भवेत् ॥

**सार्वभौम पुत्रार्थं ॥**

सार्वभौमसुतार्थी देवस्योपरि शुभ्राणि कमलानि गव्याज्याक्तानि लक्षं (अर्चयेत्) सार्वभौमपुत्रो भवति ।

**शिवभक्तपुत्रः ॥**

शमी समिधामग्रं नतं कृत्वा रजतपात्रे निधाय दधिमधुघृताक्तानां अयुतं जुहुयात् शिवभक्तं पुत्रं लभते ॥

**कवित्वं ॥**

श्वेत वचार्द्रफलचूर्णं रौप्यपात्रे निधाय कापिलाज्येन आलोड्य अयुताभिमंत्रितं कृत्वा सेवेत ॥ स्वयंकविर्भवति ॥

९ अनुवाकं ॥

महाभोग्यं ॥

उदुंबर समिधां दधिमधुघृताक्तानां अयुतं जुहुयात् । महाभोग्यमभिजायते ॥

मनोजवं ॥

मनोजवमिच्छन् जागरणं कुर्यात् । सांवत्सरिक कृच्छ्रं चरित्वा आत्मानं संशोध्य ततः अष्टादशदिनानि चरु शाकमूल फलाहारी निरन्तरं जपेत् ।

अन्तराबुद्धिपूर्वं स्वप्नो न स्यात्, अबुद्धिपूर्वं तु स्वप्ने स्नात्वा जपेत् ।

ततः दन्ते मन्त्रानुवशार्थं गुरवे निष्कपंचक सुवर्णं दद्यात् । ततः पंचाशत् सहस्रं गुरुसन्निधौ वा जपेत् । ततः साक्षात् उमापतिः रुद्रो प्रत्यक्षो भवति । तत्प्रसादात् मनोजवी भवतिः ॥ यं यं देशमभिकाभयते तं तं देशं गुरुं च स्मृत्वा मन्त्रमष्टशतं आवर्तयेत् । तद्देशगामी भवति ॥

अत्रापि पूर्ववत्पुरश्चरणं । अदृश्यावश्यकाले लोहितं चन्दनं कापिल पयसा संश्लिष्य तत्क्षोदमश्वत्थ पत्रे निधाय संस्पृश्य अष्ट सहस्रं जपेत् ॥

ततः तेनात्मानमुपलिप्य देवं स्पृष्ट्वा प्राणायामं धारयेत् । ततः केनचित् अदृश्यो भवति । राजवश्यकामो लोहितचन्दनमयुतमभिमंत्र्य तं तंतुवेष्टित गुटिकां कृत्वा नित्यवत् राजगृहे प्रवेशसमये स्वललाटे धारयित्वा प्रविशेत् । राजा राजपुरुषाश्च वश्या भवंति ।

यंयं नाशयितुमिच्छेत् तस्य तस्य नामग्रहणपूर्वकं अयुतं एकपादो भूत्वा देवस्य सन्निधौ जपेत् । शीघ्रमेव नश्यति ।

देवस्य दक्षिणामूर्तेः सन्निधौ नित्यमष्टशतं जपेत् । येनकेनापि भयं न विन्दते ॥

सर्वस्मान् महापातकान् मुच्यते । अनेन मलयक्षोदमभिमंत्र्य ललाटे धारयेत् ।

सर्ववश्याःस्युः ॥

अपामार्गसमिद्भिः अष्टसहस्रं प्रतिजन्मदिने जुहुयात् । अपमृत्युंजयति ।

वृष्टिकामः सूर्यं जपापुष्पैरयुतैः आराधयेत् । रक्तोष्णीषवसनानुलेपनो भूत्वा आदित्यवारे । भगवानादित्यो महावृष्टिं मुंचति ॥

दूरमार्गकामी दशशर्करा गृहीत्वा अष्टसहस्राभिमंत्रिताः दशदिक्षु प्रक्षिप्य गच्छेत् ॥

सतु यावद्गमनं क्षेमी भवति । कर्मणां अविघ्नकामो मन्त्रमयुतं जपित्वा कर्मआरभेत । निर्विघ्नो-भवति । पुत्रकामो अनेन लक्षं आज्येन जुहुयात् । वंशकरं पुत्रं लभते । यं यं जतुमिच्छे त्तं तं सिकताकारं विधाय तस्य शिरसिस्थित्वा अयुतं जपेत् । सर्वत्र विजयी जायते । अन्यदपि सर्वमनेन संभवति ।

मन्त्रप्रभाव इवस्य साक्षात् सिद्धानेवचलति । अन्येषां वृथा प्रयासमिति मन्तव्यम् ॥

आरात्ते...यच्छद्विबर्हाः । अत्रि ऋषिः । त्रिष्टुप्छन्दः । शंभुर्देवता । ध्यानम्—

**कुर्वाणं सन्निधौदेव्या देवमानन्दतांडवं ।**
**हुताशनधरं ध्याये त्तप्तकांचन सन्निभम् ॥**

त्रिरात्रं उपोष्य त्रिरात्रं निरन्तरं जपेत् । कृतपुरश्चरणो भवति ।

इहजन्मनि जन्मांतरे वा आयुषः क्षयकारणैः कर्मभिः बालादयो म्रियन्ते । तेषा मायुर्वर्धनाय मन्त्रेणानेन प्रयोगमुच्यते । नित्यवत् अनेन स्वमन्त्रैः स्वाग्नौ सर्षिषा अष्टसहस्रं अष्टशतंवा जुहुयात् । दूर्वाणां दधिमधुघृताक्तानां अष्टसहस्रं जुहुयात् । स्वजन्मनक्षत्रे अष्टसहस्रं जपेत् । आर्द्रायां विशेषेण ॥ प्रत्यार्द्रं दूर्वाऽपामार्ग शमीतिलानां दधिमधुघृतावतानां प्रत्येकं अयुत जुहुयात् । रात्रौ यावत्पच सहस्र जपेत् तावत्प्र-दक्षिणाः कुर्यात् । स्वयं अशक्तश्चेत् स्रोतसि होमः ।

तदपि अशक्तश्चेत् जप एव कार्यः । मन्त्रेणानेन देवस्योपरि अर्कसुमनोभिः अयुत आराधयेत् । तस्य श्रीः वर्धते । पश्चिमद्वारालये वा चरु भोजी अधःशायी ब्रह्मचर्यवान् अक्षारलवणाशी देवमभितः सहस्र जपेत् । एव कृते शतायुः सप्तजन्मसु भवति अशक्तस्य भिक्षाट नाहार प्रशस्तं इति ॥

स्तुहिश्रुत सेनाः । वैयाघ्रऋषिः । त्रिष्टुप् छन्दः । श्रीरुद्र देवता । ध्यानम्—

**उद्यद्भास्करकोटि प्रकाशम काशमादीप्त दहनमूर्धानं ।**
**अबर निलयं भीमं ध्यायेदभयं शिवं सुरौघनुतम् ॥**

एकरात्रमुपोष्य, त्रिरात्रं निरन्तरं जपेत् । वैकंकतसमिधां विषतैलावतानां श्मशानाग्नौ लक्षं जहुयात् । शात्रवोनश्यति । शत्रुनामग्रहणं कृत्वा देवस्य सन्निधौ भस्मपाणिरयुतं जपेत् । शत्रोः महाज्वरो भवति । श्वेत सिद्धार्थैं अयुतं जुहुयात् ।

शत्रोः मसूरिकाः जायन्ते । ताभिरेवम्रियते । शत्रोः गृहक्षेत्रादिषु मन्त्रेणानेनावटं खानयित्वा तत्र कल्पं रोमास्थिशर्करादिकं खानयेत् । तस्य शीघ्र नाशो भवति ॥

परिणोरुद्रस्य...मृडय ॥ श्रीरुद्र ऋषिः । त्रिष्टुप् छन्दः । श्री रुद्रोदेवता ।

कृच्छ्रं चरित्वा, नवदिनानि प्रतिदिनं अष्टसहस्रं जपेत् । कृतपुरश्चरणो भवति ॥

पुत्रकामनार्थी, दावानल रुदस्य पलाश खदिरादे। समिधां दधिमधुघृताक्तानां शिवालयपश्चिमद्वारे अयुतं जुहुयात् । शिवमिवव पुत्रं लभते । देवालये अश्वत्थ छायायां, आत्मगृहगोष्टयोर्वा आर्द्रायां, अमायांवा, कृष्णाष्टम्यां वा प्रारम्भः । पूर्वेद्युः चरुभोजिनौ दंपती भवत। । प्रतिमन्त्राक्षरं कलशान् तन्तुवेष्टितान् जलपूर्णान् प्रतिष्ठाप्य, तेषां मध्यकुंकुममुच्चैस्तरं निधाय तस्मिन्देवं सोमं आवाह्येत् । आयातु भगवान् कैलासात् इत्यावाह्य गंधादिभिरभ्यर्च्य ततः पूर्ववन्मध्यमारभ्य प्रतिकलशं मन्त्रोदित मेकमेकमक्षरं न्यसेत् । ततो नव सहस्रं जपेत् । तत उद्देशकाग्नौ श्यामाकलाजानां मधुघृताक्तानां अष्टसहस्रं हुत्वा, तन्मात्रं आज्येन हुत्वा, ततः आदिकलश मादाय तत्तदक्षररूपिणं भगवंतं स्मरन् स्नापयेत् । तत कलशवस्त्रव्रीह्यादीनां आचार्याय दत्वा तं भोजयित्वा, पंचनिष्कं, त्रयं वा दक्षिणां दद्यात् ॥

एवं रूपायादक्षिणायाः किंचिदपि न्यूनं न भवेत् । एवं दत्वा दंपती भुंजीयातां ।

एवं तयोः पुनः शिवतमो दीर्घायुरुत्पद्येतां । एवं कर्तुमशक्तविषये अन्य प्रयोगः उच्यते ॥ अशक्तो देवालय पश्चिमद्वारे मन्त्रमिमं जपेत् । सूर्य स्योदयादि पुनः उदयपर्यंतं अहोरात्रं देवालय प्रदक्षिणं कुर्यात् । तत्र विघ्नं यदि जायते अशक्ता न संतिचेत्, शक्तस्सन् अशक्तंमात्पानं मत्वा कुर्वन् नश्यति ॥

तस्मात् पुरश्चरणयुक्तो गुरुरप्रमत्तः कुर्यात् । अशक्तानां प्रजाकामानां अगतीना मनुग्रहं वक्ष्यामः । अष्टशत मेकचत्वारिंशतिमेकविंशतिवादिनानि दीक्षित्वा चरुभोजी पश्चिमद्वारालये प्रतिदिनं अष्टशतं जपेत् । प्रदक्षिणमष्टशतं कुर्यात् । नित्यवत् अश्वत्थस्य पूर्वोतर मूलादारभ्य अष्ट सहस्रं जपेत् ।

अश्वत्थस्य चतुर्दिक्षु प्रतिदिनं अष्ट सहस्रं जपेत् । एवं समाप्य यावच्छक्ति तावद्ब्राह्मणान् दीक्षायुक्तान् भोजयेत् । एवं कृते वंशकरं पुत्रं लभते ॥

मीडुष्टम...विभ्रदागहि । वैराज ऋषिः । त्रिष्टुप् छन्दः श्रीरुद्रो देवता । ध्यानम्—

मंगळायतनं देवं युवानमतिसुन्दरं ।
ध्य येद्वनचराकार मागच्छंतं पिनाकिनम् ॥

अन्यत्प्रयोगः । अर्थनाशभये, प्राणसंशये, घोरार्तिभवेचोरादिभयेवा एकरात्रं पंचदशसहस्रं जपेत् । ततः केवलाज्येन पञ्चसहस्र जुहुयात् ॥

विकिरित...पन्तुताः ॥ पुलस्त्यऋषिः । त्रिष्टुप् छन्दः । शंभुर्देवता ।

प्रसन्नवदनं शांतं चरितोद्वाहमण्डनं । अंबायाः सहितं ध्यायेत्सुरसंघैरभिष्टुतम् ॥

त्रिरात्रं चरुभोजी दशसहस्रं जपेत् । तदन्ते दशसहस्र प्रदक्षिणा कुर्वन् जपन्कृतपुरश्चरणो भवति । अनेन महाजनविरोधे संकटसंघातं, दधिमधु घृताक्तानां समिधां अयुतं जुहुयात् । भयं न भवति ।

सर्वान्जेतुकामः अपामार्ग समिधां कपिलाज्यसिक्तानां शतसहस्रं जुहायत् । एतेनैव वराहादयो वश्या भवन्ति । तिरश्चोजेतुकामो बिल्व समिधां दधिमधुघृताक्तानां शतसहस्रं जुहुयात् ।

अग्नीजेतुकामो जलस्यमध्ये आत्माग्निमादाय कापिलेन पयसा शतसहस्रं जुहुयात् । अद्भ्यो भयं न जायते । एवं अन्यदपि यद्यत् जेतु कामो भवति । तत्तन्नामग्रहणं कृत्वा कपिलाज्येन शतसहस्रं जुहुयात् । तत्तत्सर्वं जयति ॥

सहस्राणि सहस्रधा...कृधि ॥ नारदऋषिः । अनुष्टुप् छन्दः । श्रीरुद्रोदेवता ॥ ध्यानम्–

**सर्वपापहरं देवं सर्वाभरणभूषितं ।**
**सर्वायुधधरंदेवं सर्वलोकमहेश्वरम् ॥**

कृच्छ्रादीन् चरित्वा, पञ्चदश सहस्रं जपेत् ।

अनेन मन्त्रेण राजोपद्रवशांतिं कुर्यात् । शाल्मली वैकंकतः समिद्भिः व्रीहियवतिलानि सर्पिसिक्तानां अयुतं जहुयात् । उपद्रवाः नश्यंति ।

श्री दक्षिणामूर्तिसन्निधौ शत सहस्रं जपेत् । प्रधानपुरुषमारणे वल्मीक मृत्तिकालिंगं कृत्वा अनेन मन्त्रेण यावच्छीर्ण मभिषिंचेत् । ततस्तां मृदमादाय नद्यां प्रक्षिप्य तत्तीरे स्वाग्नौ शुद्धतण्डुलैर्घृताक्तैः अयुतं जुहुयात् तस्य मरणं उपशमयति । महाकांतारगामी भस्मदष्टसहस्रमभिमन्त्र्य सर्वतेन शरीर मवलिप्य गच्छेत् तस्य किमपि भयं न भवति ॥

कृष्णचतुर्दश्यां रात्रौ श्मशाने बिडालमांसेन सोदनेन बलि मुपहरेत् ।

राक्षसेभ्यो बलि मुपहरति इति वदेत् । ततस्तेभ्यो भयं न विद्यते ।

महीशास्तु कोपोपहतानां सुवर्ण महाशास्तृसन्निधौ, अनेन अष्टसहस्रं आज्येन जुहुयात् । कुक्कुटमांसेन बलिमुपहरेत् । तत्र नव वसनानि सुवर्णादिकं च होमस्य दक्षिणां दद्यात् । निष्कत्रयं एकंवा । अन्येषामपि दैवोपहतानां अनेनमन्त्रेण सर्पिषामष्टसहस्र जुहुयात् । दैवोपद्रवाः नश्यन्ति ॥

**सहस्राणि सहस्रशो...तन्मसि ।।** इत्यारभ्य-नीलग्रीवा...उपश्रुताः अंत्यं ऋक्चतुष्टयं एकमन्त्रः । दुर्वास ऋषिः । अनुष्टुप् छन्दः । श्री रुद्रो देवता । ध्यानम् ।

**दंष्ट्राकरालवदनं ज्वलज्ज्वलनमूर्धजं ।**
**बिभ्राणंत्रिशिखं दीप्तं ध्यायेत् भुजगभूषणम् ।।**

चांद्रायणं चरित्वा कायशोधनार्थं पंचसहस्रं जुहुयात् ।

ततः कृतपुरश्चरणो भवति । आभिचारिकं कर्म मन्त्रैरेतैः कुर्यात् ।

राजा ब्राह्मणैः स्वदेशजातैः होमं कुर्यात् । शाल्मली सालवेत्रवेणुशराणां अर्कतूलवेष्टितानां शशरुधिराक्तानां शतसहस्रं जुहुयात् । अत्रपिष्टेन स्निग्धेन सूक्ष्मेण शत्रुप्रतिकृतिं कृत्वा प्राणान् संस्थाप्य क्रमेणछित्वा अष्टसहस्रं जुहुयात् । एतैः प्रयोगैः शत्रवो नश्यन्ति । एतैरेव मन्त्रैः अभिचारं प्रतिकुर्वाणां दूर्वाणां दधिमधुघृताक्ताना पंच सहस्रं जुहुयात् ।

राज्ञस्तस्याभिचारदोषा नश्यन्ति कारयितुः ।

**येवृक्षेषु, ये भूतानां ये अन्नेषु** ऋक्त्रयं एकमन्त्रः

एषां त्रयाणां ऋषि इत्यादि सर्व पूर्ववत् ।।

**ये दथां...ये तीर्थानि** । द्वयं एकमन्त्रः । देवलऋषिः । अनुष्टुप् छन्दः । श्रीरुद्रो देवता । ध्यानम्–
**प्रथम ऋक्वत् ।। दंष्ट्रा ..भुजगभूषणं ।।**

कृच्छ्रं चरित्वा पंचसहस्रं जपेत् । कृतपुरश्चरणो भवति ।

एताभ्यां ऋतुगमनदिने, स्वाग्नावष्टसहस्रं कापिलेन पयसा सर्पिर्विमिश्रेण जुहुयात् । ततः ऋतुगामी भवेत् । ततः विद्वान् वशंकरः पुत्रो जायते । एताभ्यामेव महातीर्थ गमने, स्वाग्नौ शुद्धतण्डलै राज्यसिक्तैः अयुतं जुहुयात् । तीर्थमनालपन् गच्छेत् । स्नात्वा आगत्य स्वाग्नि आराध्य वाचं विसृजन् तीर्थफलं यथार्थमश्नुते ।।

**य एतावन्तश्च . तन्मसि ।।** ऋष्यादिकं पुरश्चरणं च पूर्ववत् ।।

**नमो रुद्रेभ्यो ये पृथिव्यां ये अन्तरिक्षे,**
**येदिवि यषामन्न वातोवर्षमिषव स्तभ्यो दश प्राची दधामि ।।**
**नमो रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवस्तेभ्योदशप्राची दधामि ।**
**नमो रुद्रेभ्यो येऽन्तरिक्षे येषांवात इषमस्तेभ्योदश दधामि ।।**

**नमो रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो दश...दधामि ॥**

एषां त्रयं एको मन्त्रः । भगवान् शंभुऋषिः । अनुष्टुप्छन्दः । रुद्रो देवता ।

एकविंशति दिनानि दीक्षित्वा पंचपंचदिनानि, नान्य वस्तु भुंजीत । आममेव सर्वं भवेत् ।

प्रथमपञ्चकं पयः । द्वितीये फलं । तृतीये दधि चतुर्थमपि फलं । एकदिन उपवासः । एवं चरित्वा एकविंशति दिनानि हविष्याशी तिष्ठन् सदा जपेत् । ततः पञ्चदिनानि गळप्रमाणजलस्थो भवेत् । एकदिनं अघमर्षणविधानेन जपेत् । आचार्याय दशनिष्क सुवर्णं दद्यात् । तत्समांच शुश्रूषां कुर्यात् । एवं कृतपुरश्चरणो भवति ।

ततो नित्यवत् स्वाग्नौ अनेनाष्ट सहस्रं अष्टशतं वा अज्याहुती र्जुहुयात् । यावज्जीवं अनन्यमना जपेत् । ततोऽनेन कर्तव्य । एवं सिद्धस्य अमायां स्वाग्नौ कपिलाज्येन अष्टसहस्रं जुहुयात् । हुत्वा केशानालिप्य अष्टशतं जुहुयात् । अथर्वशिरः प्रत्युक्तविधानेन आराधनं । ततः कृत्या रक्तांगी रक्तमूर्धजा रक्तनयनोत्पद्यते । पूर्वमेव अजारुधिरपूरितान् चतुरः कुंभान् स्थापयित्वा, तैः तां तर्पयेत् । नान्यथा आत्मानं नाशयेत् । तथा सर्वान्नाशयेत् । सर्वंचाभिमतं साधयेत् । अनेन आज्येन अयुतं जुहुयात् । कालज्ञानमुत्पद्यते । आयुषः प्रमाणं सर्वमेवोत्पद्यते ।

कापिलेन पयसा अयुतं जुहुयात् । जातिस्मरो जायते । तत् फलं पूर्वमेवोक्तं विस्तरेण ।

मिश्रमेवं आराद्य तत्रसन्निधा वपुस्थान मन्त्रं जपित्वा, ततः पट संस्कारमन्त्रेण होमं कुर्यात् ॥ होमद्रव्य च तिलदूर्वाग्रलाज तुलसी उशीर दधि मध्वाज्य संयुतं जुहुयात् । ततो हविष्पूजा । अर्वाक् प्रस्थतंडुल पक्वं हविः तेनाग्नौ होमं कुर्यात् ।

तेन मन्त्रेण होतव्यं ततो गन्धवासंकर्पूर युक्तंदद्यात् । उद्दिशितो वान्यो भुक्ते तदेव गुर्वोसंभवान् । एवं सार्धं तद्युगंच स्मृष्ट्वा जपेदाचार्यः । तत्र नित्यवद्वस्त्रपरिवृत्तिः वसनोत्तरीयैश्च भवतः । एवं अर्वाक्‌द्वयं च पूजा । ब्राह्मणानपि तावतो भोजयेन्नित्यं । एवं विधानस्य राज्ञ एव शक्तिः । एवं कृते सदपत्यो आयुष्मान् भवेत् । गर्भपातो न विद्यते । सर्वं गन्धादन्यदुपदेशतः प्रधानं ॥

होमदेश स्त्री, शूद्रादयः न प्रविशेयु । न पाषण्डादयो वैदिकत्वान्मन्त्रस्य ।

अन्त्य दिने स्नातां तत् दण्डदानरूपेण दद्यात् गुरवे । ततः कुमारग्रहार्थं गणपूजां कुर्यात् । सदपत्या-युष्मती भवति ॥ यथेद प्रसंगादन्यत् क्रमाद् उच्यते ॥

कन्यार्थी लभते कन्यां हुत्वा लाजान् घृतप्लुतान् ।
अपामार्ग समिद्धोमैः अलक्ष्मीं नाशयेद्बुधः ॥
सर्वकल्मषनाशाय जुहुयाच्च तिलाहुतीः ।
ब्राह्मणादीन् वशे कुर्यात् हुत्वा खदिरसंभवान् ।
सितरक्तैर्नीलपीतैः सूत्रै संवेष्टितान् क्रमात् ।
लक्षं हुत्वा घृतं, सर्वान् कामानाप्नोति साधकः ॥
जुहुयाद्वस्त्रकामस्तु कुसुमैः कुंकुमादिभिः ।
यद्वर्णं जहुयात्पुष्पं तद्वर्णं वस्त्रमाप्नुयात् ।
वृष्टिकामो शुचौदेशे गोमयेनोपलेपिते ।
रक्तद्रव्येण तत्रैव मंडलं परिलेपयेत् ।
मंडलस्य पुरस्तात्तु नवकुंभं निधापयेत् ।
सूत्रेण वेष्टितं सम्यक्पूरितंगन्धवारिणा ॥
आवहयेत्तत कुंभे सूर्यमेकाग्रमानसः ।
तत्रस्थमर्चयेद्देवं पूर्ववत्साधकोत्तमः ॥
पयसा जुहुयात्तत्र शतमष्टोत्तरं बुधः ।
ध्यायन्नेकाग्रधीः सूर्यं जपेन्मन्त्रं सहस्रकं ॥
एवं कुर्वीत सप्ताहं द्वादशाहमथापि वा ।
ततः प्रसन्नो भगवान् महावर्षं प्रमुंचति ॥
अहोरात्र मुपोष्यैव पुत्रकामश्शुचिव्रतः ।
पायसं जुहुयादग्नावष्टोत्तरशताहुतीः ॥
ऋतुस्नातांततोभार्यां शुचिवस्त्रामलकृतां ।
भोजयेद्धुतशेषं तु जपन्नष्टशतं बुधः ॥
ब्राह्मणान्भोजयेच्चैव कारयेत्स्वस्तिवाचनं ।
ततः पुत्रमवाप्नोति तेजस्विनमनामयं ॥
अनिष्टदर्शने चैव तथा दुःस्वप्नदर्शने ।
आभिचारकृतैर्दोषैः अलक्ष्म्याच समावृते ।
त्रिप्लदादुपसर्गेच भये च समुपस्थिते ।
तथा च ग्रहपीडायां भूतावेशकृतेषु च ॥
एवमादिषुचान्येषु दोषपूर्पाहितेषु च ।
पूर्वोक्तमण्डलंकृत्वा नवकुंभं तथैव च ।
गधोदकेन संपूर्णं सर्वमंगलसंयुतं ।

एलालवंग कर्पूर निश्जातीपलैर्युतं ।
देवमावाह्य कलशे अर्चयेत्तत्र होमयेत् ।
मन्त्रेणानेनतद्देव मष्टोत्तर सहस्रकं ॥

अभिमंत्र्य ततस्तेनह्यात्मनो वा परस्य वा ।
अभिषेकं प्रकुर्वीत सर्वदोषैर्विमुच्यते ॥

यस्तु मन्त्रं जपेन्नित्यं प्र तस्जात्वा सहस्रकं ।
श्रीरारोग्यं च तेजश्च वर्धते तस्य सर्वदा ॥

संवत्सरं जपेद्यस्तु क्षीराहारो जितेंद्रियः ।
अर्चन च यथाशक्ति कुर्वन्नयुतमन्वहम् ।
संसिद्धिमतुलां गच्छेत् अणिमादिगुणैर्युतां ।
किं तस्य मानुषैर्भोगैःप्रसन्ने वै जगत्पतौ ॥

बहुना किमिहोक्तेन तच्चित्तस्तत्परायणः ।
तद्भावभावितो मन्त्रं जीवन्मुक्तो भवेन्मुनिः ॥

इमा रुद्राय ..अनातुरं ॥ मृडानो...प्रणीतौ ॥ एकमन्त्रः ॥

एतद्मन्त्रद्वयस्य मार्कण्डेयऋषिः । जगती छन्दः । श्रीरुद्रोदेवता । ध्यानम्–

दिव्यसिंहासनासीनं स्तूयमानं महर्षिभिः ।
प्रसन्नवदनं ध्यायेत्सोमं सोमार्द्धशेखरम् ॥

कृच्छ्रं चरित्वा नवसहस्रं जपेत् । कृतपुरश्चरणो भवति ॥

अमावास्यायां चतुष्पदे अग्नि उपसमाधाय दधिसारमयुताहुतिमात्रं जुहुयात् ॥

गवादीनां शांतिर्भवति । एताभ्यामेव राजवाहनानां शांतये जलं स्पृष्ट्वा प्रत्यार्द्रं अयुतं जप्त्वा तज्जलेन वाहनशालां प्रोक्षयेत् । शांतिर्भवति ॥

वाहनानां किंचिदुपयोज्यं तेनजलेन मिश्रितं कृत्वा उपयोजयेत् । तिरश्चां शांतये तिलमाज्यमिश्रं अयुतं जुहुयात् । अन्येषां शांतये दूर्वाणामयुतं जुहुयात् ।

तेषां शांतिर्भवति ॥

**मानोमहांतं...रीरिषः ॥** अस्यमन्त्रस्य भृगुऋषिः । जगतीछन्दः । नन्दिकेश्वरात्मको श्रीरुद्रो देवता । ध्यानम्–

**बालेन्दुमकुटं देवं तरुणादित्यविग्रहं ।**
**ध्यायेन्नन्दीश्वराकारं गणेश्वरसमावृतम् ॥**

उपवासत्रयं कृत्वा पञ्चसहस्रं जपेत् । कृतपुरश्चरणो भवेत् ।

अनेन स्वजनरक्षा कर्तव्या । यवतिलानाज्याक्तानां अयुतं जुहुयात् ।

अश्वत्थ समिधामयुतं जुहुयात् । आज्येन अयुतं जुहुयात् । प्रतिसंवत्सरं आर्द्रायां अयुतं जुहुयात् । एवं कृते आत्मीयस्त्रीबालवृद्धजनस्य शांति र्भवति ॥

अन्यस्मिन् शांति विषये जपमयुतं कुर्यात् ॥

**मानस्तोके...विधेमते ॥** अस्य मन्त्रस्य रुद्रऋषिः । जगतीछन्दः । श्रीरुद्रोदेवता । ध्यानम्–

**दधानमेकादशधा विभज्य देहं विशुद्धस्फटिकप्रकाशम् ।**
**तेजोमयं शूलिनमिन्दुमौलिं विचिन्तयेदत्र सदैव रुद्रम् ॥**

कृच्छ्रं चरित्वा उदुंबरपात्रेण कापिलं सर्पिः सहस्रमभिमन्त्रितं कृत्वा तेन स्वग्नौ मथितेवा अष्टसहस्रं हुत्वा, महाव्याहृतीभिर्हुत्वा शतं शेषभशित्वा त्रिरात्रमुपवसेत् ।

ततः चरुभोजी पञ्चाशत्सहस्रं जपेत् । गुरवेपञ्चनिष्कं दद्यात् । कृतपुरश्चरणो भवति ॥

अनेन आयुष्कामानां राज्ञां प्रयोग पूर्वमुलः ।

द्यूते व्यवहारे च मन्त्रमेतं जपेत् । न पराजितो भवति । त्रिरात्रं उपोष्य निरन्तरं जपेत् ।

चरुभोजी बिल्वफलानां मध्वक्तानां अयुतं जुहुयात् । स्वर्णसहस्रं लभते ॥

अनेनैव संवत्सारं चरुभोजी कपिलाघृतेन स्वाग्नौ नित्यं अष्टसहस्रं अष्टशतं वा जुहुयात् ।

**द्रापे अन्य सस्पते** इत्यनुवाकस्य पुलस्त्य ऋषिः । आस्तार पंक्तिः छन्दः । भैरवरुद्रो देवता । ध्यानम्–

**आगुल्फास्तृतकंचुको डमरुकस्निग्धो ल्लसत्कुतुकः**
**शूली कुण्डलितश्रवाः सुतिलको मंजु क्वणन्नूपुरः ॥**
**श्रीमन्निर्मलदन्तपंक्ति किरणः श्वेतायमानाकृतिः**
**देवो भैरववेषभूषितवपुः ध्येयो मृडानीपतिः ॥**

एवं विश्वरूपेण देवं स्तुत्वा ध्यात्वा अतः परं अभयं याचेत् ॥

एकाहं उपवासं कृत्वा अयुतं जपेत् । कृतपुरश्चरणो भवति ॥

**धनकामः**

कापिलज्येन आर्द्रायां अयुतं जुहुयात् । कृतधनो भवति ॥

**ज्वरशांतिः ।**

सन्निपातज्वरे तस्य शिरस्थो दूर्वाग्राणां पंचसहस्रं जुहुयात् ।

तस्य ज्वरं नाशयति । दीर्घायुर्भवति ॥

**आभिचार शांतिः—**

वैकंकतानां अयुतं जुहुयात् । तस्य आभिचारेभ्यो भयं न विद्यते ॥

**महाजन द्रोहशांतिः ।**

आज्यासिक्त तिलेन अयुतं जुहुयात् । ततो भयं न विद्यते ॥

**भूतभयं—**

उदुंबर तिलानां । आज्यासिक्त तिलेन अयुतं जुहुयात् । सर्वभूतेभ्यो भयं न विद्यते ॥

**रुद्रदर्शनं—**

ग्राम नगर मध्ये अग्निमुपसमाधाय तत्र घृताक्ततिलपिष्टैरयुतं जुहुयात् ॥

अश्वत्थदलेषु बलिं उपहरेत् । आदावष्टसहस्रं जुहुयात् ।

तस्य रुद्रो भैरवरूपी भूतैस्सह स्वयं दृश्यो भवति । दृष्ट्वा यदि चलेत् उन्मादी भवति । अचलस्य महासिद्धिर्भवति । आपादिततद्रूपं स्मरेत् आपद्भ्यश्च मुक्तो भवति ॥

**याते रुद्र जीवसे ॥**

अस्य मन्त्रस्य । श्रीरुद्रऋषिः । स्कन्दरूपी रुद्रो देवता । अनुष्टुप् छन्दः ॥ ध्यानम्—

**द्रुतचामीकरप्रख्यं शक्तिपाणिं षडाननं ।**
**मयूरवाहनारूढं स्कंदरूढं शिवं भजे ॥**

अष्टशतप्राणायामान् कृत्वा पंचसहस्रं जपेत् ॥ कृतपुरश्चरणो भवति ॥

**गर्भरक्षा—**

व्यक्तगर्भे तृतीयमासे रक्षां कुर्यात् । रुद्रमन्त्र सिद्धेन ब्राह्मणेन, तदभिवृद्धौ स्वविभवानुगुणमलंकृत्य शंभुरिव तं नमस्कुर्यात् । साधुगर्भे असाधवो न प्रेक्षितव्याः । यदाभिरुचिर्भवति तदेव कर्तव्यं । राज्ञो गृहांतराले

विविक्ते अर्वाक् अर्वागामिद्वयं स्वीकृत्य ध्वजाद्यलंकारैः अलंकृत्य मन्त्रद्वयेन प्रस्थमात्रं शुद्धतण्डुलैर्विकीर्य, तस्मिन्नग्निकुंडं वेदिकांच कृत्वा, वेदिकायां साधारण घटोपरि महासेन (सुब्रमण्य) मन्त्रेण स्वर्णपुष्पेण शंभुमावाह्य तस्मिन्नर्वागामिद्वयेन, कलशान् बिंदुयुतान् तन्तुवेष्टितान्, स्वर्णगर्भान् शरावपिहितान् समुद्रगामि नदी जल संपूर्णान्, नवपटछन्नान् निधाय तन्मध्ये जलपूर्ण घटमेकं आर्द्रादिदिवसगणेन सुवर्णान्यत्र नवरत्नपूर्णं कृत्वा, त्रीणि नीर घटे प्रक्षिप्य महार्ध्यवसनैः प्रच्छाद्य सुस्थिरान् कृत्वा, देवस्याराधन गन्धलेपं श्रीकण्ठं तामरस पुष्पं, शीतारिधूपं यावदन्नं सर्पिषा सर्वत्र कर्पूरम्–

## वायु मन्त्र प्रयोगः

वायवाय हि सूक्तेन खेचरत्वं लभेन्नरः ।
देवतावश्यमाप्ना तिचैकवारं दिनेदिने ॥

१. वायवायाहि दर्शते मे सोमा अरं कृताः ।
तेषां पाहि श्रुधीहवं ॥

२. वायउक्तेभिर्जरन्ते त्वामच्छाजरितारः ।
सुतसोमा अहर्विदः ॥

३. वायो तव प्रपृंचती धेना जिगातिदाशुषे ।
उरूची सोमपीतये ॥

४. इन्द्रवायू इमेसुता उपप्रयोभिरागतं ।
इन्दवोवा मुशंतिहि ॥

५. वायविन्द्रश्चचेतथः सुतानां बाजिनीवसू ।
त वायात मुपद्रवत् ॥

६. वायविन्द्रश्चसुन्वत आयातमुपनिष्कृतं ।
मक्षिव त्थाधियानरा ॥

७. मित्रं हुवे पूतदक्ष वरुणं च रिशदसम् ।
धियं घृताचीं साधन्ता ॥

८. ऋतेन मित्रावरुणा वृता वृधावृतस्पृशा ।
क्रतुं बृहंतमाशाथे ॥

९. कवीनो मित्रावरुणा तुविजाता उरुक्षया ।
दक्षं दधाते अपसं ॥

१–३ मधुच्छन्दावैश्वामित्रः । ४–६ वायुः । ७–९ इन्द्रवायुः ऋषयः ।
मित्रावरुणौ देवता । गायत्री छन्दः ॥

सदसस्पतिमेकर्चं मेधाकामो जपेद्व्रती ॥
अस्यमन्त्रस्य । ब्रह्मणस्पतिः ऋषिः । सोम इन्द्रो दक्षिणा च देवता । गायत्री छन्दः ।

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यं ।
सनि मेधा मयासिषम् ॥

सप्तजन्म कृतं पापं कृत्वा चाभक्ष्यभक्षणं ।
तद्विष्णोरित्यपां मध्ये सकृज्जप्त्वा विशुध्यति ॥

तद्विष्णोरित्यस्य मन्त्रस्य । मेधातिथिः कण्व ऋषिः । विष्णुर्देवता । गायत्री छन्दः ॥

तद्विष्णोः परमं पदं सदा पश्यंति सूरयः ।
दिवीव चक्षुराततम् ॥

ततः कस्येति मन्त्रेण जुहुयात्त्रिसहस्रकं ।
प्रियगु त्रिमधुर्युक्तं ऋणनाश तु भूतिदम् ॥

कस्येतिमन्त्रस्य । आजिगर्तिः शुनःश्शेपः सकृतिमो वैश्वामित्रो देवरातऋषयः ।
पजापतिः देवता । गायत्री छन्दः ।

कस्यनूनकतमस्यामृताचां मनामहे चारुदेवस्य नाम ।
कोनामह्या अदीतये पुनर्दात् पितरं च दृशेयं मातरं च ॥

कद्रुद्राय जपेत्सूक्तं शीतज्वर विनाशनं ।
लिंगं स्पृष्ट्वायुतं धीमान्न रोगं शीघ्रतस्वदा ॥

कद्रुद्रायेति मन्त्रस्य कण्वो ऋषिः । रुद्रोदेवता । गायत्री छन्दः ॥

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे ।
वोचेम शतमं हृदे ॥

शचीव इन्द्र जपेन्मन्त्रं दशवारं दिने दिने ।
बहुद्रव्यंच सिद्धि च विन्दते ब्रह्मवर्चसम् ॥

अस्यमन्त्रस्य । सव्य आंगिरस ऋषिः । इन्द्रोदेवता । जगती छन्दः ।

शचीव इन्द्र पुरुकृद्द्युमत्तम तवेदित ममितश्चेकिते वसु ।
अतः संगृभ्याभिभूत आभर मात्वायतो जरितुः काममूनयीः ॥

यज्ञो देवानां जपेत्सूक्तं त्वयुतं विष्णुमन्दिरे ।

मृतपुत्राऽनपत्या च सुपुत्रं सर्वथा लभेत् ॥

अस्य मन्त्रस्य कुत्स आंगिरस ऋषिः विश्वेदेवो देवता । त्रिष्टुप्छन्दः ॥

यज्ञो देवानां प्रत्येति सुम्न मादित्यासो भवता मृळयंतः
आवोऽर्वाची सुमतिर्ववृत्या दंहोश्चिद्यावरिवो वित्तरासत् ॥
उपनोदेवा अवसागमन्त्वङ्गिरसां सामभिः स्तूयमानाः
इन्द्र इन्द्रियैर्मरुतो मरुद्भिरादित्यैर्नो अदितिः शर्म यं सत् ॥
तन्न इन्द्रस्तद्वरुणस्तदग्निस्तदर्यमा तत्सविताचनोधात् ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिन्धुः पृथिवीमुतद्यौः ॥

आमनीषां जपेद्वर्गं बहुकन्यां लभेद्यदि ।

सुपुत्रं लभते पश्चात् त्वयुतं विष्णुमन्दिरे ॥

अस्य मन्त्रस्य । कुत्स आंगिरस ऋषिः । ऋभवो देवता । त्रिष्टुप् छन्दः ।

आमनीषामन्तरिक्षस्य नृभ्यः । स्रुचेव घृतं जुहवाम विद्मना ।
तरणित्वाये पितुरस्य सश्चिर ऋभवो वाजमरुहन् दिवो रजः ॥
ऋभुर्न इन्द्रः शवसा नवीया नृभुर्वाजेभिर्वसुभिसुर्ददिः ।
युष्माकंदेवा अव ाहनिप्रिये मितिष्टेत पृत्सुतीरशुन्वतां ॥
निश्चर्मण ऋभवो गामपिंशत संवत्सेनाभृजता मातरं पुनः ।
सौधन्वनासः स्वपस्ययानरो जिन्नीयुवाना पितरा कृणोतन
वाजेभिर्नो बाजसाता वविड्ळमृभुमां इन्द्र चित्रमादर्षिराधः ।
तन्नो मित्रोवरुणो मामहंता मदिति सिंधुः पृथिवी उतद्यौः ॥

इमारुद्रायतवसे सूक्तं यो हरमन्दिरे ।
उष्णज्वरविनाशाय चायुतं नात्र संशयः ॥

अस्य मन्त्रस्य कुत्स आंगिरस ऋषिः रुद्रोदेवता । जगती छन्दः ॥

## ।। द्वितीयाष्टकं ।।

प्रवः पान्तं जपेत्सूक्तं माघे मासे शिवालये ।
तस्यारिष्टभयं नास्ति रक्षो व्याधिखलादिभिः ।।

अस्य मन्त्रस्य । कक्षीवान्दीर्घतमस औशिजा ऋषिः । विश्वादेवोदेवता ।

त्रिष्टुप् विराड्रूप छन्दः ।।

अष्टोत्तरशतं मन्त्रं गणानां त्वा जपेद्बुधः ।
दिनेदिने सर्वसिद्धिः सर्वविघ्ननिवारणम् ।।

अस्य मन्त्रस्य । गृत्समद ऋषिः । महागणपति देवता । जगती छन्दः ।।

गणानां त्वा गणपतिं हवामहे कविं कवीना मुपमश्रवस्तमम् ।
ज्येष्टराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीदसादनम् ।।

तान्वोमहो जपेन्मन्त्रं शतवारं दिनेदिने ।
विन्दते च धनं धान्यं सुकीर्ति ब्रह्मवर्चसम् ।।

अस्य मन्त्रस्य । गृत्समद ऋषिः । मरुतोदेवता । जगती छन्दः ।।

तान्वो महो मरुत एवयन्तो विष्णोरेषस्य प्रभृथे हवामहे ।
हिरण्यवर्णान् ककुहान् यत स्तुचो ब्रह्मण्यन्तः शंस्यं राधईमहे ।।

## तृतीयाष्टकं

हंसमन्त्रं जपेद्धीमान् त्रयुतं विष्णुमन्दिरे ।
अर्घ्यं दद्यात्कुष्ठरोगी सुवर्णसमतामियात् ।।

अस्य मन्त्रस्य सूर्य ऋषिः । त्रिष्टुप् छन्दः । सूर्योदेवता ।

हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृष द्वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ।।

अग्निरस्मि जपेन्मन्त्रं शतवारं दिने दिने ।
नाभिं स्पृष्ट्वा भोजनांते दीपनं पाचनं भवेत् ॥

अस्य मन्त्रस्य गोधिनो विश्वामित्र ऋषिः । देवता । त्रिष्टुप्छन्दः ।

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
अर्कस्त्रिधातू रजसो विमानोजस्रो धर्मोहवि रस्मि नाम ॥

वधेनदस्युं मन्त्रं च दिनं प्रतिजपेद्दश ।
शत्रुनाशो व्याधिनाशो मृत्युनाशस्तु भूतिदः ॥

अस्य मन्त्रस्य वसुश्रुत आत्रेय ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः ॥

वधेनदस्युं प्रहियातयस्व वयः कृण्वान स्तन्वे उ स्वायै
पिपर्षियत् सहसस्पुत्र देवान्त्सो अग्ने पाहि नृतमवाजे अस्मान् ॥

गायत्रींत्र्ययुतं जप्त्वा सप्तव्याहृति संपुटां । दुरितं नहि तत्सर्वं दुर्मृतानां यदस्तिचेत् ॥

करवीरैस्तु गायत्र्या होमं कुर्यात्सहस्रकं ।
व्याधिनाशो भवेच्छीघ्रं मृत्युश्चैव निवर्तते ॥

अस्य मन्त्रस्य । विश्वामित्र ऋषिः । सविता देवता । गायत्री छन्दः ।

तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥

## चतुर्थाष्टकम् ॥

प्रयुंजती जपेत्सूक्तं वाक्सिद्धिस्तु सदा भवेत् ।
सप्तम्यां रवियुक्तायां जलमध्ये यदा तदा ॥

अस्य मन्त्रस्य प्रतिरथ आत्रेय ऋषिः विश्वेदेवादेवता । त्रिष्टुप् छन्दः ।
अस्य सूक्ते सप्तमन्त्रा ।

तदस्तु मित्रमन्त्रेण होमं कुर्यात्सहस्रकं ।
अर्केण त्रिमधुयुक्तं शिरोरोगो विनश्यति ॥
अस्य मन्त्रस्य ऋषि देवता सर्वं पूर्ववत् ।
तदस्तु मित्रावरुणा तदग्ने शं यो रस्मभ्यमिदमस्तु शस्तम् ।
अशोमहि गाधमुतिष्ठां नमोदिवे बृहते सादनाय ॥

ऋतस्येति जपेत्सूक्तं त्र्ययुतं विष्णुसन्निधौ ।
अश्वत्थ माघमासे च मूत्ररोगो विनश्यति ॥
अस्य सप्तमन्त्र सूक्तस्य अर्चनाना आत्रेय ऋषिः ः मित्रावरुणौदेवता ।
जगती छन्दः ॥

एवाजज्ञानमन्त्रं च जपेल्लक्षं तु फाल्गुने ।
नष्डक्षेत्रं नष्टधनं पुनरायाति सर्वथा ॥
अस्य मन्त्रस्य बार्हस्पत्यो भरद्वाजऋषिः । इन्द्रोदेवता । त्रिष्टुप् छन्दः ।
एवा जज्ञानं सहसे असामि वाहृधानं राधसे च श्रुताय ।
महामुग्रमवसे विप्रनून या विवासेम वृत्रतूर्येषु ॥

संपूषन्विदुषासूक्तं नष्टद्रव्यो जपेद्बुधः ।
पुनरायाति वै तस्य हृतं चौरादिकैर्यदि ॥
अस्य पंचमन्त्र सूक्तस्य बार्हस्पत्यो भरद्वाज ऋषिः । पूषादेवता गायत्री छन्दः ॥

व्यमपदादित्येतत्सूक्तं सारस्वतं द्विजः ।
जपेत्प्रातः शुचिर्भूत्वा वाग्मी बुद्धिमान् ॥
अस्य मन्त्रस्य सूक्तष्य । बार्हस्पत्यो भरद्वाज ऋषिः । गायत्री, जगती त्रिष्टुप् छन्दः ॥
सरस्वती देवता ॥

वरुण वो जपेत्सूक्तं अयुतं धात्रिमूलके ।
तापादि व्याधिनाशस्तु सुखी पश्चात्स्थितो भुवि ॥
अस्य सप्तमन्त्र सूक्तस्य । अर्चनाना आत्रेय ऋषिः । मित्रावरुणोदेवता ।
अनुष्टुप् पंक्तिः छन्दः ॥

इमांरुद्राय सूक्तं तु यो जपेच्छिवमन्दिरे ।
कायशूलादि रोगघ्नमयुतं नात्र संशयः ॥

अस्य चतुर्मन्त्र सूक्तस्य मैत्रावरुणि र्वसिष्ट ऋषिः । रुद्रोदेवता । जगती त्रिष्टुप् छन्दः ।

प्रातरग्नि जपेत्सूक्तं जले लक्षं शिवालये ।
कन्यार्थी लभते कन्यां लाजाहुत्या शतं हुवेत् ॥

अस्य सप्तमन्त्रसूक्तस्य मैत्रावरुणि र्व सिष्ठ। ऋषिः । अग्नीन्द्रमित्रावरुणाश्वि भगपूष ब्रह्मणस्पति सोमरुद्र भग उषसा देवताः । त्रिष्टुप् छन्दः ॥

प्रणव व्याहृतीनां तु त्र्ययुतं संपुटं जपेत् ।
त्रैयम्बकं महामन्त्रं मृत्युरेव निवर्तते ॥

अस्य मन्त्रस्य वसिष्ट ऋषिः । रुद्रोदेवता । अनुष्टुप् छन्दः ।

त्र्यम्बकं..........................मामृतात् ॥

ध्रुव'सुत्वा जपेन्मन्त्रं त्र्ययुतं शृंङ्खला यदि ।
बन्धनान्मुच्यते सत्यं नारी वापि नरोपि वा ॥

अस्य मन्त्रस्य मैत्रावरुणि र्वसिष्ठ ऋषिः । वरुणो देवता । त्रिष्टुप् छन्दः ।

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्यस्मत् पाश वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्यात् यूयं पात स्वस्तिभिः सदा नः ॥

अमीवहा स्वप्नसूक्तं जपेद्यस्तु शिवालये ।
अयुतं चेत्कुष्ठरोगी स्वर्णवर्णं प्रयाति च ॥

अस्य अष्टमन्त्र सूक्तस्य । मैत्रावरुणिर्वसिष्ट ऋष्यः । वास्तोष्पतिर्देवता ।
गायत्री वृहती अनुष्टुप् छन्दः ॥

## षष्टाअष्टकं

ये देवासऋचं जप्त्वा षण्मासं च दिने दिने ।
अष्टाविंशतिमष्टौ वा ऋणमोक्षो न संशयः ॥

अस्य मन्त्रस्य मनुर्वैवस्वत ऋषिः । विश्वेदेवादेवता । अनुष्टुप् छन्दः ।

ये देवास इह स्थन विश्वे वैश्वानरा उत
अस्मभ्यं शर्म सप्रथो गवेऽश्वाय यच्छत ॥

येषामाबाधमन्त्रं जपेच्चेत् त्र्ययुत जले ।
बालग्रहा न पीड्यन्ते भूतप्रेतादय स्तथा ॥

अस्य मन्त्रस्य विश्वमना वैयश्वः । अग्निर्देवता । उष्णिक् छन्दः ।

येषामाबाध ऋग्मिय इषः पृक्षश्च निग्रमे ।
उपविदा वह्निर्विन्दते वसु ॥

वायोशुक्रो जपेत्सूक्तं अश्वत्थ त्र्ययुतं बुधः ।
बहुधा वातरोगोपि विनश्यति न संशयः ॥

अस्य वामदेवो गौतम ऋषिः । अनुष्टुप् छन्दः ॥

## सप्तम अष्टकं

अक्षैर्मेति जपेन्मन्त्रं सप्तवारं दिनेदिने ।
दिव्यवस्त्रं दिव्यभोगं बहुद्रव्यं च विन्दति ॥

अस्य मन्त्रस्य । अक्ष ऋषिः । रुद्रो देवता ॥ त्रिष्टुप् जगती छन्दः ।

अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्तेरमस्व बहुमन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः ॥

## अष्टमाष्टकम्

दिने दिने विरोगी स्याद्वयंसोम जपेद्दश ।
आपो गृहीत्वांजलिना चक्षुषी क्षालयेत्तथा ॥

अस्य मन्त्रस्य । बन्धुःसुतबन्धुः विप्रबन्धु गौपायनः ऋषयः । विश्वेदेवादेवता ।
गायत्री छन्दः ॥

वयं सोमंव्रतेतव मनस्तनूषु बिभ्रतः ।
प्रजावन्तः सचेमहि ॥

कथा देवाना मन्त्रं च दिनं प्रति शतंजपेत् ।
प्रारब्धसूचितंकर्म प्रणश्यति न संशयः ।

अस्य मन्त्रस्य गयः प्लात ऋषिः । जगती छन्दः । विश्वेदेवाः देवता ।

कथा देवानां कतमस्य यामनि सुमन्तु नाम शृण्वतां मनामहे ।
को मृळाति कतमो नो मयस्करत् कतम ऊती अभ्या ववर्तति ॥

सक्तु मिव जपेन्मन्त्रं शतवारं दिने दिने ।
लक्ष्मीश्चवर्धते नित्य मलक्ष्मी र्नहि तत्कुले ॥

उस्य मन्त्रस्य बृहस्पति आंगिरस ऋषिः जगती छन्दः । विश्वेदेवाः देवता ।

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा आचमक्रत ।
अत्रा सखायः सख्यानिजानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥

सुकिंशुकं जपेन्मन्त्रं शतवारं दिने दिने ।
जननं मरणं नास्ति ततः सायुज्यमेति सः ॥

अस्य मन्त्रस्य चन्द्रमा ऋषिः । सूर्यासावित्री देवता त्रिष्टुप् छन्दः ।

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥

हविष्पान्तं जपेत्सूक्तं महापातक नाशनं ।
दिने दिने त्रिवारंतु विद्या श्रीस्तत्कुले स्थिरा ॥

अस्य पञ्चमन्त्र सूक्तस्य आंगिरसोमूर्धन्वान् ऋषिः । सूर्यः देवता । त्रिष्टुप् छन्दः ।

वृषावो अंशुमन्त्रं प्रत्यहं प्रजपेद्दश ।
बहुक्षेत्रं बहुद्रव्यं भुनक्ति बहुभिः सदा ॥

अस्य मन्त्रस्य । तान्वः पार्थ्य ऋषिः । विश्वेदेवादेवता । बृहती छन्दः ।

वृषा वो अंशुर्नं किला रिषाथने ळावन्तः सद्मित स्थनाशिताः ।
रैवत्येव महसा चारवः स्थन यस्य ग्रावाणो अजुषध्वमध्वम् ॥

या ओषधीर्जपेत्सूक्तं बीजारोहण संग्रहे ।
यदि स्पृष्ट्वा भूमि कुंभं धान्यं तस्याक्षयं भवेत् ॥

अस्य पञ्चमन्त्रस्य सूक्तस्य आथर्वणोभिषक् । ऋषिः ओषधयो देवता । अनुष्टुप् छन्दः ।

रात्रि सूक्तं जपेद्रात्रौ त्रिवारं तु दिने दिने ।
भूत प्रेतादिचौरादि व्याघ्रादीनां च नाशनं ॥

अस्य अष्टमन्त्रस्य सूक्तस्य । कुशिक सौभर ऋषिः । रात्रिर्देवता । गायत्री छन्दः ।

ईखयन्तीर्जपेत्सूक्तं लक्षं बिल्वे शिवालये ।
कुष्ठनाशो भवेच्छीघ्रं माघमासे न संशयः ॥

अस्य पंचमन्त्रस्य सूक्तस्य । देयजामय इन्द्रमातरः ऋषिः । इन्द्रोदेवता । गायत्री छन्दः ।

अरायिकाणे सूक्तं च पंचवारं दिने दिने ।
अलक्ष्मी नाशनं सत्यं कुले लक्ष्मीः प्रवर्धते ॥

अस्य पंचमन्त्रस्य सूक्तस्य । शिरिम्बिठो ऋषि । ब्रह्मणस्पतिर्देवता ।
अनुष्टुप् छन्दः ॥

सूर्यो नो दिवः सूक्तं च प्रत्यहं प्रजपेद्दश ।
बदर्यग्रे त्रिवर्षंतु क्षयादिव्याधिनाशनम् ॥

अस्य पंच मन्त्रस्य सूक्तस्य चक्षुः मौर्य ऋषिः । सूर्यः देवता । स्वराट् छन्दः ।

उदसौ कुक्षिशूलीतु जपेत्सूक्तं शिवालये ।
अयुतं माघमासे तु मुच्यते नात्रसंशयः ॥

अस्य षट्मन्त्रस्य सूक्तस्य पौलोमीशची ऋषिः । आत्मा देवता । अनुष्टुप् छन्दः ।

तीव्रस्यापि जपेत्सूक्तमपस्मारो विनश्यति ।
महापातक संयुक्तो नीरोगी भूतले स्थितः ॥

अस्य पंचमन्त्रस्य सूक्तस्य । पूरणोविश्वामित्रोऋषिः इन्द्रोदेवता । त्रिष्टुप् छन्दः ।

बृहस्पतिर्नयतु सूक्तं जपेद्ययुतं सुतः ।
पितरो दुर्मृता यस्य मुच्यन्ते सर्वपातकैः ॥

अस्य पंचमन्त्रस्य तपुर्मूर्धा बार्हस्पत्य ऋषिः । बृहस्पतिः देवता । त्रिष्टुप् छन्दः ॥
गायत्री

विष्णुर्योनिमिदं सूक्तं योनिं स्पृष्ट्वा जपेद्यदि ।
गर्भाधानं ततः कुर्यात्सुपुत्रो वै प्रजायते ॥

अस्य मन्त्रत्रय सूक्तस्य त्वष्टा ऋषिः । अश्विनोदेवता । अनुष्टुप्छन्दः ।

ब्रह्मणाग्निर्जपेत्सूक्तं त्रिवारं च दिने दिने ।
नष्टार्था ऋणिणो लभ्याः षण्मासे वत्सरेपि वा ॥

अस्य षण्मन्त्रसूक्तस्य ब्राह्मोरक्षोहा ऋषिः । रक्षोहादेवता । अनुष्टुप् छन्दः ॥

ऋग्वेदोक्त मन्त्राः परिहाराः ऋग्विधानोक्तं ।
ग्रहाबाधानिर्वृत्तिपूर्वक रोगनाशपुत्रप्रदातृकरराः मंत्राः ॥

८ अष्टके ८ अध्याये २० वर्गे १६२ सूक्तं ॥

१. ब्रह्मणाग्निस्संविदानो रक्षोहा बाधतामितः ।
अमीवा यस्तेगर्भं दुर्णामायोनिमाशये ॥

२. यस्तेगर्भममीवा दुर्णमायोनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रयुदमनीनशत् ॥

३. यस्ते हन्ति पतयन्तं निषत्स्नुं यस्सरीसृपम् ।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥

५. यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥

६. यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥

एतत् ब्रह्मणाग्निरिति षड्चस्य सूक्तस्य ब्रह्मोरक्षोहा प्रजापति ऋषिः । अनुष्टुप् छन्दः ॥



# सहस्रमन्त्रसारसंग्रहः

( द्वितीयो भागः )

# Sahasra Mantra Sara Sangrahah

( A Collection of one thousand Manthras Pertaining to all deities )

PART - II

श्री सि· वि· सीताराम अय्यर् महाभागः
बहुमन्त्रशास्त्र ग्रन्थेभ्यः सङ्कलितः

Compiled by

**Sri C. V. Seetharama Iyer**

(From Various books on mantra sastra)



हैदराबाद् नगर स्थित मन्त्रशास्त्रसारसंग्रह समित्या
प्रकाशितः

published by

**Mantra Sastra Sara Sangraha Samithi**

HYDERABAD

1985

# सहस्रमन्त्रसारसंग्रहः

( द्वितीयो भागः )

# Sahasra Mantra Sara Sangrahah

( A Collection of one thousand Manthras Pertaining to all deities )

PART - II

श्री सि· वि· सीताराम अय्यर् महाभागः
बहुमन्त्रशास्त्र ग्रन्थेभ्यः सङ्कलितः

Compiled by
**Sri C. V. Seetharama Iyer**
(From Various books on mantra sastra)

हैदराबाद् नगर स्थित मन्त्रशास्त्रसारसंग्रह समित्या प्रकाशितः

published by
**Mantra Sastra Sara Sangraha Samithi**
HYDERABAD
1985

First edition

1000 Copies

**Published with the financial assistance**
given by sri Tirumala Tirupati Devasthanam
TIRUPATI

मूल्यम् चत्वारिंशत् रूप्यकाणि

Price Rs. 40/-






Copies available at

1. Mantra Sastra Sara Sangraha Samithi C/o S. Rajam
2-2-647/185/10 A Bagh Amber peta
HYDERABAD-13

and

**Divakarla Publications.**
6-3-609/18, Ananda nagar
HYDERABAD-4



विदितमेवेदं सर्वेषां तत्रभवतां भारतीयानां वैदिकमतानुयायिनां यत् "मननात् त्रायते" इति व्युत्पत्त्या मन्त्रस्य मननादेव सिद्धिरिति। मननं नाम- उपास्य देवतायाः नाम्नः जपः इति स्थूलार्थः। एवं च देवतावशीकरणं तन्नाम्नैव भवतीति वक्तुं शक्यते "नामनाम्न्योरभेदात्" इति श्रुतेः। अतएवोक्तं

दैवाधीनं जगत्सर्वं मन्त्राधीनंतु दैवतम्।
तन्मन्त्रो ब्राह्मणाधीनं ब्राह्मणो मम देवता॥ इति यो मन्त्रानुष्ठान-विधानं जानाति येन नित्यं मन्त्रमनुष्ठीयते स एव ब्राह्मण इत्युच्यते नापरः अत्र श्रुतिः "जन्मना जायते शूद्रः कर्मणा जायते द्विजः इति। मननं नाम जपः इति पूर्वमेवोक्तम्। अतः मन्त्रशास्त्रे उक्तं जपतो नास्ति पातकम् इति जपेन पातकं नश्यति। एवमेव श्रीमद्भगवद्गीतायामपि "यज्ञानां जप यज्ञोऽस्मि" इति भगवता स्वयमेवोक्तम्।

यस्य नाम जप्यते सः भगवान् उत नामी इति कथ्यते। नामिना भगवता यदुक्तं तदनुसारेण गमनं कर्मयोगः।

नामिनि नाम्नि च या श्रद्धा सा भक्तिः कथ्यते स एव भक्तियोगः।
नामनाम्न्योः संबन्धः च अनुसन्धानं च ज्ञानं इत्युच्यते। तदेव ज्ञानयोगः। नाम एव मन्त्रः तदनुष्ठानारो ऋषयः ते यद्वदन्ति तथैव भवति यतो हि मन्त्र तेषां वशवर्ती वर्तते। उत्तररामचरिते भवभूतिना

"लौकिकानां हि साधूनां अर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोनुधावति। इत्युक्तम्।

एतावता वाक् मन्त्रः, अर्थः देवः, तयोः अविनाभाव संबन्धः सूचितः कालिदासेनापि अयमेवाशयः प्रतिपादित :—

वागर्थाविवसंपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥ इति। एवं च मन्त्रस्य स्थितौ सिद्धायां तस्य स्वरूपं विचारयामः।

मन्त्रे तावत् बीज वर्णाः विद्यन्ते। सर्वेषां वर्णानां तत्तदुत्पत्ति-मनुसृत्य अधिष्ठानदेवताः निर्धारिताः। तेषां स्वर व्यञ्जनानां संयोगेन बीज-

वर्णयोगेन शक्तिः समुत्पद्यते या चेतना इति कथ्यते सैव चेतना मन्त्रसिद्धिरिति बुधा वदन्ति । स्वराः षोडशशक्तिमूलकाः भवन्ति । इतरे पंचत्रिंशति व्यंजनाः प्रकृति जन्याः इति मन्त्रशास्त्रे उक्तम् । सर्वे वर्णाः तत्तदधिदेवताकत्वेन स्वकीयं प्रभावं जनयन्ति ।

मन्त्रो नाम उपास्य देवतायाः वाचकः अर्थात् भगवन्नाम इति पूर्वमेवोक्तम् । प्रतिनित्यं तत् अनुष्ठेयं इत्यत्र वेदप्रमाणानि पश्यामः ।

ऋग्वेदे :—

१) ओं परंब्रह्म ज्योतिर्मयं नाम उपास्य मुमुक्षुभिः

२) कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम मनसे

३) मर्त्यं अमर्त्तस्य ते भूरि नाम मनाम

४) नाम स्वाधावान गुह्य बिभर्ति

५) भूरि नाम वन्दमानो दधाति ।

६) नामानि चिद् दधिरे यज्ञियानिळ

७) प्रियं ते नाम सहुरे गृणो मसि ।

यजुर्वेदः —

१) मर्त्यं अमर्त्यस्य ते भूरि नाम प्रणामहे विप्रासो जातवेदसः ।

२) यत्ते अनाधृष्टं नाम यज्ञियम् ।

३) शिवो नामासि

४) यो देवानां नाम धा एक एव ।

५) यस्य नाम महद् यशः ।

सामवेदे —

१) ओं इत्येकाक्षरं यस्मिन् प्रतिष्ठितं तन्नाम ध्येयं संसृतिपारमिच्छोः ।

२) सदा ते नाम स्वयशो विवच्मि

३) यस्य वाचति नामानि दामानि ।

४) पूयमानो चिन्यार्षे गुह्यं चारुनाम ।

अथर्व वेदे—

१) यश्चन्डालोपि रामेति वाचं वदेत्तेन सह संवदेत्तेन सह संवसेत्तेन सह संभुञ्जीयात् ।

उपनिषत्स्वपि मन्त्रानुष्ठानप्रसक्तिः सर्वत्र दरीदृश्यते । तासु भगवतः पर्यायवाचकत्वेन ओं, तत्, सत्, ब्रह्म, अहम्, आत्मा इत्यादयो शब्दाः प्रयुक्ताः निर्गुणप्रतिपादकाः । उदाहरणार्थं कठोपनिषदि —

सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्यो मित्येतत् ॥

भगवतः शक्तिः ओंकारे निक्षिप्ता । सर्वे वर्णाः प्रणवादागताः इत्यत्र नास्ति विप्रतिपत्तिः । एकैकस्मिन् वर्णे एका शक्तिः प्रक्षिप्ता भगवतः नानारूपत्वात् उपासकानां वैविध्यात् यस्य या शक्तिरुच्यते तस्यां शक्त्यां तत्संबंधवर्णान् क्रोडीकृत्य ऋषयः मन्त्रान् विरचयामासुः । तेषु मन्त्रेषु पुनश्चरण द्वारेण शक्तिमापादयामासुः । सर्वाः उपनिषदः इदमेवोद्घोषयन्ति ।

मन्त्रानुष्ठानपद्धतिं उपनिषद्भ्यः पृथक्कृत्य स्वतन्त्रत्वेन प्रचाल्य शास्त्रत्वमापाद्य विपुलां चर्चां कृत्वा मन्त्रशास्त्रानुसारिणः प्रचारयामासुः ।

भगवदुपासनाप्राधान्येन मन्त्रानुष्ठानं कार्यम् । क्रमशः आनुषङ्गिकफलावाप्त्यर्थं लौकिक कार्यापेक्षया तत्र विक्रिया प्रारब्धा या तन्त्रमिति प्रसिद्धा अभवत् ।

फलानुसारेण मन्त्रं देवतां च निर्धार्य विविधवस्तूनां विविधमन्त्राणां रचनाप्रक्रिया यन्त्रमिति कथ्यते ।

एवं च मन्त्र तन्त्र यन्त्र समाहारेण उपासना समग्रा भवतीति वक्तुं शक्यते । किन्तु लौकिकप्रयोजनार्थमेव सा उपासना उपयुज्यते ।

तत्र प्रत्येकस्य मन्त्रस्य षडङ्गानि विद्यन्ते । १) ऋषिः २) छन्दः ३) अधिदेवता ४) बीजं ५) शक्तिः ६) कीलकम् इति ।

अस्मिन् ग्रन्थे बहूनां मन्त्राणां अनुष्ठानविधानं मन्त्रतन्त्रयन्त्रपुरस्सरेण अतिविपुलं विवरणं दत्तमस्ति । लौकिकप्रयोजनसाधनपुरस्सरेण मोक्षायापि उपासका यतेयुरित्याशास्महे ।

अलमतिविस्तरेण इति शम्
इत्थम् श्रीदासः
माधवपेद्दि चिनवेंकन्नः
संस्कृतोपन्यासकः
प्रगतिमहाविद्यालयः हैदराबाद्

# PREFACE

For the Ardent Devotees and Upasakas Rev. Shri Sitaram Iyer has devoted his best years of life in compiling and collecting various Mantras as available in innumerable known and unknown Tantric Texts with its Purascharan Vidhi wherever necessary.

For any student of Indian Mantra Shastra as well as ardent Upasakas, this campilation would be of great help for reference and repertaisation. The Mantra Shastra is a vast ocean and as Bush one of us can not have time energy and rescurces to dive deep into the Ocean and for them Shri Sitaram Iyer's humanitation efforts have brought forth this compilation. Many more such compilation are to be further provided by the Generous Public and Religious Institutions and temple authorities with vast funds at their disposal come forward in promoting discipline of Sadhana in the persons who crave for such guidance but due to lack of physical as well as financial resources they are unable to do so.

It would also be a commendable Idea if such Religious Institution and temple authorities set apart certain funds in encouraging to find out and verify the results of the purascharan of various Mantras by Sadhaks for community welfare and to make the present occident and Western Cultured Indian public know that there are no tall claims by our sages and Mantra Dristas for the efficacy of Mantras if proper discipline is followed by sadhaks.

I am confident that this book will go a long way in removing the wrong information regarding Mantra Deha.

May the Mother Maha Tripurasundari bestow her choicest Blessings on Shri Sitaram Iyer and give him a long life to fulfil his dream of publishing such more and more books.

26, Jay Bharat Society,
IIIrd Road, Khar Road,
Bombay 400 052

R. C. ANJARIA
Advocate, High Court, Bombay.

"OM SRI GURUBHYO NAMAHA"

## FROM THE COMPILER'S PEN

Dear Readers,

Salutations and adorations.

I am extremely glad to place this book in Sanskrit by name "SAHASRA MANTRA SARA SANGRAHA"- in your hands. I have travelled throughout this land and met many Tantriks, and other eminent persons who are well-versed in mantra Sastra and collected the Mantras from them and also from Tantrik works and thus compiled them in the form of two volumes, not less than thousand Mantras are thus secured and both the Vols are now with you. Vol III In the name of PRAYOGASARA containing the details of Yantrasaud Prayogams is under print and will be released very early.

This book is a cream of all important Mantras followed by the Great Tantriks, Rishis of our Holy Land. The Mantras are not merely of theoretical or academic interest. They are practical so far as building up of a spiritual life is concerned. I have no doubt that the Mantras contained in this book can contribute much for the solution of the pressing problems of the individual as well as humanity. It is a book to be read, re-read and practised. Every individual should endeavour to derive strength and help from this sacred book. If it is learnt through a "Guru", the desired result would be accomplished within a short period.

The Mantras, if practised properly after initiation the desired objects will be ready at hand. Finally, it would lead the Sadhaka to the emancipation of the soul from the pangs of birth and rebirth. To put it in a nut-shell, these Mantras will help one to get Dharma, Artha, Kama and Moksha.

The origin for all Mantras is "OM" or pranava. From pranava fifty letters are formed and these letters have been assigned to five elements, Pancha Bhoothas, known as Earth, Water, Fire, Air, Ether but not in alphabetical order. The first letter of Sadhaka's or the Practioner's name will indicate to which element he belongs and hence he should choose the Mantra accordingly and then follow. According to the aspirants quality and qualificaticn sidcbi is at his doors.

This sacred book is now in your hands mostly due to the efforts of my beloved and kind friends and sympathisres who have without any reward or recompense silently helped and are helping me in bringing out the other volumes also. I cannot adequately thank them for their disinterested efforts in this direction. I would, therefore, request all the friends to help in releasing the other volume also. The list of donors etc. will be published in the ensuing books.

I pray the MOTHER to shower her blessings profusely on one and all. Let "Shanti" prevail in the whole world.

"OM" SHANTIH' SHANTIH SHANTIH

Karur,
12-3-86

C. V. SEETARAMA IYER
Compiler of the Srcred Mantras.

ग्रन्थस्थविषयाः

# शान्तिस्तवः

श्री भैरव उवाच—

देवि वक्ष्यामि पूजान्ते शान्तिस्तोत्रमनुत्तमम् ।
वीरा येन परानन्दपदं प्राप्स्यन्ति निःस्पृहाः ॥ 1 ॥

योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम् ।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥ 2 ॥
अनादिघोरसंसारव्याधिध्वंसैकहेतवे ।

नमः श्रीनाथवेद्याय कुलौषधप्रदायिने ॥ 3 ॥
आपदो दुरितं रोगाः समयाचारलंघनात् ।

ते सर्वेऽत्र व्यपोहंतु दिव्यचक्रस्य मेलनात् ॥ 4 ॥
आयुरारोग्यमैश्वर्यं कीर्तिलाभं सुखं जयः ।

कान्तिर्मनोरथश्चास्तु पान्तु सर्वाश्च देवताः ॥ 5 ॥
संपूजकानां परिपालकानाम् ।
यतीन्द्रयोगीन्द्रतपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञः,

करोतु शान्तिं भगवान् कुलेशः ॥ 6 ॥
नन्दन्तु साधककुलान्वयदर्शका ये,
सृष्ट्याद्यनारभ्य चतुरुक्तमहान्वया ये ।
नन्दन्तु सर्वकुलकौलरताः परे ये

ऽप्यन्ये विशेषपदभेदकशाम्भवाद्यैः ॥ 7 ॥
नन्दन्तु सिद्धगुरवः स्वगुरुक्रमौघा
ज्येष्ठानुगाः समयिनो वटुकाः कुमार्यः ।
षड्योगिनी प्रवरवीरकुलप्रसूता,

नन्दन्तु भूमिपतिगोद्विजसाधुलोकाः ॥ 8 ॥
नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठा,
निर्मत्सरा निरुपमा निरुपद्रवाश्च ।

नित्या निरञ्जनरता गुरवो निरीहाः,
शान्ताश्च शान्तमनसो हृतशोकशङ्काः ॥ 9 ॥

नन्दन्तु योगनिरताः कुलयोगयुक्ता,
आचार्य सामयिक साधक पुत्रकाश्च ।
गावो द्विजा युवतयो यतयः कुमार्यो,
धर्मे भवन्तु निरताः गुरुभक्तियुक्ताः ॥ 10 ॥

नन्दन्तु साधककुला ह्यणिमादिनिष्ठाः,
शापाः पतन्तु द्विषतः कुलयोगिनीनाम् ।
सा शाम्भवी स्फुरतु काऽपि ममाप्यवस्था,
यस्यां गुरोश्चरणपङ्जमेव लभ्यम् ॥ 11 ॥

याश्चक्रक्रमभूमिका वसतयो नाडीषु याः संस्थिताः,
याः कायद्रुमरोमकूपनिलया याः संस्थिता धातुषु ।
उच्छ्वासोर्मिमरुत्तरङ्गनिलया निश्श्वासवासाश्च याः,
ता देव्यो रिपुभक्षणोद्यमपरास्तृप्यन्तु कौलार्चिताः ॥ 12 ॥

या दिव्यक्रमपालिकाः क्षितिगता या देवतास्तोयगाः,
या नित्यं प्रथितप्रभाः शिखिगता या मातरिश्वाश्च याः ।
या व्योमामृतमण्डलामृतमया याः सर्वदा सर्वगा—
स्तास्सर्वाः कुलमार्गपालनपराः शान्तिं प्रयच्छन्तु मे ॥ 13 ॥

ऊर्ध्वं ब्रह्माण्डतो वा दिवि भुवनतले निस्तले वा,
पाताले वा तले वा पवनसलिलयोर्यत्र कुत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादि अन्तैः (मांसैः)
प्रीत्या देव्यः सदा वः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥ 14 ॥

ब्रह्मास्त्री शेषदुर्गा गुहवटुकगणाः भैरवाः क्षेत्रपालाः,
वेतालादित्यरुद्रग्रहवसुमनुसिद्धाप्सरोगुह्यकाद्याः,
भूता गन्धर्वविद्याधरऋषिपितृयक्षा सुरारिप्रभूता
योगीशाश्चारणाः किंपुरुषमुनिसुराश्चक्रगाः पान्तु सर्वे ॥ 15 ॥

सत्यं चेद्गुरुवाक्यमेव पितरो देवाश्च चेद्योगिनो,
प्रीतिश्चेत् परदेवता च यदि चे द्वेदाः प्रमाणाश्च चेत् ।
शक्तेयं यदि दर्शनं भवति चेदाज्ञेयमाशास्ति चेत्,
मन्यत्रापि च कौलिकाश्च यदिचेत् स्यान्मे जयस्सर्वदा ॥ 16 ॥
तृप्यन्तु मातरः सर्वाः समुद्राः सगणाधिपाः
योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः ॥ 17 ॥
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादिशिवान्तं च जगत् यज्ञेन तृप्यतु ॥ 18 ॥
पठित्वेदं नमेद्वीरान् वीरवन्दनमाचरेत्
स्तवेद्वीरान्नमेद्वीरान् मन्त्रसिद्धिः प्रजायते ॥ 19 ॥
वीरवन्दनम् —
जगत्त्रयाभ्यर्चितशासनेभ्यः परार्थसम्पादनकोविदेभ्यः ।
समृद्भूतक्लेशमहोरगेभ्यो नमो नमस्साधकनायकेभ्यः ॥

शारदातिलके १९ पटले २६ श्लोकोक्त ब्राह्मीघृतम् ॥

ब्राह्मी सैन्धव (1) सिद्धार्थ वचाकुष्ठकणो (2) स्फलै (3) सुगन्धि (4) संयुतैः कल्कैः श्रुतं (5) ब्राह्मीरसे घृतम् ।
मनुनानेन संजप्तमयुतं साधु साधितम्
निपीतं कविनाकान्तिरक्षायुः श्रीधृतिप्रदम्
एतेषां कल्केन ब्राह्मी रसे घृतपाकः ।
स्नेहः सिद्ध्यति शुद्धाम्बुभिः क्वाथस्वरसैः क्रमात् ।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टममिति ॥
कल्कं 1 पलं 1, षट्पलं घृतम् । 24 पलं रसम् ।
1) गौरसर्षपः 2) पिप्पली 3) गुस्ता 4) त्वक्पत्रलाकेसराणि चतुर्जातं सुगन्धकमिति ॥ 5) पक्वम् ।

## न्यासविषयाः

संहारसृष्टिस्थितिना मातृकान्यस्तविग्रहः ।
मन्त्रन्यासं ततः कुर्याद्देवताभावसिद्धये ॥

तत उपास्यमन्त्रस्य न्यासानृष्यादिकं चरेत् ।
यस्य मन्त्रस्य ये न्यासाः कर्तव्याः सिद्धिमिच्छता ॥
जपतर्पणहोमार्चाः सिद्धमन्त्रकृता अपि ।
अङ्गन्यासादिभिर्हीना न दास्यन्ति फलान्यमी ॥
न्यासानशेषान्यसतः स्वदेहे त्रैलोक्यमेतद्वशमेति पुम्सः ।
पापानि सद्यः प्रशमं प्रयान्ति त्रस्यन्ति रक्षांसि सपन्नगानि ॥
आदावृष्यादि विन्यस्य कराङ्गन्यसनं ततः ।
ततो यन्त्राक्षरन्यासः पदन्यासः ततः परम् ॥
ततः कल्पविशेषोक्तान् न्यासाननन्यान् समाचरेत् ।
ततो मन्त्रपुटैर्वर्णैर्मातृकाया सबिन्दुकैः ॥
विन्यसेन्मन्त्रवित्सम्यक् शास्त्रदृष्टेन वर्त्मना ।
अथ ऋष्यङ्गकरन्यासः ततो मुद्राः प्रदर्शयेत् ॥

अथ दशविधमातृकाकरणाशक्तौ अन्तर्मातृका, बहिर्मातृका, श्रीकण्ठादिमातृका अष्टात्रिंशत्कलान्यासाः इति न्यासचतुष्टयम् आवश्यकम् ।

## अन्तर्मातृकान्यासः

ब्रह्मा ऋषिः । गायत्रीछन्दः । श्रीमातृकासरस्वती देवता । हलो बीजानि । स्वराः शक्तयः । क्षं कीलकम् । प्रथमे प्राणायामः इडया —

अं इं उं ॠं लॄं एं ऐं ओं औं एभिः स्वरैः पूरयेत् । कु चु टु तु पु इति पञ्चवर्गेण कुम्भयेत् । यरलवशष सह इत्यष्टवर्णैः रेचयेत् । पुनः प्राणायामं कृत्वा ऋष्यादिन्यासं कुर्यात् । ओं अं आं ब्रह्मणे ऋषये नमः । इं ईं गायत्री छन्दः । उं ऊं सरस्वती देवता । एं ऐं हल्भ्यो बीजेभ्यो नमः । ओं औं स्वरेभ्यो शक्तिभ्यो नमः । अं क्षं अः कीलकाय नमः ।

ओं अं कं खं गं घं ङं ओं । ओं एं तं ऐं ।
ओं इं चं ५ ईं । ओं ओं पं ५ औं
ओं उं टं ५ ऊं । ओं अं यं क्षं अः
इति करहृदयादि न्यासः

कण्ठस्य 16 दलमध्ये अं आं ... अं अः 16 स्वराः प्रणवाद्यं नमोन्तम् ।

हृदयस्य 12 दलमध्ये ओं कं नमः इत्यादि ओं ठं नमः

नाभौ 10 दलमध्ये ओं डं नमः इत्यादि ओं फं नमः

लिंगे 6 दलमध्ये ओं बं नमः इत्यादि ओं लं नमः

गुदे 4 दलमध्ये ओं वं नमः इत्यादि ओं सं नमः

ललाटे 2 दलमध्ये ओं हं नमः इत्यादि ओं क्षं नमः

आधारे लिंगनाभौ प्रकटितहृदये तालुमूले ललाटे
द्वे पद्मे षोडशारे द्विदशदले द्वादशार्धे चतुष्के ।
वासान्ते बालमध्ये डफकटसहिते कण्ठदेशे स्वराणाम्
हं क्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥

## बहिर्मातृकान्यासः

ऋष्यादि न्यासान्तं पूर्वोक्त अन्तर्मातृकावत्

## ध्यानम्

पञ्चाशल्लिपिभिर्विभक्त मुखदोः पात्संधि वक्षस्य मालां
भावस्मौलिनिबद्धचन्द्रशकलामापीनतुंगस्तनीम् ।
मुद्रामक्षगुणं सुदाढ्यकलशं विद्यां च हस्ताम्बुजैः
बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥

ओं अं नमः शिरसि
ओं आं नमः मुखे
ओं इं नमः दक्षनेत्रे
ओं ईं नमः वामनेत्रे
ओं उं नमः दक्षिणकर्णे
ओं ऊं नमः वामकर्णे
ओं ऋं नमः दक्षिणनासिकायां
ओं ॠं नमः वामनासिकायां
ओं लृं नमः दक्षिणकपोले
ओं लॄं नमः वामकपोले
ओं एं नमः ऊर्ध्वोष्ठे
ओं ऐं नमः अधरोष्ठे
ओं ओं ऊर्ध्वदंतपंक्तौ
ओं भं नमः नाभौ
ओं मं उदरे
ओं यं त्वगात्मने नमः
ओं रं असृगात्मने नमः
ओं लं मांसात्मने नमः
ओं वं भेदात्मने नमः

ओं औं नमः अधोदन्तपंक्तौ
ओं अं नमः मूर्ध्नि
ओं अः नमः मुखे
ओं कं नमः दक्षिणभुजे
ओं खं नमः दक्षिणकूर्परे
ओं गं नमः दक्षिणमणिबन्धे
ओं घं नमः दक्षिणगुलिमूले
ओं ङं नमः दक्षिणगुल्यग्रे
ओं चं नमः वामभुजे
ओं छं नमः वामकूर्परे
ओं जं नमः वाममणिबन्धे
ओं झं नमः वामांगुलिमूले
ओं ञं नमः वामांगुल्यग्रे
ओं शं अस्थ्यात्मने नमः
ओं षं पञ्चात्मने नमः
ओं सं शुक्लात्मने नमः
ओं हं आत्मने नमः
ओं ळं परमात्मने नमः
ओं क्षं प्राणात्मने नमः

ओं टं नमः दक्षिणपादमूले
ओं ठं नमः दक्षिणजानुनि
ओं डं नमः दक्षिणगुल्फे
ओं ढं नमः दक्षिणपादमूले
ओं णं नमः दक्षिणपादांगुल्यग्रे
ओं तं नमः वामपादमूले
ओं थं नमः वामजानुनि
ओं दं नमः वामगुल्फे
ओं धं नमः वामपादमूले
ओं नं नमः वामपादमूले
ओं पं नमः दक्षिणपार्श्वे
ओं फं नमः वामपार्श्वे
ओं बं नमः पृष्ठे
हृदादिदक्षिणहस्तान्तम्
वामहस्तन्तं
दक्षिणपादान्तं
वामपादान्तम्
जठरे
मुखे

## सृष्टिक्रमः

ऋष्यादि मंत्रं पूर्ववत् । विसर्गान्वितः प्रणवपुटितो वा । मायालक्ष्मी बीजपूर्वो वा, वाग्भवाद्यो वा न्यस्तव्यः ॥ तद्यथा– ओं अं ओं नमः ह्रीं श्रीं अः नमः, अथवा ऐं अः नमः इत्येव ॥ न्यासस्थानानि पूर्ववत्

## स्थितिक्रमः

ऋष्यादि न्यासान्तं पूर्ववत् । ध्यानम् ।

सिंधूरारुणकान्तिमसिताभरणां त्रिनेत्रां
विद्याक्षसूत्रमृगपोतवरं दधानाम् ।
पार्श्वस्थितां भगवतीमम्बिकाञ्चनाङ्गीम्
ध्यायेत् कराब्ज धृतपुस्तक वर्णमालाम् ॥

टं ठं डं इति सर्वत्र आदौ संयोज्य मातृकां पूर्ववत् न्यसेत् । ओं टं ठं डं अं: नमः । इत्यादि ॥

## संहारक्रमः

ऋष्यादि न्यासान्तं पूर्ववत् । ध्यानम् ।

अक्षस्रजं हरिणपोतमृदंगढंकं
विद्यां करैरविरतं दधतीं त्रिनेत्राम्
अर्धेन्दुमौलिमरुणामरविन्दवासां
वर्णेश्वरीं च प्रणुमः स्तनभारखिन्नाम्

अकारादिमातृकास्थानेषु क्ष कारादि अं पर्यन्तं न्यसेत् । तद्यथा ओं क्षं नमः ललाटे । हं मुखे इत्यादि अं परमात्मने नमः हृदादिमस्तकान्तम् ।

एवं न्यासचतुष्टयं सर्वोपयोगी ।
केवलं मातृकां न्यस्य ब्रह्मचारी भवेद्यदि ।
विसर्गसहितां ताञ्च सृष्टिसंज्ञां न्यसेद्बुधः ॥
केवलं मातृकां न्यस्य गृहस्थः साधको यदि ।

केवलं मातृकां न्यस्य वानप्रस्थोऽथवा यतिः ।
बिन्दुयुक्तां विलोमेन संहारमातृकां न्यसेत् ॥
यतिवानप्रस्थादौ सृष्टिस्थिति संहारक्रमः ।
गृहस्थैस्तु संहार सृष्टिः ततः स्थितिः ॥
केचित् सृष्टिस्थिति संहारान्तरं पुनः सृष्टिस्थिति न्यासः कार्यः ॥

## कलामातृका

केवलां मातृकां न्यस्य तारामन्त्रे भवेद्यदि ।
प्रणवांशकलायुक्तां मातृकां विन्यसेत् सुधीः ॥

प्रजापति ऋषिः । गायत्री छन्दः । कला सरस्वती देवता ।
ओं वीजं, नमः शक्तिः, कला कीलकम् ।

प्रणवद्वयमध्यस्थैः विषपदैर्दीर्घमुस्वरैः ।
षडङ्गानि प्रविन्यस्य ध्यायेद्देवीं परां शिवाम् ॥

ध्यानम् --

हस्तैः पद्मं रथाङ्गं गुणमथ हरिणं पुस्तकं वर्णमालाम्
ढंकं शुभ्रकपालं वरममृतलसद्धेमकुम्भं वहन्तीम् ।
मुक्ताविद्युत्पयोदस्फटिकनवजपाबंधुरैः पञ्चवक्त्रैः
त्र्यक्षैर्वक्षोजनम्रां सकलशशिनिभां शारदां तां नमामि ॥

ओं अं निवृत्तिकलायै नमः इत्यादि मातृकास्थानेषु न्यसेत ।

## श्रीकण्ठमातृका

केवलां मातृकां न्यस्य शिवभक्तो भवेद्यदि ।
श्रीकण्ठादिशक्तियुक्तां मातृकां विन्यसेत् सुधीः ॥

दक्षिणामूर्ति ऋषिः । गायत्री छन्दः । अर्धनारीश्वरोदेवता ।
हंसौं बीजम् । नमः शक्तिः । शिवः शक्तिः । रः कीलकम् ।
हम्सां, हम्सीं इत्यादिन्यासः ।

बन्धूककांचननिभं रुचिराक्षमालां
पाशांकुशौ च वरदं निजबाहुदंडैः ।

बिभ्राणमिन्दुशकलाभरणं त्रिनेत्र -
मर्धाम्बिकेशमनिशं वपुराश्रयामः ॥

हम्सो अं श्रीकण्ठाय पूर्णोदर्यै नमः । इत्यादि न्यसेत् ।

## केशवमातृका

केवलां मातृकां न्यस्य विष्णुभक्तो भवेद्यदि :
केशवादिशक्तियुक्तां मातृकां विन्यसेत् बुधः ॥

प्रजापति ऋषिः । गायत्री छन्दः । अर्धलक्ष्मीः हरिः देवता ।
क्लीं बीजम् । नमः शक्तिः । विष्णुलक्ष्मीः कीलकम् । क्लां इत्यादि न्यासः ।

हस्तै बिभ्रत्सरसिजगदा शंख चक्राणि विद्यां
पद्मादर्शौ कनककलश मेघविद्युद्विलासम् ।
वामांत्तुंगस्तनमविरला कल्पमालेष्वलोभात्
एकीभूतं वपुरवतु वः पुण्डरीकाक्षलक्ष्मीः ॥

क्लीं श्रीं अं केशवाय कीर्त्यै नमः इत्यादि विन्यसेत् ।

## शक्तिमातृका

शक्ति ऋषिः । गायत्री छन्दः । भुवनेश्वरी देवता । ह्रीं बीजम् ।
नमः शक्तिः । मूलप्रकृतिः कीलकम् । ह्रां ह्रीं इत्यादि न्यासः ।

उद्यत्कोटिदिवाकरप्रतिपदोत्तुङ्गोरुपीनस्तनी
मूर्धार्धेन्दुकिरीटहाररशनामञ्जीरसंशोभिता ।
बिभ्राणा करपंकजैर्जपवटीपाशांकुशौ पुस्तकम्
दिश्याद्वो जगदीश्वरी त्रिनयना पद्मे निषण्णा सुखम् ॥
ह्रीं अं नमः इत्यादि न्यसेत् ।

## लक्ष्मीमातृका

भृगु ऋषिः । गायत्री छन्दः । लक्ष्मीर्देवता । श्रीं बीजम् । नमः शक्तिः ।
प्रकृतिः कीलकम् । श्रीं श्रीं इत्यादि न्यासः ।

विद्युद्दामसमप्रभां हिमगिरीप्रस्थैश्चतुर्भिर्गलैः
शुण्डादण्डसमुद्धृतामृतघटैराश्रित्यमानामिमाम् ।
बिभ्राणां करपंकजै र्जपवटीं पद्मद्वयं पुस्तकं
भास्वद्रत्नसमुज्ज्वलां कुचनतां ध्यायेज्जगत्स्वमिनीम् ॥
श्रीं अं नमः इत्यादि न्यसेत् ।

## कामेश्वरीमातृका

संमोहन ऋषिः । गायत्री छन्दः । कामेश्वरी देवता । क्लीं बीजम् । नमः शक्तिः । कामेश्वरी कीलकम् । क्लां क्लीं इत्यादि न्यासः ।

बालार्ककोटिरुचिरां स्फटिकाक्षमालां
कोदण्डमिक्षुजनितं स्मरपञ्चबाणान् ।
विद्यां च हस्तकमलैर्दधतीं त्रिनेत्राम्
ध्यायेत्समस्तजननीं नवचन्द्रचूडाम् ॥
क्लीं अं नमः इत्यादि न्यसेत् ।

## (त्रिपुरा) संमोहिनीमातृका

संमोहन ऋषिः । गायत्री छन्दः । त्रिपुरासंमोहिनी देवता । क्ली बीजम् । ह्रीं शक्तिः । श्रीं कीलकम् । क्लीं, ह्रीं, श्रीं इति द्विरावृत्त्या न्यासः

ध्याये यमक्षवलयेक्षुशरान् सपाशान्
पद्मद्वयांकुशशरान् नवपुस्तकञ्च ।
आबिभ्रतीं निजकरैररुणांकुशादीन्
सम्मोहिनीं त्रिनयनां तरुणेन्दुचूडाम् ॥
ह्रीं श्रीं क्लीं अं नमः इत्यादि न्यसेत् ।

## बालामातृका

शुद्धं बिन्दुयुतं विसर्गसहितं हृल्लेखया संश्रितम्
बालासंपुटितं तथा च परया श्रीविद्ययालंकृतम् ।

आरोहादवरोहनश्च कुरुते न्यासं पुनर्हंसयोः
यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृत् ॥

दक्षिणामूर्ति ऋषिः । पंक्तिः छन्दः । वर्णमयी बाला देवता ।
ऐं बीजम् । सौः शक्तिः । क्लीं कीलकम् । बाला बीजत्रयेण न्यासः ।

1) सद्रत्ना शेखरकुण्डलाङ्गदां मणिग्रैवेयहारोर्मिकां
विद्योतद्वलयादिकंकणकटीं सूत्रां स्फुरन्नूपुराम् ।
माणिक्योदरबन्धुरस्तनभरामिन्दोः कलां बिभ्रतीम्
पाशं सांकुशपुस्तकाक्षवलयं दक्षोर्ध्वबाह्वादितः ॥

2) पूर्णेन्दुप्रतिमप्रसन्नवदनां नेत्रत्रयोद्भासितां
इन्दुक्षीरवलक्षगात्र विलसन्माल्यानुलेपाम्बराम् ।
पञ्चाशल्लिपि जृम्भिताखिलजगद्वाग्देवतादेवताम्
मूलाधारसमुद्गतां भगवतीं वर्णाम्बुजां चिन्तयेत् ॥
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं सौः क्लीं ऐं
इत्यादि न्यसेत् ।

## परासम्पुटितमातृका

ब्रह्मा ऋषिः । गायत्री छन्दः । परा सरस्वती देवता । सां सौं इत्यादि न्यासः ।

अकलंकशशांकाभां त्र्यक्षां चन्द्रकलावतीम् ।
मुद्रापुस्तकलसद्बाहुं प्रणमामि परां कलाम् ॥
ओं ऐं ह्रीं श्रीं सौः अं सौः इत्यादि न्यसेत् ।

## श्रीविद्यामातृका

दक्षिणामूर्ति ऋषिः । पंक्तिश्छन्दः । मातृकारुपी महात्रिपुरसुन्दरी देवता ।
कूटत्रयद्विरावृत्त्या न्यासः ।

आरक्ताभां त्रिनेत्रां मणिमकुटवतीं रत्नताटंकरम्यां
हस्ताम्भोजैः सपाशांकुशमदनधनुःसायकैर्विस्फुरन्तीम् ।
आपीनोत्तुंगवक्षोरुहतटविलुठत्तारहारोज्ज्वलांगीं

ध्यायन्नम्भोरुहस्थानरुणवसनामीश्वरीमाश्रयामि ॥

ओं ऐं ह्रीं श्रीं मूलम् अ नमः इत्यादि न्यसेत् ।

## हंसमातृका

दक्षिणामूर्ति ऋषिः । गायत्री छन्दः । हरगौरीमहादेवी देवता ।
हसां हंसीं इत्यादिन्यासः ।

उद्यद्भानुस्फुटिततडिदाकारमर्धांबिकेशं
पाशाभीतिवरदपरशुसंदधानं कराब्जैः ।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं
सौम्याग्नेयं वपुरवतु वश्चन्द्रचूडं त्रिनेत्रम् ॥

## परमहंसमातृका

परमहंसऋषिः । विराट् छन्दः । परमात्मस्वरूपिणी चिन्मयी देवता ।
ओं हंसां, हंसीं इत्यादि न्यासः ।

श्रीमत्परात्ममनुजृम्भितवर्णरूपां
मानै रगम्य पदवीं परिलीलमानाम्
विद्याक्षसूत्रकलशं दधतीं च मुद्रां
समस्तजननीं विशदां त्रिनेत्राम् ।
ओं ऐं ह्रीं श्रीं सोहं क्षं नमः इत्यादिविलोमेन न्यसेत् ।

## पुरुषसूक्तन्यासः (यजुर्वेदक्रमः)

अस्य श्री पुरुषसूक्तमहामन्त्रस्य नारायण ऋषिः । अनुष्टुप् अन्त्ये-त्रिष्टुप् छन्दः । श्रीमहाविष्णुप्रीत्यर्थे जपे विनियोगः । ओं 1 नारायणाय 2 माधवाय 3 हृषीकेशाय नमः 4 जनार्दनाय नमः 5 विष्णवे नमः 6 पुरुषोत्तमाय नमः संख्याक्रमेण न्यासः । ततः ओं केशवाय नमः मूर्ध्नि । नारायणाय ललाटे । माधवाय श्रोत्रे । गोविन्दाय नेत्रौ । विष्णवे नासि । मधुसूदनाय मुखे । त्रिविक्रमाय कण्ठे । वामनाय भुजौ । श्रीधराय हृदये । हृषीकेशाय नाभौ । पद्मनाभाय कट्यां । दामोदराय पादौ । इति सर्वत्र प्रणवपूर्वकनमोन्तं न्यसेत् ।

अतो देवा ... धामभिः, हृदये । इदं विष्णु - - - सुरे, शिरसि ।

विष्णो - - - सखा, शिखा । त्रीणिपदा - - - परस्पर्शे, कवचम् ।
तद्विष्णो - - - गगनं, नेत्रं । तद्विप्रासो - - - पदं, अस्त्रम् ।

1 सहस्र - - - अङ्गुलम्, वामपाणि
2 पुरुष - - - रोहति, दक्षपाणि
3 एतावा - - - दिवि, वामपादौ
4 त्रिपादूर्ध्व - - अभि, दक्षपादौ
5 तस्माद्विराड - - - पुरः, वामजंघे
6 यत्पुरुषेण - - - हविः, दक्षजंघे
7 सप्तास्यासन् - - - पशुं, गुह्ये
8 तं यज्ञं - - - ऋषयश्च ये, नाभौ ।
3 तस्माद्यज्ञात् - - - ग्राम्याश्च ये, हृदये
10 तस्मद्यज्ञात् - - - अजायत, कण्ठे ।
11 तस्मादश्वा - - - अजावयः, वामबाहौ ।
12 यत्पुरुषं - - - उच्येते, दक्षिणबाहौ ।
13 ब्राह्मणोऽस्य - - - अजायत, मुखे ।
14 चन्द्रमा - - - अजायत, वामकर्णे ।
15 नाभ्या - - - अकल्पयन्, दक्षिणकर्णे ।
16 वेदाहमेतं - - - यदास्ते, वामनेत्रे ।
17 धातापुरस्तात् - - - विद्यते, दक्षिणनेत्रे ।
14 यज्ञेन - - - देवाः, शिरसि ।
ध्यानम् - - गोक्षीरा

श्रीचक्रे भूपुटे प्रथमावरणपूजात्परं, द्वितीयावरणपूजापूर्वं
त्रिवृत्तस्थ देवताः ।
प्रथमबहिर्वर्तुले

1 ओं ऐं ह्रीं श्रीं शं शांकरीशक्तिश्री
2 ओं तां ईशान „
3 ओं हं इन्दुशेखर „

4 ओं ऐं ह्रीं श्रीं पं अर्धनारीश्वर „
5 ओं क्षं अघोरस्वरूपिणी „
6 ओं रं हुतवहन „
7 ओं लं हालाहलधारिणी „
8 ओं मं भुविभारधारिणी „
9 ओं अं शैवशक्ति „

मध्यवलये

1 ओं अं नारायणी „
2 ओं मं केशव „
3 ओं हं माधव „
4 ओं गं गोविन्द „
5 ओं वं वैष्णव „
6 ओं मं मधूसूदन „
7 ओं त्रं वामन „
8 ओं श्रीं श्रीधर „
9 ओं दें हृषीकेश „
10 ओं वां कमलोदर „
11 ओं रं रञ्जिनी „

तृतीयवर्तुले

1 ओं यं कमलनयन „
2 ओं अं चतुर्मुखी „
3 ओं इं चतुरानन „
4 ओं ह्रीं चतुरांगी „
5 ओं रं चतुरस्रगेहिनी „
6 ओं मं चतुरस्रगात्रिणी „
7 ओं लं चतुर्वर्गफलप्रदा „
8 ओं ह्रीं त्रयीमयी „

| | | | |
|---|---|---|---|
| 9 | ओं ऐं ह्रीं श्रीं | यं त्रिकला | ,, |
| 10 | ओं | इं त्रिरेखा | ,, |
| 11 | ओं | वां त्रिगुणा | ,, |
| 12 | ओं | र त्रिमूर्ति | ,, |

एभि: देवतां प्रत्येक पूजयामि, तर्पयामि नमः इति संपूज्य, ततः द्वितीयावरणपूजा कर्तव्या इति श्रीविद्यार्णवतन्त्रे ।

### श्रीचक्रभेदा:

त्रैविध्यं तस्य चक्रस्य भूप्रस्तारोर्ध्वमेरुकम् ।
पातालवासिनां देवि प्रस्तारो निम्नरेखकम् ।
ऊर्ध्वरेखो महेशानि मर्त्यलोकनिवासिनाम् ।
स्वर्गलोकादिवासानां बैन्दावान्तं महेश्वरि
क्रमात् समुन्नतं सर्वं मेरुरूपं मयोदितम्
समोर्ध्वरेखा नवकमूर्ध्वरेखं प्रकीर्तितम्
निम्नरेखासमायोगात् भूप्रस्तारो मयोदित:
यन्त्रराजस्वरूपं ते मया स्नेहात् प्रकीर्तितम्
चतुरस्रं समारभ्य नवचक्राण्यनुक्रमात्
उन्नतोन्नतमामध्या ऋणं स्यान्निधनं धनम्
त्रित्रिक्रमादुन्नतं तदप्रजत्वं श्रियं लभेत्
एक द्वि षट् क्रमोन्नतं श्रियै कीर्त्यै च लभ्यते
नवानि समरूपाणि सर्वाभीष्टार्थसिद्धये
उच्छ्रितं क्रमशो देवि वित्तप्राप्तिं ततो मृति:
भूचक्रं षोडशारं चाप्यष्टारं च समं भवेत्
शेषमुन्नतमीशानि नार्थप्त्यिप्रजदं भवेत्
चतुरस्रं समं देवि षोडशारादिबिन्दुकम्
मिथः समुन्नतं देवि श्रियै कीर्त्यै च कल्प्यते
चतुरस्रं समारभ्य विन्द्वन्तं समरेखकं
तथा श्री: कीर्तिरारोग्यममृतायोपकल्प्यते ।

सीसकांश्यादिषु पुनःपूर्वोक्तविपरीकृतत्
फलकायां पटे भित्ती स्थापयेन्न कदाचन
स्थापितं यदि मोहेन लोभेनाज्ञानतोऽपि वा
कुलं वित्तमपत्यञ्च निर्मूलयति सर्वथा
अग्निरंगुलविस्तारं प्राक् प्रत्यक् दक्षिणोत्तरम्
पलप्रमाणं कर्तव्यं अर्चापीठं मनोहरम्
यदार्धोच्चं प्रकुर्वीत चतुरस्रं समन्ततः
तस्मिन् पीठे च निर्माणं श्रीचक्रस्य तु कारयेत्

ऋजुरेखा भवेल्लक्ष्मीः वक्ररेखादरिद्रता
अग्निरंगुलविस्तारो यवार्धेनेच्छ्रितिर्भवेत्
सृष्टिक्रमेण पूजा स्यात् सृष्टिचक्रोऽभिधीयते
स्थितिक्रमेण पूजा स्यात् स्थितिचक्रे महेश्वरि

संहारक्रमयोगेन पूजा संहार चक्रमे
श्रीचक्रं त्रिविधं प्रोक्तं सृष्टिस्थितिलयात्मकम्
प्रत्येकं त्रिविधं ज्ञेयं तत्सांकर्यात्प्रयत्नतः
मूलभेदा नवैव स्युः तत्प्रभेदाह्यनेकधा

सृष्टि सृष्ट्यात्मकं स्थितिस्थितिलयलयात्मकम्
इतित्रिविधम् ।
सृष्टिस्थिति स्थितिसृष्टि सृष्टिलयम् इतित्रिविधम् ।
लयसृष्टि लयस्थिति लयलयात्मकम् इति त्रिविधम् ।
एवं नवभेदः। एवं सर्वे द्वादशभेदाः ।
तद्विवेकः :-
सृष्टिचक्रं समाख्यातं नवचक्राण्यनुक्रमात्
अन्ततोन्नतमामध्यं विज्ञेयं देशिकोत्तमैः

श्रीचक्रं सृष्टिसृष्ट्याख्यं प्रतिरेखं ततोन्नतम्
समोर्ध्वरेखानवकं समे पीठे च पद्मवत्
स्थितिचक्रं तदेवोक्तं स्थूलरेखं महेश्वरि

सूक्ष्मरेखं भवेत्तत्र स्थितिस्थित्यात्मकं शिवे
लयात्मकं निम्नरेखं स्थूलं लयलयात्मकम्
सूक्ष्मं पातालरेखं = लयात्मकं

स्थूलं पातालरेखं = लयलयात्मकम्
निम्नरेखा = पातालरेखा

अर्धमेर्वात्मकं यन्त्रं द्विधाख्यातं महेश्वरि
अर्धक्रमादुन्नतं यच्चतुरस्रादितस्ततः

तदूर्ध्वं समरेखं स्यात् सृष्टिस्थित्यात्मकं शिवे
वपरीत्ये न चैतस्य स्थितिसृष्ट्यात्मना भवेत्

चतुरस्रं समारभ्य चक्रत्रयमपीश्वरि ।
क्रमोन्नतं तदूर्ध्वं तु समंस्यान्निम्नरेखकम् ।

सृष्टिसंहाररूपं स्याद्वैपरीत्येन तस्य तु ।
लयसृष्ट्यात्मकत्वं तु प्रोक्तं ज्ञेयं मनीषिभिः ।

अर्धपातालरेखं तु तदूर्ध्वं चोर्ध्वरेखकम् ।
लयस्थित्यात्मकं प्रोक्तं वैपरीत्येन तस्य तु ।

स्थितिसंहाररूपं तु विज्ञेयं देशिकोत्तमैः ।
स्थितिस्थित्यात्मकं चक्रं प्रशस्तं गृहमेधिनाम्

आयुः कीर्तिर्धनारोग्यं पुत्रपौत्रविवर्धनम्
सृष्टिस्थित्यात्मकं चक्रं अप्रजत्वं श्रियं भवेत्

पञ्चाशद्वर्षतश्चोर्ध्वं पुत्रपौत्रप्रदं भवेत्
सृष्टिस्थित्यात्मकं चक्रं पुत्रायुर्धनवृद्धिदम्

पञ्चाशद्वर्षतश्चोर्ध्वं अपत्यध्वंसकृत् भवेत्
अन्ये प्रोक्तास्तु ये भेदाः श्रीचक्रस्य महेश्वरि

यतिवैखानसानां तु विशेषो वर्णिनामिति
सृष्टिचक्रं महेशानि पूजा सृष्ट्यन्तता भवेत्

स्थिति चक्रे तु स्थित्यन्ता संहारे तु लयान्तता
गुरुपारंपर्यतो वा पितृभ्रातृक्रमाच्च वा

प्राप्तं श्रीगुरुणा दत्तं गुरुज्येष्ठकनिष्ठकैः
दत्तं भाग्यवशाद्देवि लभ्यते यदि साधकः

पूजां तत्र प्रकुर्वीत स्थित्यन्तां परमेश्वरि
दुष्टयन्त्रमिति प्रोक्तं फलदं नान्यथा शिवे

पितृपितामहक्रमतो गुरुपारम्पर्यक्रमतश्च कालवशात् भाग्यवशात् दुष्ट-यन्त्रं प्राप्यते चेत् तस्मिन् यन्त्रे पूजा तु प्रथमतः संहारक्रमेण, ततः सृष्टिक्रमेण, ततः स्थितिक्रमेण विधेया ।

सृष्टिक्रमेण देवेशि पूजनीयं प्रयत्नतः
मेरुचक्रे तु संहारक्रमपूजा न विद्यते

भूप्रस्तारे महेशानि स्थितिपूजा सदोत्तमा
संहारपूजा कैलासप्रस्तारेऽत्र विधीयते

स्थितिक्रमो गृहस्थस्य संहारो वनिनो यतेः
ब्रह्मचारिणा उत्पत्तिः स्त्रियः शूद्रस्य चेष्टितः

खण्डिते स्फुटिते दग्धे भ्रष्टमानविवर्जिते
व्यङ्गेऽनर्हपशुस्पृष्टे पतिते दुष्टभूमिषु

अन्यमन्त्रार्चिते चैव पतिता स्पर्शदूषिते
दशस्वपि च नो कुर्युः संनिधानं दिवौकसः

## पूजालिंगप्रमाणम्

स्वाभिमतर्लिङ्गं कृत्वा, तस्य मस्तकस्य विस्तारं पुज्यस्य लिङ्गस्य यो भाग उच्चता तत्समं कुर्यात् ।

लिङ्गमस्तकविस्तारो लिंगोच्छ्राय समो भवेत्

ततो लिङ्गमस्तकविस्तारो यावत् त्रिगुणवेष्टनयोग्यं लिंगस्यनाहं स्थौल्यं कृत्वा लिंगस्य यो नाह एतत्सूत्रमानविस्तारं पूज्यस्य लिङ्गस्य योंऽश उच्च-स्ततो द्विगुणोन्नत्युक्तं वृत्ताकारं चतुरस्रं वा पीठस्य मध्ये लिंगस्य नाहं सूत्रस्य स्थौल्यमात्रस्य द्विगुणसूत्रवेष्टनयोग्यं स्थूलं कण्ठं कृत्वा कण्ठस्योर्ध्वमधश्च समांशेन मेखलात्रयं, मेखलाद्वयं वा विधाय लिङ्गमस्तक-विस्तारं षोढा विभज्य तेष्वेकांशमानेन पीठस्योपरि भागे सर्वबाह्यांशमानेन मेखलां कृत्वा तदन्तस्तन्मानेन, तत्संलग्नांशेन खातं विरच्य, पीठाद्बहिः लिंग-समानदैर्घ्यं, पीठमानस्यार्धदीर्घं वा मूलदेशे दीर्घांशमानविस्तारं, अग्रदेशे तदर्थ-मानं विस्तारं, तन्मध्ये मूलादग्रावधि प्रणालविस्तारस्यतृतीयांशमानविस्तार खातरूपजलमार्गयुक्तं पीठवत्समेखलं प्रमाणं च कुर्यादिति, स्फाटिकादिरत्न-विशेषैः पाषाणादिभिर्वा शिवलिंगनिर्माणसाधारणोऽयं विधिः ।

## श्रीचक्रआवरणदेवतानां गायत्र्यः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| गणपतिः । | तत्पुरुषाय | विद्महे | वक्रतुण्डाय | धीमहि | तन्नो | दन्तिः | प्रचोदयात् |
| वटुकभैरवं । | आपदुद्धरणाय | ,, | वटुकेशवराय | ,, | ,, | वीरः | ,, |
| क्षेत्रपाल । | दिगम्बराय | ,, | कपालहस्ताय | ,, | तन्नः | क्षेत्रपालः | ,, |
| योगिनी । | व्यापिकायै | ,, | नानारूपाय | ,, | तन्नो | योगिनी | ,, |
| इन्द्रः । | देवराजाय | ,, | वज्रहस्ताय | ,, | तन्नः | शक्रः | ,, |
| वह्निः । | रुद्रनेत्राय | ,, | शक्तिहस्ताय | ,, | तन्नो | वह्निः | ,, |
| यमः। | वैवस्वताय | ,, | दण्डहस्ताय | ,, | ,, | यमः | ,, |
| निर्ऋतिः । | निशाचराय | ,, | खड्गहस्ताय | ,, | ,, | निर्ऋतिः | ,, |
| वरुणः । | शुद्धहस्ताय | ,, | पाशहस्ताय | ,, | ,, | वरुणः | ,, |
| वायुः । | सर्वप्राणाय | ,, | यष्टिहस्ताय | ,, | ,, | वायुः | ,, |
| कुबेरः । | यक्षेश्वराय | ,, | गदाहस्ताय | ,, | ,, | यक्षः | ,, |
| ईशानः । | सर्वेश्वराय | ,, | शूलहस्ताय | ,, | ,, | रुद्रः | ,, |
| ब्रह्मा । | चतुराननाय | ,, | वेदवक्त्राय | ,, | ,, | ब्रह्मा | ,, |
| अनन्तः । | पातालवासिने | ,, | सहस्रवदनाय | ,, | ,, | अनन्तः | ,, |
| वज्रः । | शतकोटिने | ,, | महावज्राय | ,, | ,, | वज्रः | ,, |
| शक्तिः । | तीक्ष्णभल्लाय | ,, | दीर्घदण्डाय | ,, | तन्नः | शक्तिः | ,, |
| दण्डः । | शत्रुघ्नाय | ,, | दीर्घकायाय | ,, | तन्नो | दण्डः | ,, |
| खड्गः । | तीक्ष्णधाराय | ,, | त्रिमूर्त्यात्मकाय | ,, | तन्नः | खड्गः । | ,, |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पाशः । | जगदाकर्षणाय | विद्महे | महापाशाय | धीमहि | तन्नः | पाशः | प्रचोदयात् |
| अङ्कुशः । | वशीकरणाय | ,, | महांकुशाय | ,, | तन्नो | अंकुशः | ,, |
| गदा । | अयःसारायै | ,, | दीर्घगात्र्यै | ,, | ,, | गदा | ,, |
| शूलं । | तीक्ष्णशिखाय | ,, | महाकायाय | ,, | तन्नः | शूलं | ,, |
| पद्मम् । | रक्तवासाय | ,, | ,, | ,, | | पद्मं | ,, |
| सुदर्शनम् । | सुदर्शनाय | ,, | महाज्वालाय | ,, | ,, | चक्रं | ,, |
| अणिमा । | अणिमासिद्ध्यै | ,, | वराभयहस्तायै | ,, | ,, | सिद्धिः | ,, |
| लघिमा । | लघिमा ,, | ,, | निधिवाहनायै | ,, | तन्नो | लघिमा | ,, |
| महिमा । | महिमा ,, | ,, | महासिद्ध्यै | ,, | ,, | महिमा | ,, |
| ईशत्वं । | ईशत्व ,, | ,, | जगद्व्यापिकायै | ,, | तन्नः | सिद्धिः | ,, |
| वशित्वं । | वशित्व ,, | ,, | शोणवर्णायै | ,, | ,, | ,, | ,, |
| प्राकाम्यं । | प्राकाम्य ,, | ,, | निधिवाहनायै | ,, | ,, | ,, | ,, |
| इच्छा । | इच्छा ,, | ,, | पद्महस्तायै | ,, | ,, | शक्तिः | ,, |
| भुक्ति । | भुक्ति ,, | ,, | महासिद्ध्यै | ,, | ,, | ,, | ,, |
| रस । | रस ,, | ,, | भक्तवत्सलायै | ,, | ,, | ,, | ,, |
| मोक्ष । | मोक्ष ,, | ,, | महानिर्मलायै | ,, | ,, | ,, | ,, |

इति गणपत्यादि सिद्धीनामन्तं गायत्र्यः

## मातृकागायत्र्यः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ब्राह्मी । | ब्रह्मशक्त्यै | विद्महे | पीवर्णायै | धीमहि | तन्नो | ब्राह्मी | प्रचोदयात् |
| माहेश्वरी । | श्वेतवर्णायै | ,, | शुलहस्तायै | ,, | ,, | माहेश्वरी | ,, |

यदा विसृष्ट त्वमनञ्जनेन वै बलं प्रविष्टोऽजयत् दैत्यदानवम् ।
बाहूदरावांघ्रिशिरोधराणि वृक्णन्नजस्रं प्रधने विराजमे ।।

स त्वं जगत्राण खलप्रहाणवे निरूपितः सर्वसहोगतामृता ।
विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हितः ।

यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितकुलं नो विप्रदैवम् ।
च द्विजो भवतु विज्वरः विज्वरः

यदि नो भगवान् प्रीतो एकसर्वगुणाश्रयः ।
सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ।

देवीं वाच मजनयन्तु देवास्तां विश्वरूपाः पशवो वदन्ति
सा नो मन्द्रेषु मूर्जंदहाना धेनुर्वागस्मान् उपसुष्टुतै तु ।

## मातृकाबीज निघण्टुः

श्रीगणेशं महेशानं भारतीमीश्वरं शिवम्
नत्वा वक्ष्ये मातृकाणां निघण्टुं बालवृद्धये ।।

ओं ध्रुवस्तारस्त्रिवृद्षाद्य वेदादि स्तारकोव्ययः ।
प्राणवश्च त्रिमात्रोपि ओंकारो ज्योतिरादितः ।।

अ श्रीकण्ठः केशवश्चापि निवृत्तिश्च स्वरादिकः ।
आकारो मातृकाद्यश्च वात इत्यभिधीयते ।।

आ नारायणस्तथानंतो मुखवृत्तो गुरुस्तथा ।
विष्णुशय्या तथा शेषो दीर्घ आकार एव च ।।

इ माधवस्सूक्ष्म संज्ञश्च विद्या दक्षिणलोचनं ।
गन्धर्वः पांचजन्यश्च इकारश्च मुकांकुरः ।।

ई गोविन्दश्चत्रिमूर्तीशः शांतिस्याद्वामलोचनं ।
नृसिंहास्त्रं तथा माया ईकारोपि सुरेश्वरः ।।

उ अमरेशस्तथा विष्णुरिन्धिका च गजांकुशः ।
दक्षकर्णश्च विजयी उकारो मन्मथाधिपः ।।

ऊ अर्वादीपिका वामश्रवणं मधुसूदनः ।
इन्द्रचाप षण्मुखश्च ऊकारो रक्षणाधिपः ।।

ऋ देविका दक्षनासा च मारमूर्तिस्त्रिविक्रमः ।
देवमाता रिपुघ्नश्च ऋकारस्तपनस्तथा ॥

ॠ अतिथीशो वामनश्च मोचिका वामनासिका ।
दैत्यमाता च दैवज्ञ ॠकारस्त्रिपुरांतकः ।

ऌ श्रीधरश्च परास्थाणु र्दक्षगण्डस्त्रिवेदकः ।
एकांध्रि र्वज्रदण्डश्च व्योमर्ध्दिर्ऌस्वरस्मृतः ।

ॡ हृषीकेशो हरस्सूक्ष्मो वामगण्डः; कुबेरदृक् ।
अर्द्धचो नीलचरणो ॡकारश्च त्रिकूटकः ॥

ए झिंटीशः पद्मनाभश्च शक्तिसूक्ष्मा स्मृताभगः ।
ऊर्ध्वोष्ठगः कामरूप एकारश्च त्रिकोणकः ।

ऐं ज्ञानमृतो भौतिकश्चाधरो दामोदरस्तथा ।
वागीशो वर्म मयदरोकारस्त्रिपुरस्तथा ॥

ओ सद्योजातो वासुदेवऊर्ध्वं दन्तस्त्रिमात्रकः ।
आप्यायनी मंत्रनाथ ओकारोनागसंज्ञकः ॥

औं संकर्षणोनुग्रहेशो मुरारिर्व्यापिनी तथा ।
अथो दंतगतोमायी नृसिंहांगस्तथौरसः ॥

औ अंकूरो व्योमरूपश्च प्रद्युम्नश्चन्द्रसंज्ञकः ।
अनुस्वारस्तथा बिंदुरंकारश्च शिरोऽव्ययः ।

अं अनन्तश्च महासेनोऽनिरुद्धोरसवर्णकः ।
कन्यास्तन निभस्सर्गो विसर्गश्चांतिमस्स्वरः ॥

अः क्रोधीशो धातृसंज्ञश्चक्री सृष्टिश्चकरादिगः ।
वर्गादिगः पादवेषः ककारः कामगस्स्मृतः ॥

क क्रुधाद्धिगदि चण्डीशा खेटोदक्षिणकूर्परः ।
कैटभारिश्च मातंगः संहारः खार्णकस्मृतः ॥

ख स्मृतिः पंचांतकश्शाङ्गी गणेशो मणिबन्धगः ।
गोमुखो गजकुंभश्च गकारः सिंहसंज्ञकः ॥

ग खड्गी शिवोत्तमो मेधा दक्षिणांगुलिमूलगः ।
घनोधन स्वरश्चैव घकारोङादिमस्मृतः ॥

22 संज्ञाको रुद्रकांतिश्च दक्षांगुल्यग्रसंस्थितः ।।
क्लीबवक्त्रश्च भद्रेशो ङकारश्चानुनासिकः ।।

23 ह्ली कूर्मेश्वरो लक्ष्मी र्वामबाह्वादिगस्तथा ।
चित्रधारीचंचलश्च चकारस्संस्मृतो बुधैः ।।

24 एकनेत्रश्चमुसली वामकूर्परगोद्यतिः ।
त्रिबिंदुकस्तथाचारी छकारः श्लेष्मकां मिधः ।।

25 स्थिराजपत्नी जपजश्शूली च चतुराननः ।
मणिबंधगतो वामे जकारांजनकोत्तमः ।।

26 स्थितिः पाशी तथाजेशो वामांगुलितलस्थितः ।
स्वस्थिक स्थाणु संज्ञश्च झकारो जान्तसंज्ञकः ।

27 वामांगुल्यग्रतः सिद्धिरंकुशी सर्वसंज्ञतः ।
मा ते गोह्यनुगानश्च ञकारश्च निरंजनः ।।

28 जरामुकुंदस्सोमेशो दक्षपादादि गोमुखः ।
गजांकुशश्च बालेंदुरमृताद्यष्टकस्मृतः ।।

29 लांगलीशो नन्दजश्च पालिनी च कमण्डलुः ।
दक्षजानुगतस्थायी ठकारस्थविरस्स्मृतः ।।

30 नंदी क्षांतिर्दारकश्च डामरो दक्षगुल्फगः ।
व्याघ्रपादश्शुभांघ्रिश्च डकारस्तोमरोमतः ।।

31 ऐश्वरी चार्द्धनारीशो नरश्शाखांतराकृतिः ।
दक्षपादांगुलीमूलो ढलो ढक्को ढकारकः ।।

32 उमाकांतो नरकजिद्रति र्दक्षपदाग्रगः ।
निर्वाणस्त्रिगुणाकरस्तिरेखोणस्समीरितः ।।

33 वामोरुमूलनिलय आषाढी कामिकाहरिः ।
तीव्रश्चतरलो नीलस्तकारः कीर्तितो बुधैः ।।

34 दण्डीशो वरदः कृष्णो वामजानुगतस्मरः ।
शौरी चापि विशालाक्षस्थकारः परिकीर्तितः ।।

35 सत्गोत्रीशोह्लादिनी च वामगुल्फगतस्तथा ।
शूली कुवेरो दाता च दकारो धादिमः स्मृतः ।।

36 मीनेशस्सात्वतप्रीतिर्वामपादांगुलीगतः ।
धनेशो धरणीशश्च धकारो दांतिमः स्मृतः ।।

न  शोरी मेषेश्वरी दीर्घा वामपादाग्रसंस्थितः ।
नरो नदीनो नादी च नकारश्चानुनासिकः ॥

प  तीक्षणा च लोहितश्शूरो दक्षपार्श्वश्च पार्थिवः ।
पद्मेशो नान्तिमः फादि पकारोपि प्रकीर्तितः ॥

फ  जनार्दनः शिखी रौद्री वामपार्श्वकृतालयः ।
फट्कारः प्रोच्यते सद्भिः फकारः पांतिमस्मृतः ॥

ब  छलगण्डो भूधरश्च भयापृष्टगतास्तथा ।
सुरसो वज्रमुष्टिश्च बकारो भादिमो मतः ॥

भ  विश्वमूर्तिर्द्विरण्डेशो निद्रा नाभिगतोपि च ।
भ्रुकुटी च भरद्वाजो भकारश्च जयापहः ॥

म  वैकुण्ठश्च महाकालस्तन्द्री जठरसंस्थितः ।
मन्त्रेशो मण्डलो मानी विषस्सूर्यो मकारकः ॥

य  क्षुधा बाला च वायुस्त्वरधृतश्च पुरुषोत्तमः ।
यमुनो यामुनेयश्च यकारो मांतिमः स्मृतः ॥

र  क्रोधिनी च भुजंगेशी ज्वाली रुधिरपावकौ ।
रोचिष्मान्दक्षिणांशश्च रुचिरो रेफ ईरितः ॥

ल  क्रियाककुद्गतो मासं पिनाकी भूर्बलानुजः ।
लंपटः शक्रसंज्ञश्च वाद्यो रांतोलकारकः ॥

व  वालो वामांसनिलयो मेदो वरिदवारूणौ ।
उत्कारी जलसंज्ञश्च खड्गीशोपि वकारकः ॥

श  मृत्युर्बको वृषघ्नश्च हृदो दक्षकरस्थितः ।
शंकुकर्णोस्थिसंज्ञश्च शकारो विद्भिरीरितः ॥

ष  वृषःश्वेतेश्वरः पीता मज्जा हृद्वामबाहुगः ।
षडाननः षकारश्च कीर्तितैश्च बुधैः खरः ।

स  मृगुःश्वेतस्तथा हंसो हृदो दक्षिणपादगः ।
समयस्सामगश्शुक्रः संगतिस्सार्णकश्शशी ॥

ह  नभो वराहो नकुलो हृदो वामपदस्थितः ।
सदा शिवोरूणः प्राणो हकारश्च हयाननः ॥

ळ हृदयान्नाभिसंस्थानश्शिवेशो विमलोऽसितः ।
लघुप्रयत्नश्चोपान्त्यो ळकारः प्रोच्यते बुधैः ॥

क्ष मवर्तको नृसिंहश्च हृदयान्मुखसंस्थितः ।
अनंतः परमात्मा च वज्रकायोन्तिमाक्षरः ॥
॥ इति हादिमते मातृकाकोशः ॥

## मंत्रारंभं दीक्षाकालनिर्णयः (३)

मन्त्रस्यारम्भणं मेषे धनधान्यप्रदं भवेत् ।
कर्कटे सर्वसिद्धिस्स्यात् कन्या लक्ष्मीप्रदो नृणांम् ।

तुलायां सर्वसिद्धिस्स्यात् सर्वलाभश्च वृश्चिके ।
मकरं पुत्रदं प्राहुः कुंभो धनसमृद्धिदः ॥
शुक्लपक्षे शुभा दीक्षा कृष्णोऽप्यापंचमीदिनात् ।
भूतिकामैः सिते पक्षे मुक्तिकामैः सितेतरे ॥

वैशाखे सिद्धिदा दीक्षा श्रवणे वृद्धिदा नृणां ।
आश्विने सर्वसिद्धिस्स्यात् कार्तिके ज्ञानवृद्धिदा ॥
शुभदा मार्गशीर्षे च माघे स्वर्णफलप्रदा ।
फाल्गुने सर्वसिद्धिस्स्यादन्येऽनिष्टफलप्रदाः ॥

रविवारे भवेद्वित्तं सोमे शांतिर्भवेत्किल ।
बुधे सौंदर्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ ।
शुक्रे सौभाग्यमाप्नोति शेषमरिष्टफलःप्रदम् ॥
द्वितीयायां भवेज्ज्ञानं तृतीयायां भवेच्छुचिः ।

पंचम्यां वृद्धिवृद्धिस्स्यात् सौख्यं स्यात् सप्तमीदिने ।
दशंम्यां राजसौभाग्यं एकादश्यां शुचिर्भवेत् ॥
द्वादश्यां सर्वसिद्धिस्स्यात् पूर्णिमा सर्वसिद्धिदा ।
अश्विन्यां सुखमाप्नोति रोहिण्यां वाक्पतिर्भवेत् ।

पुनर्वसौ धनाढ्यस्स्यात्पुष्ये शत्रुविनाशनं ॥
मघायां दुःखहानिस्स्यात् रूपदा पूर्वफल्गुनी ।
ज्ञानं चोत्तरफल्गुन्यां हस्तायां च बली भवेत् ॥
चित्रायां ज्ञानसिद्धिस्स्यात्स्वात्यां शत्रुविनाशनं ।

अनूराधा बुद्धिवृद्ध्यै कीर्त्यै स्यात्तां ततः परे ।।
मूलं सर्वसमृद्धिकृत् । पूर्वाषाढोत्तराषाढे सर्वसंपत्तिदायिके

(एतानि अर्धभाग)

वृद्धिः शतभिषायां स्यात् पूर्वाभाद्रे सुखी भवेत् ।
सौख्यं चोत्तरभाद्रायां रेवत्यां कीर्तिवर्धनं

भोगांश्च प्रीतिरायुष्मान् सौभाग्य :- शोभनः शुभाः ।
सुकर्मा च धृतिर्वृद्धिः ध्रुवः सिद्धिश्च हर्षणः

वरयांश्च शिवः सिद्धो ब्रह्मा चैंद्रोप्यमी शुभाः
बवादि वणिजांतानि करणानि शव्याप्तये ।।

त्रिषडायगताः पापाः शुभा केंद्रत्रिकोणगाः ।
दीक्षायां तु शुभा सर्वरंध्रस्थाः सर्वनाशकाः ।।

विषुवेऽप्ययनद्वंन्द्वे संक्रात्याः दमनोत्सवे ।।
दीक्षाकार्या त्वकालेपि पवित्रे गुरुपर्वणि ।।

1 दमनोत्सवः चैत्रपूर्णिमादिषु दमनकरणकदेवीपूजादिनेषु इत्यर्थः

2 पवित्रे - श्रावणपूर्णिमादिषु देव्याः पवित्रारोपणदिवसेषु ।।

3 गुरुपर्वणि - गुरोः जन्मव्याप्तिदिनयोः

## देवीपर्वाणि (वैशंपायन संहिते)

षष्ठी भाद्रपदे मासि कृष्णाश्विनचतुर्दशी ।
कार्तिके नवमी शुक्ला मार्गे कृष्णा च पंचमी ।

पौषे च पूर्णिमा देवी माघे चैव चतुर्थिका ।
फाल्गुनैकादशी कृष्णा चैत्रे मासि त्रयोदशी ।।

वैशाखेऽक्षयतृतीया ज्येष्ठे तु दहरा स्मृता ।
आषाढे द्वादशी कृष्णा आमावास्या च श्रावणी ।।

इमानि देवि पर्वाणि कोटियज्ञफलानि वै ।। इति ।। सौभाग्यचंद्रोदये ।।
अमांतचांद्रमासेषु चैत्रशुक्लत्रयोदशी ।

चतुर्दश्यापि शुक्लाम वैशाखे शुक्लपक्षगाः ।।

तृतीयैकादशी पौर्णमास्य: कृष्णचतुर्दशी ।
ज्येष्ठे तु शुक्ले दशमी राका कृष्णचतुर्दशी ।

आषाढे शुक्लपक्षस्थे पंचमी च त्रयोदशी ।
श्रावणे मासि शुक्लैकादशी शुक्लचतुर्दशी ॥

कृष्णा पंचम्यष्टमी च रोहिणीसहिता यदि ।
नवमी चाथ भाद्रस्य कृष्णषष्ठी तथाष्टमी ॥

रोहिणी सहिता चेत्स्यादाश्विने सप्तमीसिता ॥
अष्टमी च सिता कृष्णपक्षस्था च चतुर्दशी ॥

कार्तिके शुक्लपक्षस्थे नवमी द्वादशी तिथी ।
मार्गशीर्षे तृतीया च षष्ठी धवलपक्षगे ॥

पौषे चतुर्थी नवमी चतुर्दश्य: सिता मता: ।
दशमी त्वसिता माघे चतुर्थ्येकादशी सिते ॥

चतुर्दश्यासिता चाथ फाल्गुने शुक्लपक्षगे ।
षष्ठीनवम्यौ कृष्णा तु भवेदेकादशीति च ॥

## रत्नावली कुलोड्डीशयामलाद्यर्थ संग्रहे

सन्तीर्थेऽर्क विधुग्रासे पुण्यारण्ये वनेषु च
मंत्रदीक्षा प्रकुर्वाणो मासर्क्षादीनशोधयत्

सर्वे वारा ग्रहा: सर्वे नक्षत्राणि च राशय: ।
यस्मिन्नहनि संतुष्टो गुरु: सर्वे शुभावहा: ॥

संतुष्टे च गुरौ तस्य संतुष्टा: सर्वदेवता: ।
गुरुं संतोषयेद्भक्त्या द्वयमेव तदा भवेत् ।

मुमूक्षाणां सदा काल: स्त्रीणां कालस्तु सर्वदा ।

## परशुरामकल्पतंत्रे

कार्तिकाश्विजवैशाख माघेऽथ मार्गशीर्षके ।
फाल्गुने श्रावणे मंत्र: पुरश्चर्या प्रशस्यते ॥
मंत्रारंभे रवौशुक्रे बुधे जीवे विशेषत: ।
शनौ मृत्यु: क्षमो भौमे सोमे मध्यफलं स्मृतं ।

स्थिरलग्नं विष्णुमंत्रे शिवमंत्रे चरं ध्रुवं ॥
द्विस्वभावगतं लग्नं शक्तिमंत्रे प्रशस्यते ।

## पुरश्चरणकालः (३A)

पर्वताग्रे नदी तीरे बिल्वमूले जलाशये ।
गोष्ठे देवालयेऽश्वमे उद्याने तुलसीवने ॥

पुण्यपक्षेत्रे गुरोः चित्तैकाग्र्यस्थलेपि वा ।
पुरश्चरणकृन्मंत्री सिध्यत्येव न संशयः ॥

ज्येष्ठाषाढौ भाद्रपदं पौषं तु मलमासकं ।
अंगारं शनिवारं च व्यतीपातं च वैधृतिं ॥

अष्टमीं नवमीं षष्ठीं चतुर्थीं च त्रयोदशीं ।
चतुर्दशीममावास्यां प्रदोषं च तथा निशां ॥

यमाग्निरुद्रसर्पेंद्रवसुश्रवणजन्मभं ।
मेषकर्क तुलाकुंभान् मकरं चैव वर्जयेत् ।

सर्वाण्येतानि वर्ज्यानि पुरश्चरणकर्मणि ।
चंद्रतारानुकुले च शुक्लपक्षे विशेषतः ।

पुरश्चरणकं कुर्यान्मंत्रसिद्धिः प्रजायते ।
प्रत्यङ्मुखः शिवस्थाने द्विजश्चान्यतमे जपेत् ।

आरंभदिनमारभ्य समाप्तिदिवसावधि ।
न न्यूनं नातिरिक्तं च जपं कुर्याद्दिने दिने ।

## अजपा गायत्री समर्पणं जपविधानं च (४)

पूर्वेद्युः सूर्योदयमारभ्य अद्य सूर्योदयपर्यंतं षट्शताधिकैकविंशति-सहस्रसंख्याकमुच्छ्वासविश्वासात्मक मजपागायत्रीजपं, मूलाधार, स्वाधिष्ठान-मणिपूरक अनाहत विशुद्धि आज्ञा ब्रह्मरंध्रमण्टपस्थितेभ्यो गणेश ब्रह्म विष्णु रुद्र जीवात्म परमात्म श्रीगुरुभ्यो यथाभागं निवेदयामि ।

षट्शतं तु गणेशस्य षट्सहस्रं प्रजापतेः ।
षट्सहस्रं महाविष्णोः षट्सहस्रं पिनाकिनः ।
जीवात्मनः सहस्रं तु सहस्रं परमात्मनः ॥
गुरोरपि सहस्रं तु सर्वं ब्रह्मार्पणं भवेत् ।

1 मूलाधारमंटपमध्ये चतुर्दलपद्मस्थिताय कुंकुमवर्णाय पुष्टिशक्तिसहिताय श्रीगणाधिपतये नमः षट्शतमजपागायत्रीं निवेदयामि ।
ओं गणनां त्वा - सादनं । तत्पुरुषाय - - - दंनिः प्रचोदयात् ।

2 स्वाधिष्ठान मंटपमध्ये षट्दलपद्मस्थिताय सिंदूरवर्णाय सरस्वती-समेताय श्रीब्रह्मणे नमः षट्सहस्रमजपागायत्रीं निवेदयामि ।
ओं ब्रह्मा देवानां - रेफन् ।। वेदात्मनाय - - ब्रह्मा प्रचोदयात्

3 मणिपूरकमण्टपमध्ये दशदलपद्मस्थिताय नीलवर्णाय लक्ष्मीसमेताय श्रीविष्णवे नमः षट्सहस्रमजपागायत्रीं निवेदयामि ।
ओं तद्विष्णो - - -पदं । नारायणोय चोदयात् - - -

4 अनाहतमंटपमध्यें द्वादशदलपद्मस्थिताय हेमवर्णाय श्रीपार्वतीसहिताय शिवाय नमः । षट्सहस्रमजपागायत्रीं निवेदयामि । ईशानस्सर्वं - - - सदाशिवों । तत्पुरुषाय - - - रुद्रः प्रचोदयात्

5 विशुद्धिमंटपमध्ये षोडशदळपद्मस्थिताय शुद्धस्फटिकसंकाशाय प्राण-शक्तिसहिताय जीवात्मने नमः सहस्रमजपागायत्रीं निवेदयामि
ओं असुनीते पुनरस्मासु - स्वस्ति । हंसहंसाय - हंसः प्रचोदयात् ।

6 आज्ञामंटपमध्ये द्विदलपद्मस्थिताय विद्युत्वर्णाय इच्छाशक्तिसहिताय श्रीपरमात्मने नमः सहस्रमजपागायत्रीं निवेदयामि
ओं यो वेदादीश्वरः – महेश्वरः । हंस - - - प्रचोदयात्

7 ब्रह्मरंध्रे सहस्रदलमंटपमध्ये सहस्रदलपद्मस्थिताय नानावर्णाय मोक्ष-शक्तिसहिताय श्रीगुरवे नमः सहस्रमजपागायत्रीं निवेदयामि

ओं नीवारसूक - - – स्वराट् । हंस - - - प्रचोदयात् । परमेश्वराय विद्महे – परतत्वाय धीमहि तन्नो ब्रह्म प्रचोदयात्

अद्य सूर्योदयमारभ्य श्वः सूर्योदयपर्यंतं अजपागायत्रीजपमहं करिष्ये ।। अस्य श्री अजपागायत्रीमहामंत्रस्य । परमहंस ऋषिः । अव्यक्तगायत्री छंदः । परमहंसोदेवता, हंबीजं, सः शक्तिः । सोहं कीलकं ।। परमहंस अजपागायत्रीप्रसादसिध्यर्थे जपे विनियोगः हंसहंसाय विद्महे परमहंसाय धीमहि, तन्नो हंसः प्रचोदयात् इतिन्यासं । ध्यानं ।

अग्नीषोमगरुद्वयं प्रणवकं बिंदुत्रिनेत्रोज्वलं ।
भास्वद्रुद्रमुखं शिवांध्रियुगळं कालाग्निवाहुद्वयं ।

उद्यम्दास्वरकोटिकोटिसदृशं हंसं जगद्व्यापकं ।
नादब्रह्ममयं हृदंबुजपुटे नीडे सदा भावये ।

हंसो गणेशो विधिरेष हंसो ।
हंसो हरिः शंभुमयोपि हंसः ।

जीवोपि हंसो गुरुरेव हंसः ।
आत्मापि हंसः परमात्महंसः ।

हंसहंसाय - - - प्रचोदयात् ।। हंसः इति शतवारं जपेत्

## हंसमंत्रः (५)

हंस मंत्रस्य हंस ऋषिः । अव्यक्तगायत्री छंदः परमहंसो देवता । हंसः बीजं । सोऽहं शक्तिः । ब्रह्मबीजं मायाशक्तिः । जीवो बीजं । बुद्धिः शक्तिः । उदानो बीजं । सुषुम्ना शक्तिः । सर्वमंत्रागंत्वे जपे विनियोगः ।

ओं सूर्याय स्वाहा, ओं सोमाय स्वाहा, ओं निरंजनाय स्वाहा, ओं निराभासाय स्वाहा, ओं अतनतनुसूक्ष्मतनु नेत्रत्रयं प्रचोदयात् - अस्त्राय ।।

ओं हंस सोऽहं ओं अग्नीषोमाभ्यां वौषट् ।। अनेन सर्वांगव्यापकत्वेन अंगुष्ठादिन्यासेन कूर्परादि करतलांतं न्यसेत्

**अथ ध्यानम -**

अग्नोषोमो पक्षौ । ओं कारशक्ति बिंदुत्रिनेत्रं मुखं रुद्रः रुद्रो इंद्राणी चरणौ । कालश्चाग्निश्च उभे पार्श्वे सोहं हंसः परमहंसो भानुकोटि सहस्रप्रकाशात् येनेदं व्याप्तं ।। इत्यनेन ध्यात्वा ततो वासनामयं पापपुरुषं कृष्णं भीमं इति वामकुक्षौ विचिन्त्य, पूरकेण वायुबीजं । ओं यं हुं फट् इति १६ वारं ध्यात्वा शोषयेत् । ओं वं हुं फट् इति १६ पूरकेण ध्यात्वा प्लावयेत् । ओं रं हुं फट् इति कुंभकेन ६४ वारं ध्यात्वा पापं दग्धं विचित्य, ओं भं फट् इति ३२ वारं ध्यात्वा तेन वायुना तद्भस्य रेचकेन दक्षिणनाड्या बर्हिनिर्गतं विचिंत्य, ओं वं हुं फट् इत्यमृतबीजं मस्तके ध्यात्वा अमृतधारासंजीविनीं विचित्य, ओं लं फट् इति पृथ्वी बीजेन तेन देहपिंडं विचित्य ओं हं फट् इत्याकाशबीजं तेन देहाकारानवयवान् ध्यात्वा, हृदये च स्वजीवकलां ह्रीं सोऽहं हंसः इति मंत्रेण स्वदेहोपविष्टं ध्यात्वा ।

श्रीमहालक्ष्मीरूपा ब्रह्मणः, प्रकृतिः । प्रकृतेर्महत् । महतोऽहंकारः । अहंकारादाकाशः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः, अद्भ्यः पृथिवी

पृथिव्या ओषधयः ओषधीभ्योन्नं अन्नाद्रेतः रेतसः पुरुषः इति क्रमाद्देहादिरूपेण, तस्मात्मरूपेण, श्रीमहालक्ष्मीरूपोऽहमिति ध्यायेत् एतेभ्यः पंचमहाभूतेभ्यः सकाशात्स्वशरीरं तेजोमयं पुण्यात्मकं सर्वरूपार्थसाधनं देवताराधन स्वपरामुत्पन्नमिति ॥ उक्तं आकाशाद्वायुः इति श्रुतिः

॥ ततः प्राणप्रतिष्ठा कार्या

## ॥ यंत्रलक्षणं ॥

बीजं प्राणं च शक्ति च दृष्टि श्रोत्राधिकं ततः ।
गायत्रीमंत्रः मंत्राच प्राणस्थापन मेव च ।
भूतदिग्बालबीजानि मंत्रस्थांगानि वै दश ।
एकरेखा तु दारिद्र्यं द्विरेखा धनसंपद
त्रिरेखा मोक्षदायिन्यो इत्थं यंत्रस्य लक्षणं ।
सीसं षाण्मासवीर्यं तु ताम्रं वत्सरमेव च ।
त्रिलोहं वत्सरार्धं तु रजतं तु त्रिवत्सरम् ।
भूर्जपत्रं चतुर्वर्षं पञ्चार्धं पंचलोहकं ।
दशवर्षं तु काशीसं कनकं यावदायुषम् ।

1 बीजं प्रणवंसहितमूलं 2 प्राणं "सं" 3 शक्ति "ह्रीं" 4 दृष्टि डडँ 5 श्रोत्रं = उं ऊं 6 गायत्री । तत् देवतागायत्री 7 यंत्रगायत्री यंत्रराजाय विद्महे महायंत्राय धीमहि तन्नो यंत्रः प्रचोदयात् ॥ 8 प्राणस्थापनं = प्राणप्रतिष्ठा 9 जिह्वा = स्त्र्युं 10 भूतबीजं लं वरं यं हं 11 दिग्बालबीजं = लं रं हं षं वं यं सं शं

मनोन्मणि बीजं ॥ रं क्षं मं रं यं औं ऊं

1 अग्निः 2 ब्रह्मा 3 वृषः 4 निद्रा 5 पुरनक्षिगतं 6 शक्रः 7 चंद्रः

चिंतामणि=क्ष्म्र्यों (मंत्रमहोदधि २२५/२ टीका)

रत्नेश्वरी मंत्रः श्रीं ह्रीं ग्लूं स्लूं म्लूं न्लूं प्लूं ह्रीं श्रीं (दुर्गोपासना पराबीजं ॥ अनंतं चंद्रभुवनमिंदु बिंदु युगान्वितं । पराबीजमिति ज्ञेयं नाल्पस्य तपसः फलं ॥ "ओं ह्स्त्रौं नमः ॥"

## ॥ श्रीचक्रलेखनविधिः ॥ (७)

1 व्यासे देवी कृते तत्त मब्रलविगते चाषभागे । स्वसूत्रान् कृत्वा
पोरी दलांते गमशलमभितो वातस्तोयभागान् ।

दम्भाशान् मे प्रमार्ज्यं प्रभयतु वरुणाग्राणि सूत्रद्वयानि ।
प्राक्पात रोधिगानः विदमधितु धिगगं दिव्य सूनू श्चिरप्राक् ।

अष्टादश मर्माणि चतुर्विंशति संधयः ।
त्रिरेखासंयोगो मर्मः, द्विरेखासंयोगो सधिः ।

वृत्तं निर्माय षट् षट् पंच त्रीणि त्रीणि चतुर त्रीणि षट् षट् षट् ॥
अंगुल प्रमाणतः

नव रेखाः निर्माय, प्रथमनवमयोः अंगुलत्रयं । द्वितीयाष्टमयोः चतुरंगुलं । तृतीयसप्तमयोः अंगुलपंचकं । चतुर्थषष्ठ्योः षोडशभागं पंचमे एकोनविंशति भागान् प्रमाद्य पार्श्वयोः प्रथमं षष्ठे द्वितीये नवमं, तृतीये वृत्तं, चतुर्थे अष्टमं, पंचमे सप्तमं, षष्ठे द्वितीयं, सप्तमे वृत्तं, अष्टमे प्रथमं, नवमे तृतीयं, पंचमषष्ठयोमर्ध्ये बिंदुं, निर्माय, वृत्तात् बहिः एकादशांगुलप्रमाणतः अष्टदलं पुनर्वृत्तं, तदुपरि नवांगुल प्रमाणतः षोडशपत्रं तदुपरि द्वयांगुलप्रमाणं वृत्तत्रयं, तदुपरि द्वयांगुलि प्रमाणतः भूपुरत्रयं च विलिखेत् ॥

## आसनविधिः (८)

आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य, अमुककर्म, पूजां वा करिष्ये । तत्रादौ शरीरशुद्धये भूशुद्धि भूतशद्धि प्राणप्रतिष्ठां अन्तर्मातृका बहिर्मातृकां च करिष्ये । उत्पतंत्विह भूतानि पृथिव्यंतरवासिनः । आसनादौ नमस्कृत्य ब्रह्मकर्म समारभे अपसर्पं तु ते - - - शिवाज्ञया । अपक्रम तु - - - समारभे ॥ तीक्ष्णदष्ट्र - - - मर्हसि ॥ इति वामपाद पार्ष्णिना भूमिं त्रिः ताडयेत् समुद्रवसने देवि पर्वतस्तनमंडिते । विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ पृथिवीति मंत्रस्य मेरुपृष्ठऋषिः सुतलं छंदः । कूर्मो देवता । आसने विनियोगः पृथ्वि त्वया - - - - चासनं । ओं अनंतासनाय, विमलासनाय योगासनाय, कूर्मासनाय आधारशक्तये नमः दुष्टविद्राविणनृसिंहासनाय, मध्ये परमसुखासानाय नमः ।

भूर्भुवस्सुवः अंगुष्ठाग्रे तु गोविंदं तर्जन्यां तु महीधरं ।
मध्यमायां हृषीकेशं अनामिक्यां त्रिविक्रमं ।

कनिष्ठिकाभ्यां न्यसेद्विष्णुं करमध्ये तु माधवं ।
एवं च करविन्यासं सर्वपापप्रणाशनं ॥

ओं भूः पादाभ्यां, भुवः जानुभ्यां स्वः कटिभ्यां महःनाभ्यै जनः हृदयाय नपः कंठाय, सत्यं ललाटाय, परब्रह्म शिरसे स्वाहा, स्वशिरसि गुं गुरुभ्यो, पं परमगुरुभ्यो, पं परमेष्ठिगुरुभ्यो, दक्षिणभुजे गं गणपतये, वामभुजे, दुं दुर्गायै, दक्षिणजानुनि क्षं क्षेत्रपालाय, वामजानुनि सं सरस्वत्यै, हृदये अं आत्मने, पं परमात्मने, सं सत्त्वात्मने रं रज आत्मने, तं तम आत्मने,

नमोऽस्त्वनंताय नमोऽस्तु वेधसे ।
नमो वसिष्ठाय नमोऽस्तु शक्तये ।

पराशराय च नमोऽस्तु सात्वते ।
नमोऽस्तु ते सत्यवतीसुताय ।

नमो गुरुभ्यो गुरुपादुकाभ्यो ।
नमः परेभ्यः परपादुकाभ्यः ।

आचार्य सिद्धेश्वरपादुकाभ्यो ।
नमोऽस्तु लक्ष्मीपतिपादुकाभ्यः ।

सर्व भूत निवारणाय सशराय ह्रः सशाङ्गाय सुदर्शनायास्त्रराजाय हुं फट् इति छोटिकाबंधं कृत्वा उदकोपस्पर्शः प्राणायामः ॥ ततः आत्मशुद्धिः

ब्रह्महत्याशिरस्कं च स्वर्णस्तेय भुजद्वयं ।
सुरापानहृदायुक्तं गुरुतल्प कटिद्वयं ।

तत्संसर्गिपदद्वंद्वमंगप्रत्यंगपातकं ।

उपपातकरोमाणां रक्तश्मश्रुविलोचनं ।
अधोमुखं कृष्णवर्णं अंगुष्ठपरिमाणकं ।

खड्गचर्मधरं पापं वामकुक्षौ विचिंतयेत् ।

एवं पुरुषं वामकुक्षौ विचिंत्य "यं" इति वायुबीजेन १६ वारं वामनासापुटेन संशोष्य "रं" इत्यग्निबीजेन ६४ वारं जपित्वा कुंभकेन संदाह्य पुनः "भं" इति बीजेन ३२ वारं तद्भस्म दक्षनासापुटेन बहिः निःसार्य वं इति बीजेन १६ वारं अमृतीकुर्यात् ॥ इति भूशुद्धिः ॥

अथ भूतशुद्धिः - पादादि जानुपर्यंतं, पृथिवीस्थानं चतुरस्त्रं चतुर्दिक्षु लांछितं तन्मध्ये पीतवर्णं लं बीजयुक्तं ध्यायेत् ॥ ओं स्त्योना - - - प्रथं । लं भूम्यै नमः । जान्वादिनाभिपर्यंतं अपां स्थानं घनुराकारं

उभयोः कट्योः श्वेतपद्मलांछितं तन्मध्ये श्वेतवर्णं वं वीजयुक्तं ध्यायेत्

अप्सु मे सोमो - - - भेषजी । वं अद्भ्योनमः नाभ्यादि हृदयपर्यंतं अग्निस्थानं त्रिकोणं स्वस्तिकलांछितं तन्मध्ये रक्तबीजं वं बीजयुक्तं ध्यायेत् ।

अग्निं दूतं सुक्रतुं ।। रं अग्नये नमः ।। हृदयादिभ्रूमध्यपर्यंतं वायुस्थानं षट्कोणं षड्बिंदुलांछितं तन्मध्ये धूम्रवर्णं यं बीजयुक्तं ध्यायेत् ।

ओं वायो - - - पाजसा यं वायवे नमः ।। भ्रूमध्यादि ब्रह्मरन्ध्रपर्यंतं आकाशस्थानं वृत्ताकारं ध्वजलांछितं नीलवर्णं "हं" बीजं ध्यायेत्

ओं आदिप्रत्नस्य - - - दिवा ।। हं आकाशाय नमः ।।

पृथिवीं पंचगुणां लं बीजेन षड्द्धातप्रयोगेणाप्सु प्रविलापयामि
लं लं लं लं लं लं

चतुर्गुणा आपः वं बीजेन पंचोद्घात प्रयोगेण अग्नौ वं वं वं वं वं

त्रिगुणं वह्निं रं बीजेन चतुरुद्घात प्रयोगेण वायौ रं रं रं रं

द्विगुणं वायुं यं बीजेन त्रिरुद्घातप्रयोगेण आकाशे प्रविलापयामि
यं यं यं

एककुणमाकाशं हं बीजेन द्विःरुद्घातप्रयोगेण वायौ प्रविलापयामि
हं हं

तन्महंकारं महत्तत्वे प्रविलापयामि तन्महत्तत्वं प्रकृतौ प्रविलापयामि तां प्रकृतिं परब्रह्मणि प्रविलापयामि,

इति प्रविलाप्य, शुद्धोहं, मुक्तोहं सच्चिदानंदस्वरुपोहं ब्रह्माहमस्मीति चिरं भावयेत् ।। तस्मात् सर्वज्ञात् सर्वशक्तेः परब्रह्मणः सकाशात्प्रकृतिः, प्रकृतेर्महान्, महतोऽहंकारः, अहंकारादाकाशः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः अद्भ्यः पृथिवी।, स वा एष पुरुषोऽन्नरसमयः इति देहोत्पत्तिं विभाव्य, पुनर्जीवात्मानं हंसः इति मंत्रेण अंकुशमुद्रया सुषुम्ननाडीमार्गेण ब्रह्मरंध्रादानीय हृदि प्रतिष्ठापयेत् । हंसः सोहं इति भूतशुद्धिः ।।

## ।। प्राणप्रतिष्ठा ।। (९)

अस्य श्री प्राणप्रतिष्ठामहामंत्रस्य । ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुः सामाथर्वाणि छन्दांसि मुखे पराप्राणशक्तिर्देवता (शिरसि) आं बीजं (गुह्ये)

ह्रीं शक्तिः पादयोः ।  क्रीं कीलकं सर्वांगे स्वशरीरे (मूर्तौ वा) प्राणप्रतिष्ठापने विनियोगः

ओं आं ह्रीं क्रों अं कं - - - ङं आं क्रों ह्रीं आं पृथिव्यप्तेजो वाय्वाकाशात्मने अंगुष्ठा

ओं ,, ,, इं चं - - - ञं ईं शब्दस्पर्शरूपरसगंधात्मने तर्जनी

ओं ,, ,, उं टं - - - णं ऊं क्रों ह्रीं आं श्रोत्रत्वक्चक्षु जिह्वाघ्राणात्मने मध्यमा

ओं ,, ,, एं तं - - - नं ऐं ,, ,, वाक्पाणिपादपायूपस्थात्मने अनामिका

ओं ,, ,, ओं पं मं औं ,, ,, वचनादानगमन विसर्गानन्दात्मने कनिष्ठिका

ओं ,, ,, अं यं - - क्षं अः ,, ,, मनोबुद्धिअहंकारचित्तविज्ञानात्मने करतल एवं हृदयादि

रक्तांभोधि - - - परा नः ।। चत्वारि वाक् - - - इति जप्त्वा ।।

लं पृथिव्यात्मकं प्राणशक्तये गंधं कल्पयामि, इत्येव पंचपूजां कृत्वा

ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं क्षं अः क्रों ह्रीं आं हंसः सोऽहं मम प्राणा इह प्राणाः

,, ,, ,, ,, ,, ,, ,, मम जीव इह स्थितः

,, ,, ,, ,, ,, ,, ,, मम सर्वेन्द्रियाणि

,, ,, ,, ,, ,, ,, ,, मम वाङ् मनश्चक्षुः

श्रोत्र जिह्वाघ्राणा इहागत्य स्वस्तये सुखेन सुचिरं तिष्ठं तु स्वाहा ।।

इति शिरसि (मूर्तौ) दिवाकरं दत्वा सकृद्वा जपित्वा, असुनीते - - - स्वस्ति

गर्भाधानादि पंचदश संस्कारसिध्यर्थं पचदशप्रणवावृत्तीं (ओं) जपेत्

## अंतर्मातृकान्यासः (१०)

अस्य श्री अंतर्मातृकासरस्वतीमंत्रस्य । ब्रह्मा ऋषिः । गायत्री छंदः अंत - स्वतीदेवता । हलो बीजानि, स्वराः शक्तयः । बिन्दुकीलकस्य नमः सर्वांगे मातृकान्यासे विनियोगाय नमः ॥

अं कं - - - ङं आं अंगुष्ठा, इं चं - - - ञं ईं तर्जनी, उं टं - - - णं ऊं माध्यमा । एं तं - - - नं ऐं अनामिका, ओं पं - - - मं औं कनिष्ठिका, अं यं क्षं अः करतल । एवं हृदयादि

आधारे लिंग नाभौ हृदयसरसिजे तालुमूले ललाटे ।
द्वेपत्रे षोडशारे द्विदश दशदलेद्वादशार्थे चतुष्के ।
वासंते बालमध्ये इफकट सहिते कंठदेशेस्वराणां ।
दंक्षं तत्वार्थयुक्तं सकलबुधनुतं वर्णचक्रं नमामि ॥

अग्रे सर्वत्रादौ प्रणवः अंते हंसः सोहं (सर्वत्र) (यथा) ओं अं नमः हंसः सोहं एवमेव ओं अः नमः हंसः सोहं । एतांस्तत्वार्थयुक्तान् षोडशस्वरान कंठस्दानगन षोडश दलेषु विन्यसामि ॥
एवं कं - - ठं एतांस्तत्वार्थ युक्तान्द्वादशवर्णान् हृदयस्थानगत पद्मे द्वादशदलेषु ॥

डं - - - फं एतांस्तत्वार्थ युक्तान् दशवर्णान्नाभिस्थानगतपद्मे दशदलेषु
बं - - लं - - - षड्वर्णान् लिंग - - - षट्दलेषु
वं रुं - - - चतुर्वर्णान् आधार - - - चतुर्दलेषु
हं - - - क्षं वर्णद्वयं भ्रूमध्यगते - - - द्विदलेयोः
पुनः गर्भाधानादि पंचदश संस्कारसिध्यर्थे ओं इति ७५ वारं जपेत्

## ॥ बहिर्मातृकान्यासः (११) ॥

ब्रह्मा ऋषिः गायत्री छंदः । अंतर्मातृका सरस्वती देवता । हलो बीजानि । स्वराः शक्तयः बिंदवः कीलकं (अं कं - - - ङं आं अंगुष्ठा इं चं - - - ञं ईं तर्जनी, उं टं - - - णं ऊं मध्यमा । एं तं - - - नं ऐं अनामिका । ओं - - - पं - - - मं - - - औं कनिष्ठिका । अं यं - - - क्षं अः करतल । एवं हृदयादि) ध्यानं । पंचाशद्वर्णभेदै विहित वदनदोःपादहृत्कुक्षिवक्षोदेशां भास्वत्कपर्दाकलितशशिकलामिंदुकुंदावदाताम् ॥ अक्षस्रक्कुंभचिता लिखित-वरकरां त्रीक्षणां पद्मसंस्थां मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

ओं अं नमः शिरसि - - - ओं लृं नमः दक्षकपोले - - ओं कं - - ङं दक्षिणहस्तसंध्यग्रेषु
" आं " मुखे - - - ओं लॄं नमः वामकपोले - - चं - - - ञं वाम " "
" इं " दक्षनेत्रे - - - एं " ऊर्ध्वोष्ठे - - टं - - - णं दक्षिणपाद "
" ईं " वामनेत्रे - - - ऐं " अधरोष्ठे - - तं - - - नं वामपाद "
" उं " दक्षकर्णे - - - ओं " ऊर्ध्वदंतपंक्तौ - - - पं नमः दक्ष कुक्षौ - लंलकृदि
" ऊं " वामकर्णे - - - औं " अधोदंतपंक्तौ - - - फं वामकुक्षौ - - वं स्कंधयोः
शं हृदादिदक्षिणकरे
" ऋं " दक्षनासापुटे - - अं " जिह्वायां - - - बं नमः पृष्ठे - - षं " वामकरे
" ॠं नमः वामनासापुटे - - अः कंठे भं नमः नाभौ सं " दक्षिणपादे
मं नमः उदरे हं " वामपादे
यं नमः हृदि ळ क्षं व्यापकं
रं कंठे

## ॥ पुरुषसूक्तन्यासः ॥ (हृदयादि) (१२)

१ सहस्रशीर्षेति षोडशर्चस्य सूक्तस्य नारायणपुरुषोनुष्टुबित्यादि त्रिष्टुप् छंदः
२ सहस्रशीर्षा - - - गुलं वामकरे ॥ पुरुष एवदं रोहति दक्षिणकरे
३ एतावा - - - दिवि वामपादे ॥ त्रिपादूर्ध्व - - - अभि - - - दक्षिणपादे
५ तस्माद्वि - - - पुरः वामजानुनि ॥ यत्पुरुषेण - - - हविः दक्षिणजानुनि

७ तं यज्ञं - - - श्चये – वामकट्यां ॥ तस्माद्य श्चये – - - दक्षिणकट्यां
९ तस्माद्य - - - जायत - - - नाभ्यां ॥ तस्मादश्वा - - - वयः हृदये
११ यत्पुरुषं - - - ऊच्येते - - कंठे ॥ ब्राह्मणोस्य - - -जायत - - - वामभुजे
१३ चंद्रमा - - - जायत - - - दक्षभुजे ॥ नाभ्या – - - कल्पयन् - मुखे
१५ सप्तास्या - - - पशुं - - नेत्रयोः ॥ यज्ञेनः - - संति देवा - - शिरसि ॥

## ॥ पंचांगन्यासः ॥

ब्राह्मणोस्य मुखमासीत्: जायत हृदयाय नमः । चंद्रमा - - - जायत शिरसे स्वाहा ॥ नाभ्या - - - कल्पयन् शिखायै वषट् । सप्तास्यासन् पशुं - - कवचाय हुं । यज्ञेन - - - देवाः अस्त्राय फट् ।

षोडशोपचारपूजा १ आवाहनं २ आसनं ३ पाद्यं ४ अर्घ्यं ५ आचमनीयं ६ स्नानं ७ वस्त्रं ८ यज्ञोपवीतं ९ गंधं १० पुष्पाणि ११ धूपं १२ दीपं १३ नैवेद्यं १४ नमस्कारं १५ प्रदक्षिणाः १६ पुष्पांजलिः

तत्र स्नानानंतरं वस्त्रधारणानंतरं, यज्ञोपवीतानंतरं, नैवेद्यानंतरं आचमनं समर्पणं, नैवेद्यानंतरं, संभवे तांबूलं दक्षिणां नीराजनं च कुर्यात् ॥ स्नाने धूपे च दीपे च घंटादिनादमाचरेत्

## ॥ पुरुषसूक्त त्रिविधन्यासाः ॥ १३

| सूक्तऋक् | संहार | सृष्टि | स्थिति |
|---|---|---|---|
| १ सहस्र - - दशांगुलं | वामकरे | शिरसि | नाभौ |
| २ पुरुष - - रोहति | दक्षिणकरे | अक्ष्णोः | दक्षोर्वोः |
| ३ एतावा - - दिवि | वामचरणे | वदने | वामोरौ |
| ४ त्रिपाद् - अभि | दक्षिणचरणे | दक्षांसे | दक्षजानुनि |
| ५ तस्माद्विरा - पुरः | वामजानुनि | वामांसे | वामजानु |
| ६ यत्पुरुषेण - - द्धविः | दक्षजानुनि | कण्ठे | दक्षचरणे |
| ७ तं यज्ञं - ऋषयश्च्ये | वामोरौ | हृदये | वामचरणे |
| ८ तस्माद्य - ग्राम्याश्चये | दक्षिणोरौ | नाभौ | दक्षकरे |

९ तस्मादश्वा - आयत - नाभौ - दक्षोरौ - वामकरे
१० तस्मादश्वा – अजावयः – हृदये – वामोरौ - शिरसि
११ यत्पुरुषं - व्यदधुः - कण्ठे दक्षजानु - अक्ष्णोः
१२ ब्राह्मणो – अजायत - दामामे - वामजानु – वदने
१३ चंद्रमा – अजायत - दक्षांसे - दक्षचरणे - दक्षांसे
१४ नाभ्या – अकल्पयन् - वदने - वामचरणे - नमांसे
१५ सप्तास्या - पशुं - अक्ष्णोः - दक्षकरे - कण्ठे
१६ यज्ञेन - देवाः ओं नमो नारायणाय - शिरसि – वामकरे - हृदये

## ॥ श्रीसूक्तन्यासः ॥ १४

हिरण्यवर्णामिति पंचदशर्चस्य सूक्तस्य, आनंदकर्दमचिक्लीतेंदिरा सुता ऋषयः । श्री रग्निश्चेत्युभे देवते आद्यास्तिस्रो नुष्टुभः चतुर्थी बृहती पंचमी षष्ठ्यौ त्रिष्टुभौ ततोऽष्टावनुष्टुभः अंत्या प्रस्तारपंक्तिः छंदः । व्यंजनानि बीजानि, स्वराः शक्तयः । बिंदवः कीलकं ।।

१ हिरण्य - म आवह , मूर्ध्नि ॥ २ तां म आवह - पुरुषानहं, नेत्रयोः
३ अश्वपूर्वां - जुषतां , कर्णयोः ४ कांसोस्मितां – श्रियं , नासिकायां
५ चंद्रां प्रभासां – त्वां वृणे , मुखे ॥ ६ आदित्यवर्णे - अलक्ष्मीः ॥ कण्ठे
७ उपैतु मां - ददातु मे , बाह्वोः । ८ क्षुत्पिपासा - मे गृहात् ॥ हृदये
९ गंधद्वारां - श्रियं , नाभौ । १० मनसः काम - श्रयतां यशः ॥ गुह्ये
११ कर्दमेन – मालिनीं , अपाने १२ आपस्रजं तु - मे कुले ॥ ऊर्वोः
१३ आर्द्रां पुष्करिणीं - - म आवह , जान्वोः । आर्द्रां यःकरिणीं आवह ॥
जंघयोः । तां म आवह – पुरुषानहं , पादयोः । यः शुचि प्रय - - जपेत् ॥
सर्वांगे । षडंगन्यासः

ओं हिरण्यवर्णायै नमः अंगुष्ठा । सुवर्णायै नमः तर्जनी । रजतस्रजायै मध्यमा चंद्रायै - - अनामिका ॥ हिरण्मयायै कनिष्ठिका ॥ लक्ष्म्यै करतलेत्यादि ।

## ॥ पुरुषसूक्तविधानपूजा ॥ बृहत्पाराशर्यां ॥ १५

आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमं । द्वितीययासनं दद्यात्पाद्यं चैव

तृतीयया । अर्घ्यं चतुर्थ्या दातव्यं पंचम्याचमनं तथा । षष्ठया स्नानं प्रकुर्वीत सप्तम्या वस्त्रधौतकं । यज्ञोपवीतं चाष्टम्या नवम्या गंधमेव च । पुष्पं देयं दशम्या तु एकादश्या तु धूपकं द्वादश्या दीपकं दद्यात्त्रयोदश्या निवेदयेत् । चतुर्दश्या नमस्कारं पंचदश्या प्रदक्षिणा षोडश्योद्वासनं कुर्याच्छेषकर्माणि पूर्ववत् तच्च पूर्वं जपेद्भूयः पौरुषं सूक्तमेव च

## श्रीपुरुषसूक्तन्यासं

अस्यश्री पुरुषसूक्तन्यासमहामंत्रस्य । अंतर्यामिभगवान् नारायण ऋषिः । आद्यस्य पचदशर्चस्या अनुष्टुप्छंदः अंत्यया त्रिष्टुप् । श्री भूमि समेत श्रीमहाविष्णुर्देवता । पुरुष एवेति बीजं । नान्यः पन्था इति शक्तिः । एतावान-स्येति कीलकं । श्री - — — प्रीत्यर्थे पुरुषसूक्तन्यासमहामन्त्रजपे विनियोगः

१ अतो देवा अवंतु नो यतो विष्णुर्विचक्रमे । पृथिव्यास्सप्तधामभिः ओं भूः पुरुषाय अंगुष्ठा

२ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं, समू। (२) मस्यपांसुरे, ओं भुवः महा-पुरुषाय तर्जनी

३ त्रीणि पदा विचक्रमे विष्णुर्गोप्ता अद्भ्यः अतो धर्माणि धारयन् । ओं सुवः ब्रह्मपुरुषाय मध्यमा

४ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इंद्रस्य यज्ञस्सखा । ओं महः विष्णुपुरुषाय अनामिका

५ तद्विष्णोः परमं पदं सदा पश्यंति सूरयः दिवीव चक्षुराततं । ओं जनः रुद्र-पुरुषाय कनिष्ठिका

६ तद्विप्रासो विपन्यवो जागृवांसस्समिधते, विष्णोर्यत्परमंपदं ओं तपस्सत्यं सर्वपुरुषाय करतल । एवं हृदयादि

ध्यानं । गोक्षीराभं पुण्डरीकायताक्षं चक्राब्जाभ्यां शंखकौमोदकीभ्यां श्री भूमिभ्यामर्चितं योगपीठे ध्यायेद्देवं पूजयेत्पौरुषेण । पंचपूजा

## ॥ मंत्राणां दशसंस्काराः ॥ १६

शोधने मंत्रिभिर्ग्राह्यं प्रसिद्धं जन्मनामतः । दत्तः संशोधितो मंत्रो भवे-च्छिष्येष्टसिद्धये ॥ छिन्नत्वादिकदोषा ये पंचाशन्मत्रसंस्थितैर्दोषैः सकला-

व्याप्ता मनवः सप्तकोटयः ।। अतस्तद्दोषशांत्यर्थं संस्कारदशकं चरेत् । भूर्जपत्रे लिखेत्सम्यक् त्रिकोणं रोचनादिभिः ।। वारुणं कोणमारम्य सप्तधा विभजेत्समं एवमीशाग्निकोणाभ्यां जायंते तत्र योनयः ।। नववेदमितास्तत्र विलिखेन्मातृका क्रमात् । अकारादिहकारांतां ईशादि वरुणावधि।। देवीं तत्र समावाह्य पूजयेत् चंदनादिभिः । ततः समुद्धरेन्मंत्रजननं तदुदीरितम् ।।

दीपनं । हंसः मूलं नमः सोहं (सहस्रं)

बोधनं हूं मूलं नमः हूं (पंचसहस्रं)

ताडनं । फट् मूलं नमः फट् (सहस्रं)

अभिषेचनं ऐं हंसः ओं इति सहस्राभिमंत्रितैर्जलैः

तेनैव मंत्रेण तालपत्रोपरिलिखितमंत्रे अभिषेकं कुर्यात्

विमलीकरणं ओं त्रों वषट् मूलं नमः वषट् त्रों ओं (सहस्रं)

जीवनं । स्वधा वषट् मूलं नमः वषट् स्वधा (सहस्रं)

तर्पणं । दुग्धघृतोदकैस्तेनैवमंत्रेण तस्मिन्नेव शतं तर्पयेत्

## ।। परब्रह्मोपासनं ।। १८

अस्यश्री परब्रह्ममहामंत्रस्य । सदाशिव ऋषिः । अनुष्टुप् छंदः सर्वान्तर्यामि निर्गुणं परमं ब्रह्म देवता । धर्मार्थकाममोक्षज्ञानवैराग्यसिध्यर्थे जपे विनियोगः ।

ओं अंगुष्ठाभ्यां नमः । एकं अनामिकाभ्यां हुं

सत् तर्जनीभ्यां स्वाहा । ब्रह्म कनिष्ठिकाभ्यां वौषट्

चित् मध्यमाभ्यां वषट् । ओं सच्चिदेक ब्रह्म करतलकरपृष्ठाभ्यां फट्

ध्यानं ।। हृदयकमलमध्ये निर्विशेषं निरीहं,

हरिहरविधि वेद्यं योगिभिर्ध्यानगम्यं ।

जननमरणभीति भ्रंसि सच्चित्स्वरूपं ।

सकलभुवनबीजं ब्रह्मचैतन्यमीडे ।। जपविधानं ।।

दक्षहस्तस्य मध्यमानामिकाभ्यां वामनासापुटं धृत्वा साधकः ।

अष्टमितं मूलं जपन् सन् दक्षिणनासापुटेन वायुं पूरयेत् ।

ततः वामनासापुटं अंगुष्ठेन धृत्वा द्वात्रिंशता आवृत्या मूलं जपेत् ।

ततः षोडशधा मनुं जपन् सन् दक्षिणनासिकयैव शनैः कुंभकरेचकं कुर्यात् क्रमेणैवाकृष्टं निश्चलं विमुक्तश्च श्वासं विदध्यात् पचपूजा । हृदयकमलमध्ये स्थितंचैतन्यं चेतनं ब्रह्माहमीडे ध्यायामि इत्यर्थः ।। ब्रह्मार्पणं इति समर्पणं ।।

## ।। परब्रह्म बाह्य पूजा ।। १९

उपस्थितानि द्रव्याणि गंधपुष्पादिकानि च । वस्त्रालंकरणादीनि भक्ष्य-पेयानि यानि च । मन्त्रेणानेन संशोध्य ध्यात्वा ब्रह्म सनातनं । निमील्यनेत्रे मति-मानर्पयेत् परमात्मने ।। ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणा हुतं ब्रह्मैव तेन गंतव्यं ब्रह्मकर्म समाधिना ।।

ततो नेत्रे समुन्मील्य जप्त्वा मूलं स्वशक्तितः ।
तज्जपं ब्रह्मसात् कृत्वा स्तोत्रं च कवचं पठेत् ।।
स्तोत्रं श्रृणु महेशानि ब्रह्मणः परमात्मनः ।
यत् श्रुत्वा साधको देवि ब्रह्मसायुज्यमश्नुते ।।
नमस्ते सते सर्वलोकाश्रयाय, नमस्ते चिते विश्वरूपात्मकाय ।
नमोऽद्वैत तत्वाय मुक्तिप्रदाय, नमो ब्रह्मणे व्यापिने निर्गुणाय ।।
त्वमेकं शरण्यं त्वमेकं वरेण्यं त्वमेकं जगत्कारणं विश्वरूपं ।।
त्वमेकं जगत्कर्तृ पातृप्रहर्तृ त्वमेकं परं निश्चलं निर्विकल्पं ।
भयानां भयं भीषणं भीषणानां, गतिः प्राणिनां पावनं पावनानां ।।
महोच्चैः पदानां नियंतृत्वमेकं परेषां परं रक्षक रक्षकानां ।।
परेश प्रभो सर्वरूप प्रकाशिन् अनिर्देश्य सर्वेन्द्रियागम्य सत्य ।
अचिंत्याक्षर व्यापकाव्यक्त तत्व तत्व जगद्भासकाधीश पायादपायात् ।।
तदेकं स्मरामस्तदेकं जपामः तदेकं जगत्साक्षिरूपं नमामः ।।
सदेकं निधानं निरालंबमीशं भवांभोधिपोतं शरण्यं व्रजामः ।
पंचरत्नमिदं स्तोत्रं ब्रह्मणः परमात्मनः ।
यः पठेत्प्रयतो भूत्वा ब्रह्मसायुज्यमाप्नुयात् ।।
प्रदोषेऽदः पठेन्नित्यं सोमवारे विशेषतः
श्रावयेद्बोधयेत्प्राज्ञो ब्रह्मनिष्ठान् स्वबान्धवान् ।

## ।। परब्रह्म कवचं ।। २०

परब्रह्मकवचस्य (चार्वंगि) सदाशिवः ऋषिः अनुष्टुप् छंदः ।।
कवचं श्रृणु चार्वंगि जगन्मंगळनामकं
पठनाद्धारणादस्य ब्रह्मज्ञो जायते ध्रुवं ।।
[illegible]मा शिरः पातु पातु हृदयं महेश्वरः ।

कण्ठं पातु जगन्माता वदनं सर्वदृग्विभुः ॥
करौ मे पातु विश्वात्मा पादौ रक्षतु चिन्मयः ।

सर्वांगं सर्वदा पातु परं ब्रह्म सनातनं ॥
यः पठेद्ब्रह्मकवचं ऋषिन्यासः पुरःसरं ।

स ब्रह्मज्ञानमासाद्य साक्षाद्ब्रह्ममयो भवेत् ।
भूर्जे विलिख्य गुटिकां स्वर्णस्थां धारयेद्यदि ।

कण्ठे वा दक्षिणे बाहौ सर्वा सदीश्वरो भवेत् ॥
इत्येतत्परब्रह्मकवचं ते प्रकाशितं ।

दद्यात्प्रियाय शिष्याय गुरुभक्ताय धीमते ॥
पठित्वा स्तोत्रकवचं प्रणमेत् साधकाग्रणीः ।

नमस्ते परमं ब्रह्म नमस्ते परमात्मने ॥
निर्गुणाय नमस्तुभ्यं सद्रूपाय नमो नमः ।

ब्रह्मगायत्री ॥ परमेश्वराय विद्महे परतत्त्वाय धीमहि तन्नो ब्रह्म प्रचोदयात् । अर्थः । परतत्त्वाय परमेश्वराय = परतत्त्व परमेश्वरमाप्तुंयद्ब्रह्म- वयं विद्महे = मन्यामहे । धीमहि = चिन्तयामश्च तद्ब्रह्म = नोऽस्मान् प्रचोदयात् = प्रेरयेत ॥ धर्मार्थकाममोक्षेषु विनियोजयेत् ॥

इयं श्री ब्रह्मगायत्री चतुर्वर्गप्रदायिनी ॥

पूजनं यजनं चैव स्नानं पानं च भोजनं ।
यद्यत्कर्म प्रकुर्वीत ब्रह्ममंत्रेण साधयेत् ॥
ब्राह्मे मुहूर्ते चोत्थाय प्रणम्य ब्रह्मदं गुरुं ।
ध्यात्वा च परमं ब्रह्म यथाशक्ति मनुं स्मरेत् ॥

पूर्ववत्प्रणमेद्ब्रह्म प्रातःकृत्यमिदं स्मृतं ॥
द्वात्रिंशता सहस्रेण जपेनास्य पुरस्क्रिया ।

तद्दशांशेन हवनं तर्पणं तद्दशांशतः ॥
सेचनं तद्दशांशेन तद्दशांशेन सुंदरि । ब्राह्मणान्भोजयेन्मंत्री पुरश्चरणकर्मणि
भक्ष्याभक्ष्य विचारोऽत्र त्याज्यं ग्राह्यं न विद्यते ॥
न कालशुद्धिनियमो न वा स्थाननिरूपणं ॥
अभुक्तो वापि भुक्तो वा स्नातो वाऽस्नात एव वा ।

साधयेत् परमं मंत्रं स्वेच्छाचारेण साधकः ॥
विनाऽऽयसं विनाक्लेशं स्तोत्रं च कवचं विना ।
विना न्यासं विना मुद्रां विना सेतुं वरानने ॥
विना चोरगणेशादिजपं च कुल्लुकां विना ।
अकस्मात्परब्रह्मसाक्षात्कारो भवेत् ध्रुवं ॥
साधने ब्रह्ममंत्रस्य भावशुद्धिर्विधीयते ।
सर्वं ब्रह्ममयं देवि भावयेत् ब्रह्मसाधकः ॥
न चाऽस्य प्रत्यवायोऽस्ति नांगवैगुण्यमेव च ।
महामनो साधने तु व्यंगं सांगायते ध्रुवं ॥
इत्यादि १५३ श्लोकाः वर्तंते ॥
श्री महानिर्वाणतंत्रे सर्वतंत्रोत्तमोत्तमे सर्वधर्मनिर्णयसारे
श्री मदाद्यसदाशिवसंवादे जीवनिस्तारोपायप्रश्ने
परब्रह्मोपदेशकथनं नाम तृतीयोल्लासः ॥

## मुख्यधर्माः श्रीविद्यार्णवतन्त्रे २ श्वासः

शतापराधां वनितां पुष्पेणापि न ताडयेत् ।
दोषान्न गणयेत् स्त्रीणां गुणानेव प्रकाशयेत् ॥
न स्वपेत् कुलवृक्षाद्यो न चोपद्रवमाचरेत् ।
दृष्ट्वा यत्तया नमस्कुर्यात् छेदयेन्न कदाचन ॥
श्लेष्मान्तककरञ्जाक्ष निम्बाश्वत्थ कदम्बकाः ।
बिल्वो वटोदुम्बरौ च कुलवृक्षा नव स्मृताः ॥
रिक्तहस्तस्तु नोपेयात् राजानं दैवतं गुरुम् ।
फलपुष्पाम्बरादीनि यथा शक्त्या समर्पयेत् ॥
एवं नो नाचरेद्देवि ब्रह्मराक्षसतां व्रजेत् ।
गुरुशक्तिश्च तत्पुत्रो ज्येष्ठभ्राता गुरोस्समः ॥
आत्मवच्च कनीयांसः पुत्रवत् कुलबालकाः ।
लोकाचार्यस्य देवेशि गुरुर्ज्येष्ठकनिष्ठयोः ॥
गुरुकुल्यस्य कुर्वीत प्रणामं स्वगुरोर्यथा ।
स्वज्येष्ठश्च क्रमज्येष्ठः कुलज्येष्ठस्तुरीयकः ।
गुरोर्ज्येष्ठस्तु देवेशि इति ज्येष्ठचतुष्टयम् ।

यावज्ज्येष्ठाभिवादे तु क्रमज्येष्ठांग ईरितः ॥
गुरोश्च कुलवृक्षस्य वन्दनादि विधानतः ।
पितृमात्रादिसर्वेषु पूज्यकोटिषु बन्धुषु ॥
अभ्युत्थानप्रणामाद्यैरव्यक्तदोषलाघवः ।
यदा त्वाचार्यरूपेण स्वात्मानं सम्प्रकाशयेत् ॥
स महापशुरित्युक्तो देवताशापमाप्नुयात् ।
यो गुरुस्थानकं प्राप्तः पादुकाप्यसंख्यया ॥
गुरुवत् म तु मन्तव्यो ज्येष्ठैर्वन्द्यो न च प्रिये ।
गुरुं प्रकाशयेद्धीमान् मन्त्रं नैव प्रकाशयेत् ॥
अप्रकाशप्रकाशाभ्यां क्षीयते संपदायुषी ।
देवतागुरुशास्त्रादिसिद्धाचारविडम्बकः ॥
विद्याचोरो गुरुद्रोही ब्रह्मराक्षसतां व्रजेत् ।
देवस्थाने गुरुस्थाने श्मशाने वा चतुष्पथे ।
पादुकासन विण्मूत्रमैथुनादि विवर्जयेत् ॥
निर्वीर्यञ्च पितुर्यन्त्रं तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥
भिक्षुभ्यश्च वनस्थेभ्यो वर्णिभ्यश्च महेश्वरि ।
गृहस्थो भोगमोक्षार्थी मन्त्रदीक्षां न चाचरेत् ॥
त्यक्ताग्नयः क्रियाःहीना यतयो ह्यपरिग्रहाः ।
वनस्थास्तादृशश्चैव वर्णन्यूना अमी यतः ।
अतस्तेषां नाधिकारो दीक्षादाने महेश्वरि ॥
शिष्योऽपि लक्षणैरेतैः कुर्याद्गुरुपरीक्षणम् ।
आनन्दाद्यैर्जपैस्तोत्रैः ध्यानहोमार्चनादिभिः ॥
ज्ञानोपदेशसामर्थ्यं मन्त्रसिद्धिमपीश्वरि ।
बोधकत्वञ्च विज्ञाय शिष्यो भूयान्न चान्यथा ॥

### शूद्राणां मन्त्रेष्वनधिकारः

न वेदप्रणवं त्यक्त्वा मन्त्रो वेदसमुद्भवः ।
तस्माद्वेदः परो मन्त्रो वेदाङ्गश्चागमस्स्मृतः ॥

वश्याकर्षादिकं कर्म दृष्टादृष्टफलप्रदम् ।
वेदेन साध्यते सर्वं ग्रहयन्त्रादिभिः कलौ ।।

न वेदेन विना यज्ञा न वेदा यज्ञकल्पिताः ।
तस्माद्वेदः परो मन्त्रो न मन्त्रो वेद उज्झितः ।।

न मन्त्रे चाधिकारोऽस्ति शूद्राणां नियमं परम् ।
मन्त्राभावादमन्त्रेण भाषितं सर्वकर्म हि ।।

ब्राह्मणा क्षत्रिया वैश्याः शूद्रा ये शुचयोऽमलाः ।
तेषां मन्त्राः प्रदेया वै न तु संकीर्णधर्मिणाम् ।।

ब्रह्मक्षत्रविशः शूद्राः अर्चायां शुद्धबुद्धयः ।
गुरुदेवद्विजार्चासु रता स्यु रधिकारिणः ।।

वैदिको मिश्रिको वापि विप्रादीनां विधीयते ।
तान्त्रिको विप्रभक्तस्य शूद्रस्यापि प्रकीर्तितः ।।

स्वागमोक्तविधिना शूद्रैश्चापि प्रपूजनम् ।
कर्तव्यं श्रद्धया विष्णोश्चिन्तयित्वा पतिं हृदि ।।

स्त्रीणामप्यधिकारोऽस्ति विष्णोराराधनादिषु ।
पतिप्रियरतानाञ्च श्रुतिरेषा सनातनी ।।
अन्येषामपि वर्णानां विद्यया समुपाचरेत् ।।
या स्त्री भर्त्रा वियुक्ता च शुभा स्वान्तरसंयुता ।
सा च मन्त्राणि गृह्णातु सभर्त्री तदनुज्ञया ।
विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया ।
नाधिकारः स्वतो नार्यां भार्याया भर्तुराज्ञया ।
स्त्रीशूद्राणामयं मन्त्रो नमोन्तश्च शुभावहः ।
एतत् ज्ञात्वा महासेन चण्डालानपि दीप्तयेत् ।
सुचिव्रततमाः शूद्रा धार्मिका द्विजसेवकाः ।
स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः ।
लोकाश्चण्डालपर्यन्ताः सर्वेऽप्यत्राधिकारिणः ।
न वैदिकं जपेच्छूद्रः स्त्रियश्चैव कदाचन ।
नमोऽन्तं शिवमन्त्रं वा वैष्णवं चोच्यते बुधैः ।
स्वाहाप्रणवसंयुक्तं मन्त्रं शूद्रे ददद्द्विजः ।

## सालग्राममन्त्रः (प्रपञ्चसारसारसंग्रहः)

अस्य मन्त्रस्य माध्यन नारायण ऋषिः । अनुष्टुप् छन्दः ।
श्रीलक्ष्मीनारायणो देवता । ओं बीजम् । ह्रीं शक्तिः । मीः कीलकम् ।
ओं नमो भगवते विष्णवे सालग्रामनिवासिने ।
सर्वाभीष्टफलप्रदाय सकलदुरितनिवारणाय सालग्रामाय स्वाहा इति
न्यासः ।

**ध्यानम् -** कुन्दप्रभं तपनकोटिनिभं ध्वजचक्र ।
कौमोदकीधरविराजितपाणिपादम् ।
लक्ष्मीमहीमहित यातु विचित्रभूषं
नारायणं कविजनाश्रममाश्रयामि ॥

**मनुः -** ओं नमो भगवते विष्णवे श्रीसालग्रामनिवासिने ।
सर्वाभीष्टफलप्रदाय सकलदुरितनिवारिणे ॥
सालग्रामाय स्वाहा ।

अनेनापि सालग्राममन्त्रेण सर्ववैष्णवपूजादिषु पुष्पाञ्जलिश्च दशांशजपश्च कर्तव्यः । तत्तन्मन्त्रसंसिद्ध्यर्थं अष्टाङ्गनमस्कारं च कृत्वा प्रसन्नार्घ्यमिदं समर्पयामि इति प्रसन्नार्घ्यञ्च दत्वा चुलुकमन्त्रोदकेन सुमत्यार्पयतु तच्चरणाम्बुजे । चुलुकमन्त्रः इतः पूर्वं प्राणबुद्धिदेहधार्यविकारतः जाग्रत्स्वप्नसुषुप्ति - अवस्थासु मनसा वाचा कर्मणाऽहं हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं, यदुक्तं, यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा इति ॥

## सर्वमन्त्राधिकारसिद्ध्यर्थं न्यासमन्त्रहोमादिस्वरूपाः

ब्रह्मा ऋषिः, परमगायत्री छन्दः, सकलपदार्थसाक्षी परं ज्योतिः देवता, स्वाहा - हृदयम्, सोऽहं - शिरसि, हंसः - शिखा, ह्रीं - कवचम्, ओं - नेत्रम्, हरिहर - अस्त्रं ।

**ध्यानम् -** स्मर्तव्याशेषलोकान्तर्वर्ति यत्तेज ऐश्वरं ।
ब्रह्माग्नौ जुहुयात्तस्मिन्सदा सर्वत्र वर्तिनि ॥
ब्रह्मात्मभिर्महामन्त्रैः ब्रह्मविद्भिस्समाहितैः ।
ब्रह्माग्नौ ब्रह्महविषा हुतं ब्रह्मार्पणं स्मृतम् ॥

**मनुः -** ओं ह्रीं नारायणज्योतिरहं परज्योतिषि
जुहोमि हंसस्सोऽहं स्वाहा ॥ इति प्रपञ्चयागमन्त्रः ॥

॥ श्रीविद्यार्णवोक्तमन्त्राः नवरात्रार्चनीयदेवताः ॥

| | | | |
|---|---|---|---|
| क्षित्या | वषट्कारा | प्रकृतिः | सदसच्चाखिलात्मिका |
| जगन्मूर्तिः | स्वरात्मा | सत्वादिगुणत्रयविभाविनी | नारी |
| देवी | स्वधाक्षरा | कालरात्री | शिवा |
| भगवती | त्रिधामात्रात्मिका | महारात्रिः | सिंहवाहिनी |
| महामाया | अर्धमात्रास्वरूपिणी | मोहरात्रिः | अम्बिका |
| प्रसन्नवरदा | अमृत्रार्था | दारुणा | भद्रकालिका |
| मुक्तिदायिनी | संध्या | सुरेश्वरी | शंखिनी |
| परमा | सवित्री | ह्री | नापिनी |
| हेतुभूता | जननी | बुद्धिः | बाणा |
| सनातनी | परा | बोधसुलक्षणा | भुसुण्डी |
| संसारबन्धहेतुका | सृष्टिरूपा | लता | परिघायुधा |
| सर्वेश्वरेश्वरी | जगद्योनिः | पुष्टि | |
| योगनिद्रा | स्थितिरूपा | तुष्टि | |
| हरिनेत्रकृतालया | संहृतिरूपा | शान्तिः | सुन्दरी |
| विश्वेश्वरी | जगन्माया | क्षान्तिः | परा |
| जगद्धात्री | महाविद्या | खड्गिनी | चण्डिका |
| स्थितिसंहारकारिणी | महामाया | शूलिनी | जगन्माता |

| | | | |
|---|---|---|---|
| निद्रा | महामेधा | घोरा | महिषासुरघातिनी |
| भगवती | महास्मृतिः | गदिनी | आत्मशक्ति |
| अतुला | महामोहा | चक्रिणी | सर्वदेवमयी |
| तेजसां निधिः | महामोहा | चक्रिणी | सर्वदेवमयी |
| स्वाहा | महादेवी | परमा | श्रद्धा |
| स्वधा | महासुरी | परमेशी | गुणात्मिका |
| सर्वालया | सुखा | छायारूपा, शक्तिरूपा | पाशिनी |
| अव्याकृता | कल्याणी | तृष्णारूपा | विचित्रखट्वाङ्गधरा |
| आद्या | ऋद्धिः | क्षान्तिरूपा | नरमालाविभूषणा |
| श्रद्धात्मिका | सिद्धिः | जातिरूपा | द्वीपिचर्मपरिधाना |
| वार्तातिहन्त्री | कूर्मिका | लज्जारूपा | शुष्कमांसातिभैरवा |
| मेधा | नैऋती | शान्तिरूपा | अतिविस्तारवदना |
| दुर्गा | भूभृतां लक्ष्मीः | श्रद्धारूपा | जिह्वाललनभीषणा |
| भवसमुद्रनौः | शर्वाणी | कान्तिस्वरूपिणी | निमग्ना |
| असङ्गा | दुर्गा | लक्ष्मीरूपा | रक्तनयना |
| कैटभारातिहृदयैककृतालया | दुर्गपारा | दयारूपा | नादापूरितदिङ्मुखा |
| गौरी | सारा | तुष्टिरूपा | भीमाक्षी |
| सदार्द्रचित्ता | सर्वकारिणी | पुष्टिरूपा | भीमरूपा |
| गीर्वाणवरदायिनी | क्षान्तिः | मातृरूपा | चण्डमुण्डविनाशिनी |
| देवी | कृत्स्ना | भ्रान्तिरूपा | लोकविख्याता |

| | | | |
|---|---|---|---|
| हादेवी | धूम्रा | शुभहेतु | ब्रह्माणी |
| शवा | सौम्या, अतिरौद्रिणी | पार्वती | ब्रह्मवादिनी |
| द्रा | जगत्प्रतिष्ठा | कैशिकी | माहेश्वरी |
| रौद्रा | कृष्णा | कालिका | वृषारूढा |
| धात्री | विष्णुमाया | उग्रचण्डा | त्रिशूलवरधारिणी |
| ज्योत्स्ना | क्षान्तिरूपा | कृष्णा | महाहिवलयाप्राप्ता |
| इन्दुरूपिणी | जातिरूपा | हिमाचलकृतालया | चन्द्ररेखाविभूषणा |
| सुखा | लज्जारूपा | धूम्रलोचनहन्त्री | कौमारी |
| कल्याणी | क्षुधा | असिनी | शक्तिहस्ता |
| मयूरवरवाहना | रक्तबीजनाशिनी | कलाकाष्ठादिरूपा | माहेश्वरी |
| गुहरूपा | चण्डघंटिका | परिणामप्रदायिनी | त्रैलोक्यत्राणसहिता |
| वैष्णवी | अष्टादशभुजा | सर्वमंगलमांगल्या | किरीटवरधारिणी |
| गरुडोपरिसंस्थिता | उग्रा | शिवा | वृत्रप्राणहरा |
| शंखचक्रगदाशार्ङ्गखड्गहस्ता | निशुंभासुरघातिनी | सर्वार्थसाधिका | शिवदूतीस्वरूपिणी |
| वाराही | शुंभहन्त्री | शरण्या | हतदैत्या |
| नारसिंही | प्रपन्नार्तिहरा | त्र्यम्बिका | महासत्वा |
| नृसिंहसदृशी | विश्वेश्वरी | गौरी | घोररूपा |
| घोररूपा | आधारभूता | सृष्टिस्थितिलयात्मिका | महारवा |
| सटाक्षेपक्षिप्तनक्षत्रसंहतिः | महीरूपा | शक्ति | दंष्ट्राकरालवदना |
| वज्रहस्ता | अपांस्वरूपा | सनातनी | शिरोमालाविभूषणा |

ऐन्द्री
गजराजोपरिसंस्थिता
सहस्रवदना
शक्ररूपा
भीषणशक्ति
अत्युग्रा
शिवारुतनिनादिनी
अपराजिता
शिवदूती
कात्यायनी
मेधा
सरस्वती
वरा
भूतिदा
तामसी
नियतेशा
सर्वतः पाणिपादान्ता
सर्वतोऽक्षिशिरोमुखा
सर्वतःश्रवणघ्राणा
सर्वस्वरूपिणी

आप्यायनी
अलंघ्यवीर्या
अनन्तवीर्या
बीजसंरूपिणी
संमोहिनी
विद्या
स्वर्गमुक्तिप्रदायिनी
अशेषजनहृत्संस्था
नारायणी
शिवा
नन्दगोपगृहे जाता
यशोदागर्भसम्भवा
विन्ध्याद्रिवासिनी
रौद्ररूपिणी
रक्तदन्तिका
दाडिमीकुसुमप्रख्या
अयोनिजा
शतलोचना
भीमा
शाकम्भरी

गुणाश्रया
गुणमाया
नारायणस्वरूपिणी
शरणागतदीनार्तपरित्राणपरायणा
सर्वस्यार्तिहरदेविविष्णुरूपापरात्परा
हंसयुक्तविमानस्था
ब्रह्माणीरूपधारिणी
महावृषभसंरूढा
कौशाम्भक्षुरिकाशूलचन्द्राहिवरधारिणी
महावृषभसंरूढा
चण्डघण्टा
विशालाक्षी
कूष्माण्डा
वेदमातृका
स्कन्दमाता
गणेशी
विरूपाक्षी
अम्बिका
महागौरी
महामाया

चामुण्डा
मुण्डमदना
लक्ष्मी
लज्जा
महाविद्या
श्रद्धा
पुष्टिः
सदाध्रुवा
महारात्रि
महाविद्या

| | | | |
|---|---|---|---|
| विश्वात्मिका | दुर्गा | महाबलपराक्रमा | |
| विश्ववन्द्या | दानवेन्द्रविनाशिनी | — | — |
| पापापहारिणी | महाकाल्या | — | — |
| समस्तरोगहन्त्री | महाकाली | — | — |
| समस्ताभीष्टदायिनी | महामारी | — | — |
| सर्वेशा | अजा | — | — |
| सर्वरूपा | लक्ष्मी, बुद्धिप्रदा | — | — |
| सर्वशक्तिसमन्विता | नित्या | — | — |
| उत्पातपाकजानितोप- | पुत्रपौत्रविवर्धिनी | — | — |
| सर्गलयनाशिनी | | | |
| विश्वार्तिहारिणी | शैलपुत्री | — | — |
| त्रैलोक्यवरदायिनी | ब्रह्मचारिण | — | — |

# श्रीविद्यार्णवे सूक्ष्महोमविधिः

श्रीविद्यार्णवतन्त्रे द्वितीय भागे पञ्चत्रिंशश्वासे प्राणाग्निहोत्रमन्त्रानाह। ककारादि नकारान्तैः षोडशभिः भानुवर्णैः सकारादि यकारान्तैः व्युत्क्रमात् अग्निवर्णैः स्वरानकारादीन् चन्द्रवर्णान् पुटितान् जुहुयात्। तद्यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| 1. | क | अ | सों | झ | ऌ | भों |
| | ख | आ | षों | ञ | ॡ | बों |
| | ग | इ | शों | ट | ए | फों |
| | घ | ई | वों | ठ | ऐ | पों |
| | ङ | उ | लों | ड | ओ | नों |
| | च | ऊ | रों | ढ | औ | धों |
| | छ | ऋ | यों | ण | अं | दों |
| | ज | ॠ | मों | त | अः | थों |

एते भानुवर्णाः

| | | | | | | |
|---|---|---|---|---|---|---|
| 2. | थ | अ | तों | म | ऌ | जों |
| | द | आ | णों | य | ॡ | छों |
| | ध | इ | ढों | र | ए | चों |
| | न | ई | डों | ल | ऐ | ङों |
| | प | उ | ठों | व | ओ | घों |
| | फ | ऊ | टों | श | औ | गों |
| | ब | ऋ | ञों | ष | अं | खों |
| | भ | ॠ | झों | स | अः | कों |

एते वह्निभानुवर्णाः

| | | | | | | |
|---|---|---|---|---|---|---|
| 3. | अ | थ | तों | ऌ | म | जों |
| | आ | द | णों | ॡ | य | छों |
| | इ | ध | ढों | ए | र | चों |
| | ई | न | डों | ऐ | ल | ङों |
| | उ | प | ठों | ओ | व | घों |
| | ऊ | फ | टों | औ | श | गों |
| | ऋ | ब | ञों | अं | ष | खों |
| | ॠ | भ | झों | अः | स | कों |

एते चन्द्रभानुवर्णाः

| | | | | | | |
|---|---|---|---|---|---|---|
| 4. | क | थ | ओं | झ | म | ओं |
| | ख | द | " | ञ | य | " |
| | ग | ध | " | ट | र | " |
| | घ | न | " | ठ | ल | " |
| | ङ | प | " | ड | व | " |
| | च | फ | " | ढ | श | " |
| | छ | ब | " | ण | ष | " |
| | ज | भ | " | त | स | " |

एते भानुचन्द्रवर्णाः

| | | | | | | |
|---|---|---|---|---|---|---|
| 5. | अ | क | सों | ऌ | क | भों |
| | आ | क | षों | ॡ | क | बों |
| | इ | क | शों | ए | क | फों |
| | ई | क | वों | ऐ | क | पों |
| | उ | क | लों | ओ | क | नों |
| | ऊ | क | रों | औ | क | धों |
| | ऋ | क | यों | अं | क | दों |
| | ॠ | क | मों | अः | त | थों |

एते चन्द्रवह्निवर्णाः

| | | | | | | |
|---|---|---|---|---|---|---|
| 6. | थ | क | ओं | म | झ | ओं |
| | द | ख | " | य | ञ | " |
| | ध | ग | " | र | ट | " |
| | न | घ | " | ल | ठ | " |
| | प | ङ | " | व | ड | " |
| | फ | च | " | श | ढ | " |
| | ब | छ | " | ष | ण | " |
| | भ | ज | " | स | त | " |

एते वह्निचन्द्रवर्णाः

ततः सूक्ष्मपराख्यैश्च होमैः सिद्धि श्रुणु प्रिये ।
स्वमूलाधारके वह्नौ कुण्डलिन्यग्रगामिनि ॥

मनः पूःप्रकारान्यैश्च होमैः सिद्धि शृणु प्रिये
स्वशरीराधारके वह्नौ कुंडलि न्यग्रगामिनि ॥

वाह्ययज्ञाच्चकर्मा तु प्रपञ्चं जुहुयात्तथा ।
येनावयोः समो देवी जायते हवनेन च ॥

तद्विधानं वद प्राज्ञ शंभो सम्यङ्ममाधुना ।
आधारे वह्नि संस्थानं कुंडलिन्याः शिवनिं ततः ॥

तद्रूपं तत्क्रियां सर्वं वद मे विशदं प्रभो ।
शृणु वक्ष्ये विधानं ते सम्यग्विस्तरतेऽधुना ॥

प्राणाग्निहोत्रविद्येति यत् त्रय्यां श्रूयते परं ।
यज्ज्ञात्वा वनितागर्भं न प्रयाति नरो ध्रुवं ॥

यद्व्ययायासहितमनन्यापेक्षनिर्वहं -
यन्मनः क्लेशविश्रांते स्यान्निःशेषकल्मषं ॥

सुखास्पदं स्वर्गं विश्वमयं चिद्वेद्यवेदनात् ।
अत्रोक्तशेषमखिलं षट्त्रिंशे पटले स्फुटं ॥

प्रदर्श्यते ततस्तत्र वर्णयामि च किंचन ।
नित्यानित्योदिते मूलाधार मध्येस्ति पावकः ॥

सर्वेषां प्राणिनां तद्वद् हृदये च पराक्रमः ।
मूर्धनि ब्रह्मरंध्राधश्चन्द्रमाश्च व्यवस्थितः ॥

तत्त्रयात्मकमेव स्यादाद्यानित्या त्रिखण्डक ।
तेषां त्रयाणामैक्यं तु मनसा भावयेत् तथा ॥

गमागमाभ्यां तेजोभि स्तेषामन्योन्यजैः शिवे ।
तथा समिद्धं तत्तेजस्त्रयं वुध्वाच तन्मयं ॥

चित्तविकल्पविधुरं भावयेदद्भुतं हितं ।
तेषां त्रयाणां वर्णानां प्रागुक्तानां क्रमेण वै ॥

द्वाभ्यां अन्यतमंकृत्वा पुटितं जुहुयाच्च तैः ।
पुटितान् भानुहृद्वर्णैः स्वरांस्तारेण हुंकृतैः ॥

कुंडलीमुखमार्गाग्नौ जुहुयान्निश्चलाशयः ।
वह्निभानुपुटान्तस्थैश्चान्द्रै स्तद्वत् ...

चंद्रभानुपुटान्तस्थैः वह्न्यर्णैः जुहुयात् तथा ।
भानुचंद्र पुटांतस्थै वह्न्यर्णैर्जुहुयादपि ॥
चंद्रवह्निपुटान्तस्थैः भानुवर्णैर्जुहुयादपि ।
वह्निचंद्रपुटान्तस्थैरपि तद्वद् हुनेत्ततः ।
तथा तेषां प्रातिलोम्यात् षोडशानां हुनेदपि
एवं द्वादशधाहोममक्षरैः स्यादुदीरितैः ।
कृत्वा तद्वाच्य मखिलमर्थरूपं चतुर्भिः समम् ।
तेजस्तथात्मरूपं स्यादावयोरपि तद्वपुः ॥
अन्यानि चावयोरिच्छा गृहीतानि वपूंषि वै ।
तान्यन्यदेवतादेह नम्यगिच्छावशानि च ॥
मुक्तिश्च तन्मयीभावस्थैर्यमेव समीरितं ॥
तत्र कुण्डलिनीं ब्रूहि स्फुटं च परमेश्वर ।
तां वदामि श्रुणु प्राज्ञे रहस्यं परमाद्भुतं ।

| | | |
|---|---|---|
| श्रीं ह्रीं श्रीं सकल ह्रीं | हारनूपुरसंयुक्तरूपिणी | अणिमासिद्धाश्रीपा सिद्धि |
| | कमलद्वयधारिणीरूपिणी | लघिमा " |
| | लक्ष्मी | महिमासिद्धि " |
| | परशिवमयी | ईशित्व " |
| | शुद्धाजांबूनदप्रभा | वशित्व " |
| | तेजोरूपा | प्राकाम्य " |
| | कमलवसति | भुक्ति " |
| | विश्वमोहिनी | इच्छा " |
| | सर्वभूषोज्ज्वलांगी | प्राप्ति " |
| | बीजरूपधरा | सर्वकाम " |
| | आद्याशक्ति | ब्राह्मी " |
| | सकलजननी | माहेश्वरी " |
| | कलशधारिणी | कौमारी " |
| | विष्णुवामांगसंस्था | वैष्णवी " |
| | कमलालया | वाराही " |
| | श्रीमत्सौभाग्यजननी | माहेन्द्री " |

भार्गवी
सनातनी
सर्वकामफलावाप्तिसाधनैका
सुखावहा
हिरण्यवर्णा
हरिणी
सुवर्णल्लिन्त्रजा
समस्तसंपत्सुखदा
अखिलसौभाग्यदायिनी
समस्तकल्याणकरी
ज्ञानदा
हरिप्रिया
विज्ञानसंपत्सुखदा
अश्वपूर्णा
हिरण्मयी
विचित्रवाग्विभूतिकरी
रथमध्या
मनोहरा-
हस्तिनादप्रमोदा
अनंतसौभाग्यदायिनी
सर्वभूतांतरस्था
स्वर्णप्राकारमध्यगा
समस्तभूतेश्वरी
विश्वरूपा
प्रभामयी
दारिद्र्यदुःखौघतमोपहर्त्री
पद्मिनी
दीनार्तिविच्छेददक्षा
कृपाकलितलोचना
प्रणतस्वांतशोकघ्नी
शरणागतरक्षणा
शांति

चामुण्डा
महालक्ष्मी
सर्वसंक्षोभिणी
सर्वविद्राविणी
सर्वाकर्षिणी
सर्ववशंकरी
सर्वोन्मादिनी
सर्वमहांकुशे
सर्वखेचरी
सर्वबीजे
सर्वयोनि
सर्वत्रिखंडे
कामाकर्षिणि
बुद्ध्याकर्षिणि
अहंकाराकर्षिणि
शब्दाकर्षिणि
स्पर्शाकर्षिणि
रूपाकर्षिणि
रसाकर्षिणि
गंधाकर्षिणि
धैर्याकर्षिणि
स्मृत्याकर्षिणि
नामाकर्षिणि
बीजाकर्षिणि
आत्माकर्षिणि
अमृताकर्षिणि
शरीराकर्षिणि
अनंगकुसुमा
अनंगमेखला
अनंगमदना
अनंगमदनातुरा
अनंगरेखा

कांति
पद्मसंस्था
कमनीयगुणालया
क्षांति
दान्ति
दुरितक्षयकारिणी
शशिशेखरसंस्था
धनधान्यसमृद्धिदा
शक्ति
रति
नित्यपुष्टा
रजनीकरसोदरा
करीषिणी
भक्ति
भवसागरतारिणी
मति
सिद्धि
धृति
मधुसूदनवल्लभा
पुष्टि
हिरण्यमाला
शुभलक्षणलक्षिता
अतिदुर्गतिहंत्री
वरसद्गतिदायिनी
दिविदेवगणाराध्या
भुवनार्तिविनाशिनी
आर्द्रा
पुष्करिणी
पुष्टि
धरणीधरवल्लभा

अनंगवेगिनी
अनंगांकुशा
अनंगमालिनी
सर्वसंक्षोभिणी
सर्वविद्राविणी
सर्वाकर्षिणी
सर्वाह्लादिनी
सर्वसमोहिनी
सर्वस्तंभिनी
सर्वजृंभिणी
सर्ववशंकरी
सर्वरंजिनी
सर्वोन्मादिनी
सर्वार्थसाधिनी
सर्वसंपत्तिपूरणी
सर्वमंत्रमयी
सर्वद्वंद्वक्षयंकरी
सर्वार्थसिद्धिप्रदा
सर्वसंपत्प्रदा
सर्वप्रियंकरी
सर्वमंगलकारिणी
सर्वकामप्रदायिनी
सर्वदुःखविमोचनी
सर्वमृत्युप्रशमनि
सर्वविघ्नविारिणि
सर्वांगसुन्दरि
सर्वसौभाग्यदायिनी
सर्वज्ञादेवि
सर्वशक्ति
सर्वैश्वर्यप्रदा

दारिद्र्यदुःखहंत्री
भवविध्वंसिनी
श्रीविष्णुवक्षस्थलगा
अशेषमुनिवंदिता
भद्रा
भाग्यरूपा
नित्या
निर्मलबुद्धिदा
सत्या
सर्वभूतस्था
रत्नगर्भांतरस्थिता
लक्षणा
ललितांगी
पद्मा
पद्मासनार्चिता
विद्या
संपत्करी
देवसंघाभिपूजिता
रम्या
शुद्धा
कांता
कांतिमुद्रासितांगका
सर्वसौख्यप्रदादेवी
भक्तौघाभयदायिनी
श्वेतद्वीपाकृतावासा
जगन्माता
जगन्मयी
रत्नगर्भस्थिता
सौम्या
क्षीरांबुधिकृतालया
प्रसन्नहृदया
परिपूर्णा

सर्वज्ञानमयी
सर्वव्याधिनिवारिणी
सर्वाधारस्वरूपा
सर्वपापहरा
सर्वानंदमयी
सर्वरक्षास्वरूपिणी
सर्वेप्सितफलप्रदा
वशिनीवाग्देवता
कामेश्वरी
मोदिनी
विमला
अरुणा
जयिनी
सर्वेश्वरी
कौलिनी
बाणशक्ति
धनुःशक्ति
पाशशक्ति
महाकामेश्वरी
महावज्रेश्वरी
महाभगमालिनी
महात्रिपुरसुन्दरी
निराकारा
साकारा
ब्रह्माण्डलयधारिणी
एकनाथा
आद्यलक्ष्मी
अज्ञानहंत्री
गुणातिगा
प्रज्ञानलोचना
अशेषवाग्रजादयापहारिणी
सुस्पष्टवाक्प्रभा

| | |
|---|---|
| हिरण्मयी | सर्वसंपद्विराजिता |
| वसुन्धरा | प्रभा |
| श्रीधरा | लावण्यसुदया |
| वसुदोग्ध्री | दोग्ध्री |
| कृपामयी | सुवर्णप्रदा |
| विष्णुप्रिया | समस्तविघ्नौघहर्त्री |
| रत्नगर्भा | भोगदा |
| समस्तफलदा | विचक्षणा |
| रसालगता | देवाधिनाथवंद्या |
| सुव्रता | दीनजनवत्सला |
| हरिप्रिया | मांगल्यवीजनहिता |
| धरणीगर्भसंस्था | निश्चिन्तजिनी |
| समुन्नतमुखी | अनन्तगा |
| समस्तपुरसंस्था | आद्यादिलक्ष्मी |
| परिपूर्णमनोरथा | महासिद्धलक्ष्मी |
| करुणारसनिष्पंदनेत्रद्वयविलासिनी | राज्यलक्ष्मी |
| सर्वराजगृहावासा | दिव्यलक्ष्मी |
| महालक्ष्मी | सुश्रीमंगलदेवता |
| गुणान्विता | भुक्तिदा |
| वैकुण्ठनगरस्था | मुक्तिदा |
| क्षीरसागरकन्यका | भक्तिदा |
| योगिहृत्पद्मसंस्था | सद्गतिप्रदा |
| कल्पवल्ली | कीर्तिदा |
| दयावती | धनदा |
| भक्तचिंतामणि | पुत्रपौत्रविवर्धिनी |
| आदिमाया | पद्मानना |
| इंदिरा | पद्मोरू |
| रमा | पद्माक्षी |

## सर्व देवता उपयोग सम्क्षेपावरण पूजापद्धतिः ॥

प्रथमतः पूजागृहस्य द्वारे, दक्ष भागे ओं ऐं क्लीं श्रीं भं भद्रकाल्यै नमः, वामभागे 4 भं भैरवाय नमः। ऊर्ध्वभागे 4 लं लम्बोदराय नमः इति पूजयेत्। 4 ततः आसनपूजां कृत्वा पूर्वे अथवा उदङ्मुखे वा उपविश्य तत्त्वाचमनं कृत्वा ततः शुक्लाम्बरधरं इत्यादि प्राणायामः सङ्कल्पं अन्ते अमुकदेवता-

प्रीत्यर्थं अमुकयन्त्रे नवावरणपूजां करिष्ये इति सङ्कल्प्य गणपतिपूजां कृत्वा गुरुवन्दनस्तोत्रं च कुर्यात्। ततः अमुकदेवता आत्मानं रक्ष रक्ष स्वाहा इति देहे त्रिः व्यापकम् कुर्यात्। ततः ओं ऐं ह्रीं श्रीं ऐं ह्रः अस्त्राय फट्। इति अंगुष्ठादि—कनिष्ठिकान्तं करतलकरपृष्ठ कूर्परयोः देहे च व्यापकं कुर्यात्। ततः श्री गुरो दक्षिणामूर्ते भक्तानुग्रहकारकां अनुज्ञां देहि भगवन् श्रीचक्र-भजनाय मे।

अतिक्रूर महाकाय कल्पान्त दहनोपम।

भैरवाय नमस्तुभ्यं अनुज्ञां दातुमर्हसि ॥ इति गुरु भैरव आज्ञां गृह्णीयात्। ततः प्रथमखण्डोक्त आत्मलघु प्राणप्रतिष्ठां कुर्यात्। ततः मातृकान्यासं प्रथम खण्डोक्त प्रकारेण सृष्टिस्थितिसंहारन्यासं कृत्वा विष्णु मन्त्रे विष्णुकला मातृकान्यासः शैवमन्त्रे श्री कण्ठादिकला मातृकन्यासः गणेशमन्त्रे—गणेशकलामातृकान्यासः, देविमन्त्रे देवीकलामातृकान्यासः, सूर्यमन्त्रे सूर्यकलामातृकन्यासः एवं तत्तत्प्रयोगेण अवलोक्य न्यासं कुर्व्यात्। ततः ऋष्यादिन्यासं, करहृदयादिन्यासं च प्रयोगोक्तं कृत्वा मूलदेवतां ध्यात्वा ओं मंडूकादि परतत्त्वांतपीठदेवताभ्यो नमः इति सर्वाङ्गे व्यापनं कृत्वा पीठपूजां कुर्यात्। ततः पीठपूजा।

पीठादौ रचिते सर्वतो भद्रमण्डले प्रयोगोक्तमण्डले वा तन्मध्ये मंडूकादि परतत्त्वांत पीठदेवताः संस्थापयेत्। तत्र क्रमः। पूजान् आदाय स्व-वामभागे श्री गुरुभ्यो नमः दक्षिणभागे गं गणपतये नमः मध्ये स्वेष्टदेवतायै नमः इति नत्वा पीठपूजां कुर्यात्। मध्ये मं मंडूकायै नमः। कं कालाग्निरुद्राय नमः, अं आधारशक्तये कूं कूर्मायनमः। अं अनंताय नमः फिं पृथिव्यै नमः। क्षां क्षीरसागराय नमः। रं रत्नदीपाय नमः। रं रत्नमडपाय नमः। कं कल्पवृक्षाय नमः रं रत्नवेदिकाय नमः रं रत्नसिंहासनाय नमः। इति सर्वत्र प्रणवादि नमोन्तं उच्चरेत्। आग्नेय्यां धं धर्माय नैरृत्यां ज्ञां ज्ञानाय वायव्यां वैं वैराग्याय ऐशान्यां ऐं ऐश्वर्याय, पूर्वे अं अधर्माय, दक्षिणे अं अज्ञानाय, पश्चिमे अं अवैराग्याय उत्तरे अं अनैश्वर्याय पुन पीठमध्ये आं आनन्दकन्दाय स संविन्नालाय सं सर्वतत्त्व कमलासनायः, पं प्रकृतिमयपत्रेभ्यो, विं विकारमय-केसरेभ्यो, पं पंचाशत्वर्णाख्यकर्णिकाभ्यो, अं अर्कमण्डलाय द्वादशकलात्मने। सों सोममण्डलाय षोडशकलात्मने। वं वह्निमण्डलाय दशकलात्मने। सं

सत्वाय, रं रजसे, तं तमसे, आं आत्मने, पं परमात्मने, अं अंतरात्मने, ह्रीं ज्ञानात्मने, मं मायातत्त्वाय, कं कलातत्त्वाय विं विद्यातत्त्वाय, पं परतत्त्वाय, नमः । इति पीठदेवताः संस्थाप्य तत्तत्प्रयोगोक्त नव पीठशक्तीः पूजयेत् ।

## कलशस्थापनम्

देव दक्षिणतः त्रिकोणमण्डलं कृत्वा जलेन प्रोक्ष्य त्रिकोणान्ते ह्रीं विलिख्य आधारशक्त्यै नमः इति संपूज्य मूलेन फट् इति मन्त्रेण त्रिपदाधारां प्रक्षाल्य त्रिकोणमध्ये संस्थाप्य मूलेन नमः इति पूजयेत् । ततः सुदर्शनास्त्राय फट् इति ताम्रादि कलशं प्रक्षाल्य आधारोपरि हस्तद्वयेन संस्थाप्य रक्तवस्त्रमाल्यादिना भूषयित्वा मूलेन नमः इति जलं आपूर्य ओं भूर्भुवस्वः वरुण इहागच्छ इह तिष्ठ इति वरुणं आवाह्य गङ्गे च इत्यादि मन्त्रैः गङ्गादितीर्थान् आवाह्य स्वेष्टदेवतां ध्यात्वा गन्धपुष्पैः संपूजयेत् ।

त्रिरर्घ्य स्थापनं । तत्रादौ शङ्ख स्थापनं । देव वामतः त्रिकोण-मण्डलं कृत्वा प्रोक्ष्य मध्ये मायां विलिख्य ओं ह्रीं आधारशक्त्यै नमः इति संपूज्य ततः मूलेन फट् इति त्रिपद आधारं प्रक्षाल्य त्रिकोणमध्ये संस्थाप्य ऊं मं वह्निमण्डलाय दशकलात्मने अमुकपात्रासनाय नमः इति आधारं संपूज्य आधारे पूर्वादिषु दशाग्निकलाः पूजयेत् । ऊं मं धूम्रार्चिषे, रं ऊष्मायै, लं ज्वलिन्यै वं ज्वालिन्यै शं विस्फुलिङ्गिन्यै षं शुश्रियै सं सुरूपायै, हं कपिलायै ळं हव्यवाहायै, क्षं कव्यवाहायै इति पूजयेत् । ततः ओं क्लीं महाजलचराय हुं फट् स्वाहा पाञ्चजन्याय नमः इति क्षालितम् शङ्खं आधारोपरि संस्थाप्य ओं अं सूर्यमण्डलाय द्वादशकलात्मने अमुकपात्राय नमः इति शङ्खं संपूज्य पात्रे स्वाग्रादि प्रादक्षिण्येण द्वादशसूर्यकलाः पूजयेत् । ओं कं भं तपिन्यै खं बं तापिन्यै, खं फं धूम्रायै, घं पं मरीच्यै ङं नं ज्वालिन्यै, चं धं रुचये छं दं शुषु-म्नायै जं थं भोगदायै, झं तं विश्वायै, ञं णं बोधिन्यै टं ढं धारिण्यै ठं डं क्षमायै इति पूजयेत् ।

ततः क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं घं गं खं कं अः अं लॄं लृं ॠं ऋं ऊं उं ईं इं आं अ इति एकपंचशाद् विलोम-मातृकां उच्चार्य मूलेन नमः इति शङ्खे जलम् आपूर्य ओं सोममण्डलाय षोडश-कलात्मने अमुकपात्राऽमृताय नमः इति गन्धादिभिः संपूज्य जले षोडश

चन्द्रकलात् पूजयेत् । तद्यथा अं अमृतायै, आं मानदायै, इं पूषायै, ईं तुष्टायै, उं पुष्ट्यै ऊं वृद्ध्यै ऋं धृत्यै, ॠं शशिन्यै, लृं चन्द्रिकायै लॄं कान्त्यै, एं ज्योत्स्नायै ऐं श्रियै, ओं प्रीत्यै, औं अङ्गदायै, अं पूर्णायै, अः पूर्णामृतायै, इति पूजयेत् । ततः अभिमन्त्रयेत् । शङ्खचन्द्रार्कइत्यादि मन्त्रैः प्रपूजयेत् । त्वं पुरा नमोस्तुते इति पाञ्चजन्याय प्रचोदयात् : इति शङ्ख गायत्रीं अष्टधा जपित्वा शङ्खमुद्रां प्रदर्शयेत् ।

ततः देवस्याग्रे अर्घ्यं देवदक्षिणतः प्रोक्षणीपात्रं च एवमेव विधिना संस्थापयेत् (शिव मूर्त्यर्चने शङ्खस्थाने ताम्रादिपात्रं स्थापयेत्) इति त्रिरर्घ्यस्थापनं । ततो विशेषार्घ्याद्वामतः स्त्रीपात्रं गुरुपात्रं देवपात्रं शक्तिपात्रं योगिनीपात्रं, भोगपात्रं, वीरपात्रं, आत्मपात्रं, बलिपात्रं, एतानि नव पात्राणि पूर्वोक्तक्रमेण संस्थाप्य दक्षिणतः पाद्यार्घ्यं आचमनीय मधुपर्क इति चत्वारि पात्राणि पूर्वोक्तक्रमेण स्थापयेत् आचमनेन गुरु, वीर, आत्म, बलि, भोग इति पंचपात्राणि पाद्यदि उपचारान्तं एकं वा पात्रं संस्थापयेत् तत्राभिमन्त्रयेत् एकमेव शङ्खं संस्थापयेत् ।

## ततः घण्ठा स्थापनम्

### विशेषार्घ्यस्थापनं

देवदक्षिणतः घण्ठां संस्थाप्य घण्ठानादं कृत्वा पूजयेत् ततः गन्धाक्षतपुष्पादीन् च पूजोपकरणार्थं स्वदक्षिणपार्श्वे संस्थाप्य मूलेन नमः इति विशेषार्घ्य बिन्दुभिः संप्रोक्ष्य जलार्थं महत्पात्रं व्यजनं छत्र चामराणि च स्ववामे स्थापयेत् ।

## दीपस्थापनम्

देवस्य दक्षिणे घृतदीपं वामे तैलदीपं च स्थापयेत् दीपं प्रणवेन प्रज्वाल्य सुदर्शनमन्त्रेण पूजयेत् । ओं रां रीं रूं रैं रौं रः ओं सहस्रार हुंम् फट् स्वाहा इति घृतदीपं पूजयेत् । तैलदीपं तु ओं श्लीं पशु हुंम् फट् स्वाहा इति मन्त्रेण पूजयेत् । हस्तद्वयेन दीपं शिखां स्पृष्ट्वा मन्त्रं पठेत् । ओं घोराय, घोरतमाय महारौद्राय वीरभद्राय, ज्वालामालिने सर्वदुष्टोपसंहर्त्रे हुम् फट् स्वाहा इति पठित्वा पश्चात् तं तेजः आत्मानं समर्पय वाक्काय चित्त शोधनं

कुर्यात् । ओं हुम् फट् स्वाहा इति मुखे : ओं रक्ष रक्ष स्वाहा इति हृदि हस्तं दत्वा आत्मरक्षां विधाय ओं इति चन्दन पुष्पाणि अर्पयित्वा पुष्पाक्षतानादाय । सर्वं विलयं यान्तु ये मां हिंसन्ति, हिंसकाः । मृत्युरोग, भय क्लेशाः पतन्तु रिपुमस्तके । इति मन्त्रेण ऐशान्यां दिशि दूरतः पुष्पं विसर्जयित्वा हस्तौ प्रक्षाल्य आचामेत् ।

पूर्वोक्त शंखस्थापन प्रकरणवत् विशेषार्घ्यस्थापनं । तत् अमृते षण्णवति कलाः संस्थाप्य संपूज्य तत् अमृतेन आवरणपूजायां तर्पणम् कुर्यात् ।

## षण्णवतिकलाः

### वह्निकला. दश ।। 4 = ॐ ऐं ह्रीं श्रीं

4 यं धूम्रार्चिषेनमः
4 रं ऊष्मायै नमः
4 लं ज्वालिन्यै नमः
4 वं ज्वलिन्यै नमः
4 शं विस्फुलिंगिन्यै नमः
4 षं सुश्रियै नमः
4 सं सुरूपायै नमः
4 हं कपिलायै नमः
4 ळं हव्यवाहिन्यै नमः
4 क्षं कव्यवाहिन्यै नमः

### सूर्यकालाः द्वादश

4 कं भं तपिन्यै नमः
4 खं बं तापिन्यै नमः
4 गं फं धूम्रायै नमः
4 घं पं मरीच्यै नमः
4 ङं नं ज्वालिन्यै नमः
4 चं धं रुच्यै नमः
4 छं दं सुषुम्नायै नमः
4 जं थं भोगदायै नमः
4 झं तं विश्वायै नमः
4 ञं णं बोधिन्यै नमः
4 टं ढं धारिण्यै नमः
4 ठं डं क्षमायै नमः

### सोमकलाः षोडश

4 अं अमृतायै नमः
4 आं मानदायै नमः
4 इं पूषायै नमः
4 ईं तुष्ट्यै नमः
4 उं पुष्ट्यै नमः
4 ऊं रत्यै नमः
4 ऋं धृत्यै नमः
4 ॠं शशिन्यै नमः

4 ॡं चन्द्रिकायै नमः
4 ॡं कान्त्यै नमः
4 एं श्रियै नमः
4 ऐं ज्योत्स्नायै नमः
4 ओं प्रीत्यै नमः
4 औं अङ्गदायै नमः
4 अं पूर्णायै नमः
4 अः पूर्णामृतायै नमः

## ब्रह्मकलाः दश

4 कं सृष्ट्यै नमः
4 खं ऋद्ध्यै नमः
4 गं स्मृत्यै नमः
4 घं मेधायै नमः
4 ङं कान्त्यै नमः
4 चं लक्ष्म्यै नमः
4 छं धृत्यै नमः
4 जं स्थिरायै नमः
4 झं स्थित्यै नमः
4 ञं सिद्ध्यै नमः

## विष्णुकलाः दश

4 टं जरायै नमः
4 ठं पालिन्यै नमः
4 डं शान्त्यै नमः
4 ढं ईश्वर्यै नमः
4 णं रत्यै नमः
4 तं कामिकायै नमः
4 थं वरदाय्यै नमः
4 दं ह्लादिन्यै नमः
4 धं प्रीत्यै नमः
4 नं दीर्घायै नमः

## रुद्रकलाः

4 पं तीक्ष्णायै नमः
4 फं रौद्र्यै नमः
4 बं भयायै नमः
4 भं निद्रायै नमः
4 मं तन्द्र्यै नमः
4 यं क्षुधायै नमः
4 रं क्रोधिन्यै नमः
4 लं क्रियायै नमः
4 वं उद्गार्यै नमः
4 शं मृत्यवे नमः

## ईश्वरकलाः

4 षं पीतायै नमः
4 सं श्वेतायै नमः
4 हं अरुणायै नमः
4 क्षं असितायै नमः

## सदाशिवकला: षोडश

4 अं निवृत्यै नमः
4 आं प्रतिष्टायै नमः
4 इं विद्यायै नमः
4 ईं शान्त्यै नमः
4 उं इन्धिकायै नमः
4 ऊं दीपिकायै नमः
4 ऋं रेचिकायै नमः
4 ॠं मोचिकायै नमः
4 लृं परायै नमः
4 ॡं सूक्ष्मायै नमः
4 एं सूक्ष्मामृतायै
4 ऐं ज्ञानायै नमः
4 ओं ज्ञानामृतायै नमः
4 औं आप्यायिन्यै नमः
4 अं व्यापिन्यै नमः
4 अः व्योमरूपायै नमः

4 हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ।। नमः

4 प्रतद्विष्णुस्तवते वीर्याय मृगोन भीमः कुचरो गिरिष्ठाः
यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा नमः

4 त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ।। नमः

4 तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् तद्विप्रासो
विपन्यवो जागृवांसः समिन्धते विष्णोर्यत् परमम् पदम् ।। नमः

4 विष्णुं योनिं कल्पयन्तु त्वष्टारूपाणि विंशतु ।
आसिञ्चतु प्रजापति धाता गर्भं दधातु ते ।
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ।। नमः

4 मूलं नमः

4 अखण्डैकरसानन्दकरे परसुधात्मनि ।
स्वच्छन्दस्फुरणामत्र निधेहि कुलनायिके ।। नमः

4 अकुलस्थामृताकारे शुद्धज्ञानकरे परे ।
अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ।। नमः

4 तद्रूपिण्येकरस्यत्वं कृत्वा ह्येतत्स्वरूपिणि ।
भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु ।। नमः

4 ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि ।
अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा ।। नमः

4 ओं हं हं ॐ आनंदभैरवाय वषट् । स ण ईं सुधीदेव्यै वषट् । इति अभिमंत्र्य आनंदभैरवानंदभैरवी श्रीपादुके तर्पयामि नमः इति पुष्पेण अमृतविंदुं तत्रैव त्रिवारं तर्पयित्वा ॥.

4 ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु ह्सौः स्हौः नमः इत्यर्घ्यसंशोधनं । एवमभिमन्त्रित विशेषार्घ्यामृतात् किञ्चित् पात्रान्तरे उद्धृत्य शिरसि श्रीगुरुं त्रिर्भजेत् । सन्निहितो यदि निवेदयेत् । स्वयमपि शोधयेत् तत्वत्रयेण । पुनः किञ्चिद्विशेषार्घ्यामृतं कारण कलशं शंखे कुम्भे च निक्षिपेत्

विशेषार्घ्य पात्रं शङ्ख च न चालभेत् ।,

श्री गुरुभ्यो नमः

## श्री वरमहागणपति मन्त्रः ॥

अस्य श्रीवरमहागणपति महामंत्रस्य । ओं गणक ऋषिः निचृद्गायत्री छन्दः ओं गं बीजं । ह्रीं स्वाहा शक्तिः । ग्लौं कीलकं । श्री वरमहागणपति-प्रसादसिध्यर्थें जपे विनियोगः ॥ ओं श्रीं ह्रीं क्लीं ग्लौं अंगुष्ठाभ्यां नमः । गं गणपतये तर्जनीभ्यां नमः । वर वरद मध्यमाभ्यां नमः । सर्वजनं अनामिकाभ्यां नमः । मे वशमानय कनिष्ठिकाभ्यां नमः । स्वाहा करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादिन्यासः । भूर्भुवस्सुवरोमिति दिग्बन्धः ॥ ध्यानं ॥

बीजापूर गदेक्षु कार्मुकरुजाचक्राब्ज पाशोत्पल :
व्रीह्यग्रस्वविषाण रत्न कलश प्रोद्यत्करांभोरुहः ।
ध्येयो वल्लभयासपद्मकरया । क्लिष्टोज्वलद्भूषया,
विश्वोत्पत्तिविनाशसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥
लं इत्यादि पंचपूजा ॥

मन् : "ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा" ॥

ततः पुनः हृदयादि न्यासं दिग्विमोकं, ध्यानं, पंचपूजां कृत्वा । हस्ते जलमादाय

"गुह्यातिगुह्यगोप्ता त्वं गृहाणाऽस्मत् कृतं जपं ।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ।

इति देवस्य वामकरे, जपार्पण बुध्या तज्जलं भूमौ विसृजेत् । ओं अनेन महामन्त्रजपेन श्रीवरमहागणपतिः प्रीयतां । न्यूनाति रिक्तं सर्वं सुगुणमस्तु ।

"ओं तत्सत् ब्रह्मार्पणमस्तु ॥ .

## ऋणनाशन गणपति मन्त्रः

अस्य मन्त्रस्य सदाशिव ऋषिः। अनुष्टुप्छंदः। ऋणमोचन-गणपतिर्देवता। ग्लौं बीजं। गः शक्तिः। गों कीलकं। श्री ऋणमोचन-गणपति प्रसादसिध्यर्थे जपे विनियोगः। ओं ग्लौं गः गों गणेशाय, ऋण छिन्धि वरेण्यं हुं नमः फट्" ॥ संख्याक्रमेण, कर अंगन्यासं, लोकत्रयेण दिग्बंधनं कृत्वा ध्यानं ॥

"सिन्दूरवर्णं द्विभुजं गणेशं, लम्बोदरं पदमदले निविष्टं।
ब्रह्मादिदेवैः परिसेव्यमानं सिद्धैर्युतं प्रणमामि देवं ॥
सृष्टयादौ बह्मणा सम्यक् पूजितः फलसिद्धये।
सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ पंचपूजा ॥ मनुः।
ओं ग्लौं गः गों गणेशाय ऋणं छिन्धि वरेण्यं हुं नमः फट् ॥

जपांते पुनः हृदयादिन्यासं। दिग्विमोकं, ध्यानं, पंचपूजा, जपसमर्पणं ॥

## ऋणनाशन गणपति स्तोत्रं ॥

पूर्वोक्त ऋषि, न्यासादीन् कृत्वा जपेत् ॥
सृष्ट्यादौ बह्मणा सम्यक् पूजितः फलसिद्धये।
सदैव पार्वतीपुत्र. ऋणनाशं करोतु मे ॥
त्रिपुरस्य वधात्पूर्वं शंभुना सम्यगर्चितः।
महिषस्य वधे देव्याः गणनाथ प्रपूजितः।
हिरण्यकश्यप्वादीनां वधान्ते विष्णुनार्चितः।
महिषस्य वधे देव्याः गणनाथ प्रपूजितः।
तारकस्य वधात्पूर्वं कुमारेण प्रपूजितः।
भास्करेण गणेशो हि पूजितश्च विशुद्धये।
शशिना कांतिवृध्यर्थं पूजितो गणनायकः।
पालनाय च तपसां विश्वामित्रेण पूजितः।
इदं ऋणहरस्तोत्रं तीव्रदारिद्र्यनाशनं।
एकवारं पठेन्नित्यं वर्षमेकं समाहितः।
दारिद्र्यं दारुणं त्यक्त्वा कुबेरसमतां व्रजेत्।"
फडंतोयं महामंत्रः सार्द्धपंचादश...

## त्रैलोक्यमोहनकर गणेश मन्त्रः ॥

अस्य मन्त्रस्य गणक ऋषिः । गायत्रीछंदः । त्रैलोक्यमोहन गणेशो देवता । "ओं वक्रतुण्डैकदंष्ट्राय, क्लीं ह्रीं श्रीं गं, गणपतये, वरवरद, सर्वजनं, मे वशमानय, स्वाहा" ॥ संख्याक्रमेण न्यासं, दिग्बंधः । ध्यानं ॥

"गदा बीजपूरे धनुःशूलचक्रे
सरोजोत्पले पाशधान्याग्रदंतान् ।

करैः संदधान स्वशुण्डाग्रराजन्
मणिकुंभमंगादिरूढः स्वपत्न्या ॥

सरोजन्मनाभूषणांबरणे
ज्वलद्धस्ततन्व्या समालिंगितांगं ।

करीन्द्राननं चन्द्रचूडं त्रिनेत्रं
जगन्मोहनं रक्तकांतिं भजेऽहम् ।

पंचपूजा । मनुं जप्त्वा, पुनः हृदयादिन्यासं, दिग्विमोकं ध्यानं पंचपूजा, जपसमर्पणं च कार्यं ॥ पुरश्चरणं चतुर्लक्ष जपः । दशांशरीत्या, अष्टद्रव्येण होम. तर्पणं, मार्जन, ब्राह्मण भोजनं । अष्टद्रव्याणि मोदक पृथुक लाज सक्तुवं इक्षु नारिकेल, तिल कदलीफलानि ॥

## वक्रतुण्ड महागणपति मन्त्रः

अस्य श्री वक्रतुण्डमहागणपतिमहामंत्रस्य भार्गवऋषिः । अनुष्टुप् छंदः । श्री वक्रतुण्डगणेशो देवता । वं बीजं । यं शक्तिः । ओं कीलकम् ॥ ओं वं क्रं तुं ण्डां यं हुं नमः ॥ इति संख्याक्रमेण न्यासं । दिग्बंधनं ॥ ध्यानं ॥

पुनः हृदयादिन्यासं दिग्विमोकं, ध्यानं, मनुः ओं वक्रतुण्डाय हुं नमः ॥ पुनः हृदयादिन्यासं दिग्विमोकं, ध्यानं, पंचपूजा । जपसमर्पणं ॥ पुरश्चरणं षड्लक्षजपः ॥ अष्टद्रव्यैः दशांशतो होमं । तत्तद्दशांशेन तर्पण, मार्जन ब्राह्मण भोजनं ॥ २) स्वाहा" इत्यन्त मन्त्रः । ऋष्यादि सर्वं पूर्ववत् ॥

## अन्य वक्रतुण्डगणेश मन्त्र

अस्य मन्त्रस्य भार्गव ऋषिः । अनुष्टुप् छंदः । विघ्नेशो देवता । वं बीजं । यं शक्तिः ओं कीलकं ॥ ओं रायस्पोषस्य, ददिता, निधिदो रत्न-

धातुमान् । रक्षोहणो, वलगहनो, वक्रतुंडाय हुं ॥ इति संख्याक्रमेण न्यासः ।
ध्यानं पूर्ववत् ॥

### उच्छिष्ट गणपति नवार्ण मन्त्रः

अस्य मंत्रस्य कंकोल ऋषिः विराट्छंदः । उच्छिष्ट गणपति देवता ।
ओं हस्ति पिशाचि लिखे स्वाहा ॥ 1, 2, 3 कनिष्ठका । 1, 2, 3, 4 करतल
एवं हृदयादि न्यासं ॥ ध्यानं :—चतुर्भुजं रक्ततनुं त्रिनेत्रं पाशांकुशौ मोदक
पात्रदंतौ । करैर्दधानं

(०)

## वक्रतुंडगणेशयन्त्रम्




**श्री गुरुभ्यो नमः**

**श्रीवक्रतुण्डगणपति आवरणदेवता**

प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतत् आवरण पूजां आरभेत् ।

मं मण्डूकादि कल्पान्त पीठदेवताभ्यो नमः, इति गणेश मण्डले सर्वतो भद्रमण्डले वा अर्चयेत् । ततः नवपीठशक्ती अर्चयेत् ।

तद्यथा पूर्वादिक्रमेण ओं तीव्रायै नमः ओं चालिन्यै नमः ओं नन्दायै नमः। ओं भोगदायै नमः। ओं कामरूपिण्यै नमः। ओं उग्रायै नमः। ओं तेजोवत्यै नमः। ओं शक्त्यै नमः मध्ये ओं विघ्ननाशिन्यै नमः इति ओं ह्रीं सर्व शक्ति कमलासनायै नमः इति पुष्पाद्यासनम् दत्वा पीठमध्ये त्वद्विक्रतं यन्त्रम् प्रतिमां वा संस्थाप्य प्राणप्रतिष्ठां कृत्वा मूलेन पाद्यादिपुष्पान्तैः उपचारैः संपूज्य देवस्य आज्ञां गृहीत्वा आवरणपूजां कुर्यात् ॥

ओं संविन्मयः परो देव त्वं परांरुत रसप्रियः।

अनुज्ञां देहि देवेश परिवारार्चनाय मे ॥ इति पुष्पाञ्जलिं कुर्यात् वक्ष्यमाणावरणपूजां सर्वत्र नामान्ते श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत्।

प्रथमावरणम्। षट्कोण केसरेषु षडङ्गानि पूजयेत्। आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च।

1) ओं वं नमः हृदयाय नमः
2) ,, क्र नमः शिरसे स्वहा
3) ,, तं नमः शिखायै वषट्
4) ,, ज्ञं नमः कवचाय हुं
5) ,, भं नमः नेत्रत्रयाय वौषट्
6) ,, हुं नमः अस्त्राय फट्

पुष्पाञ्जलिं आदाय अभीष्ट – प्रथमावरणार्चनं इति विषेषार्घ्यबिन्दुन्यासः पूजितास्तर्पितास्सन्तु इति समर्पयेत्।

द्वितीयावरणं – ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य दक्षहस्ते तर्जन्यंगुष्ठाभ्यां गंधाक्षतपुष्पाणि गृहीत्वा प्राचीक्रमेण अष्टसु दिक्षु।

7) ओं विद्यायै नमः
8) ओं विधात्र्यै नमः
9) ओं भोगदायै नमः
10) ओं विघ्नघातिन्यै नमः
11) ओं निधिप्रदीपायै नमः
12) ओं पापघ्न्यै नमः
13) ओं पुण्यायै नमः
14) ,, शशिप्रभायै नमः

ततः पुष्पाञ्जलिं गृहीत्वा मूलमुच्चार्य अभीष्टसिद्धिं ...

## द्वितीयावरणार्चनम्

इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् । इति द्वितीयावरणम् । ततो दलाग्रेषु—

15) ओं वक्रतुंडाय नमः
16) „ एकद्रंष्ट्राय नमः
17) „ महोदराय नमः
18) „ हस्तिमुखाय नमः
19) „ लंबोदराय नमः
20) „ विकटाय नमः
21) „ विघ्नराजाय नमः
22) „ धूम्रवर्णाय नमः इत्यष्टौ पूजयेत् ।

ततः पुष्पाञ्जलिं गृहीत्वा मूलमुच्चार्य अभीष्टसिद्धि ...

## तृतीयावरणार्चनम्

इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः संतु इति तृतीयावरणम् ततो भूपरि पूर्वादिक्रमेण ।

23) ओं लं इंद्राय नमः
24) „ रं अग्नयेनमः
25) „ मं यमाय नमः
26) „ क्षं निर्ऋतये नमः
27) „ वं वरुणाय नमः
28) „ यं वायवे नमः
29) „ कुं कुबेराय नमः
30) „ हं ईशानाय नमः
31) „ पूर्वेशानयोर्मध्ये ओं आं ब्रह्मणे नमः
32) „ वरुणनैर्ऋतयोर्मध्ये ओं ह्रीं अनंताय नमः

## चतुर्थावरणम्

इति दशदिक्पालान् पूजयित्वा पुष्पाञ्जलिं च दद्यात् ।
अभीष्टसिद्धिं मे देहि—
इति चतुर्थावरणं ततः इन्द्रादि समीपे ।

33) ओं वं वज्राय नमः
34) ,, शं शक्तये नमः
35) ,, दं दंडाय नमः
36) ,, खं खड्गाय नमः
37) ,, पां पाशाय नमः
38) ,, अं अंकूशाय नमः
39) ,, गं गदायै नमः
40) ,, त्रिं त्रिशूलाय नमः
41) ,, पं पद्माय नमः
42) ,, चं चक्राय नमः

इति वज्राद्यस्त्राणि पूजयेत्–इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं षड्लक्षजपं अष्टद्रव्यैर्दशांशतो होमः तत्तत्–दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कारयेत् । एवं कृतो मन्त्रः सिद्धो भवति सिद्धे मन्त्रे मन्त्री प्रयोगान् साधयेत् ।

## उच्छिष्ठगणपतिनवार्णयन्त्रम्



प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतत् आवरण पूजां आरभेत् ।

मं मण्डूकादि कल्पान्तान्त पीठदेवताभ्यो नमः इति गणेश मण्डले सर्वतो भद्रमण्डले वा अर्चयेत् । ततः नव पीठ शक्तिन् अर्चयेत् ।

तद्यथा पूर्वादि क्रमेण ओं तीव्रायै नमः ओं चालिन्यै नमः ओं नन्दायै नमः ओं भोगदायै नमः ओं कामरूपिण्यै नमः ओं उग्रायै नमः ओं तेजोवत्यै नमः ओं सत्यायै नमः मध्ये ओं विघ्ननाशिन्यै नमः इति ओं ह्रीं सर्वशक्ति कमलासनायै नमः इति पुष्पाद्यासनम् दत्वा पीठमध्ये शुद्धिकृतं यन्त्रम् प्रतिमां वा संस्थाप्य प्राणप्रतिष्ठां कृत्वा मूलेन पाद्यादिपुष्पान्तैः उपचारैः संपूज्य । देवस्य आज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

औं संविन्मयः परो देव त्वं पराम्रत रसप्रियः ।
अनुज्ञां देहि देवेश परिवारार्चनाय मे ॥ इति पुष्पाञ्जलिं कुर्यात्।

वक्ष्यमाणावरण पूजां सर्वत्र नामान्ते श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत् ।

अग्निकोणे –

1) ओं हस्ति हृदयाय नमः
2) नैरृत्ये ओं गीं पिशाचिशिरसे स्वाहा
3) वायव्ये ओं गूं लिखे शिखायै वषट्
4) ऐशान्ये ओं अ स्वाहा कवचाय हुं
मध्ये 5) ओं गौं हस्तिपिशाचिलिखे स्वाहा नेत्रत्रयाय वौषट्
6) दिक्षु ओं गः हस्तिपिशाचिलिखे स्वाहा । अस्त्राय फट् इति पूजयेत् । ततः पुष्पांजलिमादाय मूलं पठित्वा । अभीष्टसिद्धिं मे ...

## प्रथमावरणार्चनम्

इति पुष्पाञ्जलिं दत्वा विशेषार्घ्यबिन्दुं निक्षिप्य पूजितास्तर्पिता संतु इति वदेत् । इति प्रथमावरणार्चनम् ।

ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य दक्षहस्ते तर्जन्यगुष्ठाभ्यां गन्धाक्षतपुष्पाणि गृहीत्वा प्राच्यादिक्रमेण अष्टसु दिक्षु ।

प्राच्याम् 7) ओं ब्राह्म्यै नमः
आग्नेय्याम् 8) ओं महेश्वर्यै नमः
दक्षिणे 9) „ कौमार्यै नमः
नैरृते 10) „ वैष्णव्यै नमः
पश्चिमे 11) „ वाराह्यै नमः
वायव्ये 12) ओं इन्द्राण्यै नमः
उत्तरे 13) „ चामुण्डायै नमः
ऐशान्ये 14) „ महालक्ष्म्यै नमः इत्यष्टौ शक्तीः पूजयेत् ततः पुष्पांजलिमादाय मूलं पठित्वा अभीष्टसिद्धिं मे देहि इति द्वितीयावरणार्चनम्। इत्युक्त्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् इति द्वितीयावरणम्।

ततः अष्टदलाद्बहिः चतुरस्राभ्यन्तरे।

प्राच्यां 15 ओं वक्रतुण्डाय नमः
आग्नेय्याम् 16 ओं एकदंष्ट्राय नमः
दक्षिणे 17) „ लंबोदराय नमः
नैर्ऋत्यां 18) „ विकटाय नमः
पश्चिमे 19) „ धूम्रवर्णाय नमः
वायव्ये 20) „ विघ्नराजाय नमः
उत्तरे 21) „ गजाननाय नमः
ऐशान्ये 22) „ विनायकाय नमः
प्राचीशानयोर्मध्ये 23) „ गणपतये नमः
पश्चिमनैर्ऋतयोर्मध्ये 24) „ हस्तिदंताय नमः इति पूजयेत्।

ततः पुष्पांजलिमादाय मूलं पठित्वा अभीष्टसिद्धिं तृतीयावरणार्चनम् इत्युक्त्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति भवेत्। इति तृतीयावरणम्।

भूपुराद्बहिः पूर्वादिक्रमेण

प्राच्यां 25 ओं लं इन्द्राय नमः
आग्नेय्याम् 26) ओं रं अग्नये नमः
दक्षिणे 27) ओं यं यमाय नमः
नैर्ऋत्यां 28) „ क्षं निर्ऋतये नमः
पश्चिमे 29) „ वं वरुणाय नमः

वायव्ये 30) ओं मं वायवे नमः

उत्तरे 31) „ कुं कुबेराय नमः

ऐशान्ये 32) „ हं ईशानाय नमः

इंद्रेशानयोर्मध्ये 33) „ आं ब्रह्मणे नमः

वरुणनैरृतयोर्मध्ये 34) „ ह्रीं अनंताय नमः

इति दशदिक्पालान् संपूज्य पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं चतुर्थावरणार्चनम् । इत्युक्त्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् इति चतुर्थावरणम् । ततः पूर्वादिक्रमेण तत्तत्समीपे

ओं वं वज्राय नमः

ओं शं शक्त्यै नमः

„ दं दण्डाय „

„ खं खड्गाय „

„ पां पाशाय „

„ अं अंकुशाय „

„ गं गदायै „

„ त्रिं त्रिशूलाय „

„ पं पद्माय „

„ चं चक्राय „

इत्यस्त्राणि पूजयेत् । ततः पुष्पाञ्जलिं गृहीत्वा मूलमुच्चार्य अभीष्टसिद्धिं मे देहि पंचमावरणार्चनम् ।

इत्युक्त्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य पिशितं वा फलं मोदकम् वा गुडपायसं बलिं दद्यात् । तत्र मंत्रः अस्य पुरश्चरणमेकलक्षजपः । तद्दशांशतस्तिलहोमः तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात् । एवं कृते मंत्रः सिद्धो भवति । एवं सिद्धे मंत्रे, मंत्री प्रयोगान् साधयेत् । तथा च– लक्षमेकं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः ।

# शक्तिविनायकयन्त्रम्



प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतत् आवरण पूजां चारभेत् ।

मं मण्डूकादि कल्पात्रान्त पीठदेवताभ्यो नमः "इति" "—श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत् ।

ततः पुष्पांजलिमादाय मूलमुच्चार्य । अभीष्टसिद्धिं मे देहि विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् इति प्रथमावरणम्

**प्रथमावरणार्चनम्**

षट्कोणकेसरेषु आग्नेय्यादिचतुर्षु दिक्षु मध्ये दिक्षु च ।

1) ओं ग्रां हृदयाय नमः
2) ,, ग्रीं शिरसे स्वाहा
3) ,, ग्रूं शिखायै वषट्
4) ,, ग्रैं कवचाय हुं
5) ,, ग्रौं नेत्रत्रयाय वौषट्
6) ,, ग्रः अस्त्राय फट् इति षडंगानि पूजयेत् ।

ततोऽष्टदले पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य दक्षहस्ते तर्जन्यगुंष्ठाभ्यां गंधाक्षतपुष्पाणि गृहीत्वा प्राचीक्रमेण । अष्टसु दिक्षु ।

7) ओं वक्रतुंडाय नमः
8) ,, एकदंष्ट्राय नमः
9) ,, महोदराय ,,
10) ,, हस्तिमुखाय ,,
11) ,, लम्बोदराय ,,
12) ,, विकटाय ,,
13) ,, विघ्नराजाय ,,
14) ,, धूम्रवर्णाय ,, इत्यष्टौ पूजयेत् ।

## द्वितीयावरणार्चनम्

ततः पुष्पाञ्जलिं दत्वाष्टदलाग्रेषु प्राचीक्रमेण

15) ओं ब्राह्म्यै नमः
16) ,, माहेश्वर्यै ,,
17) ,, कौमार्यै ,,
18) ,, वैष्णव्यै ,,
19) ,, वाराह्यै ,,
20) ,, इन्द्राण्यै ,,
21) ,, चामुण्डायै ,,
22) ,, महालक्ष्म्यै ,, इत्यष्टौ पूजयेत्

ततः पुष्पांजलिं दत्वा भूपुरे पूर्वादिक्रमेण इन्द्रदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् अभीष्टसिद्धिं मे देहि इति द्वितीयावरणार्चनम् ।

## तृतीयावरणार्चनम्

23) ओं लं इंद्राय नमः
24) ,, रं अग्नये ,,
25) ,, यं यमाय ,,
26) ,, क्षं निर्ऋतये ,,
27) ,, वं वरुणाय ,,
28) ,, यं वायवे ,,
29) ,, कुं कुबेराय ,,
30) ,, हं ईशानाय ,,
31) ,, पूर्वेशानयोर्मध्ये ओं आं ब्रह्मणे नमः
32) वरुणनैर्ऋतयोर्मध्ये ओं ह्रीं अनंताय नमः

इनि दशदिक्पासान् पूजयित्वा पुष्पांजलिं च दद्यात् अभीष्ट सिद्धि मे देहि इति तृतीयावरणार्चनम् ।

## चतुर्थावरणार्चनम्

| | | | | |
|---|---|---|---|---|
| 33) | ओं | वं | वज्राय | नम: |
| 34) | ,, | शं | शक्तये | ,, |
| 35) | ,, | दं | दंडाय | ,, |
| 36) | ,, | खं | खंड्गाय | ,, |
| 37) | ,, | पां | पाशाय | ,, |
| 38) | ,, | अं | अंकुशाय | ,, |
| 39) | ,, | गं | गदायै | ,, |
| 40) | ,, | त्रिं | त्रिशूलाय | ,, |
| 41) | ,, | पं | पद्माय | ,, |
| 42) | ,, | चं | चक्राय | ,, |

इति वज्राद्यस्त्राणि पूजयेत् इत्यावरणपूजां कृत्वा धूपादिनमस्कारात संपूज्य जपं कुर्यात्। अस्य पुरश्चरणंचतुर्लक्षजप:। अपूपैदशांशतो होम: मध्वक्तै-दशांशतस्तर्पणं तद्दशांशेन मार्जनं ब्राह्मण भोजनं च कुर्यात्। एवंकृतो मन्त्र: सिद्धो भवति :

# लक्ष्मीविनायकयन्त्रम्



प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतत् आवरण पूजां आरभेत् ।

मं मंडूकादि कल्पान्तान्त पीठदेवताभ्यो नमः इति श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत् ।

1) ओं श्रां गां हृदयाय नमः
2) " श्रीं गीं शिरसे स्वाहा
3) " श्रूं गूं शिखायै वषट्
4) " श्रैं गैं कवचाय हुं
5) " श्रौं गौं नेत्रत्रयाय वौषट्
6) " श्रः गः अस्त्राय फट् इति षडंगानि पूजयेत् ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घाद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् ।

देवदक्षिणपार्श्वे

7) ओं शंखाय नमः

8) देवतावामे ओं पद्मनिधये नमः इति पूजयेत् । ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राची तदनुसारेण अन्या दिशः प्रकल्प्य दक्षहस्ते तर्जन्यंगुष्ठाभ्यां गन्धाक्षतपुष्पाणि गृहीत्वा प्राचीक्रमेण अष्टसुदिक्षु ।

9) ओं बलायै नमः

10) ,, विमलायै नमः

11) ,, कमलायै नमः

12) ,,वनमालिन्यै नमः

13) ,, विभीषिकायै नमः

14) ,, मालिकायै नमः

15) ,, शांकर्यै नमः

16) ,, वसुबालिकायै नमः इत्यष्टौ शक्तिः पूजयेत् अभीष्टसिद्धि मे देहि —— इति द्वितीयावरणार्चनम् इति पठित्वा पुष्पांजलि च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् इति द्वितीयावरणम् ।

भूपरे इन्द्रादिदशदिक्पालान् वज्रायुधानि च पूजयेत् । इत्यावरण पूजां कृत्वा धूपादिनमस्कारांतां संपूज्य जपं कुर्यात् ।

| | | | | |
|---|---|---|---|---|
| 17) | ओं | लं | इंद्राय नमः | |
| 18) | ,, | रं | अग्नये नमः | |
| 19) | ,, | यं | यमाय नमः | |
| 20) | ,, | क्षं | निर्ऋतये | नमः |
| 21) | ,, | वं | वरुणाय | ,, |
| 22) | ,, | यं | वायवे | ,, |
| 23) | ,, | कुं | कुबेराय | ,, |
| 24) | ,, | हं | ईशानाय | ,, |

25) पूर्वेशानयोर्मध्ये ओं आं ब्रह्मणे नमः

26) वरुणनैरुतयोर्मध्ये ओं ह्रीं अनंताय नमः इति दशदिक्पालान् पूजयित्वा पुष्पांजलिं च दद्यात् अभीष्टसिद्धिं मे देहि इति तृतीयावरणार्चनम्

| | | | |
|---|---|---|---|
| 27) | ओं | वं | वज्राय नमः |
| 28) | ,, | शं | शक्तये नमः |

| | | | |
|---|---|---|---|
| 29) | ओं | दं | दंडाय नमः |
| 30) | " | खं | खड्गाय नमः |
| 31) | " | पां | पाशाय नमः |
| 32) | " | अं | अंकुशाह नमः |
| 33) | " | गं | गदायै नमः |
| 34) | " | त्रिं | त्रिशूलाय नमः |
| 35) | " | पं | पद्मायनमः |
| 36) | " | चं | चक्राय नमः |

इति वज्राद्यस्त्राणि पूजयेत् इत्यावरणपूजां कृत्वा धूपादिनमस्कारांनं सपूज्य जपं कुर्यात् । अस्य पुरश्चरणं चतुर्लक्षजपः । विल्वसमिद्भिर्दशांशनो होमः तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात् एवंकृतो मंत्रः सिद्धो भवति । सिद्धे चैतमंत्रे मंत्री प्रयोगान् साधरेत् ।

---

# त्रैलोक्यमोहनकरगणेशयन्त्रम्




प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत् ।

मं मण्डूकादि कल्पान्तान्त पीठदेवताभ्यो नमः इति गणेश मण्डले सर्वतो भद्रमण्डले वा अर्चयेत् । ततः नव पीठ शक्तीः अर्चयेत् ।

ततः श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत् ।

### प्रथमावरणार्चनम्

षट्कोण केशरेषु षड्डंगानि पूजयत् ।

आग्नेय्यादिचतुर्षु दिक्षु मध्ये दिक्ष् च

ओं वक्रतुंडैकदंष्ट्राय क्लीं ह्रीं श्रीं वां हृदयाय नमः

" गणपतिये शिरसे स्वाहा

" वरवरद शिखायै वषट्

" सर्वंजन कवचाय हुं

" मे वशमानाय नेत्रत्रयाय वौषट्

" " स्वाहा अस्त्राय फट् इति षडंगानि पूजयेत् ॥

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य । अभीस्टसिद्धि मे देहि... प्रथमावरणार्चनम् इति पठित्वा पुष्पाञ्जलिं च दत्वा विशेषार्घ्यद्वि दं निक्षिप्य पूजितास्तर्पिता संतु इति वदेत् प्रथमावरणम् । ततोऽष्टदले पूज्य पूजकयोरंतराले प्राचीं तदनुसारेण अन्याः दिशः प्रकल्प्य दक्षहस्ते तर्जन्यंगुष्ठाभ्यां गन्धाक्षत पुष्पाणि गृहीत्वा प्राचीक्रमेण अष्टसुदिक्षु।

ओंः वामाय नमः

" ज्येष्ठायै "

" रौद्र्यै "

" काल्यै "

" कलपदादिकायै "

" विकारिण्यै "

" बलायै "

" प्रमथिन्यै "

देवस्याग्ने " सर्वभूतदमन्यै "

" मनोन्मन्यै "

चतुर्षु दिक्षु

ओं प्रमोदाय नमः

" सुमुखाय "

" दुर्मुखाय "

" विघ्ननाशाय " इति पूजयेत् ।

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य। अभीष्टसिद्धिं मे देहि -- द्वितीयावरणार्चनम्। इति पठित्वा

पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत्। इति द्वितीयावरणम्। ततोऽष्टदलाग्रेषु।

| | | | |
|---|---|---|---|
| ओं | आं | ब्राह्म्यै | नमः |
| „ | ईं | माहेश्वर्यै | „ |
| „ | ऊं | कौमार्यै | „ |
| „ | ॠं | वैष्णव्यै | „ |
| „ | ॡं | वाराह्यै | „ |
| „ | ऐं | इन्द्राय्यै | „ |
| „ | औं | चामुण्डायै | „ |
| „ | अः | महालक्ष्म्यै | „ |

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य। अभीष्टसिद्धिं मे देहि शरणागतवत्सल ——तृतीयावरणार्चनम् इति पठित्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत्। इति तृतीयावरणार्चनम्।

ततः भूपरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् अभीष्टसिद्धिं मे देहि——तुभ्यं अस्य पुरश्चरणं चतुर्लक्षजपः। अष्टद्रव्यैर्दशांशतो होमः एवंकृतो मंत्रः सिद्धो भवति। सिद्धे मंत्रे मंत्री प्रयोगान् साधयेत्।

# ह्रिद्रागणेशयन्त्रम्



प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत् ।

मं मण्डूकादि कल्पान्तान्त पीठदेवताभ्यो नमः इति गणेशमण्डले सर्वतो भद्रमण्डलेवा अर्चयेत् । ततः नवपीठ शक्तीन् अर्चयेत् । तद्यथा पूर्वादिक्रमेण इति पुष्पाञ्जलिं कुर्यात् । वक्ष्यमाण इति वदेत् ।

प्रथमावरणं । षट्कोणकेसरेषु आग्नेय्यादिषु चतसृषु दिक्षु मध्ये दिक्षु च ।

ओं हुं मं ग्लौं हृदयाय नमः

,, हरिद्रागणपतये शिरसे स्वाहा

,, वरवरद शिखायै वषट्

,, सर्वजनहृदयं कवचाय हुं

,, स्तंभयस्तंभय नेत्रत्रयाय वौषट्

,, स्वाहा अस्त्राय फट् । इति षडंगानि पूजयेत्

ततः पुष्पांञ्जलिमादाय मूलमुच्चार्य– अभीष्टसिद्धिं मे देहि शरणागतवत्सल प्रथमावरणार्चनम् । इति पठित्वा पुष्पाञ्जलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् ॥

ततोऽष्टदलेषु पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य दक्षहस्ते तर्जन्यंगुष्ठाभ्यां गन्धाक्षतपुष्पाणि गृहीत्वा प्राचीक्रमेण अष्टसु दिक्षु ।

ओं वामायै नमः
" ज्येष्ठायै "
" रौद्रयै "
" काल्यै "
" कलपदादिकाय "
" विकारिण्यै "
" बलायै "
" प्रमथिन्यै " इत्यष्टौ पूजयेत् ।
देवस्याग्रे " सर्वंभूतदमन्यै "
" मनोन्मन्यै " इति पूजयेत्

ततः चतसृषु दिक्षु प्राचीक्रमेण

ओं प्रमोदाय नमः
" सुमुखाय "
" दुर्मुखाय "
" विघ्ननाशाय " इति पूजयेत् । ततः पुष्पाञ्दलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि शरणागतवत्सल भक्त्या समर्पये तुभ्यं द्वितीया वरणार्चनम् । इति पठित्वा पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्ठसिद्धि मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् । इति पठित्वा पुष्पाञ्जलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत् । इति द्वितीयावरणार्चनम् ततोऽष्टदलेषु ।

" आं ब्रह्म्यै नमः
" इं माहेश्वर्यै "
" ऊं कौमार्यै "
" ॠं वैष्णव्यै "
" लॄं वराह्यै "
" एं इन्द्रण्यै "
" ओं चामुण्डायै "
" अः महालक्ष्म्यै " इत्यष्टौ पूजयेत् ।

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्टसिद्धि मे देहि शरणागतवत्सल———तृतीयावरणार्चनम् इति पठित्वा पुष्पाञ्जलिं च दत्वा

विशेषार्घ्यबिन्दुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् । इति तृतीयावरणम् ततः भूपुरे पूर्वादिक्रमेण इन्द्रादिदशादिक्पालान् वज्राद्ययुधानि च संपूजयेत् । इत्यावरणपूजा कृत्वा धूपादिनमस्कारांतां संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं चतुर्लक्षजपः । हरिद्राचूर्णमिश्रिताज्यतंडुलैश्च दशांशतो होमः । ततद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात् । एवं कृते मन्त्रः सिद्धो भवति सिद्धं च मंत्रेमंत्री प्रयोगान् साधयेत् ।

---

## शिवपंचाक्षरीमंत्रप्रयोगावरणयन्त्रम्



प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरण पूजां आरभेत् ।

तद्यथा पीठादौ रचिते सर्वतोभद्रमंडले लिंगतोभद्रमंडले वा मंडूकादि परतत्त्वान्तपीठदेवताभ्यो नमः इति पीठदेवता संपूज्य स्वाग्रादिप्रादक्षिण्ये नव पीठशक्तीः पूजयेत् ।

तद्यथा ओं वामायै नमः

ओं ज्येष्ठायै नमः



ओं रौद्रयै नमः
" काल्यै "
" बलविकरिण्यै "
" बलप्रथिन्यै "
" सर्वभूतमदन्यै "

मध्ये " मनोन्मन्यै " इति पूजयेत् । ततः स्वर्णादि निर्मितं यंत्रम् मूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारा च दत्वा स्वच्छवस्त्रेण संशोध्य "ओं नमो भगवते सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठात्मने नमः" इति मन्त्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठा च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादि पुष्पान्तैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्यात् । तद्यथा संविन्मयः परो देवः परामृतरसप्रियः अनुज्ञां शिव मे देहि परिवारार्चनाय मे ॥ इत्याज्ञां गृहीत्वा आवरणपूजां कुर्यात्

षट्कोणे ऐशान्याम् ओं ईशानाय नमः
इति सर्वत्र र्वे " तत्पुरुषाय "
" अघोराय "
पश्चिमे " वामदेवाय "
उत्तरे " सद्योजाताय " इति पंचमूर्तीः पूजयेत् ततः पुष्पाञ्जलिं गृहीत्वा ओं अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् । इति पठित्वा पुष्पाञ्जलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् ।

ततः षट्कोणाग्रेषु ऐशान्यां
ओं निवृत्यै नमः
" प्रतिष्ठायै नमः
" विद्यायै नमः
" शान्त्यै नमः
उत्तरे " शांत्यतीतायै नमः

इति कलाः पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम् । ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राची तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण ।

ओं अनंताय नमः
" सूक्ष्माय नमः
" शिवोत्तमाय नमः

„ एकनेत्राय नमः

„ एकरुद्राय नमः

„ त्रिमूर्तये नमः

„ श्रीकुंठाय नमः

„ शिखंडिने नमः इति विघ्नेशान् पूजयित्वा पुष्पांजलिं च दद्यात्। इति तृतीयावरणम्। ततोऽष्टदलाग्रेष्वैन्द्रादिक्रमेण

ओं उमायै नमः

„ चण्डेश्वराय नमः

„ नंदिने नमः

„ महाकालाय नमः

„ गणेशाय नमः

„ वृषभाय नमः

„ भृंगारिट्ये नमः

„ स्कन्दाय नमः इति गणान्पूजयित्वा पुष्पांजलिं च दद्यात् इति गणान्पूजयित्वा पुष्पांजलिं च दद्यात् इति चतुर्थावरणम्। ततो भूपुरे पूर्वादिक्रमेण।

ओं लं इन्द्राय नमः

ओं रं अग्नये नमः

ओं यं यमाय नमः

„ क्षं निर्ऋतये नमः

„ वं वरुणाय नमः

इति इन्द्रादिदशदिक्पालान् पूजयित्वा पुष्पांजलिं च दद्यात्। इति पंचमावरणम्। ततः पूर्वादिक्रमेण इन्द्रादिसमीपे।

ओं वं वज्राय नमः

„ शं शक्तये नमः

„ दं दंडाय नमः

„ खं खड्गाय नमः

„ पां पाशाय नमः

„ अं अंकुशाय नमः

„ गं गदायै नमः

„ त्रि त्रिशूलाय नमः

,, पं पद्माय नमः

,, चं चक्राय नमः इत्यस्त्राणि पूजयित्वा पुष्पांजलिं च दद्यात् ।

इति षष्ठावरणम् ।

इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् अस्य पुरश्चरणं चतुर्विंशतिलक्षात्मकं जपः । जपांते दशांशेन वा चतुर्विंशतिसहस्र मंत्रैः पायस त्रिमधुपलाशेन होमयेत् । तत्तद्दशांशेन तर्पणमार्जने कृत्वा शुद्धान् विप्रांश्च पायसादिना भोजयेत् । एवं कृतो मंत्रः सिद्धोभवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् तथा च तत्त्वलक्षं जपेत्मंत्रं दीक्षितः शैववर्त्मना ।

# अष्टाक्षरशिवमंत्रप्रयोगावरणम्




प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत् ।

मं मण्डूकादि कल्पान्तान्त पीठदेवताभ्यो नमः इति रचिते सर्वतो भद्रमण्डले लिङ्गतोभद्रमण्डले वा अर्चयेत् । तद्यथा पूर्वादिक्रमेण, ततः नवपीठशक्तीः इति वदेत् ।

ओं नं हृदयाय नमः

,, मं शिरसे स्वहा

ओं शिं शिखायै वषट्

,, वां कवचाय हुं

,, मं अस्त्राय फट् इति पंचांगानि पूजयेत्

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि— प्रथमावरणार्चनम् । इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणम् । तद्बाह्ये।

ओं हृल्लेखायै नमः

,, गगनायै नमः

,, रक्तायै नमः

,, कालिकायै नमः

,, महोच्छुष्मायै नमः इति पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम् । ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण ।

ओं वृषभाय नमः

,, क्षेत्रपालाय नमः

,, दुर्गायै नमः

,, कार्तिकेयाय नमः

,, नंदिने नमः

,, विघ्नेशाय नमः

,, श्यामाय नमः

,, सेनाय नमः इति पूजयित्वा पुष्पांजलिं च दद्यात्

इति तृतीयावरणम् ।

ओं ब्राह्म्यै नमः

,, महेश्वर्यै नमः

,, कौमार्यै नमः

,, वैष्णव्यै नमः

,, वाराह्यै नमः

,, इन्द्राण्यै नमः

,, चामुण्डायै नमः

,, महालक्ष्म्यै नमः

इति पूजयित्वा पुष्पाञ्जलिं च दद्यात् चतुर्थावरणम् ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पांजलिं च दद्यात् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं चतुर्दशलक्षं जपेत् । तत्तद्दशांशेन होमतर्पणब्राह्मणभोजनं च कुर्यात् । एवंकृतो मंत्रः सिद्धो भवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

—

## त्र्यक्षरीमृत्युंजययन्त्रम्




प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता पद्धतिप्रकारेण पात्रासाधनानि पूरयित्वा ततः एतदावरण पूजां आरभेत् ।

मं मण्डूकादि कल्पान्तान्त पीठदेवताभ्यो नमः इति सर्वतो भद्रमंडले लिंगतो भद्रमण्डले वा पीठपूजां विधाय पूर्वोक्ते शिवपीठे वामादिनवपीठशक्तीः संपूजयेत् । तद्यथा पूर्वादिक्रमेण इति वदेत् । ———

| | | |
|---|---|---|
| ओं | सां | हृदयाय नमः |
| ” | सीं | शिरसे स्वाहा |
| ” | सूं | शिखायै वषट् |

ॐ सैं कवचाय हुं

„ सौं नेत्रत्रयाय वौषट्

„ सः अस्त्राय फट्

इति षडंगानि पूजयेत् । ततः "पुष्पांजलिमादाय मूलमुच्चार्य" अभीष्टसिद्धिं मे देहि ——प्रथमावरणार्चनम् । इति पठित्वा पुष्पांजलिं च दत्वा विशेषार्घ्यार्द्विंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणं ततो भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पाञ्जलिं दद्यात् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं लक्षत्रयं जपः । पुरश्चरणदशांशेन दुग्धाज्यलोलितैरमृताखण्डैर्होमः तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात् । एवं कृते मंत्रः सिद्धो भवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

(०)

## त्रयंबकपूजनयंत्रम्




प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतत् आवरण पूजां आरभेत् ।

मं मण्डूकादि कल्पान्तान्त पीठदेवताभ्यो नमः इति सर्वतो भद्रमण्डले लिंगतोभद्रमण्डले वा मंडूकादिपरतत्त्वांतपीठदेवताः संपूज्य नवपीठशक्तीः पूजयेत्

पूर्वादिक्रमेण ओं वामायै नमः, ओं ज्येष्ठायै नमः, ओं रौद्र्यै नमः ओं काल्यै नमः ओं कलविकरिण्यै नमः, ओं बलविकरिण्यै नमः, ओं बल-प्रमथिन्यै नमः, ओं सर्वभूतदमन्यै नमः, । मध्ये ओं मनोन्मन्यै नमः इति पूजयेत् । देव आज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

वक्ष्यमाण ावरणपूजां सर्वत्र नामान्ते श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत् ।

ओं त्र्यम्बकं हृदयाय नमः
" यजामहे शिरसे स्वाहा
" सुगंधिं पुष्टिवर्धनम् शिखायै वषट्
" ऊर्वारुकमिव बन्धनात् कवचाय हुं
" मृत्योर्मुक्षीय नेत्रत्रयाय वौषट्

मामृतात् अस्त्राय फट् इति षडंगानि पूजयेत् ततः पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् । ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण ।

ओं अर्कमूर्तये नमः
" इन्दुमूर्तये नमः
" वसुधामूर्तये नमः
" तोयमूर्तये नमः
" वह्निमूर्तये नमः
" वायुमूर्तये नमः
" आकाशमूर्तये नमः
" यजमानमूर्तये नमः

इत्यष्टौ मूर्तीः पूजयित्वा पुष्पांजलिं च दद्यात् । इति द्वितीयावरणम् तद्बह्येऽष्टदले प्राचीक्रमेण ।

ओं रमायै नमः
" राकायै नमः
" प्रभायै नमः
" ज्योत्स्नायै नमः
" पूर्णायै नमः
" उषायै नमः

ओं पूरण्यै नमः

,, सुधायै नमः इत्यष्टौ शक्तीः पूजयित्वा पुष्पांजलिं च दद्यात् ।
इति तृतीयावरणम् ततोऽष्टदले प्राचीक्रमेण ।

ओं विश्वायै नमः

,, विद्यायै नमः

,, सितायै नमः

,, प्रह्वायै नमः

,, सारायै नमः

,, संध्यायै नमः

,, शिवायै नमः

,, निशायै नमः इत्यष्टौ शक्तीः पूजयित्वा पुष्पांजलिं च दद्यात्
इति चतुर्थावरणम् ।

तद्बाह्येऽष्टदलेषु प्राचीक्रमेण

ओं आर्य्यायै नमः

,, प्रज्ञायै नमः

,, प्रभायै नमः

,, मेधायै नमः

,, शान्त्यै नमः

,, कान्त्यै नमः

,, धृत्यै नमः

,, मृत्यै नमः इत्यष्टौ शक्तीः पूजयित्वा पुष्पांजलिं च दद्यात् । इति
पंचमावरणम् । तद्बाह्येऽष्टदले प्राचीक्रमेण ।

ओं धारायै नमः

,, मायायै नमः

,, अवन्यै नमः

,, पद्मायै नमः

,, शांतायै नमः

,, मोघायै नमः

,, जयायै नमः

,, अमलायै नमः इत्यष्टौ शक्तीः पूजयित्वा पुष्पांजलिं च
दद्यात् । इति षष्ठावरणम् ।

ततो भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पांजलिं च दद्यात्। इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जप कुर्यात्। अस्य पुरश्चरणमेकलक्षजपः। दशद्रव्यैर्दशांशतो होमः। तत्त-द्दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात्। एवंकृतो मंत्रः सिद्धो भवति। सिद्धे मंत्रः मंत्री प्रयोगान् साधयेत्।

—

# महामृत्युंजयपूजनयन्त्रम्

प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतपावरण पूजां आरभेत्।

मं मंडूकादि कल्पात्रान्त पीठदेवताभ्यो नमः [इति सर्वतो भद्रमण्डले लिंगतोभद्रमंडले वा ओं मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति पीठदेवताः संपूज्य तत्र पीठशक्तीः पूजयेत्। तद्यथा पूर्वादिक्रमेण

ओं वामायै नमः
" ज्येष्ठायै "
" रौद्र्यै "
" काल्यै "
" कलविकरिण्यै नमः
" बलविकरिण्यै नमः
" बलप्रमथिन्यै नमः
" सर्वभूतदमन्यै नमः
मध्ये " मनोन्मन्यै नमः इति पूजयेत् इति आवरण पूजां कुर्यात्।

ओं ईशानाय नमः इति सर्वत्र
" तत्पुरुषाय नमः
" अघोराय नमः
" वामदेवाय नमः
उत्तरे " सद्योजाताय नमः इति पंचमूर्तीः पूजयेत्।

ततः पुष्पाञ्जलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणम्।

ततः पंचकोणाग्रेषु ऐशान्यादिक्रमेण।

ओं निवृत्त्यै नमः
" प्रतिष्टायै "
" विद्यायै "
" शान्त्यै "
" शांत्यतीतायै " इति पूजयित्वा पुष्पांजलिं च दद्यात्

इति द्वितीयावरणम् । ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राची तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण ।

ओं सूर्य्यमूर्तये नमः
" इन्दुमूर्तये "
" क्षितिमूर्तये "
" अग्निमूर्तये "
" पवनमूर्तये "
" आकाशमूर्तये "
" यज्ञमूर्तये " इत्यष्टौ मूर्तीः पूजयित्वा पुष्पांजलिं

च दद्यात् । इति तृतीयावरणम् । तद्बहिरष्टदले प्राचीक्रमेण ।

ओं रमायै नमः
" राकायै "
" प्रभायै "
" ज्योत्स्नायै "
" पूर्णायै "
" पूषायै "
" पुण्यै "
" सुधायै " इति पूजयित्वा पुष्पांजलिं च दद्यात् । इति

चतुर्थावरणम् तद्बहिरष्टदले प्राचीक्रमेण ।

ओं विश्वायै नम
" वंद्यायै नमः
" सितायै नमः

" पद्मायै नमः
" सारायै नमः
" संध्यायै नमः

" शिवायै नमः

" शिवायै नमः

" निशायै नमः इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति पंचमावरणम्। तद्बहिरष्टदले प्राचीक्रमेण

ओं आर्यायै नमः

" प्रज्ञायै नमः

" प्रभायै नमः

" मेधायै नमः

" शांत्यै नमः

" कान्त्यै नमः

" धृत्यै नमः

" मत्यै नमः इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति षष्ठावरणम्। तद्बहिरष्टदले प्राचीक्रमेण।

ओं धरायै नमः

" उमायै नमः

" पावन्यै नमः

" पद्मायै नमः

" शान्तायै नमः

" अमोघायै नमः

" जयायै नमः

" अमलायै नमः इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात्। इति सप्तमावरणम्। तद्बहिरष्टदले प्राचीक्रमेण।

ओं अनंताय नमः

" सूक्ष्मसंज्ञाय नमः

" शिवोत्तमाय नमः

" एकनेत्राय नमः

" एकरुद्राय नमः

" त्रिमूर्तये नमः

" श्रीकंठाय नमः

" शिखंडिने नमः इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति अष्टमावरणम्। तद्बहिरष्टदले उत्तरामारभ्य

ओं उमायै नमः
,, चण्डेश्वराय नमः
,, नंदिने नमः
,, महाकालाय नमः
,, गणेशाय नमः
,, वृषभाय नमः
,, भृंगिरिटये नमः
,, स्कन्दाय नमः

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति नवमावरणम् तद्वहिरष्टदले प्राचीक्रमेण ।

ओं ब्राह्मयै नमः
,, माहेश्वर्यै नमः
,, कौमार्यै नमः
,, वैष्णव्यै नमः
,, वाराह्यै नमः
,, इन्द्राण्यै नमः
,, चामुण्डायै नमः
,, महालक्ष्म्यै नमः

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् । इति दशमावरणम् ।

तद्वाह्ये भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पांजलिं दद्यात् इत्यावरणपूजां कृत्वा धूपदीपादिनमस्कारांतां संपूज्य कृतांजलिः प्रार्थयेत् । ओं मृत्युंजय महारुद्र त्राहि मां शरणागतम् ——— इति संप्रार्थ्य जपं कुर्यात् । अस्य पुरश्चरणमेकलक्षजपः । जपांते दशांशतो दशद्रव्यैर्होम । होमदशांशेन मंत्रांते ओं मृत्युंजयं तर्पयामीत्युक्त्वा दवथमिश्रितजलेन तर्पयेत् । ततस्तर्पणदशांशे मंत्रांते आत्मानमभिषिचामि नमः इति यजमानमूर्धन्यभिषेकः । होमतर्पणाभिषेकाशक्तौ तत्स्थाने तत्तद्विगुणो जपः कार्यः । ततः अभिषेकदशांशतः अष्टोत्तरशतसंख्यातो वा ब्राह्मणभोजनं कुर्यात् । एवं कृते मंत्रःसिद्धो भवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

# पञ्चाक्षरीपूजनयन्त्रम्

प्रथमत: मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवतापद्धति-प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतत आवरपूजां आरभेत् ।

मं मंडूकादि कल्पात्रान्त पीठदेवताभ्यो नम इति लिंगतोभद्रमण्डले वा स्वेस्वेस्थाने पीठपूजां विधाय पूर्वोक्त पीठशक्तीः पूजय ! तद्यथा पूर्वादिक्रमेण ------ इति वदेत् ।

ओं सद्योजाताय नमः
„ वामदेवाय नमः
„ अघोराय नमः
„ तत्पुरुषाय नमः
„ ईशानाय नम इति पंचमूर्तीः पूजयेत् । ततः पुष्पांजलि-मादाय मूलमुच्चार्य ओं अभीष्टसिद्धि मे देहि ---- प्रथमावरणार्चनम् । इति पठित्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिन्दु निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् । ततोऽष्टदले पूज्यपूजकयोरंतराले प्राचीं तदनु-सारेण अन्यादिशः प्रकल्प्य प्राचीक्रमेण ।

ओं नंदिने नमः
„ महाकालाय नमः
„ गणेश्वराय नमः
„ भृंगिरिटये नमः
„ स्कन्दाय नमः
„ उमायै नमः
„ चंडेश्वराय नमः

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम् ततः षोडशदले पूर्वादिक्रमेण ।

ओं अनंताय नमः
„ सूक्ष्माय नमः
„ शिवाय नमः

" एकपादाय नमः
" एकरुद्राय नमः
" त्रिमूर्तये नमः
" श्रीकंठाय नमः
" वामदेवाय नमः
" ज्येष्टाय नमः
" श्रेष्ठाय "
" रुद्राय "
" कालाय "
" कलविकरणाय "
" वलाय "
" बलविकरणाय "
" बलप्रमथनाय "

इति षोडशदेवताः पूदयित्वा पुष्पांजलिं दद्यात् । इति तृतीयावरणम् ततश्चतुर्विंशतिदले पूर्वादिक्रमेण ।

ओं अणिमायै नमः
" महिमायै "
" लघिमायै "
" गरिमायै "
" प्राप्त्यै "
" प्रकाम्यायै "
" इशितायै "
" वशितायै "
" ब्राह्मयै "
" महेश्वर्यै "
" कौमार्यै "
" वैष्णव्यै "
" वाराह्यै "
" इन्द्राण्यै "
" चामुंडायै "
" चंडिकायै "
" असितांगभैरवाय "
" रुद्रभैरवाय "

| | | |
|---|---|---|
| ,, | चंडभैरवाय | ,, |
| ,, | क्रोधभैरवाय | ,, |
| ,, | उन्मत्तभैरवाय | ,, |
| ,, | कालभैरवया | ,, |
| ,, | भीषणभैरवाय | ,, |
| ,, | संहारभैरवाय | ,, |

इति पूजयित्वा पुष्पांजलिं च दद्यात् । इति चतुर्थावरणम् ततो द्वात्रिंशत्पत्रके पूर्वादिक्रमेण ।

| | | |
|---|---|---|
| ओं | भवाय | नमः |
| ,, | शर्वाय | ,, |
| ,, | ईशानाय | ,, |
| ,, | पशुपतये | ,, |
| ,, | रुद्राय | ,, |
| ,, | उग्राय | ,, |
| ,, | भीमाय | ,, |
| ,, | महादेवाय | ,, |
| ,, | आनंदाय | ,, |
| ,, | वासुकये | ,, |
| ,, | तक्षकाय | ,, |
| ,, | कुलीरकाय | ,, |
| ,, | कर्कोटकाय | ,, |
| ,, | शंखपालाय | ,, |
| ,, | कंगलाय | ,, |
| ,, | अश्वतराय | ,, |
| ,, | वैन्याय | ,, |
| ,, | प्रभवे | ,, |
| ,, | हैहयाय | ,, |
| ,, | अर्जुनाय | ,, |
| ,, | शाकुन्तलेयाय | ,, |
| ,, | भरताय | ,, |
| ,, | नलाय | ,, |
| ,, | रामाय | ,, |

| | | |
|---|---|---|
| ,, | हिमवते | ,, |
| ,, | निषधाय | ,, |
| ,, | विंध्याय | ,, |
| ,, | माल्यवते | ,, |
| ,, | पारियात्राय | ,, |
| ,, | मलयाय | ,, |
| ,, | हेमकूटाय | ,, |
| ,, | गंधमादनाय | ,, |

इति पूजयित्वा पुष्पांजलिं च दद्यात् । इति पंचमावरणम् ततः चत्वारिंशद्दले पूर्वादिक्रमेण ।

| | | |
|---|---|---|
| ओं | इन्द्राय | ,, |
| ,, | अग्नये | ,, |
| ,, | यमाय | ,, |
| ,, | निर्ऋतये | ,, |
| ,, | वरुणाय | ,, |
| ,, | वायवे | ,, |
| ,, | कुबेराय | ,, |
| ,, | ईशानाय | ,, |
| ,, | शच्यै | ,, |
| ,, | स्वाहायै | ,, |
| ,, | वाराह्यै | ,, |
| ,, | खड्गिन्यै | ,, |
| ,, | वारुण्यै | ,, |
| ,, | वायव्यै | ,, |
| ,, | कौबेर्यै | ,, |
| ,, | ईशान्यै | ,, |
| ,, | वज्राय | ,, |
| ,, | शक्तये | ,, |
| ,, | दंडाय | ,, |
| ,, | खड्गाय | ,, |
| ,, | पाशाय | ,, |

| | | |
|---|---|---|
| ,, | अंकुशाय | ,, |
| ,, | गदायै | ,, |
| ,, | त्रिशूलाय | ,, |
| ,, | ऐरावताय | ,, |
| ,, | मेषाय | ,, |
| ,, | महिषाय | ,, |
| ,, | प्रेताय | ,, |
| ,, | मकराय | ,, |
| ,, | हरिणाय | ,, |
| ,, | नराय | ,, |
| ,, | वृषभाय | ,, |
| ,, | ऐरावताय | ,, |
| ,, | पुंडरीकाय | ,, |
| ,, | वामनाय | ,, |
| ,, | कुमुदाय | ,, |
| ,, | अजनाय | ,, |
| ,, | पुष्पदन्ताय | ,, |
| ,, | सार्वभौमाय | ,, |
| ,, | सुप्रतीकाय | ,, |

इति पूजयित्वा पुष्पांजलिं च दद्यात् इति षष्ठ वरणम् ततो भूपुरे पूर्वादिक्रमेण पुनः १२६ — १३५ इन्द्रादिदशदिक्पालान् १३६ — १४५ वज्राद्यायुधानि च पूजयेत् ।

ततो भूपुराभ्यन्तरे आग्नेय्याम् ओं विरूपाक्षाय नमः

नैर्ऋते ओं विरूपाय नमः

वायव्याम् ओं पशुपतये नमः

ऐशान्याम् ओं ऊर्ध्वलिंगाय नमः इति पूजयेत् ।

ततो भूपुराद्बहिः पूर्वादिक्रमेण । ओं विप्रवर्णाय श्वेतरूपाय सहस्र-फणिमंडिताय ओं शेषाय नमः

ओं वैश्यवर्णाय नीलरूपाय पंचाशत्फणायोत्तुंगकायाय ओं तक्षकाय नमः

ओं विप्रवर्णाय कुंकुमरूपाय सहस्रफणमंडिताय अनन्ताय नमः

ओं क्षत्रियवर्णाय पीतरूपाय सप्तशतफणमंडितायोत्तुंगकायाय वासुकये नमः

ओं क्षत्रियवर्णाय पीतरूपाय सप्तशतफणमंडिताय शंखपालाय नमः
ओं वैश्यवर्णाय कृष्णरूपाय पंचशतफणमंडितायोन्नुंगकायाय महापद्माय नमः
ओं शूद्रवर्णाय कृष्णरूपाय त्रिंशत्फणमंडिताय कंबलाय नमः
ओं शूद्रवर्णाय श्वेतरूपाय त्रिशत्फणयुक्ताय कर्कोटकाय नमः

इति सप्तमावरणं पूजयित्वा पुष्पाजलिं च दद्यात् । इति सप्तमावरणम् :

एवमावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य बद्धांजलिपूर्वकं प्रार्थयेत् ।

"ओं नमो विरिंचिविष्णुवीशभेदिने परमात्मने ॥

———भवभयभंगकृद्विभो इति रुद्रस्तवेन स्तुत्वा साष्टांगं प्रणम्य जपं कुर्यात् । अस्य पुरश्चरणं दशलक्षजपः अयुतहोमः । तद्दशांशं तर्पणमार्जन-ब्राह्मणभोजनं च कुर्यात् । एवं कृते मंत्रः सिद्धो भवति । सिद्धे मंत्रे मंत्री प्रयोगान् साधयेत् ।

(०)

## दक्षिणामूर्तिपूजनयंत्रम्



प्रथमतः मूलम न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनादि पूरयित्वा ततः एतदावरण पूजां आरभेत् । मं मंडूकादि कल्पान्तान्त पीठदेवताभ्यो नमः इति ध्यात्वा शिवपंचाक्षरोदिते पीठे पीठपूजां विधाय तामेव आवरणपूजां च कृत्वा जपं कुर्यात् ।

अस्य पुरश्चरणमयुतद्वयाधिकं त्रिलक्षं जपः । तथा च अयुतद्वय-संयुक्तं गुणलक्षं जपेन्मनुम् । तद्दशांशं निर्जे शुद्धोर्जुहुयात्क्षीरसंयुतैः । पंचाक्ष-रोदिते पीठे विधानेन प्रपूजयेत् । उपचारैः समुत्पन्नैः पाद्याद्यैः परमेश्वरम् । एवं कृतपुरश्चर्यः सिद्धमन्त्रो भवेत्सुधी । तद्यथा पूर्वादिक्रमेण…इति वदेत् ।

अग्निकोणे ओं आं ओं हृदयाय नमः
नैर्ऋते ओं ईं ओं शिरसे स्वाहा
वायव्ये ,, ऊं ,, शिखायै वौषट्
ऐशान्ये ,, ऐं ,, कवचाय हुं
देवतापूर्वे ,, औं ,, नेत्रत्रयाय वौषट्
देवपश्चिमे ,, अः ,, अस्त्राय फट्

इति षडंगानि पूजयेत् । ततोऽष्टदले पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य प्राचीक्रमेण ।

| | | |
|---|---|---|
| ओं | सरस्वत्यै | नमः |
| ,, | ब्रह्मणे | ,, |
| ,, | सनकाय | ,, |
| ,, | सनन्दनाय | ,, |
| ,, | सनत्कुमाराय | ,, |
| ,, | शुकाय | ,, |
| ,, | व्यासाय | ,, |
| ,, | गणेशाय | ,, |
| ओं | सिद्धाय | ,, |
| ,, | गन्धर्वाय | नमः |
| ,, | योगींद्राय | ,, |
| ,, | विद्याधराय | ,, |

इति पूजयेत् । ततो भूपरे इन्द्रादिदशदिक्पालान् तद्बाह्ये वज्राद्या-युधानि च पूजयेत् ।

इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्यजपं कुर्यात् । अस्य पुरश्चरणं लक्षात्मको जपः ।

तथा च लक्षमेकं जपेन्मंत्रं ब्रह्मचारिव्रते स्थितः ।

जुहुयात्सघृतैः पद्मैर्दशांशं संस्कृतेऽनले ॥ इत्थं पूजादिभिः सिद्धे मंत्रेऽस्मिन्साधकोत्तमः वल्लभो जायते वाचां वाचस्पतिरिवापरः ।

—

# अष्टाक्षरविष्णुपूजनयंत्रम्

प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरण पूजां आरभेत् ।

इति ध्यात्वा सर्वतोभद्रमंडले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति पठित्वा पुष्पांजलिं च दद्यात् । इत्याज्ञां गृहीत्वा आवरणपूजामारभेत् तद्यथा षट्कोणकेसरेषु अग्निकोणे

| | | |
|---|---|---|
| | ओं | क्रुधोल्काय नमः |
| नैर्ऋत्ये | ” | महोल्काय शिरसे स्वाहा |
| वायव्ये | ” | वीरोल्काय शिखायै वषट् |
| ऐशान्ये | ” | द्वयुल्काय कवचाय हुं |
| देवपश्चिमे | ” | सहस्रोल्कायास्त्राय फट् |

इति पंचांगानि पूजयेत् । ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्वा समर्पये तुभ्यं प्रथमावरणार्चनम् इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् ततोऽष्टदलमूले पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य पूर्वादिक्रमेण ।

| | | |
|---|---|---|
| ओं | ओं | नमः |
| ” | नं | ” |
| ” | मों | ” |
| ” | नां | ” |
| ” | रां | ” |
| ” | यं | ” |
| ” | णां | ” |
| ” | मं | ” |

इति मंत्रवर्णान् पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम् ततोऽष्टदलमध्येषु पूर्वे

ओं वासुदेवाय नमः इति सर्वत्र

दक्षिणे ओं संकर्षणाय नमः

पश्चिमे ओं प्रद्युम्नाय नमः

उत्तरे „ अनिरुद्धाय नमः

अग्निकोणे ओं शान्त्यै नमः

नैर्ऋते ओं श्रियै „

वायव्ये ओं सरस्वत्यै „

ऐशान्ये „ रत्यै „

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति तृतीयावरणम् ततोऽष्ट-दलाग्रेषु ।

| | | | |
|---|---|---|---|
| पूर्वे | ओं | चक्राय | नमः |
| दक्षिणे | „ | शंखाय | „ |
| पश्चिमे | „ | गदायै | „ |
| उत्तरे | „ | पद्माय | „ |
| अग्निकोणे | „ | कौस्तुभाय | „ |
| नैर्ऋते | „ | मुसलाय | „ |
| वायव्ये | „ | खड्गाय | „ |
| ऐशान्ये | „ | वनमालायै | „ |

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् । इति चतुर्थावरणम् भूपुराभ्यंतरे पूर्वे

| | | | |
|---|---|---|---|
| | ओं | गरुडाय | नमः |
| दक्षिणे | „ | शंखनिधये | „ |
| पश्चिमे | „ | ध्वजाय | „ |
| उत्तरे | „ | पद्मनिधये | „ |
| अग्निकोणे | „ | विघ्नाय | „ |
| नैर्ऋते | „ | आर्यायै | „ |
| वायव्ये | „ | दुर्गायै | „ |
| ऐशान्ये | „ | सेनान्यै | „ |

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् । इति पंचमावरणम् । ततो भूपुरे पूर्वादिक्रमेण ।

| | | | |
|---|---|---|---|
| ओं | | इन्द्राय | नमः |
| ,, | | अग्नये | ,, |
| ,, | मं | यमाय | ,, |
| ,, | क्षं | निर्ऋतये | ,, |
| ,, | वं | वरुणाय | ,, |
| ,, | मं | वायवे | ,, |
| ,, | कुं | कुबेराय | ,, |
| ,, | हं | ईशानाय | ,, |

इन्द्रेशानयोर्मध्ये ओं ब्रह्मणे नमः

वरुणनिर्ऋत्योर्मध्ये ,, ह्रीं अनंताय नमः

इति दशदिक्पालान् पूजयित्वा पुष्पांजलिं च दद्यात् तद्बाह्ये पूर्वादि-क्रमेण।

| | | | |
|---|---|---|---|
| ओं | वं | वज्राय | नमः |
| ,, | शं | शक्तये | ,, |
| ,, | दं | दण्डाय | ,, |
| ,, | खं | खड्गाय | ,, |
| ,, | पं | पाशाय | ,, |
| ,, | अं | अंकुशाय | ,, |
| ,, | गं | गदायै | ,, |
| ,, | त्रिं | त्रिशूलाय | ,, |
| ,, | पं | पद्माय | ,, |
| ,, | चं | चक्राय | ,, |

इत्यस्त्राणि पूजयित्वा पुष्पांजलिं च दद्यात्। इति सप्तमावरणम् इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य जपं कुर्यात्। अस्य पुरश्चरणं षोडशलक्षजपः। तथा च...विकारलक्षं प्रजपेन्मनुमेनं समाहितः। तद्दशांशं [illegible]जैर्जुहुयान्मधुरप्लुतैः। धर्मार्थकामांल्लब्ध्वा वै विष्णोः सायुज्यमाप्नुयात्। [illegible]ष्टाक्षरविष्णुमंत्रप्रयोगः।

# द्वादशाक्षरीविष्णुमंत्रयंत्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत् ।

इति सर्वतोभद्रमण्डले मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति पीठदेवताः संपूज्य पीठशक्तीः पूजयेत् ।

तद्यथा पूर्वादिक्रमेण

| | | |
|---|---|---|
| ओं | विमलाय | नमः |
| ,, | उत्कर्षिण्यै | ,, |
| ,, | ज्ञानायै | ,, |
| ,, | क्रियायै | ,, |
| ,, | योगायै | ,, |
| ,, | प्रह्वयै | ,, |
| ,, | सत्यायै | ,, |
| ,, | ईशानायै | ,, |

मध्ये ओं अनुग्रहायै नमः इति नवपीठशक्तीः संपूजयेत् ततः स्वर्णादि-निर्मितं यंत्रमग्न्युत्तारपूर्वकम् ।

"ओं नमो भगवते विष्णवे सर्वभूतात्मने ।

वासुदेवाय सर्वात्मसंभोगपद्य पीठात्मने नमः ।।

इति मंत्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देवाज्ञां गृहीत्वा आवरणपूजाँ कुर्यात् । तत्र क्रमः पुष्पांजलिमादाय ओं संविन्मयः परो देवः परामृतरसप्रिय :

अनुज्ञां देहि मे विष्णो परिवारार्चनाय ते ।। इति पठित्वा पुष्पांजलिं च दत्त्वा आवरणपूजामारभेत् । षट्कोणकेसरेषु अग्निकोणे ।

ओं हृदयाय नमः

नैरृते ओं नमः शिरसे स्वाहा

वायव्ये ओं भगवते शिखायै वषट्

ईशान्ये ,, वासुदेवाय कवचाय हुं

देवतापश्चिमे ओं नमो भगवते वासुदेवाय अस्त्राय फट् इति पंचांगानि पूजयेत् । ततःपुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्ट सिद्धिं मेदेहि शरणागत-

वत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्। इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणम्। ततः पूर्वादि चतुर्दिक्षु चतुर्दलेषु पूज्य

ओं वासुदेवाय नमः इति सर्वत्र

दक्षिण „ संकर्षणाय „

पश्चिमे „ प्रद्युम्नाय „

उत्तरे „ अनिरुद्धाय „

अग्निकोणे „ शान्त्यै „

नैऋते „ श्रियं „

वायव्ये „ सरस्वत्यै „

ऐशान्ये „ रत्यै „

इति पूजयित्वा पुष्पांजलिं च दद्यात्। इति द्वितीयावरणम् ततो द्वादशदले पूर्वादिक्रमेण।

| | | | |
|---|---|---|---|
| ओं | ओं | केशवाय | नमः |
| „ | नं | नारायणाय | „ |
| „ | मों | माधवाय | „ |
| „ | भं | गोविंदाय | „ |
| „ | गं | विष्णवेन | „ |
| „ | वं | मधुसूदनाय | „ |
| „ | ते | त्रिविक्रमाय | „ |
| „ | वां | वामनाय | „ |
| „ | सुं | श्रीधराय | „ |
| „ | दें | हृषीकेशाय | „ |
| „ | वां | पद्मनाभाय | „ |
| „ | य | दामोदराय | „ |

इति द्वादशमूर्तीः पूजयित्वा पुष्पांजलिं च दद्यात्। इति तृतीयावणम् ततो भूपुरे इन्द्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यस्त्राणि च पूजयित्वा पुष्पांजलिं च दद्यात्। इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जप कुर्यात् अस्य पुरश्चरणं द्वादशलक्षजपः। द्वादशसहस्त्रहोमः। तत्तद्दशांशेन तर्पणमार्जन–ब्राह्मणभोजनं च कुर्यात्। एवंकृतो मंत्रः सिद्धो भवति। सिद्धे मंत्रे मंत्री प्रयोगान् साधयेत्।

# षडक्षरीराममंत्रप्रयोगावरणयन्त्रम्



प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्व देवता आवरणदेवता पद्धति प्रकारेण पात्रासादनानि पूरयित्वा, ततः एतदावरण पूजां आरभेत् ।

ओं 'मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः' इति पीठदेवताः सम्पूज्य नवपीठशक्तीः पूजयेत् । तद्यथा पूर्वदिक्रमेण

| | | |
|---|---|---|
| ओं | विमलायै | नमः, |
| " | उत्कर्षिण्यै | " |
| " | ज्ञानायै | " |
| " | क्रियायै | " |
| " | योगायै | " |
| " | प्रह्व्यै | " |
| " | सत्यायै | " |
| " | ईशानायै | " |
| " | मध्ये ओं अनुग्रहायै | " इतिपूजयेत् |

ततः स्वर्णादिनिर्मितं यंत्रं मूर्ति वा अग्न्युत्तारणपूर्वकम्

ओं नमो भगवते रामाय सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोग-पद्मपीठात्मने नमः ।"

इति मंत्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्राणप्रतिष्टां च कृत्वा पुनर्ध्यात्वावाहनादिपुष्पांतैरुपचारैः संपूज्य देवाज्ञां गृहीत्वा आवरणपूजां कुर्यात् । तत्र क्रमः । पुष्पांजलिमादाय ओं संविन्मयः परो देव परामृतरसप्रिय ॥ अनुज्ञां देहि मे नाम परिवारार्चनायनाय ते ॥ इति पठित्वा पुष्पांजलिं दद्यात् ॥ इत्याज्ञां गृहीत्वा आवरणपूजामारयेत्

| | | | |
|---|---|---|---|
| ओं | रां | हृदयाय | नमः |
| ,, | रीं | शिरसे स्वाहा | ,, |
| ,, | रूं | शिखायै वषट् | |
| ,, | रैं | कवचाय हुं | |
| ,, | रौं | नेत्रत्रयाय वौषट् | |
| ,, | रं | अस्त्राय फट् | |

इतिषडंगन्यासः

देववामपार्श्वे श्री सीतायै नमः इति सर्वत्र

| | | | | |
|---|---|---|---|---|
| अग्निकोणे | ओं | शंखाय | नमः | |
| दक्षिणपार्श्वे | ,, | शराय | नमः | |
| वामपार्श्वे | ,, | चापाय | नमः | इतिपूजयेत्। |

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धि मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्य प्रथमावरणार्चनम् । इति पठित्वा पुष्पाञ्जलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् ।

ततः षट्कोणकेसरेषु

| | | | |
|---|---|---|---|
| अग्निकोणे | ओं | रां | हृदयाय नमः |
| निर्ऋते | ओं | ह्रीं | शिरसे स्वाहा |
| वायव्ये | ओं | रुं | शिखायै वषट् |
| ~~ऐशान्ये~~ | ~~ओं~~ | ~~रैं~~ | ~~कवचाय हुं~~ |
| पूज्यपूजकयोर्मध्ये | ओं | रौं | नेत्रत्रयाय वौषट् |
| देवपश्चिमे | ओं | रः | अस्त्राय फट् |

इति षडंगानि पूजयित्वा पुष्पांजलिं च दद्यात् । इति द्वितीयावरणम् । तद्बहिरष्टदले पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | हनुमते | नमः |
| ,, | सुग्रीवाय | नमः |
| ,, | भरताम | ,, |
| ,, | विभीमणाय | ,, |

" लक्ष्मणाय नमः
" अंगदाय "
" शत्रुघ्नाय "
" जाम्बवते "

इति पूजयित्वा पुष्पांजलिं च दद्यात् । इति तृतीयावरणम्

ततोऽष्टदलाग्रेषु

ओं सृष्टाय नमः
" जयन्ताय "
" विजयाय "
" सुराष्ट्राय "
" राष्ट्रवर्द्धनाय "
" अकोपाय "
" धर्मपालाय "
" सुमन्ताय "

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् । इति चतुर्थावरणम् ततो भूपुरे इन्द्रादिदशदिक्पालान् तद्बहिर्वज्राद्यस्त्राणि च पूजयित्वा पुष्पांजलिं च दद्यात् । इत्यावरणपूजां च कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं षड्लक्षजपः । तत्तद्दशांशेन होमतर्पणमार्जनब्राह्मणभोजनं च कुर्यात् । एवं कृते मंत्रः सिद्धो भवति । सिद्धे मंत्रेमंत्री प्रयोगान् साधयेत् ॥

---

## अष्टाक्षराकृष्णपूजनयन्त्रम्



प्रथमन: मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रक्रमेण पात्रासाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत्।

ततः पीठादौ रचिते सर्वतो भद्रमंडले "ओं मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः" इति पीठ देवताः सपूज्य नवपीठशक्तीः पूजयेत्। तद्यथा पूर्वादिक्रमेण।

| | | | |
|---|---|---|---|
| ओं | विमलायै | नमः | |
| ,, | उत्कर्षिण्यै | ,, | |
| ,, | ज्ञानायै | ,, | मध्ये |
| ,, | अनुग्रहये | ,, | |

इति पूजयेत्। ततः स्वर्णादिनिर्मितं यंत्रं मूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारं जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य "ओं नमो भगवते श्रीकृष्णाय सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोग प्रपीठात्मने नम." इति मंत्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्यात। तद्यथा पुष्पांजलिमादाय। ओं संविन्मयः परो देवः परामृतरसप्रिय॥ अनुज्ञां कृष्ण मे देहि परिवारार्चनाय ते। इति पठित्वा पुष्पांजलिं च दत्त्वा आवरणपूजामारयेत् तद्यथा - पंचकोणे आग्नेयदिक्रमेन॥

क्लीं कृष्णाय हृदयाय नमः इति सर्वत्र
गोविंदाय शिरसे स्वाहा
गोपीजन शिखायै वषट्
वल्लभाय कवचाय हुं
स्वाहाय अस्त्राय फट्

इति पंचांगानि पूजयेत्। ततः पुष्पांजलिमादाय मूलमुच्चार्य

ओं अभीष्टसिद्धिं मे देहि शरणागतवत्सला भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥ " इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणम् ततोऽष्टदले पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्ये दिशः प्रकल्प्य प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | कालिंद्यै | नमः |
| ,, | नाग्नजित्यै | ,, |
| ,, | मित्रविंदायै | ,, |

„ चारुहासिन्यै नमः
„ रोहिण्यै „
„ जांबवत्यै „
„ रुक्मिण्यै „
„ सत्यभामायै „

इत्यष्टौ पट्टराज्ञीः पूजयित्वा पुष्पांजलिं च दद्यात्। इति द्वितीयावरणम्॥ ततोऽष्टदले प्राचीक्रमेण

ओं ऐरावताय नमः
„ पुंडरीकाय „
„ वामनाय „
„ कुमुदाय „
„ अंजनाय „
„ पुष्पदन्ताय „
„ सार्वभौमाय „
„ सुप्रतीकाय „

इत्यष्टौ गजान् पूजयित्वा पुष्पांजलिं च दद्यात्। इति तृतीयावरणम्॥ ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात्॥ इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात्॥ अस्य पुरश्चरणमयुतदशात्मको जपः। तद्दशांशेन होमतर्पणमार्जन ब्राह्मणभोजनं च कुर्यात्। एवं कृतो मंत्रः सिद्धो भवति। सिद्धे मंत्रे मंत्री प्रयोगान् साधयेत्॥

---

# लक्ष्मीनारायणपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत्।

ततः पीठादौ रचिते सर्वतोभद्रमंडले ओं मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति पीठदेवताः संपूज्य नवपीठशक्तीः पूजयेत्। तद्यथा पूर्वादिक्रमेण।

ओं विमलायै नमः
„ उत्कर्षिण्यै „
„ ज्ञानायै „

| | | |
|---|---|---|
| ,, | क्रियायै | ,, |
| ,, | योगायै | ,, |
| ,, | प्रह्वायै | ,, |
| ,, | ईशानायै | ,, |
| ,, | सत्यायै | ,, |
| मध्ये ,, | अनुग्रहायै | ,, |

इति पूजयेत्। ततः स्वर्णादिनिर्मितं यंत्रं मूर्तिं वा ताम्रपत्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्वा स्वच्छवस्त्रेण संशोध्य ओं नमो भगवते लक्ष्मीनारायणाय सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपद्मपीठात्मने नमः इति मंत्रेण पुष्पाद्यासनं दत्वा पीठ मध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्यावाहनादिपुष्पांतैरुपचारैः संपूज्य देवज्ञायाऽऽवरणपूजां च कुर्यात्। तद्यथा पुष्पांजलिमादाय ओं सविन्मयः परो देवः परामृतरसप्रियः अनुज्ञां देहि मे देव परिवारार्चनाय ते इति पठित्वा पुष्पांजलिं च दत्वा आवरणपूजामारभेत्। पंचकोणकेसरेषु आग्नेयादिक्रमेण।

| | | | |
|---|---|---|---|
| ओं | ह्रीं | ह्रीं | हृदयाय नमः |
| ,, | श्रीं | श्रीं | शिरसे स्वाहा |
| ,, | | | लक्ष्मी शिखायै वषट् |
| ,, | | | वासुदेवाय कवचाय हुं |
| ,, | नमः | | अस्त्राय फट् |

इति पंचांगानि पूजयेत्। ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिता : संतु इति वदेत्। इति प्रथमावरणम् ततोऽष्टदले पूज्यपूजकयोर्मध्ये प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राच्यादि चतुर्दिक्षु।

| | | |
|---|---|---|
| ओं | वासुदेवाय | नमः |
| ,, | संकर्षणाय | ,, |
| ,, | प्रद्युम्नाय | ,, |
| ,, | अनिरुद्धाय | ,, |

आग्नेयादिचतुष्कोणेषु ओं शांत्यै ,,

| | | |
|---|---|---|
| ओं | श्रियै | नमः |

,, सरस्वत्यै ,,

,, रत्यै ,,

इत्यष्टौ पूजयित्वापुष्पांजलि च दद्यात् । इति द्वितीयावरणम् । ततो द्वादशदले प्राच्यादिक्रमेण

| | | |
|---|---|---|
| ओं | केशवाय | नमः |
| ,, | नारायणाय | ,, |
| ,, | माधवाय | ,, |
| ,, | गोविंदाय | ,, |
| ,, | विष्णवे | ,, |
| ,, | मधुसूदनाय | ,, |
| ,, | त्रिविक्रमाय | ,, |
| ,, | वामनाय | ,, |
| ,, | श्रीधराय | ,, |
| ,, | हृषीकेशाय | ,, |
| ,, | पद्मनाभाय | ,, |
| ,, | दामोदराय | ,, |

इति द्वादश मूर्तीः पूजयित्वा पुष्पांजलिं च दद्यात् । इति तृतीयावरणम् । ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पांजलिं च दद्यात् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं मूलमंत्र जप कुर्यात् । अस्य पुरश्चरणं चतुर्दशलक्षजपः । तत्सहस्रेण होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात् । एवं कृतो मंत्रः सिद्धो भवति सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

# दधिवामनपूजनयन्त्रम्

प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरण पूजां आरभेत् ।

ततः पीठादौ रचिते सर्वतोभद्रमंडले ओं मं मण्डूकादिचन्द्रमण्डलांतं पीठदेवताभ्यो नमः इति पीठदेवताः संपूज्य नव पीठशक्तीः पूजयेत् । तद्यथा पूर्वादिक्रमेण ।

| | | |
|---|---|---|
| ओं | विमलायै | नमः |
| | उत्कर्षिण्यै | ,, |

,, ज्ञानायै ,,

,, क्रियायै ,,

,, भोगायै ,,

,, प्रह्वाय ,,

,, मत्यायै ,,

,, ईशानायै ,,

मध्ये ,, अनुग्रहायै ,,

इति पूजयेत् ततः स्वर्णादिनिर्मितं यंत्रं मूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्वा स्वच्छवस्त्रेण संशोध्य ओ नमो भगवते दधिवामनाय सर्वभूतात्मने वासुदेवाय सर्वात्मसंभोगमध्यपीठात्मने नमः इति मन्त्रेण पुष्पाद्यासनं दत्वा पीठमध्ये सस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्यात् तद्यथा—पुष्पांजलिमादाय ओं संविन्मयः परो देवः परामृतरसप्रियः अनुज्ञां देहि मे देव परिवारार्चनम् ते इति पठित्वा पुष्पांजलिं च दत्वा आवरण पूजामारभेत् षट्कोणकेसरेषु आग्नेयादिचतुर्दिक्षु मध्ये दिक्षु च

ओं हृदयाय नमः इति सर्वत्र

ओं नमः शिरसे स्वाहा

,, विष्णवे शिखायै वषट्

,, सुरपतये कवचाय हुं

,, महाबलाय नेत्रत्रयाय वौषट्

,, स्वाहा अस्त्राय फट्

इति षडंगानि पूजयेत । ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि शरणागत वत्सल भक्त्या समर्पये तुभ्य प्रथमावरणार्चनम् । इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् ।

ततोऽष्टदले पुज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राच्यादि चतुर्दिक्षु ।

ओं वासुदेवाय नमः

,, संकर्षणाय नमः

,, प्रद्युम्नाय नमः

,, अनिरुद्धाय नमः

,, अग्न्यादिचतुष्कोणेषु ओं शांत्यै नमः

,, श्रियै नमः

,, [illegible]यै नम

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम् ततोऽष्टदलाग्रेषु प्राच्यादिषु चतुर्दिक्षु ।

ओं ध्वजाय नमः

,, वैनतेयाय नमः

,, कौस्तुभाय नमः

,, शंखाय नमः

,, चक्राय नमः

,, गदायै नमः

,, शार्ङ्गाय नमः

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् । इति तृतीयावरणम् ततो द्वादशदले प्राचीक्रमेण ।

ओं केशवाय नमः

,, नारायणाय नमः

,, माधवाय नमः

,, गोविन्दाय नमः

,, विष्णवे नमः

,, मधुसूदनाय नमः

,, त्रिविक्रमाय नमः

,, वामनाय नमः

,, श्रीधराय नमः

,, हृषीकेशाय नमः

,, पद्मनाभाय नमः

,, दामोदराय नमः

इति द्वादशमूर्तीः पूजयित्वा पुष्पांजलिं च दद्यात् । इति चतुर्थावरणम् । ततो भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पांजलिं च दद्यात् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं त्रिलक्षजपः तत्तद्दशांशेन होमतर्पणमार्जनब्राह्मणभोजनं च कुर्यात । एवं कृतो मंत्रः मंत्री प्रयोगान् साधयेत् ।

# हृल्लेखापूजनयन्त्रम्



प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्व देवता आवरणदेवता पद्धति प्रकारेण पात्रासाधनानि पूरयित्वा ततः, एतदावरणपूजां आरभेत् ।।

ततः पीठादौ रचित सर्वतोभद्रमण्डले ओं

"म मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः"

इतिपीठदेवताः सपूज्य नव पीठशक्तीः पूजयेत् । तद्यथा

ओं विमलायै नमः
,, उत्कर्षिण्यै ,,
,, ज्ञानायै ,,
,, क्रियायै ,,
,, योगायै ,,
,, प्रह्वायै ,,
,, सत्यायै ,,
,, ईशानायै ,,

मध्ये ओं अनुग्रहायै नमः : इति पूजयेत्

हसः सोऽहं हृदयाय नमः

विश्वात्तीर्ण स्वरूपाय शिरसे स्वाहा
चिन्मयानन्दरूपिणे शिखायै वषट्
तुभ्यं नमो हयग्रीव कवचाय हुं
विद्याराजाय विष्णवे नेत्रत्रयाय वौषट्
स्वाहा हुसः म ह्रम अस्त्राय फट्

इति हृदयादिषडङ्गन्यासः। एवं न्यासविधिं कृत्वा ध्यायेत् ॥

शरच्छशांकप्रभमश्ववक्त्रं मुक्तामयरौभरणरोपनम्। रथांगशखांचितबाहुयुग्मं जानुद्धयन्यस्तकरं भजामः। इति ध्यायेत्

ततः स्वर्णादिनिर्मितं यंत्रं मूर्तिं वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य" ओं नमो भगवते हयग्रीवाय सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोग पद्मपीठात्मने नमः इति मंत्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्टां च कृत्वा पुनर्ध्यात्वा (हूं) इति बीजमंत्रेण मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देवाज्ञां गृहीत्वा आवरणपूजां कुर्यात्। तद्यथा पुष्पांजलिमादाय ओं सविन्मयः परा देवः परामृतरसप्रिय। अनुज्ञां देहि मे देव परिवारार्चनाय ते। इति पठित्वा पुष्पांजलिं च दत्त्वा आवरणपूजामारभेत् ॥ षट्कोणकेसरेषु आग्नेयादिक्रमेण मध्ये दिक्षु च षडंगानि पूजयेत् ॥ इति प्रथमावरणम् ॥ ततोऽष्टदले पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य पूर्वे

| | | | |
|---|---|---|---|
| | ओं | ऋग्वेदाय | नमः |
| दक्षिणे | " | यजुर्वेदाय | " |
| पश्चिमे | " | सामवेदाय | " |
| उत्तरे | " | अथर्ववेदाय | " |
| अग्निकोणे | " | सर्वस्मृतिभ्यो | " |
| नैऋते | " | सर्वन्यायशास्त्रेभ्यो नमः | |
| वायव्ये | " | सर्वधर्मशास्त्रेभ्यो नमः | |
| ऐशान्ये | " | सर्वपुराणशास्त्रेभ्यो नमः | |

इति पूजयेत्। ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् ॥ इति द्वितीयावरणम् अन्यावरणं सर्वं पूर्ववत् संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणं द्वात्रिंशल्लक्षं जपः। तथा च।

वणलक्षं जपेन्मंत्रं कुंदपुष्पैर्मधुप्लुतैः । दशांशं वैष्णवे वह्नौ जुहुयान्मन्त्रसिद्धये। एवं यो भजते देवं साक्षाद्वागीश्वरो भवेत् ॥ बिल्वै फलैः कृतो होमः श्रीकरः परिकीर्तितः ॥

(०)

# नृसिंहपूजनयन्त्रम्




प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत्।

सर्वतो भद्रमण्डले मं मण्डूकादिपरतत्त्वांतपीठदेवताभ्यो नमः। इति पीठदेवता संपूज्य पीठशक्तीः पूजयेत्। तत्र क्रमः पूर्वादिक्रमेण

| | | |
|---|---|---|
| ओं | विमलायै | नमः |
| ,, | उत्कर्षिण्यै | ,, |
| ,, | ज्ञानायै | ,, |
| ,, | क्रियायै | ,, |
| ,, | योगायै | ,, |
| ,, | प्रह्वायै | |

| | | |
|---|---|---|
| ,, | सत्यायै | ,, |
| ,, | ईशानायै | ,, |
| मध्ये ,, | अनुग्राहायै | |

इति नवपीठशक्तीः संपूज्य स्वर्णादिनिर्मितयन्त्रमग्न्युत्तारणपूर्वकं ओं नमो भगवते नृसिंहाय दैत्यशत्रुसर्वात्मसंयोगपद्मपीठाय नमः इति मन्त्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्राणप्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादिपुष्पान्तैरुपचारैः संपूज्य देवाज्ञां गृहीत्वा आवरणपूजां कुर्यात् । तत्र क्रमः षट्कोणकेसरेषु

| | |
|---|---|
| अग्निकोणेओं | उग्रंवीरं हृदयाय नमः |
| नैर्ऋते ,, | महाविष्णुं शिरसे स्वाहा |
| वायव्ये ,, | ज्वलंत सर्वतोमुखं शिखायै वषट् |
| ऐशान्ये ,, | नृसिंहं भीषणं कवचाय हुं |
| पूज्यपूजकयोर्मध्ये ओं | भद्रं मृत्युमृत्युं नेत्रत्रयाय वौषट् |
| देवतापश्चिमे ,, | नमाम्यहं अस्त्राय फट् |

इति षडङ्गानि पूजयेत् । ततोऽष्टदले पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य प्राचीक्रमेण

| | | | |
|---|---|---|---|
| प्राच्यां | ओं | गरुडपक्षिराजाय नमः इति सर्वत्र | |
| दक्षिणे | ,, | शेषाय | नमः |
| पश्चिमे | ,, | ब्रह्मणे | ,, |
| उत्तरे | ,, | शंकराय | ,, |
| अग्निकोणे | ,, | श्रियै | ,, |
| नैर्ऋते | ,, | ह्रियै | ,, |
| वायव्ये | ,, | धृत्यै | ,, |
| ऐशान्ये | ,, | पुष्ट्यै | ,, |

इत्यष्टौ पूजयेत् । इति प्रथमावरणम् । ततो भूपुरे पूर्वादिक्रमेण ।

| | | | |
|---|---|---|---|
| ओं | लं | इन्द्राय | नमः |
| ,, | रं | अग्नये | ,, |
| ,, | यं | यमाय | ,, |
| ,, | क्षं | निर्ऋतये | ,, |
| ,, | वं | वरुणाय | ,, |
| ,, | यं | वायवे | ,, |

,, कुं कुबेराय ,,

,, हं ईशानाय ,,

इन्द्रेशानयोर्मध्ये ओं आं ब्रह्मणे नमः

वरुणनिरृतयोर्मध्ये ओं ह्रीं अनंताय नमः

इति दशदिक्पालान् पूजयेत्। तद्बाह्ये पूर्वादिक्रमेण

ओं वं वज्राय नमः

,, शं शक्तये ,,

,, दं दंडाय ,,

,, ख खड्गाय ,,

,, पं पाशाय ,,

,, अं अंकुशाय ,,

,, ग गदायै ,,

,, त्रिं त्रिशूलाय ,,

ओं पं पद्माय ,,

,, चं चक्राय ,,

इत्यस्त्राणि पूजयेत्। इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य जपं कुर्यात्। अस्य पुरश्चरणं द्वात्रिंशल्लक्षजपः। तत्सहस्रहोमः तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात्। एवं कृतो मंत्रः सिद्धो भवति। सिद्धेच मंत्रे मंत्री प्रयोगान् साधयेत्।

—

# सूर्यपूजनयंत्रम्



प्रथमत: मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत् ।

सर्वतोभद्रमण्डले मंडूकादिसूर्यमण्डलाय द्वादशकलात्मने इत्यन्तं पीठ-देवतां सपूज्य पीठशक्तीः पूजयेत् । तद्यथा पूर्वादिक्रमेण

| | | |
|---|---|---|
| ओं | रां | दीप्तायै नमः |
| ,, | रीं | सूक्ष्मायै नमः |
| ,, | रु | जयायै नमः |
| ,, | रैं | भद्रायै नमः |
| ,, | वैं | वभूत्यै नमः |
| ,, | वों | विमलायै नमः |
| ,, | वौं | अघोरायै नमः |
| ,, | रं | विद्युतायै नमः |
| मध्ये ओं रः | | सर्वतोमुख्यै नमः |

इति पीठशक्तीः संपूजयेत् । ततः स्वर्णादिनिर्मितं यंत्रमग्न्युत्तारपूर्वकं ब्रह्मविष्णु-शिवात्मकाय सौराय योगपीठाय नमः इति मंत्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्राणप्रतिष्टां च कृत्वा पुनर्ध्यात्वा "ओं खं खखोल्काय नम." इति मंत्रेण मूर्तिं प्रकल्प्य आवाहनादिपुष्पांजल्युपचारैः संपूज्य देवाज्ञां गृहीत्वा आवरण-

पूजां कुर्यात् । तत्र क्रमः पुष्पांजलिमादाय ओं संविन्मयः परो देवः परामृतरसप्रियः । अनुज्ञां सूर्य मे देहि परिवारार्चनाय ते । इति पठित्वा पुष्पांजलिं च दत्त्वा आवरणपूजामारभेत् । षट्कोणकेसरेषु अग्निकोणे

स्वाहा हृदयाय नमः ओं सत्यतेजा ज्वालामणे हुं फट् इति सर्वत्र

| | |
|---|---|
| निर्ऋतिकोणे | ,, ब्रह्मतेजो ज्वालामणे हु फट् शिरसे स्वाहा |
| वायव्ये | ,, विष्णुतेजो ज्वालामणे हुं फट् स्वाहा शिखायै वषट् |
| ऐशान्ये | ,, रुद्रतेजो ज्वालामणे हुं फट् कवचाय हुं |
| पूज्यपूजकयोर्मध्ये | ,, अग्नितेजो ज्वालामणे हुं फट् स्वहा हनेत्रत्रयाय वौषट् |
| देवतापश्चिमे | ,, सर्वतेजो ज्वालामणे हुं फट् स्वाहा अस्त्राय फट् |

इति षडंगानि पूजयेन् । ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि शरणागतवत्सला भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् । ततोऽष्टदले पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य प्राच्यादिक्रमेण चतुर्दिक्षु

| | | | |
|---|---|---|---|
| ओं | ओं | आदित्याय | नमः |
| ,, | मं | रमये | ,, |
| ,, | उं | भानवे | ,, |
| ,, | इं | भास्कराय | ,, |

ति संपूज्य आग्नेय्यादि दिक्षु च ।

ओं उषायै नमः
,, प्रज्ञायै नमः
,, प्रभायै नमः
,, सन्ध्यायै नमः

इति पूजयित्वा पुष्पांजलिं च दद्यात् । इति द्वितीयावरणम् । ततोऽष्टदलेषु पूर्वादिक्रमेण ।

ओं ब्राह्म्यै नमः
,, माहेश्वर्यै नमः
,, कौमार्यै नमः
,, वैष्णव्यै नमः
,, वाराह्यै नमः
,, इन्द्राण्यै नमः
,, चामुण्डायै नमः
,, महालक्ष्म्यै नमः
,, अरुणायै नमः

इति पूजयित्वा पुष्पांजलिं च दद्यात् । इति तृतीयावरणम् ततो भूपुराभ्यंतरे पूर्वादिक्रमेण ।

ओं चन्द्राय नमः
" मंगलाय नमः
" बुधाय "
" बृहस्पतये "
" शुक्राय "
" शनैश्वराय "
" राहवे "
" केतवे "

इत्यष्टौ ग्रहान् पूजयित्वा पुष्पांजलिं च दद्यात् इति चतुर्थावरणम् ततो भूपरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि पुजयेत् । इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं दशलक्षजपः दशसहस्रहोमः तत्तद्दशांशेन तर्पनमार्जनब्राह्मणभोजनं च कुर्यात् । एवं कृते मंत्रः सिद्धो भवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

---

## हनुमत्कूटद्वादशाक्षरीपूजनयंत्रम्



प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरण पूजां आरभेत् ।

सर्वतोभद्रमण्डले मंडूकादिपरतत्वांतपीठदेवताः संस्थाप्य नव पीठशक्तीः पूजयेत् । पूर्वादिक्रमेण ओं विमलायै ———मध्ये ओं अनुग्रहायै नमः इति पूजयेत् । ततः स्वर्णादिनिर्मितं··· स्वच्छवस्त्रेणाशोष्य ओं नमो भगवते हनुमते सर्वात्मसंयोगपद्मपीठात्मने नमः । इति मंत्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देवज्ञया आवरणपूजां कुर्यात् । तद्यथा पुष्पांजलिमादाय संविन्मयः परो देवः परामृतरसप्रियः । अनुज्ञां हनुमन्देहि परिवारार्चनाय मे । इति पुष्पांजलिं दत्वा वाज्ञां प्राप्य आवरणपूजां कुर्यात् । तद्यथा षट्कोणकेसरेषु आग्नेय्यादि चतसृषु दिक्षु मध्ये दिक्षु च ।

| | | |
|---|---|---|
| ओं | ह्रौं | हृदयाय नमः |
| " | ह्स्फ्रें | शिरसे स्वाहा |
| " | ख्फ्रें | शिखायै वौषट् |
| " | ह्सौं | कवचाय हुं |
| " | ह्स्ख्फ्रें | नेत्रत्रयाय वौषट् |
| " | ह्सौं | अस्त्राय फट् |

इति षडंगानि पूजयेत् । ततः पुष्पांजलिमादाय मूलमुच्चार्य——अभीष्टसिद्धिं ——प्रथमावरणम् । इति पठित्वा —— संतु इति वदेत् इति प्रथमावरणम्

ततोऽष्टदलेषु """— प्राचीक्रमेण दक्षिणावर्ते च

| | | |
|---|---|---|
| ओं | रामभक्ताय | नमः |
| " | महातेजसे | " |
| " | कपिराजाय | " |
| " | महाबलाय | " |
| " | द्रोणाद्रिहारकाय | " |
| " | मेरुपीठार्चनकारकाय | " |
| " | दक्षिणाशाभास्कराय | " |
| " | सर्वविघ्ननिवारकाय | " |

इति नामभिः पुष्पांजलिं च दद्यात् । इति द्वितीयावरणम् ततोऽष्टदलाग्रेषु प्राचीक्रमेण ।

ओं सुग्रीवाय नमः

,, अंगदाय नमः

,, नीलाय नमः

,, जांबवते नमः

,, नलाय नमः

,, सुषेणाय नमः

,, द्विविदाय नमः

,, मयंदाय नमः

इत्यष्टौ वानरान् पूजयित्वा पुष्पांजलिं च दद्यात् । इति तृतीयावरणम् । ततः भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं द्वादशसहस्रजपः । तद्दशांशतो होमः एवं कृतो मंत्रः सिद्धो भवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

—

# द्वादशाक्षरीहनुमत्पूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता पद्धति प्रकारेण पात्रसाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत् ।

"हं हनुमते रुद्रात्मकाय हुं फट् इति द्वादशाक्षरो मंत्रः । ततः पीठादौ रचिते सर्वतोभद्रमंडलं कृत्वा ततः साकेसरं रक्तचदनं दृष्ट्वा तेन लेखनीं च कृत्वा ताम्रादिपत्रेऽष्टदलपद्मं विलिख्य मंडलेसंस्थाप्य प्रतिष्टां च कृत्वा मूलेन मूर्तिं प्रकल्प्यावाहनादिपुष्पांतैरुपचारैः संपूज्य मूलेन पुष्पांजल्यष्टकं दत्वा ततः ओं कुलेरघूणां समवाप्य जन्म विधाय सेतुं जलधेर्जलांतः । लंकेश्वरम् यः शमयांचकार सीतापतिं तं प्रणमामि भक्त्या । इति रामं ध्यात्वा पुष्पांजलिमादाय मूलमुच्चार्य "ओं संविन्मयः परो देवः परामृतरसप्रिय । अनुज्ञां हनुमन्देहि परिवारार्चनाय मे । इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् । इत्याज्ञां गृहीत्वा आवरणपूजामारभेत् । तथा च पुज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण ।

ओं सुग्रीवाय नमः
" लक्ष्मणाय नमः
" अंगदाय नमः
" नलाय नमः
" नीलाय नमः
" कुमुदाय नमः
" केसरिणे नमः

देवदक्षिणतः ओं पवनाय नमः
वामे " अंजन्यै नमः

इति पूजयेत् ततः पुष्पांजलिमादाय ओं अभीष्टसिद्धि —— प्रथमावरणार्चनम्। इति पठित्वा पुष्पांजल्यष्टकं दत्त्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् इत्यावरणपूजाँ कृत्वा धूपादिनमस्कारांतं संपूज्य पुनर्ध्यात्वा एकाग्रचित्तो मंत्रार्थं स्मरन् जपं कुर्यात्। तावत्कालं जपेत् यावत्संदर्शनं भवेत्। एवं कृतो हनुमांस्त्रिभगशेषासु निशासु आगच्छति साधकाय वरं दत्वा पुनर्व्रजति ।
तथा च नदीकूले विष्णुग्रहे निर्जने पर्वते वने। एकाग्रचित्तमादाय साधयेत्साधनं महत्। महाशैलं समुत्पाटय धावंतं रावणं प्रति। तिष्ट तिष्ट रणेदुष्ट घोरं रावं समुच्चरन्।

# आपदुद्धारवटुकपूजनयन्त्रम्





प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्व देवता आवरणदेवता पद्धति प्रकारेण पात्रासाधनानि पूरयित्वा, ततः एतदावरण पूजां आरभेत् ।

ततः पीठादौ रचिते सर्वतोभद्रमण्डले लिंगतोभद्रमण्डले वा मण्डूकादि परतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नव पीठशक्तीः पूजयेत् । तद्यथा पूर्वादिक्रमेण

| | | |
|---|---|---|
| ओं | वां | वामायै नमः |
| " | ज्यें | ज्येष्ठायै नमः |
| " | रौं | रौद्र्यै नमः |
| " | कां | काल्यै नमः |
| " | कं | कलविकरिण्यै नमः |
| " | बं | बलविकरिण्यै नमः |
| " | बं | बलप्रमथिन्यै नमः |
| " | सं | सर्वभूतदमन्यै नमः |
| मध्ये " | मं | मनोन्मन्यै नमः |

इति पूजयेत् । ततः स्वर्णादिनिर्मितं यन्त्रं मूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरिदुग्धधारां जलधारां च दत्वा स्वच्छवस्त्रेण संशोध्य ततः शक्तिगंधाष्टकेन यंत्रं विलिख्य ओं नमो भगवते वटुकाय सकलगुणात्मशक्तियुक्ताय अनंताय

योगपीठात्मने नमः इति मंत्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्टां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः संपुज्य देवाज्ञां गृहीत्वा आवरणपूजां कुर्यात् । तथा च पुष्पांजलिमादाय । ओं संविन्मयः परो देवः परामृतरसप्रिय अनुज्ञां देहिं वटुक परिवारार्चनाय मे । इत्युक्त्वा पुष्पांजलिं भैरवोपरि दत्वा आज्ञां गृहीत्वा आवरणपूजामारभेत् । अत्र सर्वत्र पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य आवरणदेवतां पूजयेत् । ततो दक्षहस्ते तर्जन्यंगुष्ठाभ्यां गंधाक्षतपुष्पाणि गृहीत्वा देवस्यांगे आग्नेयादिचतुर्दिक्षु मध्ये दिक्षु च ओं ह्रां वां हृदयाय नमः हृदयश्रीपादुकां पूजयामि तर्पयामि नमः । इति सर्वत्रोच्चरेत् ।

| | | | |
|---|---|---|---|
| ओं | ह्रीं | वीं | शिरसे स्वाहा |
| ” | ह्रूं | वूं | शिखायै वषट् |
| ” | ह्रैं | वैं | कवचाय हुं |
| ” | ह्रौं | वौं | नेत्रत्रयाय वौषट् |
| ” | ह्रः | वः | अस्त्राय फट् |

इति षडंगानि पूजयेत् । ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे... प्रथमावरणम् । इति पठित्वा पुष्पांजलिं च दत्वा विशेषार्घाद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् । ततः कर्णिकाद्बहिरष्टदले प्राच्यादिक्रमेण ।

| | | | |
|---|---|---|---|
| ओं | ह्रीं | आं | असितांगभैरवाय नमः |
| ” | ” | ईं | रुरुभैरवाय नमः |
| ” | ” | ऊं | चंडभैरवाय नमः |
| ” | ” | ॠं | क्रोधभैरवाय नमः |
| ” | ” | ॡं | उन्मत्तभैरवाय नमः |
| ” | ” | ऐं | कपालभैरवाय नमः |
| ” | ” | औं | भीषणभैरवाय ” |
| ” | ” | अं | संहारभैरवाय नमः |

इत्यष्टौ भैरवान्संपूज्य त्रिकोणे पूर्वादिकोणेषु ।

ओं सत्वाय नमः
” रजसे नमः
” तपसे नमः

इति त्रिगुणान् संपूज्य पुष्पांजलिं च दद्यात् । इति द्वितीयावरम् त्रिगुणाद्बहिः षट्कोणे पूर्वादिक्रमेण ।

| | | |
|---|---|---|
| ओं | ह्रीं | भूतनाथाय नमः |
| ,, | ,, | आदिनाथाय नमः |
| ,, | ,, | आनन्दनाथाय नमः |
| ,, | ,, | सिद्धशाबरनाथाय नमः |
| ,, | ,, | सहजानंदनाथाय नमः |
| ,, | ,, | नि.सीमानंदनाथाय नमः |

इति संपूज्य पुष्पांजलिं च दद्यात् । इति तृतीयावरणम् । ततो वर्तुले पूर्वादिक्रमेण ।

| | | | | |
|---|---|---|---|---|
| ओं | ह्रीं | डाकिनीपुत्रेभ्यो नमः | | |
| ,, | ,, | राकिनी | ,, | ,, |
| ,, | ,, | लाकिनी | ,, | ,, |
| ,, | ,, | काकिनी | ,, | ,, |
| ,, | ,, | शाकिनी | ,, | ,, |
| ,, | ,, | हाकिनी | ,, | ,, |
| ,, | ,, | याकिनी | ,, | ,, |
| ,, | ,, | देवीपुत्रेभ्यो | | ,, |
| ,, | ,, | उमापुत्रेभ्यो | | ,, |

इति गृहीत्वा मूलमुच्चार्य अभीष्टसिद्धिं --- षष्ठमावरणार्चनम् इति पठित्वा पुष्पांजलिं दत्वा विशेषार्घ्याद्विन्दुं भैरवोपरि निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् । इति षष्ठावरणम् । तत्र त्रिरेखात्मकभूपुरस्य प्रथमरेखायां दिग्विदिगंतरालेषु शोडशस्थानेषु श्रीकंठादिमहसेनांतान्यजेत् तत्र क्रमः पूर्वे ।

| | | | | | |
|---|---|---|---|---|---|
| | ओं | ह्रीं | अ | श्रीकटपूर्वोदरींभ्यां | नमः |
| | ओं | ,, | आं | अनंतेशविरजाभ्यां | नमः |
| | ,, | ,, | इं | सूक्ष्मेशशास्यलीभ्यां | ,, |
| | ,, | ,, | ईं | त्रिमूर्तीशालोलाक्षीभ्यां | ,, |
| आग्नेय्याम् | ,, | ,, | उं | अमरेशवर्तुलाक्षीभ्यां | ,, |
| नैरृते | ,, | ,, | ऊं | अर्घीशदीर्घघोणाभ्यां | ,, |
| वायव्ये | ,, | ,, | ऋं | भारमूतीशदीर्घमुखीभ्यां | ,, |
| ऐशान्ये | ,, | ,, | ॠं | अतिथीशवोमुखीभ्यां नमः | ,, |
| पूर्वाग्निमध्ये | ,, | ,, | लृं | स्थाण्वीशदीर्घजिह्वाभ्यां | ,, |

ॐ ह्रीं रुद्रेभ्यो नमः

„ „ मातृपुत्रेभ्यो नमः

पश्चिमनैर्ऋतयोर्मध्ये ॐ ह्रीं ऊर्ध्वमुखीपुत्रेभ्यो नमः

ॐ ह्रीं अधोमुखी पुत्रेभ्यो नमः

इति त्रयोदशपुत्रवर्गान् पूजयेत् । ततः पुष्पांजलि दत्वा मूलमुच्चार्य अभीष्टसिद्धिं …… चतुर्थावरणम् ॥" इति पठित्वा पुष्पांजलिं दत्वा विशेषार्घाद्बिंदुं भैरवोपरि निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् ॥ इति चतुर्थावरणम् ॥ वर्तुलाद्बहिः पूर्वाद्याग्नेयांतं क्रमेण वामावर्तेन च

पूर्वे ॐ ह्रीं ब्रह्माणीपुत्रवटुकाय नमः

ऐशान्ये ॐ ह्रीं माहेश्वरीपुत्रवटुकाय नमः

उत्तरे „ „ वैष्णवीपुत्रवटुकाय नमः

वायव्ये „ „ कौमारीपुत्रवटुकाय नमः

पश्चिमे इन्द्राणीपुत्रवटुकाय नमः

नैर्ऋत्ये „ „ महालक्ष्मीपुत्रवटुकाय नमः

दक्षिणे „ „ वाराहीपुत्रवटुकाय नमः

आग्नेये „ „ चामुंडीपुत्रवटुकाय नमः

इत्यष्टौ मातृपुत्रवटुकान् पूजयेत् ॥ ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य "अभीष्टसिद्धिं मे देहि शरणागतवत्सल …… पंचमावरणार्चनम्" ॥ इति पठित्वा पुष्पांजलिं दत्वा विशेषार्घाद्बिंदुं भैरवोपरि निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् ॥ इति पंचमावरणम् ॥ अष्टदलाद्बहिः चतुरस्राभ्यंतरे इन्द्रादिक्रमेण प्राचीं प्रकल्प्य पूर्वदिदशदिक्षु च—

पूर्वे ॐ ह्रीं हेतुकाय नमः

आग्नेये ॐ ह्रीं त्रिपुरांतकाय नमः

दक्षिणे „ „ बेतालाय नमः

नैर्ऋते ॐ ह्रीं अग्निजिह्वाय नमः

पश्चिमे „ „ कालांतकाय नमः

वायव्ये „ „ करालाय नमः

उत्तरे „ „ एकपादाय नमः

ऐशान्ये „ „ भीमरूपाय नमः

इन्द्रेशानयोर्मध्ये ॐ ह्रीं अचलाय नमः

नैर्ऋतवरुणयोर्मध्ये ,, ,, हाटकेशाय नमः

इति हेतुकादीन् दशवटुकान् पूजयेत् ॥ ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य" अभीष्टसिद्धिं... ... षष्ठमावरणार्चनम् ॥ इति पठित्वा पुष्पांजलिं दत्वा विशेषार्घ्यबिंदुं भैरवोपरि निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् ॥ इति षष्ठावरणम् ॥ तत्र त्रिरेखात्मकभूपुरस्य प्रथमरेखायां दिग्विदिगंतरालेषु षोडशस्थानेषु श्रीकंठादि महासेनांतंन्यसेत् । तत्र क्रमः ।

पूर्वे ॐ ह्रीं अं श्रीकंठेशपूर्णोदरीभ्यां नमः

दक्षिणे ,, ,, आं अनंतेशविरजाभ्यां नमः

पश्चिमे ,, ,, इं सूक्ष्मेशशाल्मलीभ्यां नमः

उत्तरे ,, ,, ईं त्रिमूर्तीशलोलाक्षीभ्यां नमः

आग्नेय्याम् ,, ,, उं अमरेशवर्तुलाक्षीभ्यां नमः

नैर्ऋते ,, ,, ऊं अर्घीशदीर्घघोणाभ्यां नमः

वायव्ये ,, ,, ऋं भारभूतीशदीर्घमुखीभ्यां नमः

ऐशान्ये ,, ,, ॠं अतिथीशगोमुखीभ्यां नमः

पूर्वाग्निमध्ये ओं ह्रीं ॡं स्थाण्वीशदीर्घजिह्वाभ्यां नमः

| | | | | |
|---|---|---|---|---|
| दक्षिणनैर्ऋतिमध्ये | ओं | ह्रीं | ॡं | हरेशकुंडोदरीभ्यां नमः |
| पश्चिमेवायुमध्ये | ,, | ,, | एं | झिंटीशोर्ध्वकेशीभ्यां नमः |
| उत्तरेशानमध्ये | ,, | ,, | ऐं | भौतिकेशविकृतमुखीभ्यां ,, |
| अग्निदक्षिणमध्ये | ,, | ,, | ओं | सद्योजातेशज्वालामुखीभ्यां नमः |
| निर्ऋतिवरुणमध्ये | ,, | ,, | औं | अनुग्रहेशोल्कामुखीभ्यां ,, |
| वायुसोममध्ये | ,, | ,, | अं | अक्रूरेशश्रीमुखीभ्यां ,, |
| ईशानपूर्वमध्ये | ,, | ,, | अः | महासेनेशविद्यामुखीभ्यां ,, |

इति पूजयेत् । ततः पुष्पाञ्जलिं गृहीत्वा मूलमुच्चार्य "अभीष्टसिद्धिं ...— सप्तमावरणार्चनम्" इति पठित्वा पुष्पांजलिं दत्त्वा विशेषार्घ्यबिंदुं भैरवोपरि निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् । इति सप्तमावरणम् । ततो भूपुरस्य द्वितीयरेखायां दिग्विदिगंतरालेषु षोढशस्थानेषु क्रोधीश्वराद्याषाढेशांतान् पूजयेत् । तत्र क्रमः ।

| | | | | | |
|---|---|---|---|---|---|
| पूर्वे | ओं | ह्रीं | कं | क्रोधीशभद्रकालीभ्यां | नमः |
| दक्षिणे | ,, | ,, | खं | चंडीशसरस्वतीभ्यां | ,, |
| पश्चिमे | ,, | ,, | गं | पंचांतकेशसर्वासिद्धिगौरीभ्यां | ,, |
| उत्तरे | ,, | ,, | घं | शिवोत्तमेशत्रैलोक्यविजयाभ्यां | ,, |
| आग्नेय्याम् | ,, | ,, | ङं | एकरुद्रेशमंत्रं शक्तिभ्यां | ,, |
| नैर्ऋत्ये | ,, | ,, | चं | कूर्मेशात्मशक्तिभ्यां | ,, |
| वायव्ये | ,, | ,, | छं | एकनेत्रेशभूतमातृकाभ्यां | ,, |
| ऐशान्ये | ,, | ,, | जं | चतुराननेश लंबोदरीभ्यां | ,, |
| पूर्वाग्निमध्ये | ,, | ,, | झं | अजेशद्राविणीभ्यां | ,, |
| दक्षिणनैर्ऋतमध्ये | | ,, | ञं | सर्वेशनागरीभ्यां | ,, |
| पश्चिमवायुमध्ये | ओं | ,, | टं | सोमेशखेचरीभ्यां | ,, |
| उत्तरेशानमध्ये | ओं | ,, | ठं | लांगलीशमंजरीभ्यां | ,, |
| आग्नेययाम्यमध्ये | ओं | ह्रीं | डं | दारुकेशरूपिणीभ्यां | ,, |
| नैर्ऋतपश्चिममध्ये | ओं | ह्रीं | ढं | अर्धनारीशवीरणीभ्यां | ,, |
| वायुसोममध्ये | ओं | ह्रीं | णं | उमाकांतेशकाकोदरीभ्यां | ,, |
| ईशानपूर्वमध्ये | ,, | ,, | तं | आषाढेशपूतनाभ्यां | ,, |

इति पूजयेत् । ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य "अभीष्टसिद्धिं ... अष्टमावरणम् ! इति पठित्वा पुष्पांजलिं दत्त्वा विशेषार्घाद्बिन्दुं भैरवोपरि निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् इत्यष्टमावरणम् । ततो भूपुरस्य तृतीय-रेखायां दिग्विदिगंतरालेषु षोडशस्थानेषु दंडीश्वरादिभृग्वीशांतान् पूजयेत् ॥ तत्र क्रमः ॥

| | | | | | |
|---|---|---|---|---|---|
| पूर्वे | ओं | ह्रीं | थं | दंडीशभद्रकालीभ्यां | नमः |
| दक्षिणे | ,, | ,, | दं | अत्रीशयोगिनीभ्यां | ,, |
| पश्चिमे | ,, | ,, | धं | मीनेशशंखिनीभ्यां | ,, |
| उत्तरे | ,, | ,, | नं | मेषेशगर्जनीभ्यां | ,, |
| आग्नेय्याम् | ,, | ,, | पं | लोहितेशकालरात्रिभ्यां | ,, |
| नैर्ऋत्ये | ,, | ,, | फं | शिखीशकुब्जिकाभ्यां | ,, |
| वायव्ये | ,, | ,, | बं | छागलेशकपर्दिनीभ्यां | ,, |
| ऐशान्ये | ,, | ,, | भं | द्विरंडेशवज्रिणीभ्यां | ,, |
| पूर्वाग्निमध्ये | ,, | ,, | मं | महाकालेशजयाभ्यां | नमः |
| दक्षिणनैर्ऋतमध्ये | ओं | ह्रीं | यं | त्वगात्मभ्यां बालेशसुमुखेश्वरीभ्यां | |

पश्चिमवायव्यमध्ये ओं ह्रीं रं असृगात्मभ्यां भुजंगेशरेवतीभ्यां ,,
उत्तरेशानयोर्मध्ये ओं ह्रीं लं मांसात्मभ्यां पिनाकीशमाधवीभ्यां ,,
आग्नेयदक्षिणमध्ये ओं ह्रीं वं वेदात्मभ्यां खड्गीशवारुणीभ्यां ,,
नैर्ऋतपश्चिममध्ये ,, ,, शं अस्थ्यात्मभ्यां बकेशवायवीभ्यां ,,
वायुसोममध्ये ,, ,, षं मज्जात्मभ्यां श्वेतशरक्षोवधारिणीभ्यां ,,
,, ,, सं शुक्रात्मभ्यां भृग्वीशसहजाभ्यां ,,

इति पूजयेत् । ततो भूपुराद्बहिः देवदक्षिणतः लकुलीशादित्रयं पूजयेत् । तत्र क्रमः

ओं ह्रीं हं प्राणात्मभ्यां लकुलीशलक्ष्मीभ्यां नमः
,, ,, ळं शक्त्यात्मभ्यां नमः
,, ,, क्षं क्रोधात्मभ्यां सर्वतोकेशमहामायाभ्यां नमः

इति पूजयेत् । तत्र ऐशान्ये ओं ह्रीं योगिनीसहितेभ्यो दिव्ययोगीश्वरेभ्यो नमः

आग्नेये ओं ह्रीं योगिनीसहितेभ्योऽन्तरिक्षस्थयोगीश्वरेभ्यो नमः
,, ,, योगिनीसहितभूमिस्थयोगीश्वरेभ्यो नमः

पूर्वे ,, गं गणपतये नमः
दक्षिणे भैं भैरवाय नमः
पश्चिमे क्षं क्षेत्रपालाय नमः
उत्तरे दुं दुर्गायै नमः

इति पूजयेत् । ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य " अभीष्टसिद्धिं मे देहि शरणागतवत्सल —— नवमावरणम् । इति पठित्वा पुष्पांजलिं दत्त्वा विशेषार्घाद्बिंदुं भैरवोपरि निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत् । इति नवमावरणम् । ततो भूपुराद्बहिः पूर्वादिक्रमेण दशदिक्षु इन्द्रादीन् दशदिक्पालान् वज्राद्यायुधानि पूजयित्वा रुद्राण्यपदं संयोज्य पुष्पांजलिं च दत्वा स्तंभरं च रात्राणि, मत्स्य, गोक्षि, योनिमुद्रा इति पंचमुद्राः प्रदर्शयेत् । इत्येकादशावरणम् इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य पंचबलिदानं दत्वा पशुबलिदानादिकं विधाय जपं कुर्यात् । अस्य पुरश्चरणमेकविंशतिलक्षजपः । जपांते तिलाज्येन मधुमिश्रितेन दशांशतो होमः । होमांते होमदशांशेन मन्त्रान्ते "ओं वटुकभैरवं तर्पयामि" इत्युक्त्वा दुग्धमिश्रितजलेन तर्पणं कुर्यात् । ततस्तर्पणदशांशेन मंत्रांते "ओं आत्मानमभिषिचामि नमः" इति मूर्ध्न्यभिषेकः । होमतर्पणाभिषेकाशक्तौ तत्तत्स्माने तत्तद्द्विगुणो जपः कार्यः । ततोऽभिषेकदशांशसंख्याकमष्टोत्तरशतं वा ब्राह्मणान् भोजयेत् । इति शारदातिलके ज्ञेयम् । लक्ष्यमते पुरश्चरणलक्षजपः । तत्तद्दशांशेन होमतर्पणब्राह्मणभोजनानि कारयेत् । एवं कृते मंत्रः सिद्धः भवति सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

# स्वर्णाकर्षणभैरवपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत् ॥

ततः पीठादौ रचिते सर्वतोभद्रमंडले लिंगतोभद्रमंडले वा मंडूकादि-परतत्वां पीठदेवताः पद्धतिमार्गेण संस्थाप्य ओं मं मंडूकादिपरतत्वांतपीठदेवता-भ्यो नमः इति संपूज्य नव पीठशक्तीः पूजयन् ॥ तद्यथा पूर्वादिक्रमेण

| | | |
|---|---|---|
| ओं | वमायै | नमः |
| ,, | ज्येष्ठायै | ,, |
| ,, | रौद्रयै | ,, |
| ,, | कालयै | ,, |
| ,, | कलविकरिण्यै | ,, |
| ,, | वलविकरिण्यै | ,, |
| ,, | बलप्रमथिन्यै | ,, |
| ,, | सर्वभूतदमन्यै | ,, |

मध्ये ,, मनोन्मन्यै ,, इति पीठशक्तीः संपूजयेत् ॥

ततः स्वर्णादिनिर्मितं यंत्रं मूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्वा स्वच्छवस्त्रेण संशोष्य "ओं नामो भगवते स्वर्णाकर्षण भैरवयोगपीठात्मने नमः" इति मन्त्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य पुनर्ध्यायेत् ॥

ध्यानम्— ओं गांगेयपात्रं डमरुं त्रिशूलं वरं करैः संदधतं त्रिनेत्रम् ॥

देव्या युतं तप्तसुवर्णवर्णं स्वर्णाकृतिं भैरवमाश्रयामि ।

मन्दारद्रुममूलभाजि सुमहन्माणिक्यसिंहासने
संविष्टोदरभिन्नपंकजरुचा देव्या कृतालिंगनः ॥

भक्तेभ्यः कररत्नपात्रभरितं स्वर्णं ददानोऽनिशं
स्वर्णाकर्षणभैरवो विजयते स्वर्गापवर्गैकभूः ॥

इति मूलेन मूर्ति प्रकल्प्यावाहनादि पुष्पांतैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्यात् ॥ तद्यथा—पुष्पांजलिमादाय ॥ ओं संविन्मयः ... ... ... परिवारा-र्चनाय मे । इति पठित्वा पुष्पांजलिं दद्यात् । इत्याज्ञां गृहीत्वा आवर-णपूजामारभेत् ॥ तथा च ततोऽष्टदले पूज्यपूजकयो रांतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राच्यादिक्रमेण

| | | |
|---|---|---|
| ओं | आकाशायनमः | मूर्ध्निपूजयामि |
| ,, | समीरणायनमः | मुखे पुजयामि |

| | |
|---|---|
| ओं ढघ्नायनमः | बाह्वोः पूजयामि |
| „ वैवर्तायनमः | हृदि पूजयामि |
| „ विश्वंभरायानमः | उदरे पूजयामि |
| „ ब्रह्मणे नमः | कटौ पूजयामि |
| „ जनार्दनायनमः | जानुनोः पूजयामि |
| „ इन्द्रायनमः | पादयोः पूजयामि |

इत्यष्टांगानि पूजयेत् । ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धि मे देहि ... ... प्रथमावरणार्चनम्।। इति पठित्वा पुष्पांजलिं च दत्त्वा विशेषार्घाद्बिंदुं निक्षिप्य समुद्राः सचक्रकाः सायुधाः सवाहनाः सशक्तिकाः सपरिवाराः सर्वोपचारैः स्वर्णाकर्षणभैरवाः पूजितास्तर्पिताः संतु इति वदेत् ॥ इति प्रथमावरणम् ॥ ततस्त्रिकोणमध्ये

| | | | |
|---|---|---|---|
| पूर्वकोणे | ओं | वटुकभैरवाय | नमः इति सर्वत्र |
| ईशानकोणे | ओं | कालभैरवाय | नमः |
| अग्निकोणे | „ | क्षेत्रपालभैरवाय | नमः |

इति संपूजयेत् । ततः पुष्पांजलिं दत्त्वा विशेषार्घाद्बिंदुं भैरवोपरि दत्त्वा समुद्राः सायुधाः सवाहनाः सशक्तिका सपरिवाराः सर्वोपचारैः स्वर्णाकर्षण भैरवाः पूजितास्तर्पिताः संतु इति वदेत् । इति द्वितीयावरणम् ॥

ततः त्रिकोणाद्बहिः षट्कोणे आग्नेयादिक्रमेण

| | | | |
|---|---|---|---|
| अग्निकोणे | ओं | आपदुद्धारणाय | नमः |
| नैर्ऋत्यकोणे | ओं | अजामलबद्धाय | „ |
| वायुकोणे | „ | लोकेश्वराय | „ |
| ऐशान्ये | „ | स्वर्णाकर्षणभैरवाय | „ |
| प्राच्याम् | „ | मम दारिद्र्यविद्वेषणाय | „ |
| पश्चिमे | „ | श्रीमहाभैरवाय | „ |

इति पूजयेत् ॥ ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं ... तृतीयावरणार्चनम् ॥ इति पुष्पांजलिं दत्वा विशेषार्घाद्बिंदुं भैरवोपरि दत्वा समुद्राः सचक्रकाः सायुधाः सवाहनाः सशक्तिकाः सपरिवाराः स्वर्णाकर्षणभैरवाः सर्वोपचारैः पूजितास्तर्पिताः सन्तु इति वदेत् ॥ इति तृतीयावरणम् । ततो वृत्ते

पूर्वादिक्रमेण

| | |
|---|---|
| ओं असितांगभैरवाय | नमः |
| „ रुरुभैरवाय माहेश्वरीशक्तिसहिताय | „ |

ओं चंडभैरवाय कौमारीशक्तिसहिताय ,,

,, क्रोधभैरवाय वैष्णवीशक्तिसहिताय ,,

,, उन्मत्तभैरवाय वाराहीशक्तिसहिताय ,,

,, कपालिभैरवाय नारसिंहीशक्तिसहिताय ,,

,, भीषणभैरवाय चामुंडाशक्तिसहिताय ,,

,, संहारभैरवाय चंडिकाशक्तिसहिताय ,,

इत्यष्टौ भैरवान् पूजयेत् ।। ततः पुष्पांजलिमादाय मूलमुच्चार्य "ओं अभीष्टसिद्धिं मे देहि ... चतुर्थावरणम्" इति पुष्पांजलिं दत्वा विशेषार्घाद्बिंदुं भैरवोपरि — — इति वदेत् ।। इति चतुर्थावरणम् ।।

ततो वर्तुलाद्बहिरष्टदले पूर्वादिक्रमेण

| | | | |
|---|---|---|---|
| ओं आदित्याय स्वशक्तिसहिताय | | | नमः |
| ,, सोमाय | ,, | ,, | ,, |
| ,, भौमाय | ,, | ,, | ,, |
| ,, बुधाय | ,, | ,, | ,, |
| ,, जीवाय | ,, | ,, | ,, |
| ,, शुक्राय | ,, | ,, | ,, |
| ,, शनैश्वराय | ,, | ,, | ,, |
| ,, राहवे केतवे | ,, | ,, | ,, |

इति नवग्रहान् पूजयेत् । ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि — — पंचमावरणार्चनम् इति पुष्पांजलिं दत्वा विशेषार्घाद्बिंदुं भैरवोपरि दत्वा — — इति वदेत् ।। इति पंचमावरणम्

ततो भूपराभ्यन्तरे देवदक्षिणतः

| | |
|---|---|
| ओं पूजाविधिसिद्ध्यै | नमः |
| ,, रससिद्ध्यै | ,, |
| ,, स्वर्णसिद्ध्यै | ,, |

इति पूजयेत् ।। ततः पुष्पाजलिं गृहीत्वा मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि ... ... षष्ठमावरणार्चनम्" इति पुष्पांजलिं दत्वा विशेषार्घाद्बिंदुं भैरवोपरि दत्वा पूजितास्तर्पिताः संतु इति वदेत् ।। इति षष्ठावरणम् ।। ततो भूपुराद्बहिः देवतावामभागे—

अ  ओं भूतप्रेतपिशाचवेतालासुरेभ्यो नमः इति पूजयेत् ॥ इति सप्तमावरणम्

ततो भूपुरे इन्द्रादिदशदिक्पालान् तद्बाह्ये वज्राद्यायुधानि च पूजयेत् ॥ इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य देवं ध्यात्वा जपं कुर्यात् ॥ अस्य पुरश्चरणं लक्षजपः ॥ तथा च

"लक्षं जपेद्दशांशेन पायसैर्जुहुयात्सुधीः ॥
दशांशं तर्पयेत्पश्चाद्धोमयेच्च दशांशकम् ॥

ब्राह्मणान्भोजयेत्पश्चान्मंत्रसिद्धिर्न संशयः ॥
एवं सिद्धे कृते मंत्रे अयुतं प्रजपेन्मनुम् ॥

दारिद्र्यं दूरमुत्क्षिप्य जायते धनदोपमः ॥
करवीरैर्जातिपुष्पैर्जपादाडिमसंभवैः ॥

रक्तप्रसूनैर्जुहुया त्सौभाग्यं च समश्नुते ॥
सिद्धद्रव्येन जुहुयाल्लभ्यते चाष्टसिद्धयः ॥

पायसेनापि जुहुयाल्लभ्यते सकलं फलम् ॥
आज्यं च जुहुयाद्देवि ऐहिकामुष्मिकं फलम् ॥

मंत्रसिद्धिं च लभते चंदनादीन्धनैः क्रमात् ॥
इति स्वर्णाकर्षणभैरवसप्तपंचाशदक्षरमन्त्रपुरश्चरणप्रयोगः ॥

—

# वीरसाधनपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवताः पद्धति प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत् ।

ततः पुर्वादिदिक्षु रक्षाबीजमंत्रान् पठेत् ॥

ओं ह्रां ह्रीं ह्रूं ह्रः नमः पूर्वे
" " ह्रों " आग्नेये
" ह्रीं श्रीं " दक्षिणे
ग्लूं ब्लूं नगनग " नैर्ऋत्ये
" प्रूं प्रूं प्रूं संसः पश्चिमे
" श्रां श्रां नमः वायव्ये

ओं भ्रां भ्रां भैरवाय नमः उत्तरे
" व्रां व्रं म्रं फट् " ऐशान्ये
" ग्लौं ब्लं " ऊर्ध्वे
" घ्रां घ्रं घ्रः " अधोदेशे

इति पठन् नमस्कुर्यात् ॥ ततः प्राचीक्रमेण

ओं असितांगभैरवाय नमः
" रुरुभैरवाय "
" चण्डभैरवाय "
" क्रोधभैरवाय "
" उन्मत्तभैरवाय "
" कपालभैरवाय "
" भीषणभैरवाय "
" संहारभैरवाय "

इत्यष्टौ भैरवान् पूजयेत् ॥ ततः षोडशदले प्राच्यादिक्रमेण

ओं कुलिशाय "
" सुकुलिशाय "
" जामित्राय "
" रामठाय "
" अरिभाय "
" प्रचण्डाय "
" चण्डकेशाय "
" चण्डात्मने "
" चामराय "
" चरित्राय "
" चमत्काराय "
" चंचलाय "
" चारुभूषणाय "
" चामीकराय "
" चारुबाहाय "
" चारुबाहांकिताय "

इति बटुके षोडशमित्राणि पूजयेत् ॥ तद्बहिरष्टदलेषु प्राच्यादिक्रमेण

ओं ब्राह्म्यै ”
” माहेश्वर्यै ”
” कौमार्यै ”
” वैष्णव्यै ”
” वाराह्यै ”
” नारसिंह्यै ”
” चामुंडायै ”
” चंडिकायै ”

इत्यष्टौ मातृकाः पूजयेत् ॥ ततो भूपुरे पूर्वादिक्रमेण इन्द्रादि-दशदिक्पालान् वज्राद्यायुधानि च सपूज्य पुनः मध्ये श्रीवटुकभैरवं धूपादिनमस्कारांतं पूजयित्वा पायसनैवेद्यं दत्त्वा अक्षतानादाय स्थापितयंत्रदेवतामंडले विकिरन् वीरशन्ति पठेत् तथा च-

ओं श्मशानदेशे ये वीराः शिरस्यादाय शासनम्
मम स्थिता निकृंतंति साधकानां मनोरथान् ॥
अपूजिताः पूजितास्ते सर्वकामफलप्रदाः ॥
ततः पुरश्चरेण होमादिकं वटुकभैरवविधानवत् ।

—

# अथ क्षेत्रपालपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत् ।

ततः पीठादौ रचिते सर्वतोभद्रमंडले मंडूकादिपरतत्त्वांतपीठदेवताः संस्थाप्य "ओं मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः" इति संपूजयेत् ॥ अस्य पीठशक्त्यादेरभावः ॥ ततः स्वर्णादिनिर्मितं यंत्रं मूर्तिं वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्यावाहनादि पुष्पांतैरुपचारैः संपूज्यावरणपूजां कुर्यात् ॥ तद्यथा षट्कोणकेसरेषु आग्नेयादि-चतुर्दिक्षु मध्ये दिक्षु च

ओं क्षां हृदयाय नमः—हृदयश्रीपादुकां पूजयामि तर्पयामि नम इति सर्वत्र

„ क्षीं शिरसे स्वाहा— „ „ „

„ क्षूं शिखायै वषट्

„ क्षैं कवचाय हुम्

„ क्षौं नेत्रत्रयाय वौषट्

„ क्षः अस्त्राय फट्

इति षडंगानि पूजयेत् ॥ ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि शरणागतवत्सल ——————— प्रथमावरणार्चनम् । इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् ॥ इति प्रथमावरणम् ॥ ततोऽष्टदले पूज्यपूजकयोरंतराले प्राचीं तदनुसारेणान्या दिशः प्रकल्प्य प्राचीक्रमेण

ओं अग्निलाख्याय नमः

„ अग्निकेशाय „

„ करालाय „

„ घंटारवाय „

„ महाकोपाय „

„ पिशिताशनाय „

„ पिंगालाक्षाय „

„ ऊर्ध्वकेशाय „

इत्यष्टौ पुष्पांजलिं च दद्यात् ॥ ततः भूपुरे पूर्वादिक्रमेण इन्द्रादीन् दशदिक्पालान् वज्राद्यायुधानि च संपूज्य बलिं च दद्यात् ॥ अस्य पुरश्चरणं लक्षजपः । तत्तद्दशांशेन होमतर्पणमार्जनब्राह्मणभोजनं कुर्यात् ॥ एवं कृते क्षेत्रपालः प्रसन्नो भवति । तथा च—

"लक्षमेकं जपेन्मंत्रं जुहुयात्तद्दशांशतः ॥
चरुणा घृतसिक्तेन ततः क्षेत्रे समर्पयेत् ॥
बलिनानेन संतुष्टः क्षेत्रपालः प्रयच्छति ।
कांतिर्मेधाबलारोग्ये तेजः पुष्टिशः श्रियः"

इति क्षेत्रपालनवाक्षरमंत्रप्रयोगः

—

# अथ कामदेवबीजमंत्रप्रयोगः

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत् ।

ततः पीठादौ रचिते सर्वतोभद्रमंडले मंडूकादिपरतत्त्वांत पीठदेवताः संस्थाप्य "ओं मं मंडूकादिपरतत्वांतपीठदेवताभ्मो नमः "इति संपूज्य नव पीठ शक्तीः पूजयेत् ॥ पूर्वादिक्रमेण

ओं मोहिन्यै ,,
,, क्षोपिण्यै ,,
,, त्रास्यै ,,
,, स्तंभिन्यै ,,
,, कर्षिण्यै ,,
,, द्राविण्यै ,,
,, आह्लादिन्यै ,,
,, क्लिन्नायै ,,
मध्ये ओं क्लेदिन्यै ,,

इति पूजयेत् । ततः स्वर्णादिनिर्मितं यत्रं ताम्रपात्रे निधाय घृतेनाभ्यर्च्य तदुपरि दग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य 'ओं क्लीं मकरध्वजाय सर्वसंमोनहनशक्ताय पद्मासनाय नमः" इति मंत्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वाऽऽवाहनादिपुष्पांतैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्यात् ॥ तद्यथा— पुष्पांजलिमादाय"

ओं संविन्मयः परो देवः परामृतरसप्रियः ॥
अनुज्ञां देहि मे काम परिवारार्चनाय मे ॥

इति पठित्वा पुष्पाजलिं च दद्यात् ॥

इत्याज्ञां गृहीत्वाऽऽवरणपूजामारभेत् । षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च

ओं क्लां हृदयाय नमः
,, क्लीं शिरसे स्वाहा
,, क्लूं शिखायै वषट्
,, क्लैं कवचाय हुम्

" क्लौं नेत्रत्रयाय वौषट्

" क्लः अस्त्राय फट्

इति षडंगानि पूजयेत् ॥ ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि — — प्रथमावरणार्चनम् ॥

इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् ॥ इति प्रथमावरणम् ॥ तदग्रेषु

ओं ह्रां शोषणाय नमः
" ह्रीं मोहनाय "
" सं दीपनाख्यक्रीडाय "
" ब्लूं तापनाय "
" मादनाय "

इति पंच बाणान् पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति द्वितीयावरणम् । ततोऽष्टदले पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण

ओं कामाय नमः
" भस्मशरीराय "
" अनंगाय "
" मन्मथाय "
" वसंतसखाय "
" स्मराय "
" इक्षुधनुर्धराय "
" पुष्पबाणाय "

इत्यष्टौ नामभिः पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति तृतीयावरणम् ॥ ततोऽष्टदलाग्रेषु वामावर्तेन

ओं अनंगरूपायै "
" अनंगमदनायै "
" अनंगमन्मथायै "
" अनंगकुसुमायै "
" अनंगकुसुमातुरायै "
" अनंगशिशिरायै "
" अनंगमेखलायै "
" अनंगदीपकायै "

इत्यष्टौ शक्तीः पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति चतुर्था-वरणम् ॥ ततः षोडशदल प्राचीक्रमेण वामावर्तेन

ओं युवत्यै ,,
,, विप्रलंभायै नमः
,, ज्योत्स्नायै ,,
,, सुभ्रुवे ,,
,, मदद्रवायै ,,
,, सुरतायै ,,
,, वरुण्यै ,,
,, लोलायै ,,
,, कान्त्यै ,,
,, सौदामिन्यै ,,
,, कामच्छत्रायै ,,
,, चन्द्रलेखायै ,,
,, शुक्त्यै ,,
,, मदनायै ,,
,, योन्यै ,,

ओं मायावत्यै नमः ... — इति संपूज्य पुष्पांजलिं च दद्यात् । इति पंचमावरणम् ॥ ततः षोडशदलाग्रेषु

ओं शोकाय ,,
,, मोहाय ,,
,, विलासाय ,,
,, विभ्रमाय ,,
,, मदनातुराय ,,
,, अपजयाय ,,
,, युवाकामाय ,,
,, चूतपुष्पाय ,,
,, रतिप्रियाय ,,
,, ग्रीष्मांतकराय ,,
,, उज्जयिने ,,
,, हेमंते शिशिरोन्मदाय ,,
,, इक्षुचापधराय ,,
,, पुष्पबाणहस्ताय ,,
,, रक्तभूषाय ,,

ओं वनितासक्तमानसाय नमः — — इति पूजयित्वा पुष्पांजलिं च दद्यात्
इति षष्ठावरणम् ॥ ततोऽष्टदले प्राच्यादिचतुर्दिक्षु

ओं भावाय ”
” कटाक्षाय ”
आग्नेयादि चतुष्कोणेषु
” भ्रूविलासाय ”
” माधव्यै ”
” मरलत्यै ”
” हरिणाक्षयै ”
” मदोत्कटायै ”

इति पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति सप्तमावरणम् । ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् इत्यावरणपूजां कृत्वा धूपदीपनमस्कारांतं संपूज्य पुष्पांजल्यष्टकं दद्यात् ॥

तत्र मंत्रः

ओं नमोऽस्तु पुष्पबाणाय जगदानंदकारिणे ॥
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रदायिने ॥
इति पुष्पांजल्यष्टकं दत्त्वा करौ बद्ध्वा प्रार्थयेत् ॥

तत्र मंत्रः

ओं देवदेव जगन्नाथ वाञ्छितार्थप्रदायक ॥
कृत्स्नान्पूरय मे स्वर्थान्कामान्कामेश्वरीप्रिय ॥

इति संप्रार्थ्य जपं कुर्यात् ॥ अस्य पुरश्चरणं त्रिलक्षजपः ॥ तत्तद्दशांशेन होमतर्पणमार्जनब्राह्मणभोजनं च कुर्यात् ॥ एवं कृते मंत्रः सिद्धो भवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

—०—

# अथ वरुणपूजनयंत्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रकारेण पात्रासाधनानि पूरयित्वा ततः, एतदावरणपूजां आरभेत्

ततः पीठादौ रचिते सर्वतोभद्रमंडले मंडूकादिपरतत्वांतपीठदेवताः संस्थाप्य "ओं मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः" इति संपूजयेत् । अस्य पीठशक्त्यादेरभावः ॥ ततऽ स्वर्णादिनिर्मितं यंत्रं मूर्तिं वा ताम्रपात्रे निधाय घृतेनाभ्याच्यं तदुपरि दुग्धधारां जलधारां च दत्वा स्वच्छवस्त्रेण संशोष्य पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादि-पुष्पांतैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्यात् ॥ तद्यथा—षट्कोण-केसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च

| | | |
|---|---|---|
| ओं | हृदयाय | नमः पूजयामि तर्पयामि नमः । इति सर्वत्र |
| " | शिरसे स्वहा | |
| " | शिखायै वषट् | |
| " | कवचाय हुम् | |
| " | नेत्रत्रयाय वौषट् | |
| " | अस्त्राय फट् | |

इति षडंगानि पूजयेत् ॥ ततः पुष्पांजलिमादाय "ओं अभीष्ट-सिद्धिं मे ... ... प्रथमावरणार्चनम् ॥ इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः सन्तु इति प्रथमावरणाम् ॥ ततोऽष्टदलेषु पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | शेषाय | नमः |
| " | वासुकये | " |
| " | तक्षकाय | " |
| " | कर्कोटकाय | " |
| " | पद्माय | " |
| " | महापद्माय | " |
| " | शंखपालाय | " |
| " | कुलिकाय | " |

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति द्वितीयावरणम् ततो भूपुरे इन्द्रादिदशदिक्पालकान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् ॥ इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणमेकलक्षजपः । तत्तद्दशांशेन होमतर्पणमार्जनब्राह्मणभोजनं च कुर्यात् ॥ एवं कृते मंत्रः सिद्धो भवति ॥ सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

# कुबेरपूजनयंत्रम्



प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रकारेण पात्रासाधनानि पूरयित्वा ततः एतदावरणपूजां आरभेत्

ततः पीठादौ रचिते सर्वतोभद्रमंडले धर्मादिपरतत्त्वांतपीठदेवताः संस्थाप्य "ओं धर्मादिपरतत्त्वांतपीठदेवताभ्यो नमः" इति पीठदेवताः संपूज्य ( अस्य पीठशक्त्यादेरेभावः ) ततः स्वर्णादिनिर्मितं यन्त्रं मूर्तिं वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोष्य पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्यावाहनादिपुष्पांतैरुपचारैः संपूज्य देवाज्ञयाऽऽवरणपूजां कुर्यात् तद्यथा पुष्पांजलिमादाय "ओं संविन्मयः परो देवः परामृतरसप्रिय ॥ अनुज्ञां देहि परिवारार्चनाय मे इति ॥ पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् ॥ इत्याज्ञां गृहीत्वावरणपूजामारभेत् ॥ तद्यथा- षट्कोणकेसरेषु आग्नेयादिचतुर्दिक्षु मध्ये दिक्षु च

ओं यक्षाय हृदयाय नमः इति सर्वत्र

" कुबेराय शिरसे स्वहा

" वैश्रवणाय शिखायै वषट्

" धनधान्याधिपतये कवचाय हुं

" धनधान्यसमृद्धिं मे नेत्रत्राय वौषट्

" देहि दापय अस्त्राय फट्

इति षडंगानि पूजयेत् ॥ ततः पुष्पांजलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे——प्रथमावरणार्चनम् । इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् ॥ इति : प्रथमावरणम् ॥ ततो भूपुरे इन्द्रादिदश-दिक्पालान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणं लक्षजपः । तिलाज्येन दशांशतो होमः । एवं कृते मंत्रः सिद्धो भवति । सिद्धे च मंत्री प्रयोगान् साधयेत् ।

—०—

## चन्द्रपूजनयन्त्रम्

प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत् ।

ततः सर्वतोभद्रमंडले सोमतोभद्रमंडले वा मं मंडूकादिसोमांतपीठ-देवताः संस्थाप्य "ओं मं मंडूकादिसोमांतपीठदेवताभ्यो नमः ॥" इति पीठ-देवताः संपूज्य तन्मध्ये ओं सौं सोमाय रोहिणीपतये नमः इति संपूज्य" रौप्यादि निर्मितं यंत्रमग्न्युत्तारणपूर्वकं"सौं सर्वशक्तिकमलासनाय नमः "इति मंत्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्राणप्रतिष्ठां कृत्वा पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्यावाहनादिपुष्पांतैरुपचारैः संपूज्य देवाज्ञां गृहीत्वाऽऽवरणपूजां कुर्यात् ॥ तत्र क्रमः षट्कोणकेसरेषु

| | | | |
|---|---|---|---|
| अग्निकोणे | ओं | सां | हृदयाय नमः |
| निर्ऋतिकोणे | " | सीं | शिरसे स्वाहा |
| वायव्ये | " | सूं | शिखायै वषट् |
| ऐशान्ये | " | सैं | कवचाय हुम् |
| पूज्यपूजकयोर्मध्ये | " | सौं | नेत्रत्रयाय वौषट् |
| देवतापश्चिमे | " | सः | अस्त्राय फट् |

इति षडंगानि पूजयेत् । ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टद्धिं मे — ... प्रथमावरणार्चनम् ॥

इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिता: सन्तुतु इति वदेत् इति प्रथमावरणम् ॥ ततोऽष्टदले पूज्यपूजकयोर्मध्ये प्राचीं तदनुसारेण अन्य दिश: प्रकल्प्य प्राचीक्रमेण वामावर्तेन च—

| | | |
|---|---|---|
| ओं | रोहिण्यै | नम: |
| " | कृत्तिकायै | " |
| " | रेवत्यै | " |
| " | भरण्यै | " |
| " | रात्र्यै | " |
| " | आर्द्रायै | " |
| " | ज्योत्स्नायै | " |
| " | कलायै | " |

इति पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति द्वितीयावरणार्चनम् ततोऽष्टदलाग्रेषु

| | | | |
|---|---|---|---|
| ओं | | आदित्याय | नम: |
| " | भौं | भौमाय | " |
| " | बुं | बुधाय | " |
| " | शं | शनैश्चराय | " |
| " | बृं | बृहस्पतये | " |
| " | रां | राहवे | " |
| " | शुं | शुक्राय | " |
| " | के | केतवे | " |

इत्यष्टौ ग्रहान् पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति तृतीयावरणम् । ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति चतुर्थावरणम् ॥

इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य जपं कुर्यात् । अस्या पुरश्चरणं षड्लक्षजप: । षड्सहस्रहोम: ॥ तत्र दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात् ॥ एवं कृते मंत्र: सिद्धो भवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

# शक्रपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवताः पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभे

ततः मानसोपचारैः संपूज्य सर्वतोभद्रमण्डले धर्मादिपरतत्त्वांतपीठ-देवताः पूजयेत्। ततः स्वर्णादिनिर्मितं मंत्रमूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य मूलेन मूर्ति प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात्। षट्कोणकेसरेषु आग्नेयादिचतुर्दिक्षु मध्ये दिक्षु च पूर्वोक्तषडंगन्यासमंत्रेण षडंगानि पूजयेत्। ततः पुष्पांजलिमादाय मूलमुच्चार्य "ॐ अभीष्टसिद्धिं मे ...प्रथमावरणार्चनम् नमः" इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति प्रथमावरणम्।

ततो भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च संपूज्य जपं कुर्यात्। अस्य पुरश्चरणमयुतजपः। तद्दशांशतो घृतहोमः। एवं कृते मंत्रः सिद्धो भवति। सिद्धे च मंत्रे मन्त्री प्रयोगान् साधयेत्।

---

# वेदव्यासपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः, एतदावरणपूजां आरभेत्

ततः सर्वतोभद्रमंडले धर्मादिपीठदेवताः संस्थाप्य "ओं धर्मादिपीठ-देवताभ्यो नमः" इति पूजयेत् ततः स्वर्णादिनिर्मितं यंत्रं मूर्तिं वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्यावाहनादि-पुष्पांतैरुपचारैः संपूज्यावरणपूजां कुर्यात्॥ तद्यथा षट्कोणकेसरेषु आग्नेयादि-चतुर्दिक्षु मध्ये दिक्षु च

ओं सर्वकर्मावरोधकाय ,,
,, लोहिताय ,,
,, लोहिताक्षाय ,,
,, सामगानां कृपाकराय ,,
,, धरात्मजाय ,,
,, कुजाय ,,
,, भैमाय ,,
,, भूतिदाय ,,
,, भूमिनन्दनाय ,,
,, अंगारकाय ,,
,, यमाय ,,
,, सर्वरोगप्रहारिणे ,,
,, सर्ववृष्टिकर्त्रे ,,
,, वृष्टिहर्त्रे ,,
,, सर्वरोगापहारकाय ,,

इत्येकविंशतिनामभिः प्रत्येककोष्ठे पूजयित्वा पुष्पांजलिं च दद्यात्। इति द्वितीयावरणम्। ततो यंत्रे पुर्वाद्यष्टसु दिक्षु।

ओं ब्राह्म्यै ,,
,, माहेश्वर्यै ,,
,, कौमार्यै ,,
,, वैष्णव्यै ,,
,, वाराह्यै ,,
,, इन्द्राण्यै ,,
,, चामुंडायै ,,
,, महालक्ष्म्यै ,,

इत्यष्टौ मातृकाः संपूज्य पुष्पांजलिं च दद्यात्। इति तृतीयावरणम्। ततो यंत्रे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि संपूज्य पुष्पांजलिं च दद्यात्। इति चतुर्थपंचमावरणम् "इत्यावरणपूजां कृत्वा धूपदीपगोधूमान्ननैवेद्यतांबूलदक्षिणानीराजनादिभिः संपूज्य अर्घ्यं दद्यात्। तद्यथा जलपूर्णे ताम्रपात्रे गंधपुष्पाक्षतफलानि च निक्षिप्य जानुभ्यामवनीं गत्वा

"ओं भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः।
सुतार्थिनी प्रपन्ना त्वां गृहाणार्घ्यं नमोऽस्तुते।

रक्तप्रवालसंकाश जपाकुसुमसन्निभ ।
महीसुत महाबाहो गृहाणार्घ्यं नमोस्तु ते ।

इति मंत्रद्वयेनार्घ्यं दत्त्वा पूर्वोक्तैरेकविंशतिनामभिस्तावती प्रदक्षिणाः कृत्वा साष्टांगं प्रणम्य यथासंख्यं मूलमंत्रं जपित्वा रेखामार्जनं कुर्यात् । तद्यथा-खदिरांगारकेण रेखात्रयं समं कृत्वा ततः

"दुःखदौर्भाग्य नाशाय पुत्रसंतानहेतवे ।
कृतरेखात्रयं वामपादेनैतत्प्रमार्ष्ट्यहम् ।
ऋणदुःखविनाशाय मनोऽभीष्टार्थ सिद्धये ।
मार्जयाम्यसिता रेखास्तिस्रो जन्मत्रयोद्भवाः । इति मंत्रद्वयेन वाम-पादेन मार्जयेत् । इति रेखामार्जनम् ॥ पुष्पांजलिमादाय ओं

धरणीगर्भसंभूतं विद्युत्तेजः समप्रभम् ।
कुमारं शक्तिहस्तं च मंगळं प्रणमाम्यहम् ।

ऋणहर्त्रे नमस्तुभ्यं दुःखदरिद्र्यनाशिने ॥
नमामि द्योतमानाय सर्वकल्याणकारिणे ।

देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
सुखं यांति यतस्तस्मै नमो धरणिसूनवे ।

यो वक्रगतिमापन्नो नृणां विघ्नं प्रयच्छति ।
पूजितः सुखसौभाग्यं तस्मै क्ष्मासूनवे नमः ।

प्रसादं कुरु मे नाथ मंगलप्रद मंगल ।
मेषवाहन रुद्रात्मन्पुत्रान् देहि धनं यशः ।

इति संप्रार्थ्य पुष्पांजलिं दद्यात् । ततो ब्राह्मणान्संपूज्य गुरवे दक्षिणां दत्त्वा पूजायां निवेदितान्नं भक्षयेत् । अस्य पुरश्चरणं षड्लक्षजपः । समाप्ते व्रते सर्वतोभद्रमंडलमध्ये ताम्रकलशं यथाविधि संस्थाप्य तत्र स्वर्णमयीं भौमप्रतिमां संपूज्य तदैशान्यां स्थंडिले अग्निं प्रतिष्ठाप्य आघारा-वाज्यहोमं कृत्वा मूलमन्त्रेणाज्यमिश्रितखदिरसमिद्भिर्दशांशतो जुहुयात् ॥ ततः पूर्णपात्रदानांतं होमशेषं समाप्य स्वर्णमूर्त्यादिकमाचार्याय दत्त्वा पश्चाद्ब्राह्म-णान् गोधूमान्नेन भोजयेत् । एवं कृते मंत्रः सिद्धो भवति । सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

# बृहस्पतिपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवताः पद्धति प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत्।

ततः सर्वतोभद्रमंडले धर्माधर्मादिपीठान्तं पीठदेवताः संस्थापयेत्। अत्र पीठशक्तयो न संति। ततः स्वर्णादिनिर्मितं यंत्रं मूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोष्य पुष्पाद्यासनं पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा पाद्यादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा—षट्कोणकेसरेषु आग्नेयादिचतुर्दिक्षु मध्ये दिक्षु च।

| | | | |
|---|---|---|---|
| ओं | ब्रां | हृदयाय नमः | इति सर्वत्र |
| ,, | ब्रीं | शिरसे स्वहा | |
| ,, | ब्रूं | शिखायै वषट् | |
| ,, | ब्रैं | कवचाय हुम् | |
| ,, | ब्रौं | नेत्रत्रयाय वौषट् | |
| ,, | ब्रः | अस्त्राय फट् | |

इति षडंगानि पूजयेत् ॥ ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि — — प्रथमावरणार्चनम् ॥

इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत् इति प्रथमावरणम् ॥ ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालकान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् ॥ इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणमशीतिसहस्रजपः। तद्दशांशतो घृतहोमः। एवं कृते मंत्रः सिद्धो भवति। सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत्

# भौमपूजनयंत्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत् ॥

ततः पीठादौ रचिते सर्वतोभद्रमंडले लिंगतोभद्रमंडले वा मंडूकादि-परतत्वांतपीठदेवताः संस्थाप्य ओं मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः" इति संपूज्य तत्र पीठशक्तीः पूजयेत् ॥ तद्यथा पूर्वादिक्रमेण ओं वामायै नमः... मध्ये ओं मनोन्मन्यैः नमः ॥ इति पूजयेत् ॥

ततः स्वर्णपात्रे ताम्रपात्रे वा एकविंशति त्रिकोणात्मकं यन्त्रं रक्तचन्दननिर्मितां प्रतिमां वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य "ॐ सकलगुणात्मशक्तियुक्ताय भूमिपुत्राय योगपीठात्मने नमः" इति मंत्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्राणस्थापनं कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य "ॐ अंगारकाय विद्महे शक्तिहस्ताय धीमहि । तन्नो भौमः प्रचोदयात् " इति भौमगायत्र्या आवाहनादिरक्तगंधाक्षतरक्त-पुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् । तद्यथा यंत्रे अग्न्यादिचतुर्दिक्षु मध्ये दिक्षु च

| | | | |
|---|---|---|---|
| ॐ | ॐ | भौमाय | हृदयाय नमः इति सर्वत्र ॥ |
| ॐ | ह्रां | भौमाय | शिरसे स्वाहा |
| ,, | ह्रां | भौमाय | शिखायै वैषट् |
| ,, | सः | ,, | कवचाय हुम् |
| ,, | खं | ,, | नेत्रत्रयाय वौषट् |
| ,, | खः | ,, | अस्त्राय फट् |

इति षडंगानि पूजयेत् । ततः पुष्पांजलिमादाय मूलमुच्चार्य "ओं अभीष्टसिद्धिं मे ....— प्रथमावरणार्चनम् इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् । ततो यंत्रे पूज्यपूजकयोरंतराले प्राचीतः तदनुसारेण दिशः प्रकल्प्य प्राचीक्रमेण दक्षिणावर्तेन च ।

| | | |
|---|---|---|
| ॐ | मंगलाय | नमः |
| ,, | भूमिपुत्राय | ,, |
| ,, | ऋणहर्त्रे | ,, |
| ,, | धनप्रदाय | ,, |
| ,, | स्थिरासनाय | ,, |
| ,, | महाकायाय | ,, |

ओं व्यां हृदयाय नमः इति सर्वत्र
„ व्यीं शिरसे स्वहा
„ व्यूं शिखायै वषट्
„ व्यैं कवचाय हुम्
„ व्यौं नेत्रत्रयाय वौषट्
„ व्यः अस्त्राय फट्

इति षडंगानि पूजयेत् ॥ ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं मे देहि शरणागतवत्सल ———————— प्रथमावरणार्चनम् । इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत् ॥ इति प्रथमावरणम् ॥ ततोऽष्टदले पूज्यपूजकयोरंतराले प्राचीं तदनुसारेणान्या दिशः प्रकल्प्य प्राच्यादिचतुर्दिक्षु दक्षिणावर्तेन च

ओं शल्याय नमः
ओं वैशम्पायनाय नमः
„ जैमिनेयाय „
„ सुमन्ताय „
„ आग्नेय्यादिचतुष्कोणेषु ॐ श्रीशुकाय „
„ उग्रश्रवसे „
„ समन्याय „
„ चिमनाय „

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् ॥ इति द्वितीयावरणम् ततो भूपुरे इन्द्रादिदशदिक्पालकान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् ॥ इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् ॥ अस्य पुरश्चरणमयुतजपः । पायसान्नेन दशांशतो होमः एवं कृते मंत्रःसिद्धो भवति ॥ सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् ।

—

# कार्तवीर्यार्जुनपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत् ॥

ततः पीठादौ रचिते सर्वतोभद्रमंडले मंडूकादिपरतत्त्वांतपीठदेवताः संस्थाप्य "ओं मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः "इति संपूज्य नव पीठशक्तीः पूजयेत् ॥ तद्यथा पूर्वादिक्रमेण मध्ये अनुग्राह्यै नमः

इति पूजयेत् । ततः स्वर्णादिनिर्मितं यन्त्रं ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य 'ओं नमो भगवते कार्तवीर्यार्जुनाय पद्मपीठात्मने नमः इति मंत्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वाऽऽवाहनादिपुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् ॥ तद्यथा—षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च

ओं फ्रां च्रां हृदयाय नमः
" क्लीं भ्रीं शिरसे स्वहा
" ॐ हू शिखायै वषट्
" फ्रैं श्रैं कवचाय हुम्
" नेत्रत्रयाय वौषट्
" ॐ हुं फट् अस्त्राय फट्
" कार्तवीर्यार्जुनाय नमः सर्वाण्यङ्गानि

इति षडंगानि पूजयेत् ॥ ततः पुष्पांजलिमादाय मूलमुच्चर्य "ओं अभीष्टसिद्धिं मे ... ... प्रथमावरणार्चनम् ॥ इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः सन्तु इति वदेत् प्रथमावरणाम् ॥ ततोऽष्टदलेषु पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राच्यादिचतुर्दिक्षु

ओं चोरमदविभंजनाय नमः
" मारीमदविभंजनाय "
" अरिमदविभंजनाय "
" दैत्यमदविभंजनाय "
" आग्नेयादिकोणेषु ॐ दुःखनाशनाय नमः
" दुष्टनाशाय "
" दुरितनाशाय "
" रोगनाशकाय "

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम् ।

ओं क्षेमंकर्यै नमः
" वश्यकर्यै "
" श्रीकर्यै "

„ यश-कर्ये ”

„ आयुष्कर्ये ”

„ प्रज्ञाकर्ये ”

„ विद्याकर्ये ”

„ धनकर्ये ”

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् ।। इति तृतीयावरणम् ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् इत्यावरणपूजां कृत्वा धूपदीपनमस्कारांतं संपूज्य जपं कुर्यात् अस्य पुयश्चरणमेकलक्षजपः तिलतंडुलपायसेन दशांशतो होमः । एवं कृते मंत्र- सिद्धो भवति सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत्

---

# गरुडपूजनयंत्रम्

प्रतमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवताः पद्धतिप्रकोरण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत् ।

ततः मातृकापद्मपीठे "ॐ पक्षिराजय स्वाहा" इति मंत्रेणासनं दत्वा पीठमध्ये संस्थाप्य पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य पाद्यादिपुष्पान्तैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्यात् । तद्यथा–पुष्पांजलिमादाय

"संविन्मयः परो देवः परामृतरसप्रियः
अनुज्ञां देहि गरुड परिवारार्चनाय मे" ।

इति पठित्वा पुष्पांजलिं च दद्यात् । इत्याज्ञां गृहित्वा आवरणपूजाम ारभेत् । ततः षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च ।

ओं ज्वल ज्वल महामते स्वाहा

„ गरुडचूडानने स्वाहा शिरः

„ गरुडशिखे स्वाहा

„ गरुड प्रभंजय प्रभेदय, त्रासय, विमर्दय स्वाहा

„ उग्ररूपधर सर्वविषहर भीषय सर्वं दह, भस्मीकुरु स्वाहा

„ अप्रतिहतबलाप्रतिहतशासन हुं फट् स्वाहा

इति षडंगानि पूजयेत् । ततः पुष्पांजलिमादाय मूलमुच्चार्य "अभीष्टसिद्धि……प्रथमावरणार्चनम् ।"

इति पठित्वा पुष्पांजलिं च दत्वा पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणम् । ततोऽष्टदले पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण दक्षिणावर्तेन च ।

ओं अनंदाय नमः
" वासुकये "
" तक्षकाय "
" कर्कोटकाय "
" पद्माय "
" महापद्माय "
" शंखपालाय "
" कुलिकाय "

इत्यष्टौ नागान् पूजयित्वा पुष्पांजलिं च दद्यात् । इति द्वितीयावरणम् । ततो भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् ।

अस्य पुरश्चरणं पंचलक्षजपः । तद्दशांशतस्तिलाज्यहोमः । एवं कृते मन्त्रः सिद्धो भवति । सिद्धे च मन्त्रे मंत्रीं प्रयोगान् साधयेत् ।

—

# चरणायुधपूजनयन्त्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवताः पद्धतिप्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत् ॥

ततः पीठादौ रचिते सर्वतोभद्रमंडले लिंगतोभद्रमण्डले वा मंडूकादि परतत्वांतपीठदेवताः संस्थाप्य "ओं मंडूकादि परतत्वांतपीठदेवताभ्यो नमः" इति पीठदेवताः संपूज्य नव पीठशक्तीः पूजयेत् ॥ तद्यथा—पूर्वादिक्रमेण

ओं वामायै नमः
" ज्येष्ठायै "
" रौद्र्यै "
" काल्यै "
" कलविकरिण्यै "
" बलविकरिण्यै "

„ बलप्रमथिन्यै „

„ सर्वभूतदमन्यै „

मध्ये ओं मनोन्मन्यै „ इति पूजयेत् । ततः स्वर्णादिनिर्मितं यंत्रं वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छ-वस्त्रेण संशोध्य "ओं नमो भगवते सकलगुणात्मशक्तियुक्ताय चरणायुधाय योग-पीठात्मने नमः" इति मंन्त्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य कुक्कुटाज्ञां गृहीत्वा आवरणपूजां आरभेत् ।। तद्यथा—षट्कोणकेसरेषु आग्नेयादि चतु-र्दिक्षु मध्ये दिक्षु च ।

| | | | |
|---|---|---|---|
| ओं | आं | यूं | कोलि हृदयाय नमः |
| „ | | „ | „ शिरसे स्वहा |
| „ | वां | ह्रीं | „ शिखायै वषट् |
| „ | यूं | | „ कवचाय हुम् |
| „ | „ | | नेत्रत्रयाय वौषट् |
| „ | „ | चुवा | क्त्रों अस्त्राय फट् |

इति षडंगानि पूजयेत् ।। ततः पुष्पांजलिमादाय मूलमुच्चार्य ओं अभीष्टसिद्धिं ...... प्रथमावरणार्चनम् ।

इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् ।। इति प्रथमावरणम् ।। ततोऽष्टदले पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | शंकराय | नमः |
| „ | गौर्यै | „ |
| „ | गणपतये | „ |
| „ | कार्तिकेयाय | „ |
| „ | मंदाराय | „ |
| „ | पारिजाताय | „ |
| „ | मयूराय | „ |
| „ | बर्हिणे | „ |

इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम् । दलाग्रेषु इन्द्राद्यष्टलोकपालान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् ।

इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य बलिं दद्यात्। तद्यथा दधि-दुग्धमधुकर्पूरसितातांबूलमिश्रितं पायसेन पिंडं कृत्वा गन्धाक्षतपुष्पैः संपूज्य दीपं निधाय ओं यूं क्षं ह्रौं कुक्कुट कुक्कुट एह्येहि इमं बलिं गृहाण गृह्णापय सर्वान्कामान्देहि यं कुं ह्रीं युं नमः कुक्कुटाय'' इति मंत्रेण निवेदयेत्। इति बलिं दत्वा हस्तौ पादौ प्रक्षाल्य पुनर्ध्यात्वा जपं कुर्यात्। अस्य पुरश्चरणं लक्षजपः तिलाज्येन दशांशतो होमः। तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं च कुर्यात्। एवं कृते मंत्रः सिद्धो भवति सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत्

---

# सन्तानगोपालपूजनयंत्रम्

प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवताः पद्धति-प्रकारेण पात्रासाधनानि पूरयित्वा ततः एतत् आवरणपूजां आरभेत्।

ततः पीठादौ रचिते सर्वतोभद्रमंडले मंडूकादिपरतत्त्वांतपीठदेवताः पद्धतिमार्गेण संस्थाप्य ओं मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः" इति संपूज्य नव पीठशक्तीः पूजयेत्॥ तथा च ओं विमलायै नमः —— मध्ये अनुग्रहायै नमः इति पूजयेत्। ततः स्वर्णादिनिर्मितं यंत्रं मूर्तिं वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण संशोध्य "ओं नमो भगवते श्रीगोपालाय सर्वभूतात्मने वासुदेवाय सर्वात्मसंभोगपद्मपीठात्मने नमः" इति मंत्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादि पुष्पांतैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्यात्॥ तथा च पुष्पांजलिमादाय मूलमुच्चार्य

ओं संविन्मयः परो देवः परामृतरसप्रियः
अनुज्ञां देहि गोपाल परिवारार्चनाय मे॥

इति पठित्वा पुष्पांजलिं च दत्त्वा विशेषार्घ्यबिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्। इत्याज्ञां गृहीत्वा आवरणपूजामारभेत्। तथा च षट्कोणकेसरेषु आग्नेयादिचतुर्दिक्षु मध्ये दिक्षु च

| | | |
|---|---|---|
| ओं | देवकीसुत हृदयाय | नमः |
| " | गोविन्द शिरसे स्वाहा | |
| " | वासुदेव शिखायै वषट् | |
| " | जगत्पते कवचाय हुम् | |
| " | देहि मे तनयं कृष्ण नेत्रत्रयाय वौषट् | |
| " | त्वामहं शरणं गतः अस्त्राय फट् | |

इति षडंगानि पूजयेत् । ततः पुष्पांजलिमादाय मूलमन्त्र मुच्चार्य "ॐ अभीष्टसिद्धि......... प्रथमावरणार्चनम् । इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् । इति प्रथमावरणम् । ततः पूज्य-पूजकयोरन्तराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्याष्टदले प्राच्यादिक्रमेण

| | | |
|---|---|---|
| ओं | कालिंद्यै | नमः |
| " | नाग्नजित्यै | " |
| " | मित्रविंदायै | " |
| " | चारुहासिन्यै | " |
| " | रोहिण्यै | " |
| " | जांबवत्यै | " |
| " | रुक्मिण्यै | " |
| " | सत्यभामायै | " |

इत्यष्टौ पट्टराज्ञीः पूजयित्वा पुष्पांजलिं च दद्यात् ।। इति द्वितीया-वरणम् । ततोऽष्टदलाग्रेषु प्राचीक्रमेण ।

| | | |
|---|---|---|
| ओं | ऐरावताय | " |
| " | पुंडरीकाय | " |
| " | वामनाय | " |
| " | कुमुदाय | " |
| " | अंजनाय | " |
| " | पुष्पदंताय | " |
| " | सार्वभौमाय | " |
| " | सुप्रतीकाय | " |

इत्यष्टौ दिग्गजान् पूजयित्वा पुष्पांजलिं च दद्यात् । इति तृतीया-वरणम् । ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च संपूज्य पुष्पांजलिं च दद्यात् । इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात् । अस्य पुरश्चरणं लक्षजपे पुत्रप्राप्तिर्भवति । तथा च

लक्षं जपोऽयुतं होमस्तिलैर्मधुरसंयुतैः

अर्चा पूर्वोदिताचैव मन्त्रः पुत्रप्रदो नृणाम् ।

इति संतानगोपालमंत्रपुरश्चरणप्रयोगः ।

# ब्रह्मगायत्रीपूजनयन्त्रम्

पीठ दौ रचितो सर्वतोभद्रमण्डले मंडूकादिपरतत्त्वातपीठदेवता: संस्थाप्य पूजयित्वा नवपीठशक्तीः पूजयेत् । पूर्वाद्यष्टदिक्षु अन्ते मध्ये च

| | | | |
|---|---|---|---|
| ओं | रां | दीप्तायै | नमः |
| " | रीं | सूक्ष्मायै | " |
| " | रूं | जयायै | " |
| " | रें | भद्रायै | " |
| " | रैं | विभूत्यै | " |
| " | रों | विमलायै | " |
| " | रौं | अमोघायै | " |
| " | रं | विद्युतायै | " |
| " | रः | सर्वतोमुख्यै | " |

ओं ब्रह्मविष्णुरुद्रबिम्बात्मकाय सौराय योगपीठाय नमः तत्र मूर्ति प्रकल्प्य

ओं आगच्छ वरदे देवि त्र्यक्षर ब्रह्मवादिनि

गायत्रीं छन्दसां माता ब्रह्मयोने नमोऽस्तु ते ।। इति मन्त्रेण आवाह्य गायत्रीमूलमन्त्रेण पाद्यादिपुष्पान्तैरुपचारैः संपूज्य

ओं संविन्मयः परो देवः परामृतरसप्रियः ।
अनुज्ञां देहि मे कामं परिवारार्चनाय मे ।। इति संपूज्य गृहीत्वा आवरण पूजां आरभेत् ।

प्रथमावरणम् — मध्यत्रिकोणस्य पूर्वनैर्ऋति वायुकोणेषु

| | | |
|---|---|---|
| ओं | गायत्र्यै | नमः |
| " | सावित्र्यै | " |
| " | सरस्वत्यै | " |

अभीष्टसिद्धिं — मे —... इति श्लोकेन पुष्पांजलिं दद्यात् ।

द्वितीयावरणम् — त्रिकोणाद्बहि वर्तुलान्ते

| | | |
|---|---|---|
| ओं | ब्राह्मणे | नमः |
| " | विष्णवे | " |
| " | रुद्राय | |

अभीष्टसिद्धिं—मे

तृतीयावरणम् प्रथमवर्तुले अष्टदलेषु पूर्वादिक्रमेण चतुर्दिक्षु

| | | |
|---|---|---|
| ओं | आदित्याय | नमः |

" माणवे "

" भास्कराय "

ओं रवये नमः आग्नेय्यादि चतुष्कोणेषु

" उषायै नमः

" प्रज्ञायै "

" प्रभायै "

" सन्ध्यायै "

इति पूजयेत्। अभीष्टसिद्धिं मे

चतुर्थावरणम् बहिर्वर्तुले अष्टदलेषु प्राच्यादिक्रमेण

ओं प्रह्लादिन्यै नमः

" प्रभायै "

" नित्यायै "

" विश्वंभरायै "

" विशालिन्यै "

" प्रभावत्यै "

" भयायै "

" शान्त्यै "

इति पुष्पांजलिं – अभीष्टसिद्धिं ... ...

पंचमावरणम् अष्टदलेषु प्राच्यादिक्रमेण

ओं कान्त्यै "

" दुर्गायै "

" सरस्वत्यै "

" विश्वरूपायै "

" विशालायै "

" ईशायै "

" व्यापिन्यै "

" विमलायै "

इति पूजयेत् अभीष्टसिद्धिं —मे

षष्ठावरणम् — अष्टदलमध्येषु प्राचीक्रमेण

ओं अपहारिण्यै नमः
" सूक्ष्मायै "
" विश्वयोन्यै "
" जयावहायै "
" पद्मालयायै "
" वरायै "
" शोभायै "
" पद्मरूपायै "

इति पूजयेत् अभीष्टशिद्धिं — मे

सप्तमावरणम् - अष्टदलाग्रेषु प्राचीक्रमेण

ओं आं ब्राह्मयै नमः
" ई माहेश्वर्यै "
" ऊं कौमार्यै "
" ॠं वैष्णव्यै "
" ॡं वाराह्यै "
" ऐं इन्द्राण्यै "
" औं चामुण्डायै "
" अः महालक्ष्म्यै "

इति पूजयेत् अभीष्टसिद्धिं ... ... मे

अष्टमावरणम् भूपुराभ्यन्तरे पूर्वाद्यष्टसु दिक्षु

ओं सों सोमाय नमः
" बुं बुधाय "
" गुं गुरवे "
" शुं शुक्राय "
" भौं भौमाय "
" शं शनैश्चराय "
" रां राहवे "
" कें केतवे "

इति अष्टौ ग्रहान् पूजयेत् । अभीष्टसिद्धिं...मे नवमावरणम् दशमावरणम् भूपुराद्बहिः इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् - अभीष्ट सिद्धिं - मे गायत्रीशापविमोचनं कृत्वा संस्कृतां मालां आदाय जपं कुर्यात् । अस्य पुरश्चरण चतुर्विंशतिलक्षजपः । जपदशांशतो होमः । तत्तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनं कुर्यात् ।

---

# श्रीदुर्गापूजाआवरनदेवतायन्त्रम्

पीठदेवता सर्वतोभद्रमंडले पींठपूजां विधाय, ओं मंडूकादि परतत्वांत-पीठदेवातभ्यो नमः । इति पुष्पैरुपचारैः नवपीठशक्तीः पूजयेत् । पूर्वादिक्रमेण मध्मे च ।

| | | |
|---|---|---|
| ओं | प्रमायै | नमः |
| ,, | यागायै | ,, |
| ,, | जपायै | ,, |
| ,, | सूक्ष्मायै | ,, |
| ,, | विद्युद्द्राय्यै | ,, |
| ,, | नन्दिन्यै | ,, |
| ,, | सुप्रभायै | ,, |
| ,, | विजयायै | ,, |
| ,, | सर्वसिद्धिदायै | ,, इति |

ओं वज्रनखदंष्ट्रायुधाय सिंहाय फट् । इति पुष्पाद्यासनं । ओं संविन्मयो ...परिवारार्चनाय ते । इति आज्ञां गृहीत्वा । ओं ह्रीं दुं सर्वसिद्धि प्रदाय श्रीचक्राय नमः ।

आवरणपूजा । भूपुरस्यान्तरे पूर्वादिचतुर्दिक्षु द्वारदेशे सर्वत्र प्रणव-पूर्वकं नामांते श्रीपादुकों पूजयामि तर्पयामि इति योजनीयम् ।

| | | | | |
|---|---|---|---|---|
| ओं | ह्रीं | दुं गं | गणेशाय | नमः |
| ,, | ह्रीं | | कुमाराय | ,, |
| | फ्रीं | | पुष्पदंताय | ,, |
| | वें | | विकर्तनाय | ,, |

मूलमूच्चार्य अभीष्टसिद्धि········ प्रथमावरणम् इति पुष्पांजलि विशेषार्घ्याद् बिंदु निक्षिप्य पूजितास्तर्पिता सन्तु इति नमः। तत्तदावरणपूजां कुर्यात्।

द्वितीयावरणम्। अष्टदले पूज्यपूजकयोर्मध्ये प्रचीं दिशं प्रकल्प्य तदनुसारेण प्राचीक्रमेण वामावर्तेन।

ओं ब्रह्माण्यै नमः
" नारायण्यै "
" चामुण्डायै "
" अपराजितायै "
" माहेश्वर्यै "
" कौमार्यै "
" वाराह्यै "
" नारसिंह्यै "

इति मूलेन अभीष्ट — — ते। ओं ह्रीं दुं सर्वाशापूकरकश्री चक्राय नमः इति द्वितीयावरणम्॥

तृतीयावरणम् अष्टदलाग्रेषु प्राचीक्रमेण वामावर्तेन॥ असितांग भैरवाय नमः रुरुभैरवाय नमः, चंडभैरवाय नमः, क्रोध भैरवाय नमः, उन्मत्तभैरवाय नमः, कपालभैरवाय नमः, भीषणभैरवाय नमः संहारभैरवाय नमः इति तृतीयावरणं नवकोणे देव्याग्निकोणमारभ्य वामावर्तेन

ओं शैलपुत्र्यै नमः
" ब्रह्मचारिण्यै "
" चण्डदण्डायै "
" कूष्माण्डायै "
" स्कन्दमात्रे "
" कात्यायिन्यै "
" कालरात्र्यै "
" महागौर्यै "
" सिद्धिदायै "

इति अभीष्ट — — मे ओं ह्रीं दुं अष्टसिद्धिदायै श्री चक्रायै नमः इति पुष्पाञ्जलिं पंचमावरणम् :— ततो वृत्ते पूर्वादिक्रमेण वामावर्तेन

| | | |
|---|---|---|
| ओं | अम्बिकायै | नमः |
| ,, | अष्टाक्षर्यै | ,, |
| ,, | अष्टभुजायै | ,, |
| ,, | नीलकण्ठायै | ,, |
| ,, | जगदम्बिकायै | ,, |

इति अभीष्ट — — षष्ठावरणम् । ततो वृत्ते प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | शंखाय | नमः |
| ,, | पद्माय | ,, |
| ,, | खड्गाय | ,, |
| ,, | बाणेभ्यो | ,, |
| ,, | धनुषे | ,, |
| ,, | खेटकाय | ,, |
| ,, | शूलाय | ,, |
| ,, | तर्जन्यै | ,, |

इति अस्त्राणि संपूज्य अभीष्टसिद्धिं मे ··· सप्तमावरणम् । भूपुरे पूर्वादिक्रमेण (41 62) इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । पुरश्चरणं अष्टलक्षं तत्तद्दशांशेन होम तर्पण मार्जन ब्राह्मणभोजनं कुर्यात् ।

—

# चण्डीदुर्गानवार्णमन्त्रयन्त्रम्

सप्तशतीग्रन्थोक्तमातृकादिसर्वन्यासादीन् कृत्वा ध्यात्वा ततः पूजयेत्

सर्वतो भद्रमंडले पीठपूजाम् कृत्वा मण्डूकादि पीठदेवताः पद्धतिमार्गेण संस्थाप्य नव पीठशक्तीः पूजयेत् पूर्वादिक्रमेण जयायै, विजयायै, अजितायै अपराजितायै नित्यायै, विलासिन्यै, दोग्ध्र्यै आघोरायै, मध्ये मंगलायै तदुपरि मूर्तिं संस्थाप्य, वज्रनगंदष्ट्रायुधाय महासिंहाय फट् इति पुष्पाद्यासनं दत्वा पीठमध्ये मूर्तिं संस्थाप्य, प्रतिष्ठाप्य पुनर्ध्यात्वा पुष्पान्तैरुपचारैः संपूज्य सैविन्मयो इति मन्त्रेण देव्या आज्ञां गृहीत्वा आवररपूजां कुर्यात्

मध्ये त्रिकोणे पूर्वनैर्ऋतिवायुकोणेषु ब्रह्मसरस्वतीभ्यां नमः विष्णुलक्ष्मीभ्यां नमः पार्वतीशङ्कराभ्यां नमः इति पूजयेत् अभीष्टसिद्धिं — मे

... प्रथमावरणार्चनम्। द्वितीयावरणम् देवी उत्तरे सिंहायै नमः देव्याः दक्षिणतः महिषायै नमः इति पूजयेत्। अभीष्टसिद्धिं मे। द्वितीयावरणार्चनम् तृतीयावरणम् — पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन षट्कोणकेसरेषु

ओं नन्दजायै नमः
" रक्तदन्तायै "
" शाकम्भर्यै "
" दुर्गायै "
" भीमायै "
" भ्राम्यै "

इति पूजयित्वा अभीष्टसिद्धि मे ... ... तृतीयावरणार्चनम् चतुर्थावरणम् अष्टदलेषु प्राचीक्रमेण ब्राह्म्यै नमः

" माहेश्वर्यै "
" कौमार्यै "
" वैष्णव्यै "
" वाराह्यै =
" नारसिंह्यै "
" ऐन्द्रायै "
" चामुण्डायै "

इति पूजयेत्। अभीष्टसिद्धि मे .........

चतुर्थावरणम्। पंचमावरणम् चतुर्विंशतिपत्रेषु प्राचीक्रमेण

ओं विष्णुमायायै नमः
" चेतनायै "
" बुद्ध्यै "
" निद्रायै "
" क्षुधायै "
" छायायै "
" शक्त्यै "
" परायै "
" कृष्णायै "

” शान्त्यै ”
” दान्त्यै ”
” लज्जायै ”
” क्षान्त्यै ”
” स्पृहायै ”
” कीर्त्यै ”
” लक्ष्म्यै ”
” धृत्यै ”
” वृद्ध्यै ”
” शृत्यै ”
” स्मृत्यै ”
” दयायै ”
” तुष्ट्यै ”
” पुष्ट्यै ”
” भ्रान्त्यै ”

इति पूजयेत् - अभीष्टसिद्धिं - मे - पंचमावरणार्चनं षष्टावरणार्चनम् चतुष्षष्टिदलेषु प्राचीक्रमेण वामावर्तेन

ओं जयायै नमः
” विजयायै ”
” जयन्त्यै ”
” अपराजितायै ”
” दिव्ययोगायै ”
” महायोग्यै ”
” सिद्धयोग्यायै ”
” माहेश्वर्यै ”
” प्रतस्यै ”
” टाकिन्यै ”
” काल्यै ”
” कालरात्र्यै ”
” डडव्खवक्षयै ”
” रौद्र्यै ”
” वेताल्यै ”

| | | |
|---|---|---|
| = | हुम्कार्यै | " |
| " | ऊर्ध्वकेशिन्यै | " |
| " | विरूपाक्ष्यै | " |
| " | शुष्काक्ष्यै | " |
| " | नरभोजिते | " |
| " | फट्कार्यै | " |
| " | वीरभद्रायै | " |
| " | धूम्राक्ष्यै | " |
| " | कलहप्रियायै | " |
| " | राक्षस्यै | " |
| " | घोररक्ताक्ष्यै | " |
| " | विश्वरूपायै | " |
| " | भयङ्कर्यै | " |
| " | चण्डमायै | " |
| " | चण्डयै | " |
| " | वाराह्यै | " |
| " | मुण्डधारिण्यै | " |
| " | भैरव्यै | " |
| " | ऊर्ध्वाक्ष्यै | " |
| " | दुर्मुख्यै | " |
| " | प्रेतवाहिन्यै | " |
| " | खट्वांग्यै | " |
| " | लम्बोष्ठ्यै | " |
| " | मालिन्यै | " |
| " | रक्तयोगिन्यै | " |
| " | काल्यै | " |
| = | रक्तायै | " |
| " | खरन्काल्यै | " |
| " | भुवनेश्वर्यै | " |
| " | द्रौटिक्यै | " |
| " | महामायै | " |
| " | यमदूत्यै | " |
| " | करालिन्यै | " |

„ केशिन्यै „
„ दमन्यै „
„ रामगङ्गा प्रावाहिन्यै „
„ बिठायै „
„ कामुखालाक्ष्यै „
„ ध्यायै „
„ अधोमुख्यै „
„ मण्डाग्रधारिण्यै „
„ व्याघ्र्यै „
„ काङ्क्षिण्यै „
„ प्रतभक्षिण्यै „
„ धूर्जट्यै „
„ विकट्यै „
„ भीर्यै „
= कपाल्यै „
„ विषधम्भिन्यै „

इति चतुष्षष्ठियोगिनीः पूजयेत् अभीष्टसिद्धिं - मे - षष्ठावरणार्चनम् । सप्तमावरणम् । भूपुराभ्यन्तरे आग्नेयादिचतुर्दिक्षु

ओं गं गणेशाय नमः
„ क्षं क्षेत्रपालाय „
„ वं वटुकाय „
„ यों योगिन्यै „

इति द्वारपालान् पूजयेत् अष्टमनवमावरणम् । भूपुरेपूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । अस्य पुरश्चरणं नवलक्षः - अथवा चतुर्लक्षजपः दशांशेन पायसान्नेन होमः । तत्तदशांशेन तर्पण मार्जन ब्राह्मणभोजनं कुर्यात् ॥

# शूलिनीदुर्गापूजनयन्त्रम्

मण्डूकादि परतत्त्वांतपीठदेवतां दुर्गा पद्धतिमार्गेण संस्थाप्य नवपीठशक्तीः पूजयेत् ।

ॐ प्रभायै नमः
„ मायायै „
„ जयायै „
„ सूक्ष्मायै „
„ विशुद्धायै „
„ नन्दिन्यै „
„ सुप्रभायै „
„ विजयायै „
मध्ये „ सर्वसिद्धिदायै „

इति संपूज्य तदुपरि मूर्तिं संस्थाप्य ओं वज्रनगदम्ष्ट्रायुधाय महासिंहासनाय हुं फट् नमः इति पुष्पाद्यासनं दत्वा पाद्यादिपुष्पांतैः संपूज्य मूलेन

ओं संविन्मयः परो देवः परामृतरसप्रियः ।
अनुज्ञां देहि मे कामं परिवारार्चनाय मे ।।

इति श्लोकेन देव्या आज्ञां गृहीत्वा आवरणपूजां कुर्यात्

प्रथमावरणम् ... षट्कोणकेसरेषु आग्नेयादि चतुष्कोणेषु मध्ये दिक्षु च

ओं शूलिनी दुर्गे हुं फट् हृदयाय नमः हृदयशक्ति श्री
" ह्रीं शूलिनि वरदे हुं फट् शिरसे स्वाहा शिरश्शक्ति श्री
" शूलिनि विन्ध्यवासिनि हुं फट् शिखायै वषट् शिखा शक्ति
" शूलिन्यसुरमर्दिनि युद्धप्रिये प्राशय हुं फट् कवचाय हुं कवचशक्ति श्री
" शूलिनि देवसिद्धस्वपूजिते नन्दिनि रक्ष रक्ष महा योगीश्वरि हुम् अस्त्राय फट्

इति मूलेन अभीष्टसिद्धिं ......प्रथमावरणार्चनम् ।

द्वितीयावरणम् ... पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य अष्टदलेषु प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | दुर्गायै | नमः |
| " | वरदायै | " |
| " | विन्ध्यवासिन्यै | " |
| " | असुरमर्दिन्यै | " |
| " | युद्धप्रियायै | " |
| " | देवशुद्धपूजितायै | " |
| " | नन्दिन्यै | " |
| " | महायोगीश्वर्यै | " |

इति मूलेन अभीष्टसिद्धिं...मे...द्वितीयावरणम्

तृतीयावरणम्—

| | | |
|---|---|---|
| ओं | पत्राग्रेषु | नमः |
| " | चक्राय | " |
| " | शंखाय | " |
| " | खट्वाय | " |
| " | रताय | " |
| " | चापाय | " |

| | | |
|---|---|---|
| ,, | त्रिशूलाय | ,, |
| ,, | बाणेभ्यो | ,, |
| ,, | पाशाय | |

इति पूजयेत्। मूलेन अभीष्टसिद्धिं मे इति तृतीयावरणार्चनम् इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि पूजयेत्। पुरश्चरणं पंचदशलक्षजपः। सर्पिषान्नेन दशांशतो होमः। तत्तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनं कुर्यात्।

—

# दक्षिणकालीपूजनयन्त्रम्

पीठादौ सर्वतोभद्रमण्डले मंडूकादिपरतत्वांतपीठदेवताम् संस्थाप्य नवपीठशक्तीः पूजयेत्। जयायै विजयायै अजितायै अपरिजितायै नित्यायै विलासिन्यै दोग्ध्र्यै अघोरायै मध्ये मंगलायै ओं ह्रीं कालिकायोगपीठात्मने नमः इति पुष्पाद्यासनं तदुपरि मूर्तिं संस्थाप्य पाद्यादिपुष्पांतैः उपचारैः संपूज्य आवरणपूजां कुर्यात् संविन्मयो इति श्लोकेन देव्याज्ञां लभेत् - षट्कोणकेसरेषु

प्रथमावरणम्

| | | | | | |
|---|---|---|---|---|---|
| ओं | क्रां | हृदयाय | नमः | हृदयशक्ति | श्रीं |
| ,, | क्रीं | शिरसे स्वाहा | | शिवशक्ति | |
| ,, | क्रूं | शिखायै वषट् | | शिखाशक्तिः | |
| ,, | क्रैं | कवचाय हुम् | | कवचशक्तिः | |
| ,, | क्रौं | नेत्रत्रयाय वौषट् | | नेत्रशक्तिः | |
| ,, | क्रः | अस्त्राय फट् | | अस्त्रशक्तिः | |

मूलं अभीष्टसिद्धिं - प्रथमावरणार्चनम्। पूज्यपूजकयोरंतराले प्रचीं तदनुसारेण अन्याः दिशः प्रकल्प्य षट्कोणेषु

| | | |
|---|---|---|
| ओं | काल्यै | नम |
| ,, | कपालिन्यै | ,, |
| ,, | कुल्लायै | ,, |
| ,, | कुरुकुल्लायै | ,, |
| ,, | विरोधिन्यै | ,, |
| ,, | विप्रचित्तायै | ,, |

मूलं अभीष्ट ... ... द्वितीयावरणार्चनम्

तृतीयावरणार्चनम् षट्कोणाद्बहिः प्रथमत्रिकोणसंमुखे

ओं उग्रायै नमः
" उग्रप्रभायै "
" दीप्तायै "

द्वितीयत्रिकोणसंमुखे

ओं नीलायै नमः
" वामे घनायै "
" दक्षे बलाकिकायै "

तृतीयत्रिकोणसंमुखे

" मायायै "
" वामे मुद्रायै "
" दक्षे मित्रायै "

मूलं अभीष्टसिद्धिं — — तृतीयावरणार्चनम् । तुरीयावरणम् अष्टदलेषु प्राचीक्रमेण

ओं ब्राह्म्यै नमः
" नारायण्यै "
" माहेश्वर्यै "
" चामुण्डायै "
" कौमार्यै "
" अपराजितायै "
" वाराह्यै "
" नारसिंह्यै "

इति चतुर्थावरणम् मूलं अभीष्टसिद्धिं — चतुर्थावरणम् पंचमावरणम् भूपुरस्य अन्तरे अष्टसु दिक्षु प्राचीक्रमेण

ओं अं अशितांगभैरवाय नमः
" इं रुरुभैरवाय "
" ऊं चण्डभैरवाय "
" ऋं क्रोधभैरवाय "
" लुं उन्मत्तभैरवाय "
" ऐं कपालभैरवाय "

" ओं भीषणभैराय "
" अं संहारभैरवाय "

तत्रैव महाभैरवीपूजां कुर्यात्

| | | | |
|---|---|---|---|
| ओं | श्रीं | भैरव्यै | नमः |
| " | मं | महाभैरव्यै | " |
| " | सिं | सिंहभैरव्यै | " |
| " | धूँ | धूम्रभैरव्यै | " |
| " | भीं | भीमभैरव्यै | " |
| " | ऊं | उन्मत्तभैरव्यै | " |
| " | वं | वशीकरण्यभैरव्यै | " |
| " | मों | मोहभैरव्यै | " |

षष्ठसप्तमावरणानि भूपुराद्बहिः इन्द्रादीन् वज्राद्यायुधानि च पूजयेत् पुरश्चरणम् लक्षजपः । दशांशं करवीरपुष्पैः होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मण भोजनम् ।

---

# श्मशानकालीपूजनयन्त्रम्

मण्डूकादिपीठपूजां कृत्वा ओं ह्रीं कालिकायोगपीठात्मने नमः । इति पुष्पाद्यासनं दत्त्वा आवपणपूजां आरभेत् । अष्टदलेषु

इति पुनः तत्रैव बाह्ये प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | ब्राह्म्यै | नमः |
| " | माहेश्वर्यै | " |
| " | कौमार्यै | " |
| " | वैष्णव्यै | " |
| " | वाराह्यै | " |
| " | इन्द्रायै | " |
| " | चामुंड्यै | " |
| " | महालक्ष्म्यै | " |

इति पुनः तत्रैव बाह्ये प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | असिताङ्गभैरवाय | नमः |
| ,, | रुरुभैरवाय | ,, |
| ,, | चण्डभैरवाय | ,, |
| ,, | क्रोधभैरवाय | ,, |
| ,, | उन्मत्तभैरवाय | ,, |
| ,, | कपालिभैरवाय | ,, |
| ,, | भीषणभैरवाय | ,, |
| ,, | संहारभैरवाय | ,, इति |

अभीष्टसिद्धिं प्रथमावरणार्चनम् । भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि पूजयेत् अभीष्टसिद्धिं ... ... द्वितीयतृतीयावरणार्चनम् शेषं सर्वं दक्षिण कालीं पूजयेत् । वर्णलक्षं पुरश्चरणः

—

## तारापूजनयन्त्रम्

मंडूकादिपरतत्वांत पीठपूजा नवपीठशक्तीः संपूज्य

| | | |
|---|---|---|
| ओं | मेधायै | नमः |
| ,, | प्रज्ञायै | ,, |
| ,, | प्रभायै | ,, |
| ,, | विद्यायै | ,, |
| ,, | दिव्यै | ,, |
| ,, | धृत्यै | ,, |
| ,, | स्मृत्यै | ,, |
| ,, | बुध्यै | ,, |

मध्ये विश्वेश्वर्यै, ह्रीं सरस्वतीयोगपीठात्मने नमः इति पुष्पाद्यासनं । ततः आवरण षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च मध्य त्रिकोणाद्बहिः

ओं गं गणेशाय नमः। गं गणेशे इहागच्छ इहाधिष्ठ इति आवाह्य पंचोपचारैः संपूज्य ओं गं गणेशाय वज्रपुष्पं प्रतीच्छ फट् स्वाहा।

दक्षिणे कपालशूले हस्ताभ्यां तदर्धं सर्पभूषम् स्वायुधवेष्टितम् रम्यं वटुकं दक्षिणे अर्चयेत्। ओं भं वटुकाय नमः, भं वटुक इहागच्छ - इहाधिष्ठ इति आवाह्य पंचोपचारैः संपूज्य ओं भं वटुक वज्रपुष्पं प्रतीच्छ फट् स्वाहा इति पुष्पं दद्यात् —

पश्चिमे असिशूलकपालिने डमरुं दधानं करैः— कृष्णं दिगम्बरं क्रूरं क्षेत्रपं, पश्चिमे यजेत् - क्षं क्षेत्रपालाय नमः ॐ क्षेत्रपाल इहागच्छ इहाधिष्ठ इति आवाह्य पंचोपचारैः संपूज्य क्षं क्षेत्रपाल वज्रपुष्पं प्रतीच्छ फट् स्वाहा इति पुष्पं दद्यात् —

उत्तरे ॐ यों योगिनीभ्यो नमः - योगिन्यः इहागच्छत इहाधिष्ठत वज्रपुष्पं प्रतीच्छत फट् स्वहा इति पुष्पं दद्यात्

देव्या मस्तके ॐ अक्षोभ्य इहागच्छ इहाधिष्ठ वज्रपुष्पं प्रतीच्छ स्वाहा

षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च

| | | |
|---|---|---|
| एकचटायै | हृदयाय | नमः |
| हारिण्यै | सिरसे स्वाहा | |
| वज्रोतकायै | सिखायै वषट् | |
| उग्रतारायै | कवचाय हुम् | |
| महा परिसरायै | नेत्रत्रयाय वौषट् | |

पिङ्गोग्रैक चटाय अस्त्राय फट् इति मूलेन अभीष्टसिद्धिं प्रथमावरणार्चनम्। द्वितीयावरणम् अष्टदले पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण चतुर्दिक्षु

| | | | |
|---|---|---|---|
| ओं | भं | भैरोचनाय | नमः |
| " | अं | अमिताय | " |
| " | पं | पद्मनाभाय | " |
| " | शं | शङ्खपाण्डुराय | " |
| " | मां | मायकायै | " |
| " | लां | लामकायै | " |

" पां पाण्डुरायै "

" तां तारकायै "

इति अभीष्टसिद्धिं — द्वितीयावरणार्चनम् । तृतीयावरणार्चनम्—भूपुराभ्यन्तः पूर्वादिचतुर्दिक्षु

ओं पं पद्मान्तकाय नमः

" जं जन्मान्तकाय "

" विं विघ्नान्तकाय "

" नं नरकान्ताय "

अभीष्टसिद्धिं — तृतीयावरणार्चनम् तुरीयपंचमावरणं - इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पुरश्चरणं चतुर्लक्षजपः । रक्तपद्म क्षीर आज्येन दशांशतो होमः । तर्पणमार्जनब्राह्मणभोजनानि तत्तद्दशांशेन कुर्यात् ।

पूर्वोक्त सर्वावरणदेवतानां प्रत्येकं प्रत्येकं इहागच्छ इहाधिष्ठ इत्यावाह्य तत्तनाम उक्त्वा वज्रं पुष्पं प्रातीच्छ स्वाहा इति संयोजनेन पूजा कर्तव्या ।

---

# ताराधारणयन्त्रम्

षट्कोणमध्ये प्रविलिख्य मूलं साध्यान्वितं
काद्यष्टवर्गान्वितपत्रमब्जं लिखेद्बहिर्भूमिपुरेण नीतम् ।

यन्त्रमेतल्लिखेद्भूर्जे रसेन जतुजन्मना
पीताम्बरेण संवेष्ट्य बध्नीयात् पीतसूत्रतः ॥

शिशूनां कण्ठतो बद्धं रक्षकं भूतभूतितः ।
वामबाहौ तु नारीणां पुत्रदं सुभगत्वकृत् ॥

दक्षबाहौ नृणां बद्धं निर्धनानां धनप्रदम् ।
ज्ञानदं ज्ञानमिच्छूनां राज्ञां तु विजयप्रदम् ।

एतद्यन्त्रं पुरा धृत्वा गौतमाद्या महर्षयः ।
लेभिरे मोक्षसंसिद्धिं साम्राज्यं भूमिनायकाः ।

किं भूरिणा नृणामेतद्वाञ्छिता यच्छति श्रियम् ।
कवित्वं राजमानं च कीर्तिमायुररोगताम् ।

नैव काचिद्देवता तारासमा सर्वसिद्धिदा ।
कलौ युगे ततो गोप्या वाञ्छितं सिद्धिमीप्सिताम् ।

इति षडक्षरस्तारामन्त्रप्रयोगः

—

# महाविद्या(विद्याराज्ञी)पूजनयन्त्रम्

पीठादौ रचिते सर्वतोभद्रमण्डले मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः तदुपरि नवपीठशक्तीः पूजयेत् ।

पूर्वादिक्रमेण अष्टसु दिक्षु मध्ये च

ओं मेधायै नमः, ओं प्रज्ञायै नमः, प्रभायै नमः, विद्यायै नमः, दियै नमः, धृत्यै नमः, ओं स्मृत्यै नमः, ओं बुध्यै नमः, ओं मध्ये नमः विश्वेश्वर्यै

तदुपरि त्रिकोण षट्कोण अष्ट षोडश द्वात्रिंशत् चतुष्षष्ठिदलं तस्योपरि त्रिरेखात्मकं भूपुरमध्ये यन्त्रं संशोधितं निर्माय ह्रौं सरस्वतीयोगपीठात्मने नमः इति पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां कृत्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य संविन्मय…मे इति मन्त्रेण देव्याज्ञां गृहीत्वा आवरणपूजां आरभेत् इति प्रथमावरणम् । भूपुराद्बहिः अग्निकोणे

वं विघ्नेशाय नमः विघ्नेश्वर श्री पादुकां पूजयामि नमः इति सर्वत्र
क्षं क्षेत्रपालाय " " " " " "
ईशानकोणे भैरवाय नमः
नैर्ऋतिकोणे यं योगिन्यै नमः
वामभागे श्री गुरवे नमः

इति ततः भूपुरे प्रथमरेखायां पूर्वादिक्रमेण

| | | |
|---|---|---|
| ओं | अणिमायै | नमः |
| " | लघिमायै | " |
| " | महिमायै | " |

" अशितायै "

" वशितायै "

" कामपूरिण्यै "

" गरिमायै

" प्राप्त्यै "

इति अष्टौ सिद्धीः पूजयेत् ।

ततः भूपुरे द्वितीयरेखायां पूर्वादिक्रमेण

ओं अमिताङ्गभैरवाय नमः

" रुरुभैरवाय "

" चण्डभैरवाय "

" क्रोधभैरवाय "

" उन्मत्तभैरवाय "

" कालभैरवाय "

" भीषणभैरवाय "

" संहारभैरवाय "

इत्यष्टौ भैरवान् पूजयेत् ।

ततो भूपुरे तृतीयरेखायां पूर्वादिक्रमेण

ओं ब्राह्म्यै नमः

माहेश्वर्यै "

" कौमार्यै "

" वैष्णव्यै "

" वाराह्यै "

" इन्द्राण्यै "

" चामुण्ड्यै "

" महालक्ष्म्यै "

इति अष्टौ मातृः पूजयेत् । मूलेन अभीष्टसिद्धिं प्रथमावरणार्चनम् इति पुष्पांजलिं च विशेषार्घाद् बिंदुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदन् योनिमुद्रां प्रदर्शयेत् एवं सर्वत्र ।

द्वितीयावरणम्— चतुष्षष्ठिदले पूज्यपूजकयोर्मध्ये प्राचीं तदनुसारेण अन्याः दिशः प्रकल्प्य प्राचीक्रमेण

| | | |
|---|---|---|
| ॐ | कुलस्यै | नमः |
| ,, | कुलनन्दायै | ,, |
| ,, | वागीश्वर्यै | ,, |
| ,, | भैरव्यै | ,, |
| ,, | उमायै | ,, |
| ,, | श्रियै । | ,, |
| ,, | शान्त्यै | ,, |
| ,, | चण्ड्यै | ,, |
| ,, | धूम्रायै | ,, |
| ,, | काल्यै | ,, |
| ,, | करालिन्यै | ,, |
| ,, | महालक्ष्म्यै | ,, |
| ,, | कङ्काल्यै | ,, |
| ,, | रुद्रकाल्यै | ,, |
| ,, | सरस्वत्यै | ,, |
| ,, | वाग्वादिन्यै | ,, |
| ,, | नकुल्यै | नमः |
| ,, | भद्रकाल्यै | ,, |
| ,, | शशिप्रभायै | ,, |
| ,, | प्रत्यंगिरायै | ,, |
| ,, | सिद्धलक्ष्म्यै | ,, |
| ,, | अमृतेश्यै | ,, |
| ,, | चण्डिकायै | ,, |
| ,, | खेचर्यै | ,, |
| ,, | भूचर्यै | ,, |
| ,, | सिद्धायै | ,, |
| ,, | कामाक्ष्यै | ,, |
| ,, | हिंगुलायै | ,, |
| ,, | बलायै | ,, |
| ,, | जयायै | ,, |
| ,, | विजयायै | ,, |

,, अजितायै ,,
,, नित्यायै ,,
,, अपराजितायै ,,
,, विलासिन्यै ,,
,, अघोरायै ,,
,, चित्रायै ,,
,, मुग्धायै ,,
,, धनेश्वर्यै ,,
,, सोमेश्वर्यै ,,
,, महाचण्डायै ,,
,, विद्यायै ,,
,, हंस्यै ,,
,, विनायकायै ,,
,, वेदकर्मायै ,,
,, भीमायै ,,
,, उग्रायै ,,
,, वेद्यायै ,,
,, सद्गत्यै ,,
,, उग्रेश्वर्यै ,,
,, चन्द्रगर्भायै ,,
,, ज्योत्स्नायै ,,
,, सत्यायै ,,
,, यशोवत्यै ,,
,, कुलिकायै ,,
,, कामिन्यै ,,
= काम्यायै ,,
,, ज्ञानवत्यै ,,
,, डाकिन्यै ,,
,, राखिन्यै ,,
,, लाखिन्यै ,,
,, काकिन्यै ,,
,, शाकिन्यै ,,
,, हाकिन्यै ,,

इति चतुष्षष्ठि शक्तीः पूजयेत् । मूलेन अभीष्टसिद्धिं मे द्वितीयावरणार्चनम् पुष्पांजलिं विशेषार्घ्याद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु नमः इति खेचरी मुद्रां प्रदर्शयेत् । तृतीयावरणम् - द्वात्रिंशद्दले प्राचीक्रमेण

" किरातायै "
" योगिन्यै "
" वीरायै "
" वेतालायै "
" यक्षिण्यै "
" हरायै "
ऊर्ध्वकेश्यै "
" मातङ्ग्यै "
" मोहिन्यै "
" वंशवर्धिन्यै "
" मालिन्यै "
" ललितायै "
" मूर्त्यै "
" मनोजायै "
" पद्मिन्यै "
" धरायै "
" वर्यै "
" छत्रहस्तायै "
" रक्तायै "
" नेत्रायै "
" विचर्चिकायै "
" मातृकायै "
" दूरदर्शिन्यै "
" क्षेमज्ञायै "
" रंखिण्यै "
" नटायै "
" कान्त्यै "
" दीप्तायै "
" वज्रहस्ताय "
" धूम्रायै "



" श्वेतायै "
" सुमङ्गलायै "

इति द्वात्रिंशत् शक्तीः पूजयेत् ततः मूलमुच्चार्य अभीष्टसिद्धिं —तृतीयावरणार्चनम् पुष्पांजलिं विशेषार्घाद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः संतु इति बीजमुद्रां प्रदर्शयेत् ।

तृतीयावरणम् - षोडशदलेषु प्राचीक्रमेण

ओं मुग्धायै नमः
" श्री कुरुकुल्लायै "
" त्रिपुरायै "
" तोतलायै "
" क्रियायै "
" रक्तयै "
" प्रीत्यै "
" बालायै "
" सुमुख्यै "
" श्यामलायै "
" बलायै "
" पिशात्यै "
" विघायै "
" शीतलायै "
" वज्रयोगिन्यै "
" सर्वेश्वर्यै "

इति षोडशशक्तीः पूजयेत् पुष्पांजलिं मूलेन अभीष्टसिद्धिं चतुर्थावरणार्चनम् । पूर्ववत् विशेषार्घाद्बिंदुं निक्षिप्य सृष्टिमुद्रांप्रदर्शयेत् ।

पंचमावरणम् - अष्टदले सरस्वत्यष्टकं स्व स्व मंत्रैः पूजयेत् प्राचीक्रमेण । ओं नमः पद्मासने शब्द रूपे हें ह्रीं क्लीं वद वद वाग्वादिनी स्वाहा वाग्वादिनी श्री पादुकां पूजयामि तर्पयामि नमः

ह स्क ल ह्रीं वदवद चित्रेश्वरी हें स्वाहा — चित्रेश्वरी श्री
हें कुलगे हें सरस्वती स्वाहा — कुलजा श्री
हें ह्रीं श्रीं वद वद कीर्तीश्वरी स्वाहा — कीर्तीश्वरी श्री
" " अन्तरिक्ष सरस्वती स्वाहा — अन्तरिक्ष सरस्वती श्री

ह्स्फ्रोम् क्सौं स्त्रीम् हें ह्रीं श्रीं ध्रां ध्रीं क्लीं ब्लूं सहं र्षीं घटसरस्वती घटे वद वद तर तर रुद्राज्ञया ममाभिलाषं कुरु कुरु स्वाहा — घटसरस्वती श्री

ब्लूं वें वद वद त्रीं हुं फट् नीरा श्री

हं हें ह्रीं किनि किनि विच्छे — किनि श्री

इत्यष्टौ सरस्वतीः संपूजयेत – पुष्पांजलिं मूलं-अभीष्टसिद्धिं पंचमावरणार्चनम् । विशेषार्घबिंदु - संतु नमः इति शोभमुद्रां प्रदर्शयेत् ।

षष्ठावरणम् षट्कोणकेसरेषु प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | ठाखिन्यै | नमः |
| ” | राखिन्यै | ” |
| ” | लाखिन्यै | ” |
| ” | खाखिन्यै | ” |
| ” | शाखिन्यै | ” |
| ” | हाखिन्यै | ” |

इति पूजयेत् – ततः मूलं पुष्पांजलिं अभीष्टसिद्धिं - षष्ठावरणार्चनम् विशेषार्घेण पूजिताः तर्पिताः संतु इति विद्राविणि मुद्रां प्रदर्शयेत्

सप्तमावरणम् - त्रिकोणे प्राचीक्रमेण

| | | | |
|---|---|---|---|
| ओं | ह्रीं | परायै | नमः |
| ” | हें | क्लीं सौः बालायै | ” |
| ” | ह्स्रौं ह्स्क्लीं ह्स्रौं भैरव्यै | | ” |

इति पूजयेत् मूलेन पुष्पांजलिं अभीष्टसिद्धिं ... सप्तमावरणार्चनम् विशेषार्घबिंदु पूजितास्तर्पिताः संतु इति आकर्षणीमुद्रां प्रदर्शयेत् ।

अष्टमनवमावरणार्चनम् - भूपुराद्बहिः इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । मूलेन पुष्पांजलिं अभीष्टसिद्धिं अष्टमनवमावरणार्चनम् पुरश्चरणं चतुर्लक्षजपः । पलाशपुष्पमध्वाज्यैः दशांशतो होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं कुर्यात् ।

# सरस्वतीद्व्यक्षरमन्त्रपूजनम्

सर्वतोभद्रमण्डले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः तदुपरि नवपीठशक्तीः पूजयेत् - पूर्वादिक्रमेण

ओं मेधायै नमः
" प्रज्ञायै "
" प्रभायै "
" विद्यायै "
" ज्ञानायै "
" धृत्यै "
" श्रुत्यै "
" बुध्यै "
" विद्येश्व्यै "

ततः षट्कोण अष्टदल भूपुरयुध शुद्धिकृतयंत्रं निधाय वर्णाभ्य पद्मासनाय नमः इति आसनं दत्वा प्राणप्रतिष्ठा आवाहनादिपुष्पांतैः संपूज्य संविन्मय मंत्रेण देव्याज्ञां गृहीत्वा आवरण पूजां कुर्यात् । यन्त्र मन्ध्ये ओं लं इति मूलेन संपूज्य षट्कोणकेसरेषु अग्निईशासुर वायुकोणेषु मध्ये दिक्षु च पूजयेत्

ओं ह्रां हृदयाय नमः
" " शिरसे स्वहा
" " शिखायै वषट्
" " कवचाय हुम् पूज्यपूजकयोर्मध्ये
" " नेत्रत्रयाय वौषट देवीं पश्चिमे
" " अस्त्राय फट् पुष्पांजलिं मूलं अभीष्टसिद्धिं

प्रथमावरणार्चनम् - विशेषार्घेण पूजितस्तर्पिताः संतु नमः इति द्वितीयावरणम् अष्टदले पूज्यपूजकयोर्मध्ये प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन

ओं ब्राह्म्यै नमः
" माहेश्वर्यै "
" कौमार्यै "
" वैष्णव्यै "
" वाराह्यै "
" इन्द्राण्यै "
" चामुंडायै "

इति अष्टौ मातृकाः पूजयेत् - पूर्ववत् पुष्पांजलिं दद्यात् । तृतीयचतुर्थावरणम्- इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् - पुरश्चरणं द्वादशलक्षजपः पायसान्नेन दशांशतो होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं कुर्यात् ।

***

# सरस्वतीदशाक्षरमन्त्रपूजनम्

मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत्- पूर्वाद्यष्टसु दिक्षु मध्ये च मेधायै......विश्वेश्वर्यै वर्णपद्मासनाय नमः इति पुष्पाद्यासनं दत्वा यन्त्रं अग्न्युत्तारणपूर्वकम् पीठमध्ये संस्थाप्य प्राणप्रतिष्ठां कृत्वा मूलेन मूर्तिं प्रकल्प्य पुनः ध्यानावाहनादिपुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम्—षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षुः

| | | | |
|---|---|---|---|
| ओं | ह्रां | हृदयाय | नमः |
| ” | ” | शिरसे | स्वाहा |
| ” | ” | शिखायै | वषट् |
| ” | ” | कवचाय | हुम् |
| ” | ” | नेत्रत्रयाय | वौषट् |
| ” | ” | अस्त्राय | फट् |

इति षडंगानि पूजयेत् - ततः पुष्पांजलिं आदाय मूलमुच्चार्य अभीष्ट - प्रथमावरणार्चनम् इति दत्वा पूजितास्तर्पिताः सन्तु इति वदेत् ।

द्वितीयावरणम्-अष्टदले-पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य पूर्वादिक्रमेण

| | | |
|---|---|---|
| ओं | योगायै | ” |
| ” | सत्यायै | ” |
| ” | विमलायै | ” |
| ” | ज्ञानायै | ” |
| ” | बुध्यै | ” |
| ” | स्मृत्यै | ” |
| ” | मेधायै | ” |
| ” | प्रज्ञायै | ” |

इत्यष्टौ शक्तीः पूजयित्वा मूलेन पुष्पांजलिं समर्प्य अभीष्टसिद्धिं ·········

द्वितीयावरणार्चनम् – तृतीयावरणार्चनम् - अष्टदलाग्रेषु

ओं ब्राह्म्यै "

" माहेश्वर्यै "

" कौमार्यै "

" वैष्णव्यै "

" वाराह्यै "

" इन्द्राण्यै "

" चामुण्ड्यै "

" महालक्ष्म्यै "

इत्यष्टौ मातृः पूजयेत् । मूलेन पुष्पांजलिः । अभीष्टसिद्धं······तृतीयावरणार्चनम् — तुरीयपंचमावरणार्चनम्— इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् - पुरश्चरणं दशलक्षजपः । तत् दशांशेन पायसान्नेन होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं कुर्यात् ।

इदमेव ॐ ह्रीं ऐं ह्रीं ओं सरस्वत्यै नमः । इति एकादशाक्षरमन्त्रस्य पूजनयन्त्रम् भवेत् । विशेषतः मध्ये देव्याः दक्षिणे संस्कृतायै नमः । वाङ्मय्यै नमः, वामे प्राकृतायै नमः वाग्मिन्यै नमः । इति संपूज्य षड्गपूजायां ह्रां इत्यत्र ऐं इति संयोज्य पूजयेत् । इति सर्वं पूर्ववत् पुरश्चरणं द्वादशलक्षजपः । दशांशेन शिताम्बुजैः नागचम्पकपुष्पैर्वा होमः ।

---

# कृष्णादेवी(तारणी)पूजनयन्त्रम्

मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति नवपीठशक्तीः पूजयेत् पूर्वादिक्रमेण ओं मेधायै नमः, प्रज्ञायै, प्रभायै, विद्यायै, दिव्यै, धृत्यै, स्मृत्यै, बुध्यै, मध्ये विश्वेश्वर्यै नमः ओं ह्रीं तारणी योगपीठात्मने नमः इति पुष्पाद्यासनं तदुपरि चतुर्दलं विलिख्य तद्बाह्ये षट्कोण अष्टदलं तद्बाह्ये षोडशारं तद्बाह्ये भूपुर यन्त्रं अग्न्युत्तारण पूर्वकम् पीठमध्ये संस्थाप्य प्राणप्रतिष्ठां कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञया आवरण पूजां कुर्यात् ।

प्रथमावरणम् - पूज्यपूजकयोर्मध्ये प्राचीं तदनुसारे अन्या दिशः प्रकल्प्य प्राची क्रमेण चतुर्दलेषु

 

ओं ऐं नमः ऐं श्रीं पा पु न नमः स्त्रीं क्लीं स्त्रों क्लीं कृष्णदेव्यै नमः सर्वत्र श्रीपादुकां पूजयामि तर्पयामि नमः इति पूजयेत् । मूलेन पुष्पांजलिः अभीष्टसिद्धिं

द्वितीयावरणम् —षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च ह्रीं इति संयोजित षडङ्गयुवती पूजयेत् । पुष्पांजलिं मूलेन अभीष्टसिद्धिं

तृतीयावरणम् पुनः चतुर्दलाग्रेषु प्राच्यादिचतुर्दिक्षु

ओं क्षेत्रपालाय, भैरवाय, गणपतये, सहाम्बिकायै इति पूजयित्वा मूलेन पुष्पांजलिं अभीष्टसिद्धिं

तुरीयावरणम्—अष्टदलेषु प्राच्यादिक्रमेण वामावर्तेन

अणिमायै, अनंगायै, मदनायै, लघिमायै, मदनातुरायै, अनङ्गकुसुमायै अष्टकर्णिकायै, कापालिकायै, इत्यष्टौ योगिनीः पुजयेत् मूलेन पुष्पांजलिः अभीष्टसिद्धिं

तुरीयावरणार्चनम्

पंचमावरणम् — षोडषशदले प्राच्यादि वामावर्तेन

शुद्धायै मोक्षदायै, भक्तिदायै, भोगदाय्यै, मुक्तिदायै, सिद्धिदायै, कामदायै धनधान्यदायै क्षेमदायै, शिवदायै, परदायै, आत्मदायै, योगदायै,भाग्यदायै, भुक्तिदायै, सर्वसिद्धिदायै इति परिचारकाः पूजयेत् मूलेन पुष्पांजलिः अभीष्टसिद्धिं इति पंचमावरणम्

षष्ठावरणम् —भूपुरस्यान्तरे पूर्वादिचतुर्दिक्षु अणिमाद्यष्टमिदिभ्यो अग्निदशकलाभ्यो नमः षोडशचन्द्रकलाभ्यो नमः द्वादशसूर्यकलाभ्यो नमः इति मूलेन पुष्पांजलिं अभीष्ठसिद्धिं षष्ठावरणार्चनम्

सप्तमाष्टमावरणम् — इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि पजयेत् । अस्य पुरश्चरणं एकलक्षजपः । तत्तद् शांशेनहवनतर्पणमार्जनब्राह्मणभोजनं कुर्यात् ।

# श्री चक्रं षोडशीपूजनयन्त्रम्

पीठादौ सर्वतोभद्रमण्डले मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः। इति पीठं संपूज्य

ओं ब्रं ब्रह्मप्रेतायै नमः
„ विं विष्णुप्रेतायै „
„ रुं रुद्रप्रेतायै „
„ ईं ईश्वरप्रेतायै „
„ शं सदाशिवप्रेतायै „
„ शुं सुधार्णवासनाय „
„ ह्रीं श्वेताम्बुजासनाय नमः
„ विं दिव्यासनाय नमः
„ क्षं चक्रासनाय „
„ सं सर्वमन्त्रासनाय „
„ सं साध्यसिद्धासनाय नमः

इति पूजयेत्। ततः नवपीठशक्तीः पूजयेत्। पूर्वाद्यष्टसु दिक्षु

ओं इच्छायै नमः
„ ज्ञानायै „
„ क्रियायै „
„ कामिन्यै „
„ कामदायिन्यै „
„ रत्यै „
„ रतिप्रभायै „
„ नन्दायै „
„ मनोन्मन्यै „

इति पूजयेत्। तदुपरि अग्न्युत्तारणपूर्वकम् यन्त्रम् अथवा देव्यष्टकन्धेनु बिन्दु गर्भं त्रिकोणाद्यष्टदलं द्विदशदलं चतुर्दशदलं अष्टदलं षोडशत्रिकोणरूपदलं तस्योपरि त्रिरेखात्मक भूपुरं च लिखित्वा ऐं परायै, अपरायै, परापरायै ह्सौः सदाशिव, महाप्रेत, पद्मासनाय नमः इति पुष्पाद्यासनं पीठमध्ये संस्थाप्य

संविन्मय इति श्लोकेन गृहीत्वा आवरणपूजां कुर्यात्। पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य आवरणपूजादेवतानामान्ते श्रीपादुकां पूजयामि तर्पयामि नमः इति संयोज्य पूजयेत्। प्रथमावरणम् आग्नेयादि-कोणेषु वामावर्तेन ऐं बीजायै नमः ह्रीं बीजायै नमः सौं बीजायै नमः पुष्पांजलिमादाय अभीष्टसिद्धि प्रथमावरणार्चनम्।

ओं ह्रीं श्रीं प्रकटकुब्ध कुब्धधर संप्रदाय कुरु निगल्भ रहस्य अतिरहस्य परापररहस्य संयत श्री चक्रगदयोगिनी पादुकाभ्यां नमः इति पुष्पांजलिं दद्यात् इति आवरणान्ते मूलेन विशेषार्घेण त्रिवारं पूजनतर्पणं च कृत्वा सामान्यार्गोगंधेन आवरणपूजासमर्पणं च कर्यात्। दक्षहस्तेन पुष्पं पूजयामि इति वामहस्तेन सकलद्वारा तर्पयामि इति विशेषार्घबिंदुं च समकाले दद्यात्। आर्द्रखण्डं प्रास्यं इति केचित् द्वितीयावरणम्। मध्यत्रिकोणबाह्ये ओं ऐं क्लीं सौः कामेश्वर्यै नमः कामेश्वरी इच्छाकाम वरप्रदे सर्वशक्ति वशंकरी - सर्व जगत् क्षोपणकरी हुं हुं हुं धां धीं क्लीं ब्लूं सह सौः क्लीं ऐं कामेश्वरी नित्या श्री ... ... ओं ऐं भगमालिन्यै नमः - भगभुगे भगिनी भगोधरी, भगमाले, भगावहे; भगगुह्ये, भगयोने; भगनिवासिनी सर्वभग वशंकरी भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे, प्रेते, सुरेते भगत्क्लिन्ने क्लिन्नद्रवे क्लेदय - द्रावय, अम्बे भगविच्छे शुभ चोपय सर्वसत्वान् भगेश्वरी ऐं ब्लूं जं ब्लूं में ब्लूं मों ब्लूं हें ब्लूं क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं भगमालिनी नित्या श्री पादुकां पूजयामि तर्पयामि नमः।

ई ह्रीं नित्यक्लिन्नायै नमः नित्यक्लिन्नेमदद्रवे स्वाहा नित्यक्लिन्ना नित्या श्री

ई ओं ह्रौं श्रौं क्रौं चरौं छ्रौं ज्रौं झ्रौं भेरुण्डायै नमः स्वाहा भेरुण्डा नित्या श्री

ओं ह्रीं वन्यवासिन्यै नमः - वन्यवासिनी नित्या श्री इति पंच पूजयेत्

दक्षपार्श्वे ओं ह्रीं फ्रें सहनित्यक्लिन्ने मदद्रवे महाविद्येश्वरी नमः स्वाहा

ओं ऋं ह्रीं शिवदूत्यै नमः

ओं ऋं ह्रीं हुं खे च छे चः श्रीं हें यें ह्रीं फट् त्वरितायै नमः

ओं लुं ऐं क्लीं सौः कुलसुन्दर्यै नमः

ओं लूं ऐं क्लीं सौः स्रौंः व्हलीं स्रौं सौं क्लीं ऐं रां रीं क्लीं ब्लूं नित्यायै नमः इति पंच पूजयेत्

ऐं ग्रं एं ओं क्रौं फ्रें स्रूं ह्रीं क्रौं नित्यमदद्रवे ह्लूं क्रौं नीलपातकायै नमः

एं ओं स्फरें विजयायै नमः - विजया नित्या श्री

ओं स्त्रौं सर्वमङ्गलायै नमः - सर्वमङ्गला नित्या श्री

ओं ओं नमो भगवती ज्वालामालिनी देवी सर्वभूतसंहारकारिके जातवेदसी ज्वलन्ती प्रज्वलन्ती ज्वल ज्वल प्रज्वल हुं रं रं हुं फट् ज्वालामालिनी नित्यायै नमः

ओं अं क्रौं त्रिविद्या नित्यायै नमः इति पंच पूजां नित्यपिरत्वा पुष्पांजलिं दद्यात् — जपसमर्पणम्

तृतीयावरणम् - भूपुराद्बहिःपूर्व द्वारे गं गणपतये नमः पश्चिमद्वारे भं भट्काय नमः। उत्तरद्वारे ह्रीं दुर्गायै नमः, दक्षिणद्वारे क्षं क्षेत्रपालकाय नमः इति द्वारपालान् पूजनतर्पणं कुर्यात्। बाह्य चतुरस्रस्य प्रथमरेखायां पश्चिमादिद्वारचतुष्टये—

अणिमासिद्धि श्री, लघिमा सिद्धि श्री, महिमा सिद्धि श्री, ईशित्वसिद्धि श्री। कोणचतुष्टये वशित्व सिद्धि श्री, प्राकाम्य सिद्धि श्री, भक्ति सिद्धि श्री, इच्छा सिद्धि श्री, वरुणनिर्ऋति मध्ये प्राप्यसिद्धि श्री, पूर्वेशानयोर्मध्ये सर्वकाम सिद्धि श्री इति पूजयेत्। मध्यरेखायां पश्चिमादिद्वारचतुष्टये—

ह्रीं श्रीं रां ब्राह्मी श्री, ईं माहेश्वरी श्री, ऊं कौमारी श्री, ॠं वैष्णवी श्री कोण चतुष्टये ह्रीं श्रीं ॡं वाराहि श्री, ऐं इन्द्राणी श्री, औं चामुण्डा श्री, अः महालक्ष्मी श्री इति पूजयेत्।

तृतीयरेखायां पश्चिमादिद्वारचतुष्टये त्रिकण्डमुद्रा श्री ह्रीं सर्व संक्षोभिणी मुद्रा श्री, सर्व विद्रावणी मुद्रा श्री, सर्वाकर्षिणी मुद्रा श्री कोण-चतुष्टये क्लूं सर्ववशंकरी मुद्रा श्री, सर्वोन्मादकरमुद्रा श्री, महाङ्कुश मुद्रा श्री खेचरी मुद्रा श्री, बीजमुद्रा श्री, त्रिवळये बीजमुद्रा श्री, योनिमुद्रा श्री, चास्त्वा दर्शनाय श्री इति पूजयेत् अभीष्टसिद्धिं—

त्रैलोक्यमोहनचतुरश्रचक्रे श्री महात्रिपुरसुन्दरी समाधिष्ठिते प्रकटयोगिन्यः समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः सपूजिताः संतर्पिताः संतु इति तर्पयेत्।

चतुर्थावरणम्—षोडशदलेषु पश्चिमदलादारभ्य वामावर्तेन

| | | | | |
|---|---|---|---|---|
| अं | कामाकर्षिणी नित्याकला | | | श्री |
| आं | बुध्याकर्षिणी नित्याकला | | | ” |
| इं | अहंकाराकर्षिणी नित्याकला | | | ” |
| ईं | शब्दा | कर्षिणी | ” | ” |
| उं | रूपा | ” | ” | ” |
| ऊं | स्पर्शा | ” | ” | ” |
| ऋं | रसा | ” | ” | ” |
| ॠं | गन्धा | ” | ” | ” |
| ऌं | छिन्दा | ” | ” | ” |
| ॡं | धैर्या | ” | ” | ” |
| एं | स्मृत्या | ” | ” | ” |
| ऐं | नामा | ” | ” | ” |
| ओं | बीजा | ” | ” | ” |
| औं | अमृत्या | ” | ” | ” |
| अं | शरीरा | ” | ” | ” |
| अः | आत्मा | ” | ” | ” |

इति षोडशयोगिनीः पूजयेत् । हस्ते अर्घ्यजलमादाय सर्वाशा परिपूरके षोडशदल-चक्रे श्री महात्रिपुरसुन्दरी समधिष्ठिते एताः कामाकर्षिण्याद्याः गुप्त योगिन्यः समुद्राः संतु नमः इति पूजयेत्

पंचमावरणम्—अष्टदलचक्रे पूर्वादिक्रमेण

| | | | | | | |
|---|---|---|---|---|---|---|
| ह्रीं | श्रीं | कं | ङं | अनंगकुसुमा | देवी | श्री |
| ” | ” | चं | ” | अनंगमेखला | देवी | ” |
| ” | ” | टं | णं | अनंगमदना | ” | ” |
| ” | ” | ” | ” | अनंगमदनातुर | ” | ” |
| ” | ” | पं | मं | अनगरेखा | ” | ” |
| ” | ” | यं | वं | अनंगयोगिनी | ” | ” |
| ” | ” | सं | हं | अनंगांकुशा | ” | ” |
| ” | ” | लं | क्षं | अनंगमालिनी | ” | ” |

इत्यष्टौ पूजयेत् — ततः सर्वसंक्षोभकरे अष्टदलचक्रे श्री महात्रिपुरसुन्दरी समधिष्ठिते एताः अनंगकुसुमाद्याः गुप्ततर योगिन्यः समुद्राः—संतु नमः

षष्ठावरणम्—चतुर्दशारे चक्रे पश्चिमादि वामावर्तेन

ह्रीं श्रीं सर्वसंक्षोभिणी शक्तिः श्री
" " सर्वविद्राविणी " "
" " सर्वाकर्षिणी " "
" " सर्वाह्लादिनी " "
" " सर्वसंमोहिनी " "
" " स्तम्भिनी " "
" " सर्व जृम्भिणी " "
" " सर्ववशंकरी " "
" " सर्व रञ्जनी " "
" " सर्वोन्मादिनी " "
" " सर्वाशापरिपूरणी " "
" " सर्वमन्त्रमयी " "
" " सर्वद्वन्द्व क्षयकरी " "। इति पूजयेत् ।

सामान्यार्घ्यं जलं गृहीत्वा सर्वसौभाग्यदायके चतुर्दशारचक्रे श्री महा त्रिपुरसुन्दरी समाधिष्ठिते सर्वसंक्षोभिण्याद्याः शक्तयः संप्रदाय योगिन्यः समुद्राः—संतु नमः इति अर्पयेत् सप्तमावरणम् — दशारचक्रे पश्चिमादि वामावर्तेन

ह्रीं श्रीं सर्वसिद्धि प्रदा देवी श्री
" " सर्वसम्पद प्रदा " "
" " सर्वप्रियङ्करी " "

ह्रीं श्रीं सर्वप्रिङ्यकरी देवी श्री
" " सर्वमङ्गलकारिणी देवी "
" " सर्वकामप्रदा देवी "
" " सर्वदुःखविमोचि देवी "
" " सर्वाङ्गदेवी "
" " सर्वमृत्युविनाशिनी देवी "
" " सर्वविघ्ननिवारिणी " "
" " सर्वसौभाग्यदायिनी " " इति पूजयेत् । हस्ते अर्घ्यजलमादाय सर्वाशापरिपूरके दशारचक्रे श्री महात्रिपुरसुन्दरी समधिष्ठिते एकाः सर्वसिद्धि-प्रदाद्याः देव्यः कुलकौलिनीयोगिन्यः समुद्राः संतु नमः

अष्टमावरणम् - पुनः अन्तर्दशारचक्रे पश्चिमादि वामावर्तेन

ह्रीं श्री सर्वज्ञा देवी श्री
" " सर्वशक्तिमयी देवी "
" " सर्वैश्वर्यप्रदा " "
" " सर्वज्ञानमयी " "
" " सर्वव्याधिविनाशिनी देवी श्री
" " सर्वाधारस्वरूपा " "
" " सर्वपापहरा " "
" " सर्वानन्दमयी " "
" " सर्वरक्षास्वरूपिणी " "
" " सर्वेप्सितफलप्रदा " "

इति संपूजयेत् । ततो अर्घ्यजलमादाय सर्वरक्षाकरे अन्तर्दशारचक्रे त्रिपुरमालिनी श्री त्रिपुरसुन्दरी देवी समधिष्ठिते । एताः सर्वज्ञाद्याः निगर्भयोगिन्यः समुद्राः संतु नमः

नवमावरणम् - अष्टारचक्रे पश्चिमादिवामावर्तेन

ह्रीं श्रीं अं आं अः अः वशिनी वाग्देवता श्री
" " कं झं कामेश्वरी वाग्देवता "
" " चं ञं मोहिनी " "
" " टं णं विमला " "
" " तं नं अव्यया " "

ह्रीं श्रीं पं मं जयिनी वाग्देवता श्री
ह्रीं श्रीं यं वं सर्वेश्वरी वाग्देवता श्री
ह्रीं श्रीं शं षं कौलिनी वाग्देवता श्री

इति संपूजयेत् । अर्घ्यजलं गृहीत्वा सर्वरोगहरे अष्टारचक्रे श्री महात्रिपुरसुन्दरी समधिष्ठिते एताः वशिन्याद्याः रहस्ययोगिन्यः समुद्राः संतु नमः इति पूजयेत् । ततः अभ्यन्तर चक्रमध्ये दक्षिणे

ओं उत्तमबाणाय नमः
वामे मोहधनुषे "
तदधः कर्कशाय "
ततः त्रिकोणे कामेश्वर्यै नमः
चक्रिण्यै नमः
भगशालिन्यै नमः

इति पुष्पांजलिं दत्वा मूलेन दशवारं पूजनतर्पणं कुर्यात् । ततः पुरश्चरणं लक्षजपः करवीरपुष्पैः त्रिमधुरोपेतैः दशांशतो होमः ।

इति मन्त्रमहार्णवोक्त विधानम्

—

# बालात्र्यक्षरीत्रिपुरापूजनयन्त्रम्

मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । पूर्वाद्यष्टसु दिक्षु इच्छायै, ज्ञानायै, क्रियायै, कामिन्यै, कामदायिन्यै, रत्यै, रतिप्रियायै, नन्दायै, मध्ये मनोन्मन्यै नमः । तदुपरि ह्स्सौः सदाशिव महाप्रेत पद्मासनायै नमः इति संपूज्य तदुपरि अग्न्युत्तारणादि शुद्धीकृतमूर्तिं संस्थाप्य प्राणप्रतिष्ठां कृत्वा मूलेन आवाहनादि पुष्पांतैरुपचारैः संपूज्य सविन्मय इति श्लोकेन देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् । देवीवामकोणे ओं रति श्री पा पू—तर्पयामि नमः । देवीदक्षकोणे ओं प्री ति श्री, देव्यग्रे मनोभवा श्री अभीष्टसिद्धिं प्रथमावरणार्चनम् । सामान्यार्घ्योदकेन पूजितस्तर्पिताः संतु नम इति पूजयेत्

द्वितीयावरणम् — मध्ययोनेः बहिर्भागे आग्नेय्यादिचतुर्दिक्षु क्रमेण

आं सौं क्लीं ऐं हृदयशक्ति श्री
ईं सौः ” ” शिरश्शक्ति ”
ऊं ” ” ” शिखाशक्ति ”
ऐं ” ” ” कवचशक्ति ”
मध्ये औं ” ” ” नेत्रशक्ति ”
दिक्षु च अः सौः क्लीं ऐं अस्त्र शक्ति ”

इति षडङ्गानि पूजयित्वा अभीष्टसिद्धिं इति श्लोकेन पूजासमर्पणम् कुर्यात्

तृतीयावरणम्— मध्ययोनेः बहिर्भागे पूर्वादिचतुर्दिक्षु

ह्रीं मनोभवा श्री
क्लीं मकरध्वजाय ”
ऐं गन्धर्व ”
ब्लूं मन्मत ”
मध्ये कामदेव ”

इति पूजयित्वा अभीष्टसिद्धिं इति पूजासमर्पणम् कुर्यात्

चतुर्थावरणम् — मध्य योने बहिः मनोभावाद्य समीपे

घ्रां द्राविणी श्री

घ्रीं क्षोभिणी ,,

क्लीं वशीकरणी ,,

ब्लूं आकर्षिणी ,,

स्त्रीं संमोहिनी ,,

इति संपूज्य — अभीष्टसिद्धिं इति पूजासमर्पणम् कुर्यात्

पञ्चमावरणम् ततः अष्टयोनेः पूज्यपूजकयोरंतरालं प्राची तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण

शुभका श्री

भग ,,

भगसर्पिणी ,,

भगमालयै ,,

अनंगनंगायै ,,

कुसुमापरा ,,

अनंगमेखला ,,

अनंगमना ,,

इति पूजासमर्पणम् कुर्यात्

षष्ठावरणम् — अष्टदलमूले प्राचीक्रमेण

आं ब्राह्मी श्री

ईं माहेश्वरी ,,

ऊं कौमारी ,,

ॠं वैष्णवी ,,

ॡं वाराही ,,

ऐं इन्द्राणी ,,

औं चामुण्डी ,,

अः महालक्ष्मी ,,

ति संपूज्य अभीष्ठसिद्धिं इति पूजासमर्पणम्

सप्तमावरणम् — ततोऽष्टदलमध्ये

अं असितांगभैरव श्री

इं रुरुभैरव ,,

उं चण्डभैरव ,,

ॠं क्रोधभैरव ”

लृं उन्मत्तभैरव ”

एं कपालभैरव ”

ओं भीषणभैरव ”

अं संहारभैरव ”

इति पूजयित्वा अभीष्टसिद्धिं इति पूजासमर्पणम् कुर्यात्

अष्टमावरणम् - अष्ट दलाग्रेषु प्राचीक्रमेण

कामरूपपीठ श्री

मलयरूपपीठ ”

कोल्लगिरिपीठ ”

चौहारपीठ ”

कुलान्तपीठ ”

जालन्धरपीठ ”

उटभाणपीठ ”

कोट्टपीठ ”

इत्यष्टौ पूजयित्वा अभीष्टसिद्धिं इति पूजासमर्पणम् कुर्यात् ।

नवमावरणम् भूपुराभ्यन्तरे पूर्वादिक्रमेण दशादिग्विदिक्षु

हेतुक श्री

त्रिपुरान्तक ”

तालवे ”

अग्निजिह्वा ”

कालान्तक ”

कपाल ”

एकपाद ”

भीमरूप ”

मलय ”

हाटकेश्वर ”

इति पूजयित्वा अभीष्टसिद्धिं इति पूजासमर्पणम् ।

दशमावरणम् - भूपुराद्बहिः इन्द्राद्यष्टदिक्पालान् सायुधान् पूजयेत् । पुरश्चरणं त्रिलक्षजपः किंशुकपुष्पैः करवीरपुष्पैः वा मधुरान्वितैः दशांशतो होमः । तत्तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनं कुर्यात् । किंशुकः इति — नन्द्यावर्तं वगरः वृक्षः ।

# बालाधारणयन्त्रम्

बालामन्त्रयन्त्रविधानानेन धारणयन्त्रे पूजां कृत्वा मूलं लक्षं जप्त्वा यन्त्रधारणं कुर्यात् ॥

त्रैपुरमाख्यातं जप्त्वा संपदं साधितं बहुशः

विधृतिदद्यात् दानं कीर्तिं सुखं पुमान्

बालामन्त्रभेदानां चतुर्दशः संख्या भवति। एतेषां चतुर्दशबाला-मन्त्राणां दक्षिणामूर्तिः ऋषि । गायत्री छन्दः । त्रिपुरा बाला देवता ।

ध्यानं । पाशांकुशौ पुस्तकमक्षसूत्रं करैर्दधाना सकलामाराध्य ।

रक्ता त्रिनेत्रा शशिशेखरेयं ध्येयाखिलार्थैं त्रिपुरात्र बाला ।

—

# भुवनेश्वरी पूजनयन्त्रम्

मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । जयायै, विजयायै, अजितायै, अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै पीठमध्यायै मंङ्गलायै षट्कोण अष्टदल वृत्त षोडशदल भूपुरात्मकं यन्त्रं अथवा मूर्तिं अग्निधारणशुद्धिं कृत्वा ओं ह्रीं सर्वशक्तिकमलासनाय नमः इति पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्राणप्रतिष्ठांकृत्वा पुनः ध्यात्वा मूर्तिं प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरण पूजां कुर्यात् प्रथमावरणम् — देव्यास्समीपे मध्ये हृल्लेखा श्री पादुकां पूजयामि तर्पयामि नमः इति सर्वत्र पूर्वे खगना श्री, दक्षिणे रक्ता श्री, उत्तरे करालिखा श्री, पश्चिमे महोच्छुष्मा श्री इति पूजयेत् मूलेन अभीष्टसिद्धिं —प्रथमावरणार्चनम्—

द्वितीयावरणम् षट्कोणकेसरेषु अग्निकोणे ह्रां हृदयशक्ति श्री, नैऋति कोणे ह्रीं शिरश्शक्ति श्री, वायव्यकोणे ह्रूं शिखाशक्ति श्री, इशान्ये हैं कवच शक्ति श्री । पूज्यपूजकयोर्मध्ये ह्रौं नेत्रशक्ति श्री, देवी पश्चिमे ह्रः अस्त्रशक्ति श्री इति पूजयेत् - अभीष्टसिद्धिं - द्वितीयावरणार्चनम्.

तृतीयावरणम् - षट्कोण ग्रेषु पूर्वे

| | | |
|---|---|---|
| | गायत्री | श्री |
| | ब्रह्मी | ” |
| नैऋते | सावित्री | ” |
| | विष्णु | ” |
| वायुकोणे | सरस्वती | ” |
| | रुद्र | ” |
| अग्निकोणे | श्री | ” |
| | गणपति | ” |
| पश्चिमे | रति | ” |
| | स्मर | ” |
| ऐशान्ये | पुष्टि | ” |
| | गणपति | ” |

षट्कोण दक्षिणे शङ्खनिधि श्री, वामे पद्मनिधि श्री इति पूजयेत् । अभीष्टसिद्धिं इति तृचीयावरणार्चनम् चतुर्थावरणम् - पूर्वाद्यष्टदले अनङ्गकुसुमा श्री, अनङ्ग कुसुमतुरा श्री, अनङ्गमदनश्री, अनङ्मदनातुरा श्री; भुवनपाला श्री, गगनरेखा श्रो, शशिरेखा श्री, गगनरेखा इति पूजयेत् - अभीष्टसिद्धिं - चतुर्थावरणार्चनम् पंचमावरणम् – षोडशदलेषु पूर्वादिक्रमेण

| | |
|---|---|
| कराळी | श्री |
| विकराळी | ” |
| उमा | ” |
| सरस्वती | ” |
| श्रीये | ” |
| दुर्गा | ” |
| उषा | ” |
| लक्ष्मी | ” |
| श्रुति | ” |
| स्मृति | ” |
| धृति | ” |
| श्रद्धा | ” |
| मेधा | ” |
| मति | ” |
| कान्ति | ” |
| आर्या | ” |

इति पूजयत् - अभीष्टसिद्धिं - इति पंचमावरणार्चनम्

षष्ठावरणम् - भूपुरस्या-त्तन्तरे पूर्वादिक्रमेण

अनंङ्गरूपा श्री
अनङ्गमदना ,,
अनंगमदनातुरा ,,
भुवनरेखा ,,
भुवनपालिका ,,
भुवनशिशिरा ,,
अनंगवेदना ,,
अनंगमेखला ,,

इति पूजयेत् - अभीष्टसिद्धिं - षष्टावरणार्चनम् सप्तमावरणार्चनम् - भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानिच पूजयेत् अभीष्टंसिद्धिं - सप्तमावरणार्चनम् । अस्य पुरश्चरणं द्वात्रिंशल्लक्षजपः। ततः दशांशेन हवन-तर्पण मार्जन ब्राह्मणपूजां कुर्यात्

हवनद्रव्यं = त्रिस्वादूक्तैः प्रजुहूयादष्टद्रव्यतः दशांशतः
त्रिस्वादूक्तैः = गृतमधुशर्कराभिः
अष्टद्रव्यैः = अश्वत्थोदुम्बरप्लक्षन्यग्रोध समिधः तिलाः सिद्धिद—पायसादीन्
तिलाः = सिद्धिध पायास आज्योनि द्रव्यान् अष्टौ विधुर्भुदाः

—

# श्री त्रिपुरपूजनयन्त्रम्

मं. मंडूकादिपरतत्त्वांत पीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् ।

| | | |
|---|---|---|
| ओं | इच्छायै | नमः |
| ,, | ज्ञानायै | ,, |
| ,, | क्रियायै | ,, |
| ,, | कामदायिन्यै | ,, |
| ,, | शक्त्यै | ,, |

„ रतिप्रियायै „

„ नन्दायै „

„ परायै „

मध्ये „ अपरायै „

तदुपरि स्वर्णादिनिर्मितं अथवा देव्या अष्टगन्धेन नवयोन्यात्मकं यन्त्रं । तदुपरि अष्टदलं तद्बहिः भूपुरं निर्माय स्हौः सदाशिव महाप्रेत पद्मासनाय नमः इति पुष्पाद्यासनं दत्त्वा तत्र मूर्तिं संस्थाप्य पुनर्ध्यात्वा ऐं ह्रीं सक सन्न तक्ले ह्रौं इति मन्त्रेण बिन्दुचक्रे मूर्तिं सङ्कल्प्य त्रिखण्ड मुद्रया देवीं ध्यात्वा आवाहनादि पुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

संविन्मये परे देवी परामृतरसप्रिये ।
भैरव्यनुज्ञां त्वं देहि परिवारार्चनाय मे ॥

इति पुष्पांजलिं दद्यात् प्रथमावरणार्चनम् । खेचरेषु अग्न्यादि कोणेषु मध्ये दिक्षु च अङ्गमन्त्रेण कटकं पूजयेत् ।

ह्स्रां हृदयशक्ति श्री

ह्स्रीं शिवशक्ति

ह्स्रैं कवचशक्ति

ह्स्रौं नेत्रशक्ति

ह्स्रः अस्त्रशक्ति

इति पूजयेत् । अभीष्टसिद्धिं प्रथमावरणार्चनम् । सर्वत्र पूजितास्तर्पिताः संतु नमः इति वदेत् ।

द्वितीयावरणम्— पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य क्रमानुसारेण पूजयेत् ।

उत्तरे द्रां द्राविणी

द्रीं क्षोभिणी

क्लीं वशीकरण „

क्लुं लोपाकर्षिणी „

आग्नेय्याम् संमोहिनी „

उत्तरे ह्रीं कामाय „

क्लीं मन्मथ „

दक्षिणे ऐं गन्धर्व „

क्लुं मकरध्वज „

आग्नेय्यां मीनकेतु „

इति पूजयेत् अभीष्टसिद्धिं—

तृतीयावरणम् अष्टयोनिषु प्राच्यादिक्रमेण ।

ऐं क्लीं श्रीं सः शुभगा

ऐं क्लीं श्रीं सः भगा श्री

" " " " भागसर्पिणी "

" " " " भगमालिनी "

" " " " अनंगायै "

" " " " अनंगकुसुमा "

" " " " अनंगमेखला "

" " " " अनंगमदना "

इति पूजयेत् अभीष्टसिद्धिं - तृतीयावरणार्चनम् ।

चतुर्थावरणम् ; अष्टदलेषु प्राचीक्रमेण असिताङ्गब्राह्मी श्री, श्री, रूरुमाहेश्वरी श्री, चण्डकौमारी श्री, क्रोध वैष्णवी श्री, उन्मत्तवाराही श्री,कपालीन्द्राणी श्री, भीषणचामुण्डाश्री ; संहारमहालक्ष्मी श्री, इति पूजयेत् । अभीष्टसिद्धिं

ततः पंचमावरणम् - इन्द्रादिदश— दिक्पालान् वज्राद्यायुधानि च पूजयेत् अस्य पुरश्चरणं चतुर्विंशति लक्षजाः द्वादशसहस्रपुष्पैः होमः । ततद्दशांशनतर्पण मार्जनब्राह्मणभोजनं कुर्यात् ।

पीठादौ रचिते सर्वतोभद्रमंडले आं आदारशक्त्यत्यादि परतत्त्वांत पीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् ।

ओं जयायै, विजयायै, अजितायै, अपराजितायै, नित्यायै, विलासिन्यै दोग्ध्रै अघोरायै मङ्गे मंगलायै नमः सर्वबुद्धिप्रदे वर्णनीये सर्वसिद्धिप्रदे ठाकिनीये ओं वज्रवैरोचिनीये एह्येहि नमः इति पुष्पाद्यासनं दत्त्वा तदुपरि मूर्तिं निधाय पुनर्ध्यात्वा प्राणप्रतिष्ठां कृत्वा ओं सर्वसिद्धिवर्णनीये नमः सर्वसिद्धि ढाकिनीये वज्रवैरोचनीये इहागच्च गच्छ पुनः मंत्रं उच्चार्य इहाधिष्ठ इहसन्निधेहि इह-सन्निरुध्यस्य इति आवाह्य हुंकारबीजेन मूर्तिं प्रकल्प्य पाद्यादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा प्रतिलोमक्रमेण आवरणपूजां कुर्यात् ।

आवरणपूजा भूपुरात्बहिः पूर्वादिक्रमेण वं वज्र शं शक्ति दं दण्ड खं खट पां पाश अं अङ्कुश गं गंगा त्रिं त्रिशूल इन्द्रेशयोर्मध्ये पं पद्म वरुण निरृतियोर्मध्ये चक्र इति । अभीष्टसिद्धिं द्वितीयावरणम् - लं इन्द्रादि दशदिक्पालान् पूजयेत् अभीष्टसिद्धिं - द्वितीयावरणार्चनम् - तृतीयावरणम् - भूपुराभ्यन्तरे चतुर्दिक्षु पूर्वादिक्रमेण काळ विकराळ अतिकराल महाकाल

इति पूजयेत् - अभीष्टसिद्धिं तृतीयावरणार्चनम् चतुर्थावरणम् अष्टदलेषु पूज्य-पूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्रचीक्रमेण एकलिङ्गव योगिनी डाकिनी भैरवी महाभैरवी इन्द्राक्षि असिताङ्गि संहारिणि इति पूजयेत् अभीष्टसिद्धिं चतुर्थावरणम्

पंचमावरणम् — षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च

आं खड्गाय हृदय श्री

ईं खड्गाय शिरः „

ऊं वज्राय शिखा „

ऐं पाशाय कवच „

ह्रौं अङ्कुशाय नेत्रत्रय „

हः वश रक्ष रक्ष ह्रीं ह्रीं अस्त्र श्री एतेषां षडङ्गमन्त्राणामन्ते स्वाहा इति संयोज्य ततः तर्पणं कुर्यात् ।

अभीष्टसिद्धिं — पंचमावरणार्चनम्

षष्ठावरणार्चनम् — बहिस्त्रिकोणबाह्ये

ऐं छिन्नमस्ता श्री

देवी दक्षिणतः ऐं डाकिनी „

देवी वामे ऐं वर्णिनी „

इति पूजयेत् - अभीष्टसिद्धिं - षष्ठावरणार्चनम् अस्य पुरश्चरणं चतुर्लक्षजपः । पलाशबिल्वपुष्पैः पलै र्वा दशांशतो होमः तत्तद्दशांशेन तर्पण मार्जन ब्राह्मण भोजनं कुर्यात् ।

...

# धूमवतीपूजनयन्त्रम्

पीठादौ सर्वतोभद्रमण्डले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति पूजयेत् । ततः नवपीठशक्ती । पूजयेत् पूर्वाद्यष्टसु दिक्षु -कामदायै नमः मानदायै, नक्तायै, मधुरायै, मधुराननायै, नर्मदायै भोगदायै, नन्दायै, मध्ये प्राणदायै इति पूजयेत् । ओं धूमवतीयोगपीठाय नमः इति पुष्पाद्यासनं दत्वा तत्र शुद्धिकृतयन्त्रं मूर्तिं वा संस्थाप्य प्राणप्रतिष्ठां कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम् - षट्कोणकेसरेषु मध्ये दिक्षु च

| | |
|---|---|
| घूं घूं हृदयशक्ति | श्री |
| ,, शिरश्शक्ति | ,, |
| मां शिखाशक्ति | ,, |
| वं कवचशक्ति | ,, |
| कि नेत्रशक्ति | ,, |
| स्वाहा अस्त्रशक्ति | ,, |

इति पूजयेत् । अभीष्टसिद्धिं प्रथमावरणार्चनम् ।

द्वितीयावरणम् - अष्टदले पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण

| | |
|---|---|
| क्षुधा | श्री |
| घृष्णा | ,, |
| रति | ,, |
| निद्रा | ,, |
| निर्ऋति | ,, |
| दुर्गा | ,, |
| रूपा | ,, |
| क्षमा | ,, |

इति पूजयेत् । अभीष्टसिद्धिं - द्वितीयावरणार्चनम् ।

तृतीयचतुर्थावरणम् - भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । अस्य पुरश्चरणं एकलक्षजपः । तिलमिश्रितघृतेनदशांशतो होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं कुर्यात्

---

# बगलामुखी पूजनयन्त्रम्

पीठादौ सर्वतोभद्रमण्डले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् ओं जयायै, विजयायै; अजितायै, अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै मध्ये मंगलायै नमः ।

ओं ह्लीं बगलामुखी योगपीठाय नमः इति पुष्पाद्यासनं दत्वा तदुपरि शुद्धितक्रयन्त्रं मूर्तिं वा प्रकल्प्य पुनर्ध्यात्वा मूलेन पाद्यादिपुष्पांतैरुपचारैः

संपूज्य आवरणपूजां कुर्यात् । संविन्मये इति देव्याज्ञां गृहीत्वा पूजां आरभेत् ।
प्रथमावरणम् — त्रिकोणमध्ये ऐशान्यादिक्रमेण ओं सत्त्व श्री ओं रजश्री ओं तमः श्री त्रिकोणान्पूजयेत् इति अभीष्टसिद्धि···प्रथमावरणार्चनम् ।
द्वितीयावरणम्— षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च

ओं ह्लीं हृदयशक्ति श्री
बगलामुखी शिरश्शक्ति ,,
सर्वदुष्टानां शिखाशक्ति ,,
वाचं मुखं स्तंभय कवचशक्ति ,,
जिह्वां कीलय नेत्रत्रय शक्ति ,,
बुद्धिं विनाशाय ह्लीं ओं स्वाहा अस्त्र- शक्ति श्री

इति पूजयेत् । अभीष्टसिद्धिं द्वितीयावरणार्चनम् ।
तृतीयावरणम् - अष्टदले पूज्यपूजकयोरंतरालं प्रचीं तदनुसारेण अन्या दिशः प्रकल्प्य—

ब्राह्मी श्री
माहेश्वरी ,,
कौमारी ,,
वैष्णवी ,,
वाराही ,,
इन्द्राणी ,,
चामुण्डा ,,
महालक्ष्मी ,,

इति अष्टौ मातृः पूजयेत् । अभीष्टसिद्धि तृतीयावरणार्चनम् ।
चतुर्थावरणम् तस्योपरि ब्राह्मयादिसमीपे

असिताङ्गभैरव श्री
रुरुभैरव ,,
चण्डभैरव ,,
क्रोधभैरव ,,
उन्मत्तभैरव ,,
कपालभैरव ,,
भीषणभैरव ,,
संहारभैरव ,,

इत्यष्टौ भैरवान् पूजयेत् । अभीष्टसिद्धिं चतुर्थावरणम् ।

पंचमावरणम्—षोडशदलेषु प्राचीक्रमेण

| | |
|---|---|
| मङ्गला | श्री |
| स्तम्भिनी | " |
| जृम्भिणी | " |
| मोहिनी | " |
| वश्या | " |
| बला | " |
| अचला | " |
| भूधरा | " |
| कल्मषा | " |
| धात्री | " |
| कलन | " |
| कालाकर्षिणी | " |
| भ्राह्मिका | " |
| मन्दगमना | " |
| भोगस्था | " |
| भाविका | " |

इति षोडशशक्तीः पूजयेत् । अभीष्टसिद्धि पंचमावरणम् ।

षष्ठावरणम्—भूपुराभ्यन्तरे पूर्वादिचतुर्दिक्षु

| | |
|---|---|
| गणपति | श्री |
| भटुक | " |
| योगिनी | " |
| क्षेत्रपाल | " |

इति द्वारपालान् पूजयेत् । अभीष्टसिद्धि षष्ठावरणार्चनम् ।

सप्तमावरणम्—भूपुराद्बहिः पूर्वादिदशदिक्षु इन्द्रादीन् ततः वज्राद्यायुधानि च पूजयेत् ।

सप्तम अष्टमावरणार्चनम् । अस्य पुरश्चरणं लक्षजपः । चम्पककुसुमैः दशांशतो होमः तत्तद्दशांशेन तर्पणमार्जनभोजनं कुर्यात् ।

—

## बगुखीस्तंभनयंत्रगलाम्

षट्कोणे बिलिखेद्बीजं साध्यनामान्वितममोहं ।
हरिताल नवै रुन्मत्त रस संयुतैः ॥

शेषाक्षरैः समानीतं दुरारोह विराजितम् । दत्तूर रसाक्त हरिद्राचूर्णेन षट्कोणेषु अमुकं स्तम्भयेति वर्णयुत ह्रीं इति बीज विलिख्य मन्त्रशेषार्णैः संवेष्ट्योपरि चतुरश्रेण वेष्टितम् पीतसूत्रवीत कृत्वा भ्रमद्कुम्भकारचक्रस्थ मृदा रचित वृषोऽग्वरे प्रक्षिप्य हरितालेन संलिप्य वृषं प्रत्यहं पूजयेत् ।

—

# मातङ्गी द्वात्रिंशदक्षरमन्त्रयन्त्रम्

पीठादौ सर्वतोभद्रमंडले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति पूजयेत् ततः नवपीठशक्तीः पूजयेत् । विभूत्यैमातङ्ग्यै नमः उन्नत्यै मातङ्ग्यै कान्त्यै मातङ्ग्यै सृष्ट्यै मातङ्ग्यै कीर्त्यै मातङ्ग्यै सन्नत्यै मातङ्ग्यै व्युष्ट्यै मातङ्ग्यै उत्कृष्ट्यै मातङ्ग्यै मध्ये ऋध्यै मातङ्ग्यै इति पूजयेत् । ततः सर्वशक्ति-कमलासनाय नमः इति पुष्पाद्यासनं दत्वा शुद्धिकृत मूर्तिं यंत्रं वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुप-चारैः संपूज्य देव्यज्ञां गृहीत्वा आवरणपुजां कुर्यात्

प्रथमावरणम् — त्रिकोणे

ओं ह्रीं ऐं श्रीं रत्यै मातङ्ग्यै नमः श्री पादुकाम् पूजयामि तर्पयामि नमः इति सर्वत्र

ओं ह्रीं ऐं श्रीं प्रीतिमातङ्गी श्री

" " " " मनोभवा मातङ्गी " इति पूजयेत् - मूलं

अभीष्ठसिद्धिं - प्रथमावरणमर्चनम्

द्वितीयावरणम् - षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च

ह्रीं ऐं श्रीं हृदयशक्ति श्री

नमो भगवति शिरशक्ति ,

उच्छिष्ट चण्डालि शिखाशक्ति

श्री मातङ्गेश्वरि कवचशक्ति "

सर्वजनवशंकरि नेत्रशक्ति "

स्वाहा अस्त्रशक्ति "

इति पूजयेत् - अभीष्टसिद्धिं...द्वितीयवरणार्चनम् ।

तृतीयावरणम् - अष्टदलेषु -पूज्यपूजकयोरंतरालं प्राची तदनुसारेण अन्या दिशः प्राकल्प्य प्राचीक्रमेण

ओं ह्रीं ऐं श्रीं ब्राह्मी मातङ्गी श्री
" " " " माहेश्वरी " "
" " " " वैष्णवी " "
" " " " वाराही " "
" " " " इन्द्राणी " "
" " " " चामुण्डा " "
" " " " महालक्ष्मी " " इति अष्टौ शक्तीः पूजयेत्
अभीष्टसिद्धिं — तृतीयावरणार्चनम् ।

चतुर्थावरणम् — ततो द्वितीयाष्टदलेषु प्रचीक्रमेण ।
ओं ह्रीं ऐं श्रीं असिताङ्गभैरवाय मातङ्गी श्री
" " " " रुरुभैरव " "
" " " " चण्डभैरव " "
" " " " क्रोधभैरव " "
" " " " उन्मत्तभैरव " "
" " " " कपालभैरव " "
" " " " भीषणभैरव " "
" " " " संहारभैरव " "
इति अष्टौ भैरवान् पूजयेत् ।

पंचमावरणम् - षोडशदलेषु प्राचीक्रमेण
ओं ह्रीं ऐं श्रीं वामायै मातङ्गी श्री
" " " " ज्येष्ठा " "
" " " " रौद्री " "
" " " " शान्ति " "
" " " " श्रद्धा " "
" " " " माहेश्वरी " "
" " " " क्रिया " "
" " " " लक्ष्मी " "
" " " " तुष्टि " "
" " " " मोहिनी " "
" " " " प्रमदा " "
" " " " सुवासिनी " "

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | ,, | ,, | विद्युल्लता | मातङ्गी | श्री |
| ,, | ,, | ,, | ,, | सुन्दरी | ,, | ,, |
| ,, | ,, | ,, | ,, | नन्दा | ,, | ,, |
| ,, | ,, | ,, | ,, | नन्दभुक्ति | ,, | ,, |

इति पूजयेत् — अभीष्टसिद्धिं — पंचमावरणार्चनम् ।

षष्ठावरणम् —भूपुराभ्यन्तरे चतुर्दिक्षु प्राचीक्रमेण

| | | | | | | |
|---|---|---|---|---|---|---|
| ओं | ह्रीं | ऐं | श्रीं | मातङ्ग्यै | मातङ्गी | श्री |
| ,, | ,, | ,, | ,, | महा मातङ्ग्यै | ,, | ,, |
| ,, | ,, | ,, | ,, | महालक्ष्म्यै | ,, | ,, |
| ,, | ,, | ,, | ,, | सिद्ध्यै | ,, | ,, |

आग्नेय्यादि विदिक्षु च

| | | | | | | |
|---|---|---|---|---|---|---|
| ओं | ह्रीं | ऐं | श्रीं | विघ्नेशाय | मातङ्गी | श्री |
| ओं | ह्रीं | ऐं | श्रीं | दुर्गायै | मातङ्गी | श्री |
| ,, | ,, | ,, | ,, | वटुक | ,, | ,, |
| ,, | ,, | ,, | ,, | क्षेत्रपालक | ,, | ,, |

इत्यष्टौ द्वारपालान् पूजयेत् — अभीष्टसिद्धिं ··· षष्ठावरणार्चनम्

सप्तमावरणम् - अष्टमावरणम्-भूपुरात्बहिः पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् ।

अभीष्टसिद्धिं — सप्तमअष्टमावरणार्चनम् । अस्य पुरश्चरणं अयुत जपः । मध्वाक्तैः - मधुपुष्पैः दशांशतोः होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मण-भोजनं कुर्यात् ।

---

# मातंगीविंशत्यक्षरीमन्त्रपूजनयन्त्रम्

मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति पूजयेत् । ततः नव-पीठशक्तीः पूजयेत् । ओं भूत्यै लघुश्यामायै नमः । उन्नत्यै लघुश्यामायै नमः, कान्त्यै लघुश्यामायै नमः, सृष्ट्यै लघुश्यामायै नमः । कीर्त्यै लघुश्यामायैः, सन्नत्यै लघुश्यामायै नमः, दृष्ट्यै लघुश्यामायै नमः, उत्कृष्ट्यै लघुश्यामायै नमः, मध्ये ऋद्ध्यै लघुश्यामायै नमः, ततः ओं ह्रीं सर्वशक्तिकमलासनायै नमः इति पुष्पाद्यासनं दत्त्वा तदुपरि त्रिकोण पंचकोणाष्टदल षोडश पत्रं भूपुरं च

लिखित्वा शुद्धीकृतं यन्त्रं मूर्तिं वा संस्थाप्य प्रतिष्ठां च कृत्वा पुनःध्यात्वा मूलेन मूर्तिं प्रकल्प्य ।

ऐं शुकप्रियायै विद्महे क्लीं कामेश्वर्यै धीमहि तन्नः श्यमा प्रचोदयात् इति गायत्रीमन्त्रेण यागावस्तूनि संप्रोक्ष्य पाद्यादिपुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहित्वा आवरणपूजां आरभेत् ।

त्रिकोणे देव्यग्रे । ऐं रतिस्त्री पादुकां पूजयामि तर्पयामि नमः इति सर्वत्र ह्रीं प्रीति श्री क्लीं मनोभवा श्री इति पूजयेत् अभीष्टसिद्धिं ...... प्रथमावरणार्चनम् ।

द्वितीयावरणम् — त्रिकोणाद्बहिः देव्यग्रे ऐं इच्छाशक्ति श्री देवी दक्षिणतः ह्रीं ज्ञानशक्ति श्री, देवी वामे क्लीं क्रियाशक्ति श्री इति पूजयेत् अभीष्टसिद्धिं ... द्वितीयावरणार्चनम् ।

तृतीयावरणम् — पंचकोणेषु आग्नेय्यादिक्रमेण

| | | |
|---|---|---|
| द्रां | द्राविणी बाण | श्री |
| द्रीं | षोषण " | " |
| क्लीं | तापन " | " |
| ब्लूं | मोहन " | " |
| सः | उन्मादन " | " |

एति पंचवाणान् पूजयेत् — अभीष्टसिद्धं ...तृतीयावरणार्चनम् ।

चतुर्थावरणम् — पंञ्चकोणाग्रेषु

| | |
|---|---|
| ऐं नमः हृदयशक्ति | श्री |
| उच्छिष्टशिरश्शक्ति | " |
| चण्डालिनी शिखा शक्ति | " |
| मातङ्गी कवच शक्ति | " |
| सर्ववशंकरी नेत्रत्रय शक्ति | " |
| स्वाहा अस्त्रशक्ति | " |

इति पूजयेत् । अभीष्टसिद्धिं ... चतुर्थावरणम् ।

पंचमावरणम् — अष्टदलपूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण

आं क्षां ब्राह्मी कन्यका श्री
ई लां माहेश्वरी " "
ओं वां कौमारी " "
ऋं सां वैष्णवी " "
लृं क्षां वाराही " "
ऐं शां इन्द्राणी " "
औं वां चामुण्डा " "
अः लां महालक्ष्मी " "

इति पूजयेत् — अभीष्टसिद्धिं — पंचमावरणार्चनम् षष्ठावरणम् अष्टदलेषु तत् समीपे ऐं अणिमासिद्धि कन्यका श्री ऐं महिमासिद्धिकन्यका श्री ऐं लघिमासिद्धि कन्यका श्री ऐं गरिमासिद्धि कन्यका श्री ऐं वशितासिद्धि कन्यका श्री ऐं ईशित्वसिद्धि कन्यका श्री ऐं वशितासिद्धि कन्यका श्री ऐं प्राप्तिसिद्धि कन्यका श्री ऐं प्राप्तिसिद्धि कन्यका श्री इति संपूजयेत् — अभीष्टसिद्धिं ··· षष्ठावरणार्चनम् ।

सप्तमावरणार्चनम् — षोडशदलेषु प्राचीक्रमेण क्लीं ऊर्वश्यप्सर कन्यका श्री मेनकाप्सर कन्यका श्री क्लीं रम्भाप्सर कन्यका श्री क्लीं घृतच्यप्सर कन्यका श्री क्लीं पुञ्जिकास्थल्यप्सर कन्यका श्री क्लीं सुखेप्सर कन्यका श्री क्लीं मञ्जुकेश्यप्सर कन्यका श्री क्लीं महाखड्गवत्यप्सर कन्यका श्री क्लीं यक्ष कन्यका श्री क्लीं गन्धर्वकन्यका श्री क्लीं सिद्धकन्यका श्री क्लीं नरकन्यका श्री क्लीं नागकन्यका श्री क्लीं विद्याधरकन्यका श्री क्लीं किंपुरुषकन्यका श्री क्लीं पिशचकन्यका श्री इति पूजयेत् — अभीष्टसिद्धि ··· सप्तमावरणार्चनम् — भूपुराभ्यन्तरे ··· प्राच्यां दिशि

गजानना योगिनी श्री सिंह मुखी योगिनी श्री गृध्रा योगिनी श्री काकतुण्डिका योगिनी श्री उष्ट्रग्रीवा योगिनी श्री हयग्रीवा योगिनी श्री वाराही योगिनी श्री शरबाणासना योगिनी श्री उलूकिका योगिनी श्री मयूरी योगिनी श्री शिवारावा योगिनी श्री विकटानना योगिनी श्री अष्टवक्त्रा योगिनी श्री कोटराक्षी योगिनी श्री कुब्जिका योगिनी श्री विकटलोचना योगिनी श्री इति षोडशयोगिनीः पूजयेत् ।

ततो दक्षिणे शुष्कोदरी योगिनी श्री ललजिह्वा योगिनी श्री अश्वदंष्ट्रा योगिनी श्री वानरानना योगिनी श्री ऋक्षाक्षी योगिनी श्री कतेराक्षी योगिनी श्री ब्रह्मतुण्डा योगिनी श्री सुरप्रिया योगिनी श्री कपालहस्ता

योगिनी श्री रक्ताक्षी योगिनी श्री शुकी योगिनी श्री श्येनी योगिनी श्री कपोतिका योगिनी श्री पाशहस्ता योगिनी श्री दण्डहस्ता योगिनी श्री प्रचण्डा योगिनी श्री इति षोडशयोगिनीः पूजयेत् । पश्चिमद्वारे चण्डविक्रमा योगिनी श्री शिशुघ्नी योगिनी श्री पापहन्त्री योगिनी श्री काली योगिनी रुधिरपायिनी योगिनी श्री वशाद्या योगिनी श्री गर्भभक्षा योगिनी श्री शवहस्ता योगिनी श्री आन्त्रमालिनी योगिनी श्री स्थूलकेशिनी योगिनी श्री बृहत्कुक्षि योगिनी श्री सर्पास्या योगिनी श्री प्रेतवाहना योगिनी श्री

दंदशूकाकारा योगिनी श्री
मृगशीरुषा " "
इति षोडशयोगिनीः पूजयेत् ।
उत्तरद्वारे
त्रिषानना योगिनी "
वृत्तास्या " "
धूमनिश्वासा " "
व्योमैकचरणा " "
ऊर्ध्वदृष्टे " "
तापिनी " "
षोषिनी " "
धृष्टि भोगिणी " "
कोटरा " "
स्थूलनासिका " "
विद्युत्प्रभा " "
वलाकास्या " "
मार्जारी " "
घटपूतना " "
अट्टाट्टहासा " "
कामाक्षी " "
इति षोडश योगानीः पूजयेत् — अभीष्टसिद्धिं ... अष्टमावरणार्चनम् ।

नवमावरणार्चनम् ...भूपुराभ्यन्तरे
आग्नेये भं भटुका श्री
नैऋते गं गणपति "

वायव्ये क्षं क्षेत्रपाल ,,
ईशान कोणे दुं दुर्गा ,,
इति पूजयेत् — अभीष्टसिद्धिं ··· नवमावरणार्चनम् ।

दशमावरणम् । भूपुराद्बहिः पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् पूजयेत् ।
अभीष्टसिद्धिं - दशमावरणार्चनम् ······

एकादशावरणम् - इन्द्रादिसमीपे वज्राद्यस्त्राणि पूजयेत् – अभीष्टसिद्धिं - ··· एकादशावरणार्चनम्

द्वादशावरणम् - ततः बहिः पूर्वादिचतुर्दिक्षु तत्संज्ञ वाद्य श्री वितत वाद्य श्री घनवाद्य श्री शुषिराभिद वाद्य श्री इति चतुर्वाद्यानि पूजयेत् - अभीष्टसिद्धिं द्वादशवरणार्चनम् - अस्य पुरश्चरणं एकलक्ष जपः । मधूकपुष्पैः समिद्भिर्वा दशांशेन होमः । तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनं कुर्यात् ।

—

# मातङ्गी दशाक्षरपूजनयन्त्रम्

पीठादौ सर्वतोभद्रमंडले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति पूजयेत् । ततः पूर्वोक्तनवपीठशक्तीः पूजयेत् ।
प्रथमावरणम्-अष्टदलेषु ओं रत्यै नमः प्रीत्यै नमः मनोभवायै क्रियायै शुद्धायै अनंगकुसुमायै अनंगमदनायै मदनालसायै इति पूजयेत् । अभीष्टसिद्धिं प्रथमावरणार्चनम् –भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् - पुरश्चरणं प्रतिदिनं षट् सहस्र जपेत् । तत्तद्दशांश होमं कुयात् शर्करामधुभिः सह ब्रह्मवृक्षोद्भवैः काष्टैः तावकः शक्तिभिः सह तत्त दशां तर्पणमार्जनब्राह्मणभोजनं कुर्यात् ।

—

# सुमुखीपूजनयन्त्रम्

पीठादौ सर्वतोभद्रमण्डले मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति पूजयेत् । ततः नवपीठशक्तीः पूजयेत् । ॐ जयायै, विजयायै, अजितायै अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै, मध्ये मंगलायै नमः । ओं ह्रीं सुमुखीयोगपीठात्मने नमः इति पुष्पाद्यासनं दत्त्वा तदुपरि शुद्धिकृतमूर्तिं यन्त्रं वा संस्थाप्य, प्रतिष्ठां कृत्वा देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम्— पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण पंचकोणेषु ओं चन्द्रायै, चन्द्राननायै, चारुमुख्यै, चामीकरप्रभायै, चतुरायै इति पञ्चाङ्गदेवताः पूजयेत् । अभीष्टसिद्धिं···प्रथमावरणार्चनम् ।

द्वितीयावरणम् — अष्टदलेषु प्राचीक्रमेण ब्राह्मी श्री माहेश्वरी श्री कौमारी श्री वैष्णवी श्री वाराही श्री इन्द्राणी श्री चामुण्डा श्री महालक्ष्मी श्री इति पूजयेत् । अभीष्टसिद्धि ···द्वितीयावरणार्चनम् ।

तृतीयावरणाम् ··· षोडशदलेषु प्राचीक्रमेण कलाश्री कलानिधि श्री काली श्री कमला श्री क्रिया श्री कृषा श्री कुला श्री कुलीना श्री कल्याणी श्री कुमारी श्री कलभाषिणी श्री करालाख्या श्री किशोरी श्री कोमला श्री कुलभीषणा श्री कलादा श्री इति पूजयेत् । अभीष्टसिद्धिं ···तृतीयावरणार्चनम् ।

चतुर्थावरणाम् ··· भूपुरे इन्द्रादिलोकपालान् वज्राद्यायुधानि च पूजयेत् ।

अस्य पुरश्चरणं लक्षजपः । किंशुकपुष्पैः समिद्भिः वा दशांशतो होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं कुर्यात् ।

# लक्ष्मीएकाक्षरमन्त्रयन्त्रम्

मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । विभूत्यै, उन्नत्यै, कान्त्यै, सुष्ट्यै, कीर्त्यै, शान्त्यै, पुष्ट्यै, उत्कृष्ट्यै मध्ये रौद्र्यै नमः इति संपूज्य । ओं श्री कमलासनायै नमः इति पुष्पाद्यासनं दत्त्वा पीठमध्ये शुद्धिकृत मूर्तिं यन्त्रं वा संस्थाप्य पुनर्ध्यात्वा प्रतिष्ठां कृत्वा मूलेन आवाहनादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां आरभेत् । षट्कोणकेसरेषु अग्निनैरृति वायव्य ईशान्यकोणेषु मध्ये दिक्षु च । श्रां हृदयशक्ति श्री नैरृत्ये शिरश्शक्ति श्री वायव्ये श्रूं शिखाशक्ति श्री ईशान्यां कवचशक्ति श्री देवी पुरतः नेत्रशक्ति श्री देवी पश्चिमे अस्त्रशक्ति श्री इति पूजयेत् अभीष्टसिद्धिं — प्रथमावरणार्चनम् ।

द्वितीयावरणम् — पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राच्यादिचतुर्दिक्षु विदिक्षु च पूर्वे वासुदेव श्री दक्षिणे सङ्कर्षण श्री पश्चिमे प्रद्युम्न श्री उत्तरे अनुरुद्ध श्री अग्निकोणे दमक श्री निर्ऋतिकोणे सलिल ी वायव्ये कुग्गल श्री ऐशान्ये कारण्डक श्री देव्या दक्षिणे शङ्खनिधि श्री

वसुधा श्री वामे पद्मनिधि श्री वसुमति श्री इति द्वादशदेव्यादीनि पूजयेत् । अभीष्टसिद्धिं — द्वितीयावरणार्चनम् ।

तृतीयावरणम् —ततः पत्राग्रेषु पूर्वादिक्रमेण बलाकी श्री विमलः श्री कमला श्री वनमालिका श्री विभीषिका श्री बालिका श्री शाङ्करी श्री वसुमालिका श्री इति पूजयेत् । अभीष्टसिद्धिं—तृतीयावरणार्चनम् ।

चतुर्थपंचमावरणम् — इन्द्रादिदशदिक्पालान् तत् बाह्ये वज्राद्यायुधानि च पूजयेत् । अभीष्टसिद्धिं—चतुर्थावरणार्चनम् । अस्य पुरश्चरणं द्वादशलक्षजपः द्वादशसहस्रकमलपुष्पहोमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं कुर्यात् ।

—

# लक्ष्मीदशाक्षरमन्त्रयन्त्रम्

एकाक्षरयन्त्रोक्तपीठशक्तिभिः सह पीठपूजां विधाय पीठमध्ये शुद्धिकृत यन्त्र संस्थाप्य प्रतिष्ठां कृत्वा देव्याज्ञां गृहीत्वा आवरण पूजां कुर्यात् । षट्कोणकेसरेषु - प्रथमावरणम् - अग्निकोणे ओं देव्यै नमो हृदयशक्ति श्री निर्ऋतिकोणे ओं पद्मिन्यै शिरश्शक्ति श्री वायव्ये विष्णुपत्न्यै शिखाशक्ति श्री ईशान्यां वरदायै कवच शक्ति श्री देवीपश्चिमे कमलरूपायै अस्त्रशक्ति श्री इति नेत्रत्रयं विना पंचांगानि पूजयेत् ।

अभीष्टसिद्धिं...प्रथमावरणार्चनम् ।

द्वितीयावरणम् - पूज्यपूजकयोरंतराले प्राची तदनुसरेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण बलाक्यै श्री विमलायै श्री कमलायै श्रीवनमालिकायै श्री विभीषिकायै श्री मालिकायै श्री शाङ्कर्यै श्री वसुमालिकायै श्री इति पूजयेत् ।

अभीष्टसिद्धिं ...द्वितीयावरणार्चनम् ।

तृतीयावरणम् - भूपुरे पूर्वादिक्रमेण इन्द्रादीन् वज्रादीन् च पूजयेत् ।

अभीष्टसिद्धिं ...तृतीयतुरीयावरणार्चनम् । अस्य पुरश्चरणं दशलक्षजपः दशांशं मधुराक्तैः सरोरुहपुष्पैः होमः । तत्तद्दशांशेन तर्पण मार्जन ब्राह्मण भोजनं कुर्यात् ।

—

# लक्ष्मीसप्तविंशत्यक्षरमंत्रपूजनयंत्रम्

एकाक्षरोक्त यन्त्र क्रमवत् पीठपूजादीन् विधाय शुद्धिकृत यन्त्रं मूर्तिं वा संस्थाप्य प्रतिष्ठां कृत्वा पुनः मूलेन आवाहनादिपुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् । षट्कोणकेसरेषु प्रथमावरणम्

अग्निकोणे

ओं श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं हृदयशक्ति श्री

निर्ऋतकोणे ओं श्रीं ह्रीं श्रीं कमलालये श्रीं ह्रीं श्रीं शिखाशक्ति श्री

वायव्ये " " " " प्रसीद " " " " "

ईशान्यां " " " " " " " " कवचशक्ति "

देवी पश्चिमे " " " " महालक्ष्म्यै " " " अस्त्रशक्ति "

इति पंचांगानि पूजयेत् अभीष्टसिद्धिं ... प्रथमावरणार्चनम् ।

द्वितीयावरणम् - पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य अष्टदलेषु पूर्वादिक्रमेण श्रीधर श्री, हृषीकेश श्री वैकुण्ठ श्री विश्वरूप श्री वासुदेव श्री सङ्कर्षण श्री प्रद्युम्न श्री अनिरुद्ध श्री इति पूजयेत् ।

अभीष्टसिद्धिं — द्वितीयावरणार्चनम् ।

तृतीयावरणम् - अष्टदलमध्येषु पूर्वादिक्रमेण

भारती श्री

पार्वती "

चन्द्री "

शची "

गमखा "

शरीर "

कुक्कुलु "

कुरूण्डक "

इति पूजयेत् - अभीष्टसिद्धिं - तृतीयावरणार्चनम् ।

चतुर्थावरणम् - अष्टदलाग्रेषु

अनूराधाय महालक्ष्मी बाण श्री

संवादाय " " "

विजयाय " " "

वल्लभाय महालक्ष्मी बाण श्री
हर्षाय ,, ,, ,,
मदाय ,, ,, ,,
बलाय ,, ,, ,,
तेजसे ,, ,, ,,

इति पूजयेत् । अभीष्टसिद्धिं ··· चतुर्थावरणम् ।

पंचमावरणम् - भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् - वज्राद्यायुधानि च पूजयेत् । पुरश्चरणं लक्षजपः तत्तद्दशांशेन होमतर्पणमार्जनब्राह्मणभोजनानि कुर्यात् पूर्वप्रकरणोक्तद्रव्यहोमः ।

—

# द्वादशाक्षरमहालक्ष्मीमंत्रयंत्रम्

सर्वतो भद्रमण्डले लक्ष्मीसप्तविंशत्यक्षरयन्त्रे पूजोक्तप्रकारेण पीठपूजां नवपीठ शक्तीश्च पूजयित्वा शुद्धिकृत यन्त्र मूर्तिं वा संस्थाप्य प्रतिष्ठां कृत्वा आवाहनादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् देव्या दक्षिणे ओं शङ्करनन्दनायै नमः ··· ··· पादुकें पूजयामि तर्पयामि नमः इति सर्वत्र । देव्या वामे पुष्पदण्ड श्री इति पूजयेत् । अभीष्टसिद्धिं···प्रथमावरणार्चनम् ।

द्वितीयावरणम् - षट्कोणकेसरेषु

आग्नेये ओं ऐं ज्ञानाय हृदयशक्ति श्री
नैरृते ,, ह्रीं ऐश्वर्याय शिरश्शक्ति श्री
वायव्ये ,, श्रीं शक्तये शिखाशक्ति ,,
ईशान्यां ,, क्लीं बलाय कवचशक्ति ,,
पूज्यपुजकयोर्मध्ये ओं सार्वभौम नेत्रशक्ति ,,

देव्या पश्चिमे जगत्प्रसूत्यै नमस्तेजसे अस्त्रशक्ति श्री इति पूजयेत्-अभीष्टसिद्धिं··· द्वितीयावरणार्चनम् ।

तृतीयावरणम् - अष्टदलेषु पूज्यपूजकयोर्मध्ये प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य पूर्वादिक्रमेण

उमाशक्ति श्री
श्री श्रीशक्ति ,,
सरस्वती शक्ति ,,
दुर्गा शक्ति ,,
तरणी ,, ,,
गायत्री ,, ,,
देवी ,, ,,
उषा ,, ,,

इति पूजयेत् । अभीष्टसिद्धिं ... तृतीयावरणार्चनम् ।

चतुर्थावरणम् - पुनर्देव्या दक्षिणे जह्नुसुता श्री

देव्या वामे सूर्यसुता श्री पुनः देवीदक्षिणे शङ्खनिधि श्री पुनः वामे पद्मनिधि श्री देव्याः पश्चिमे धृतातपत्र वरुणं पूजयित्वा पुष्पांजलिं दद्यात् - अभीष्टसिद्धिं चतुर्थावरणार्चनम् ।

पंचमावरणम् - अष्टदलाग्रेषु पूर्वादिक्रमेण

सूर्य श्री
सोम ,,
भौम ,,
बुध ,,
बृहस्पति ,,
शुक्र ,,
शनैश्चर ,,
राहुकेतु ,, इति पूजयेत् ।

अभीष्टसिद्धिं ... पंचमावरणार्चनम्

षष्ठावरणम् - भूपुराभ्यन्तरे

ऐरावत श्री
पुण्डरीक ,,
वामन ,,
कुमुद ,,
अञ्जन ,,
पुष्पदन्त ,,

सार्वभौम ,,
सुप्रतीक ,,

इति अष्टौ दिग्गजान् पूजयेत् । अभीष्टसिद्धिं - षष्ठावरणार्चनम् ।

सप्तमावरणम् - इन्द्रादिदशदिक्पालान् वज्रादींश्च पूजयेत् । अस्य पुरश्चरणं द्वादशलक्षजपः । दशांशघृतहोमः । पुनः श्री फलैः पद्मैः प्रत्येकं एकम् होमः । ततो अयुतद्वयमिदं तर्पणम् कुर्यात् तत्तद्दशांश मार्जनब्राह्मण भोजनं कुर्यात् ।

इदमेव सिद्धलक्ष्मी पूजार्थं भवेत्

—

# ज्येष्ठालक्ष्मीमंत्रपूजनयन्त्रम्

पीठादौ सर्वतोभद्रमन्डले मं मंडूकादि परतत्त्वांत पीठदेवताभ्यो नमः । इति पीठदेवताः संपूज्य नवपीठशक्तीः पूजयेत् । लोहिताक्ष्यै, विरूपायै, करालयै, नीललोहितायै, समदायै, वारुण्यै, पुष्ट्यै, अमोघायै, — मध्ये विश्वमोहिन्यै नमः इति पूजयेत् । पीठमध्ये ओं रक्तज्येष्ठायै विद्महे, नीलज्येष्ठायै धीमहि तन्नो लक्ष्मीः प्रचोदयात् इति गायत्रीमन्त्रेण पुष्पाद्यासनं दत्त्वा शुद्धिकृतयन्त्रं मूर्तिं वा तदुपरि संस्थाप्य प्रतिष्ठां कृत्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पान्तैः उपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

षट्कोणकेसरेष — प्रथमावरणम् — आग्नेय्यादिचतुर्दिक्षु मध्ये दिक्षु च ऐं ह्रीं श्रीं हृदयशक्ति श्री पादुके पूजयामि तर्पयामि नमः इति सर्वत्र ज्येष्ठालक्ष्मी शिरश्शक्ति श्री स्वयंभुवे शिखाशक्ति श्री ह्रीं कवचशक्ति श्री ज्येष्ठायै नेत्रशक्ति श्री, नमः अस्त्र शक्ति श्री इति पूजयेत् ।अभीष्टसिद्धिं ... प्रथमावरणार्चनम् ।

द्वितीयावरणम् — अष्टदलेषु पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण

ब्राह्मी श्री
माहेश्वरी ,,
कौमारी ,,
वैष्णवी ,,

| | |
|---|---|
| वाराही | " |
| इन्द्राणी | " |
| चामुण्डा | " |
| महालक्ष्मी | " |

इति पूजयेत् — अभीष्टसिद्धं — द्वितीयावरणार्चनम् ।

तृतीयावरणम् — भूपुरे पूर्वादिक्रमेण इन्द्रादीन् वज्रादीन् च पूजयेत् — अस्य पुरश्चरणं लक्षजपः ।

आज्यमिश्रित पायसेन दशांश होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मण-भोजनं कुर्यात् ।

—

# वसुधालक्ष्मीपूजनयन्त्रम्

सर्वतोभद्रमण्डले मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । पूर्वाद्यष्टसु दिक्षु विमलायै, उत्कर्षिण्यै, ज्ञानायै, क्रियायै योगायै, प्रह्वायै, सत्यायै, ईशानायै मध्ये अनुग्रहायै इति पूजयेत्, तदुपरि ओं नमो भगवते विष्णवे सर्वभूतात्म संयोगपद्मपीठात्मने नमः इति पुष्पाद्यासनं दत्त्वा पीठमध्ये शुद्धीकृतयन्त्रं मूर्तिं वा प्रकल्प्य पाद्यादिपुष्पान्तैरुपचारैः संपूज्य प्रतिष्ठां कृत्वा देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम् — षट्कोणकेसरेषु आग्नेय्यादिचतुर्दिक्षु मध्ये दिक्षु च ओं अन्नं मह्यं धां श्रीं हृदयशक्ति श्री पादुके पूजयामि तर्पयामि नमः इति सर्वत्र

| | | | | | | |
|---|---|---|---|---|---|---|
| ओं | अन्नं मे देहि | ग्लीं | श्रीं | शिखाशक्ति | | श्री |
| " | अन्नाधिपतये | ग्लौं | " | शिर | " | " |
| " | अन्नं मे | ग्लैं | " | कवच | " | " |
| " | प्रतापय | ग्लौं | " | नेत्रत्रय | | " |
| " | स्वाहा | ग्लः | " | अस्त्र शक्ति | | " |

इति पूजयेत् - अभीष्टसिद्धिं —— प्रथमावरणार्चनम् ।

द्वितीयावरणम् — पूज्यपूजकयोरंतरालं प्राचीं अन्या दिशः प्रकल्प्य अष्टदलेषु चतुर्दिक्षु प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | पृथिवी | श्री |
| " | अग्नि | " |

„ जल „

„ मारुत „

अग्न्यादिविदिक्षु निवृत्ति „

ओं प्रतिष्ठा „

„ विद्या „

„ शान्ति „

इति पूजयेत् अभीष्टसिद्धिं—द्वितीयावरणार्चनम् ।

तृतीयावरणम् - अष्टदलाग्रेषु प्राचीक्रमेण

बलाका श्री

विमला „

कमला „

वनमाला „

विभीषा „

मालिका „

शांकरी „

वसुमालिका „

इति पूजयेत् । अभीष्टसिद्धिं — तृतीयावरणार्चनम् ।

चतुर्थपंचमावरणे - भूपुरे पूर्वादिक्रमेण इन्द्रादीन् ततः वज्रादीन् च पूजयेत् । अस्य पुरश्चरणं लक्षजपः घृतान्नेन दशांशहोमः। तत्तद्दशांशेन तर्पणमार्जन-ब्राह्मणभोजनं कुर्यात् ।

—

# यमुनापूजनयन्त्रम्

पीठादौ सर्वतो भद्रमण्डले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य मध्ये देवी सिंहासनं स्थापयेत् ।तदुपरि यन्त्रं मूर्तिं वा संस्थाप्य ओं नमो भगवत्यै कलिन्दनन्दिन्यै सूर्यकन्यकायै यमभगिन्यै कृष्णप्रियायै भूतिभूतायै स्वाहा पद्मपीठायै नमः इति पुष्पाद्यासनं दत्वा प्रतिष्ठां कुर्यात् । ततः कर्णिकामध्ये श्रीकृष्णेन सह कालिन्दीं ध्यात्वा ओं नमो भगवत्यै कलिन्दनन्दिन्यै सूर्यकन्यकायै मम भगिन्यै श्री कृष्णप्रियायै इति मन्त्रेणावाहनादि पुष्पांतैरुपचारैः संपूज्य

देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम् - पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण षोडशदलेषु

जाह्नवी श्री
विरजा ”
कृष्णा ”
चन्द्रभागा ”
सरस्वती ”
गोमती ”
कौशिकी ”
वेणी ”
सिन्धु ”
गोदावरी ”
वेदस्स्मृति ”
वेत्रवती ”
सदत्रु ”
सरयू ”
ऋषि कुल्या ”
ककुद्मती ”

इति पूजयेत् । अभीष्टसिद्धिं - प्रथमावरणार्चनम् ।

द्वितीयावरणम् - भूपुराभ्यन्तरे चतुर्दिक्षु पूर्वादिक्रमेण

वृन्दावन श्री
गोवर्धन ”
वृन्दा ”
तुलसी ”

इति पूजयेत् । अभीष्टसिद्धिं - द्वितीयावरणार्चनम् ।

तृतीयावरणम्-चतुर्थावरणम् - भूपुराद्बहिः इन्द्रादिदशदिक्पालान् ततः तत्समीपे वज्राद्यायुधानि च पूजयेत् - अस्य पुरश्चरणं एकादशलक्ष जपः । तत्तद्दशांशेन तर्पण मार्जन ब्राह्मणभोजनं कुर्यात् ।

# कालरात्रिपूजनयन्त्रम्

पीठादौ सर्वतो भद्रमण्डले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति पूजयेत् । ततः नवपीठशक्तीः पूजयेत् । जयायै, विजयायै, अजितायै, अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै, मध्ये मंगलायै नमः इति ओं कालरात्रियोगपीठात्मने नमः इति पुष्पाद्यासनं दत्त्वा पीठमध्ये बिन्दु–त्रिकोण षट्कोण वृत्ताष्टदल षोडशदलं वृत्तं च मंत्रं भूर्जपत्रोपरि कार्यपरत्वेन लेखिन्यादिद्वारा लिखित्वा तस्योपरि त्रिरेखात्मकं भूपुरं विनिर्माय संस्थाप्य प्रतिष्ठां कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः सपूज्य देव्याज्ञां गृहीत्वा आवरण पूजां कुर्यात् ।

पूज्यपूजकयोरन्तरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन संमोहन श्री पादुके पूजयामि तर्पयामि नमः इति सर्वत्र मोहिनी श्री विमोहिनी श्री इति पूजयेत् । अभीष्टसिद्धिं ··· प्रथमावरणार्चनम् । द्वितीयावरणम् – षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च ओं हृदयशक्ति श्री इत्यादि षडङ्गयुवतीः पूजयेत् - अभीष्टसिद्धिं···द्वितीयावरणार्चनम् ।

तृतीयावरणम् - ततो वृत्ते वामावर्तेन ओं अं आं नमः इं ईं नमः उं ऊं नमः ऋं ॠं नमः लृं लॄं नमः एं ऐं नमः ओं औं नमः अं अः नमः इति षोडशदलान् पूजयित्वा पुष्पांजलिं दद्यात् इति तृतीयावरणार्चनम् ।

चतुर्थावरणम् - अष्टदलेषु वामावर्तेन

| | | |
|---|---|---|
| ओं | ब्राह्मी | श्री |
| „ | माहेश्वरी | „ |
| „ | कौमारी | „ |
| „ | वैष्णवी | „ |
| „ | वाराही | „ |
| „ | इन्द्राणी | „ |
| „ | चामुण्डा | „ |
| „ | महालक्ष्मी | „ |

इत्यष्टौ मातृः पूजयेत् - अभीष्टसिद्धिं — चतुर्थावरणार्चनम्

पंचमावरणम् - पुनर्वृत्ते ओं कं नमः, ओं खं नमः इत्यादि ओं नं नमः ओं क्षं नमः इति पंचत्रिंशद्बीजाक्षराणि पूजयेत् - अभीष्टसिद्धिं — पंचमावरणार्चनम् ।

षष्ठावरणम् - षोडशदलेषु वामावर्तेन

ऊर्वशी श्री
मेनका ”
रम्भा ”
घृताची ”
मञ्जुकेशा ”
सहजन्या ”
सुख ”
तिलोत्तमा ”
गान्धर्वी ”
सिंहकन्या ”
किन्नरी ”
नागकन्यका ”
विद्याधरी ”
किंपुरुषा ”
यक्षिणी ”
पिशाची ”

इति षोडशदेवताः पूजयेत् । अभीष्टसिद्धिं - षष्ठावरणार्चनम्

सप्तमावरणम् - पुनः वृत्ते

परमात्म श्री
सरस्वती ”
गौरी ”
कामा ”
रमा ”
ध्रां द्राविणी ”
ध्रीं क्षोभिणी ”
क्लीं वशीकरणी ”
ब्लूं कर्षिणी ”
सः संमोहिनी ”

इति पूजयेत् । अभीष्टसिद्धिं···सप्तमावरणम् ।

अष्टमावरणम् - भूपुराभ्यन्तरे प्राच्यादिक्रमेण

अणिमा श्री
लघिमा ”
महिमा ”

ईशिदा ”
वशिदा ”
कामपूरणी ”
गरिमा ”
प्राप्ति ”

इत्यष्टसिद्धीः पूजयेत् - अभीष्टसिद्धिं — इति अष्टमा-वरणार्चनम् ।

नवमावरणम् - भूपुरस्य प्रथमारेखायां 53 56 59 26 इच्छाशक्ति श्री 54 57 60 63 क्रियाशक्ति श्री 55 58 61 64 ज्ञानशक्ति श्री इति पूजयेत् । ततो मध्यरेखायां 65 68 71 74 रुद्रश्री 66 69 72 75 विष्णुश्री 67 70 73 76 ब्रह्मश्री इति पूजयेत् । अन्तारेखायां 77 80 83 86 सत्त्व श्री 78 81 84 87 रजःश्री 79 82 85 83 तमःश्री इति पूजयेत् - अभीष्टसिद्धिं नवमावरणार्चनम्

दशमावरणम् - भूपूरबाह्ये प्राच्यादि चतुर्दिक्षु
गणेश श्री
क्षेत्रपाल ”
वटुक ”
योगिनी ”

इति पूजयेत् — अभीष्टसिद्धिं-दशमावरणार्चनम् ।

एकादशावरणम्—भूपुराद्बहिः पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान्—पूजयेत् इति अभीष्टसिद्धिं एकादशावरणार्चनम् —

द्वादशावरणम् इन्द्रादिसमीपे- वज्रादीन् पूजयेत् । अभीष्टसिद्धिं-द्वादशावरणार्चनम्

त्रयोदशावरणम्—देवीपार्श्वे प्राच्यादिचतुर्दिक्षु
प्राच्यां माया श्री
कालरात्रि ”
वटवासिनी ”
गणेश्वरी ”
दक्षिणा ”
काहक्या ”
व्यापिका ”

पश्चिमे अलकवासिनी ”
मायाराज्ञी ”
मदनप्रिया ”

उत्तरे लक्ष्मीः श्री
काक्हलेश्वरो "
इति पूजयेत् । अभीष्टसिद्धिं — त्रयोदशावरणार्चनम् ।

अस्य पुरश्चरणं अयुतजपः । दशांशं तिलहोमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ।

कपालधारिण्यै नमः क्रोधिनीं पूजयेत् । ततः षट्कोणाग्रे देवीसुतं चण्डं पूजयेत् ।तद्यथा -

शूलं नागं च डमरुं कपालं, दधतं करैः ।
इन्द्रनीलनिभं नग्नं जटाभारविराजितम् ॥ इति ध्यात्वा

ओं देवीसुताय चण्डोच्चण्डाय नमः इति पूजयेत्—अभीष्टसिद्धिं—तृतीयावरणार्चनम् ।

चतुर्थावरणम् - पूज्यपूजकयोरंतरालं प्रचीं तदनुसारेण अन्या दिशः प्रकल्प्य अष्टदलेषु प्राचीक्रमेण ओं वार्ताली श्री, वाराही श्री, वराहमुखी श्री, अन्दिनी श्री, रुन्धिनी श्री जम्भिनी श्री मोहिनी श्री इति पूजयेत्। अभीष्टसिद्धिं —चतुर्थावरणार्चनम् ।

पंचमावरणम् - ततः शतपत्रे रुद्रा एकादश वीरभद्रादयः अर्का-द्वादश दात्रादयः - वसवो अष्टौ धरादयः अश्विनौ नासत्यदस्रौ इति त्रयस्त्रिंश-द्देवाः एकैकपत्रे त्रिके पूज्याः । शेषंकपत्रे ओं जम्भिनीस्तम्भिनीभ्यां नमः - जम्भिनी स्तम्भिनी श्री, ओं सिंह श्री, ओं महिष श्री, इति पूजयेत् - अभीष्ट-सिद्धिं ...पंचमावरणार्चनम् ।

षष्ठावरणम् — ततः सहस्रपत्रे ओं वाराह्यै नमः इति मन्त्रेण सहस्रवारं वाराहीमेव पूजयेत् । अभीष्टसिद्धिं...षष्ठावरणार्चनम् ।

सप्तमावरणम् - भूपुराभ्यन्तरे प्राचीद्वारदेशे भं भटुक श्री, दक्षिणे क्षं क्षेत्रपाल श्री, पश्चिमे यं योगिनी श्री, उत्तरे गं गणपति श्री इति पूजयेत् अभीष्टसिद्धिं...सप्तमावरणार्चनम् ।

अष्टमनवमावरणे — भूपुराद्बहिः इन्द्रादीन् ततः वज्रादीन् च पूजयेत् - अभीष्टसिद्धिं...अष्टमनवमावरणार्चनम् ।

अस्य पुरश्चरणं सप्तदशसहस्रजपः । तिलैः बन्धूककुसुमैः मधुरा-न्वितैः दशांशतो होमः । तत्तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनानि कुर्यात् ।

# वार्तालीपूजनयन्त्रम्

सर्वतो भद्रमंडले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् - जयायै, विजयायै, जितायै, अपराजितायै नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै, मध्ये मंगलायै इति पूजयेत् । तदुपरि गोरोचन-हरिद्राचन्दनागरुकुङ्कुमेन त्रिकोण पंचषट्कोण अष्टदल शतदल सहस्रदलानि च निर्माय तस्योपरि भूपुरं लिखित्वा ओं ग्लौं वार्ताल्यै कैलासाचलमध्यस्थितायै नमः इति पुष्पादनासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्ठां कृत्वा पुनर्ध्यात्वा त्रिकोणान्तरे मूर्तिं प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम् - षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च

ओं वार्ताली हृदयशक्ति श्री
" वाराही शिरश्शक्ति "
" वराहमुखी शिखाशक्ति "
" अन्दे अन्दिनी कवचशक्ति "
" रुन्दे रुन्धिनी नेत्रशक्ति "
" जम्भे जम्भिनी अस्त्रशक्ति "

इति पूजयेत् । ततः त्रिकोणे ऐशान्यादि क्रमेण

ओं वार्ताली श्री
" वाराही "
" वराहमुखी "

इति पूजयेत् मूलेनोच्चार्य...अभीष्टसिद्धिं...प्रथमावरणार्चनम्

द्वितीयावरणम् - पंचास्रे आग्नेय्यादि क्रमेण

अन्दिनी श्री
रुन्धिनी "
जम्भिनी "
मोहिनी "
स्तम्भिनी "

इति पूजयेत् - द्वितीयावरणार्चनम् ।

तृतीयावरणम् - पुनः षट्कोणोपरि आग्नेय्यादिक्रमेण

डाकिनी श्री, राकिनी श्री, लाकिनी श्री, काकिनी श्री, शाकिनी श्री हाकिनी श्री इति पूजयेत् — ततः षट्कोणे दक्षिणे पार्श्वे स्तम्भिन्यै, दक्षहस्तेन वरदायै,

वामकरेण मुसलायै नमः ततः षट्कोणे वामपार्श्वे क्रोधिन्यै दक्षहस्तेन कपाल-धारिण्यै नमः इति स्तम्भिनीं पूजयेत् ।

—

# महिषमर्दिनीपूजनयन्त्रम्

सर्वतो भद्रमंडले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । जयायै, विजयायै, अजितायै, अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै, मङ्गलायै, मंगलायै, नमः इति पूजयेत् तदुपरि, शुद्धीकृत यन्त्रं मूर्तिं वा संस्थाप्य ह्रीं आधरशक्तये नमः इति पुष्पाद्यासनं दत्वा प्रतिष्ठां कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् । षट्कोणकेसरेषु आग्नेयकोणे महिषहिंसिके हुम् फट् हृदयशक्ति श्री निर्ऋतिकोणे महिषशंखी महिषशंखी हुं फट् शिरश्शक्ति श्री । वायुकोणे महिषं भीषय भीषय हुम् फट् शिखाशक्ति श्री ईशाने महिष हन हनं देवि हुम् फट् कवचशक्ति श्री देवो पश्चिमे महिषमर्दिनी हुम् फट् अस्त्रशक्ति श्री, इति पंचांगानि पूजयेत् अभीष्टसिद्धिं...प्रथमावरणार्चनम् ।

द्वितीयावरणम् - पूज्यपूजकयोरन्तराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य अष्टदलेषु पूर्वादिक्रमेण

| | | |
|---|---|---|
| आं | दुर्गा | श्री |
| ईं | वरवर्णिणी | " |
| ऊं | अर्यमा | " |
| ॠं | कनकप्रभा | " |
| ॡं | कृत्तिका | " |
| ऐं | अभयप्रदा | " |
| औं | कन्या | " |
| अः | स्वरूपा | " |

इति पूजयेत् - अभीष्टसिद्धिं ... द्वितीयावरणार्चनम् ।

तृतीयावरणम् — पत्राग्रेषु पूर्वादिक्रमेण

| | | |
|---|---|---|
| यं | चक्र | श्री |
| रं | शंख | " |
| लं | गदा | " |

वं खड्ग ,,
शं बाण ,,
षं धनुस् ,,
सं शूल ,,
हं कपाल ,,

इति पूजयेत् अभीष्टसिद्धिं ··· तृतीयावरणार्चनम् ।

चतुर्थावरणम् — भूपुरे इन्द्रादीन् ततः वज्रादीन् पूजयेत् – अभीष्टसिद्धिं ··· चतुर्थावरणार्चनम् । अस्य पुरश्चरणं अष्टलक्षजपः । तत्सहस्रं तिलैः होमः । तत्तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनं कुर्यात् ।

—

# रेणुकाशबरीपूजनयन्त्रम्

सर्वतो भद्रमण्डले आधारतत्त्वातिपरतत्त्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । जयायै, विजयायै, अजितायै, अपराजितायै, नित्यायै, विलासिन्यै, दोग्घ्र्यै, अघोरायै मध्ये मंगलायै नमः इति पूजयेत् । तदुपरि शुद्धीकृतयन्त्रं मूर्तिं वा संस्थाप्य ओं सर्व बुद्धिप्रदे वर्णनीये सर्वसिद्धिं प्रदे ठागिनीये रेणुकाशबरि एह्येहि नमः इति मन्त्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्ठां कृत्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादि पुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च

ओं हृदयशक्ति श्री
श्रीं शिरश्शक्ति ,,
ह्रीं शिखाशक्ति ,,
क्रों कवचशक्ति ,,
ऐं नेत्रशक्ति ,,
ओं श्रीं ह्रीं क्रों ऐं अस्त्रशक्ति ,,

इति पूजयेत् मूलं अभीष्टसिद्धिं ··· प्रथमावरणार्चनम् ।

द्वितीयावरणम् — अष्टदलेषु पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण हुंकारी श्री, खेचरी श्री, चण्डास्या श्री,

चोदना श्री, क्षेमगा श्री, स्त्री श्री, हुंकरी श्री, क्षेमकरी श्री इति पूजयेत् । अभीष्टसिद्धिं ··· द्वितीयावरणम् ।

तृतीयावरणम् — भूपुरे पूर्वादिक्रमेण इन्द्रादीन् वज्रादीन् च पूजयेत् । अस्य पुरश्चरणम् पंचलक्षजपः । बिल्वकाष्ठदीप्ताग्नौ बिल्वफलैः दशांशतो होमः तत्तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनं कुर्यात् ।

—

# अन्नपूर्णापूजनयन्त्रम्

सर्वतो भद्रमंडले मं मंडूकादिपरतत्वान्तपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । जयायै, विजयायै, अजितायै, अपराजितायै नित्यायै, विलासिन्यै, द्रोग्ध्र्यै, अघोरायै, - मध्ये मंगलायै नमः इति पूजयेत् । तदुपरि शुद्धीकृतयत्रं मूर्ति वा संस्थाप्य ओं ह्रीं अन्नपूर्णे पद्मासनायै नमः इति पुष्पाद्यासनं दत्त्वा प्रतिष्ठां कृत्वा मूलेन प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

त्रिकोणे आग्नेय्यादि क्रमेण अग्निकोणे ओं ह्रौं नमः शिवाय शिव श्री पादुके पूजयामि तर्पयामि नमः इति सर्वत्र वायुकोणे ओं नमो भगवते वराहरूपाय भूर्भुवः स्वाहा पतये भूपतित्वं मे देहि दापय स्वाहा वराह श्री ईशान्ये ओं नमो नारायणाय नारायण श्री इति पूजयेत् । अभीष्टसिद्धिं···प्रथमावरणार्चनम्

द्वितीयावरणम् - षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च ओं ह्रां हृदयशक्ति श्री ओं ह्रीं शिरश्शक्ति श्री ओं ह्रूं शिखशक्ति श्री ओं ह्रैं कवच शक्ति श्री ओं ह्रौं नेत्रशक्ति श्री ओं ह्रः अस्त्रशक्ति श्री देवीवामभागे ओं ग्लौं अन्नं मह्यमन्नं मे देह्यन्नाधिपतये ममान्नं प्रदापय स्वहा । ओं ग्लौं पृथिव्यै नमः पृथिवी श्री इति मन्त्रेण भूमिं पूजयेत् ।

देवी दक्षिणशः ओं श्रीं अन्नं मह्यमन्नं मे देह्यन्नाधिपतये ममान्न प्रदापय स्वाहा श्रीं महालक्ष्म्यै नमः महालक्ष्मी श्री इति पूजयेत् । अभीष्टसिद्धिं ··· द्वितीयावरणार्चनम् ।

तृतीयावरणम् ··· ततः चतुर्दले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या

दिश: प्रकल्प्य प्रचीक्रमेण चतुर्दिक्षु ओं अणरा श्री ह्रीं भुवनेश्वरी श्री, श्रीं कमला श्री· क्लीं गुभग श्री इति पूजयेत्। अभीष्टसिद्धि ··· तृतीयावरणार्चनम् ।

चतुर्थावरणम् - अष्टदले प्राचीक्रमेण

| | | |
|---|---|---|
| ओं | ब्राह्मी | श्री |
| ,, | माहेश्वरी | ,, |
| = | कौमारी | ,, |
| ,, | वैष्णवी | ,, |
| ,, | वाराही | ,, |
| ,, | इन्द्राणी | ,, |
| ,, | चामुण्डा | ,, |
| ,, | महालक्ष्मी | ,, |

इति पूजयेत् - अभीष्टसिद्धिं चतुर्थावरणार्चनम्

पंचमावरणम् - षोडशदले प्राचीक्रमेण

| | | |
|---|---|---|
| अं | अमृता | श्री |
| मां | मानदा | ,, |
| तुं | तुष्टि | ,, |
| पुं | पुष्टि | ,, |
| प्रीं | प्रीति | ,, |
| रं | रति | ,, |
| ह्रीं | ह्री | ,, |
| श्रीं | श्री | ,, |
| स्वां | स्वधा | ,, |
| स्वां | स्वाहा | ,, |
| ज्यों | ज्योत्स्ना | ,, |
| हें | हेमवती | ,, |
| छां | छाया | ,, |
| पूं | पूर्णिमा | ,, |
| निं | नित्या | ,, |
| अं | अमावास्या | ,, |

इति पूजयेत् — अभीष्टसिद्धिं ··· पंचमावरणार्चणम् ।

षष्ठसप्तमावरणे — भूपुराद्बहिः पूर्वादिक्रमेण इन्द्रादीन्—ततः वज्रादीन् पूजयेत् । अभीष्टसिद्धिं ....षष्ठसप्तमावरणे । अस्य पुरश्चरणं लक्षजपः घृतमिश्रितचरुणा दशांशतो होमः । तत्तद्दशांशेन तर्पणमार्जनब्राह्मणभोजना कुर्यात् ।

---

## गंगामंत्रपूजनयन्त्रम्




ततः पीठादौ रचिते सर्वतोभद्रमंडले मंडूकादि परतत्वांतपीठदेवताः संस्थाप्य पूजयित्वा ततः नव पीठशक्तीः पूजयेत् । जयायै नमः, विजयायै, अजितायै अपरिजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै नमः मध्ये ओं मंगलायै नमः इति पूजयेत् । ततः स्वर्णादिनिर्मितं यन्त्रं मूर्तिं वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेण प्रोञ्छ्य "ओं गंगायै पुष्पासनायै नमः इति पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च

कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञया आवरणपूजां कुर्यात् । तद्यथा पुष्पांजलिमादाय—

"ओं संविन्मये परे देवि परामृतरसप्रिये ।
अनुज्ञां देहि गंगे त्वं परिवारार्चनाय मे ॥

इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत् । तद्यथा - षट्कोणकेसरेषु आग्नेयादिचतुर्दिक्षु मध्ये दिक्षु च ओं नमः हृदयाय नमः ... तर्पयामि इति सर्वत्र । ओं शिवाय शिरसे स्वाहा, ओं नारायण्यै शिखायै वषट् ओं दशहरायै कवचाय हुम्, ओं गङ्गायै नेत्रत्रयाय वौषट्, ओं स्वाहा अस्त्राय फट् — इति षडंगानि पूजयेत् । अभीष्टसिद्धिं — प्रथमावरणार्चनम् ।

द्वितीयावरणम् — ततः अष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण ओं रुद्राय नमः ओं विष्णवे नमः ओं ब्रह्मणे नमः ओं सूर्याय नमः ओं हिमाचलाय नमः ओं मनोकाय नमः ओं भगीरथाय नमः ओं उमापतये नमः इत्यष्टौ पूजयित्वा पुष्पांजलिं दद्यात् । इति द्वितीयावरणार्चनम् ।

तृतीयावरणम् — ततोऽष्टदलाग्रेषु रुद्रादिसमीपे ओं मीनाय नमः ओं कूर्माय नमः ओं मंडूकाय नमः ओं मकराय नमः ओं हंसाय नमः ओं चक्रवाकाय नमः ओं बकाय नमः ओं सारसाय नमः इत्यष्टौ पूजयित्वा पुष्पांजलिं दद्यात् । इति तृतीयावरणार्चनम् ।

चतुर्थावरणम् — ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । अस्य पुरश्चरणं लक्षजपः । तिलाज्येन दशांशतो होमः ।

पञ्चमावरणम् । ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । अस्य पुरश्चरणम् त्रिलक्षजपः तद्दशांशतो होमः ।

# मणिकर्णिकापूजनयन्त्रम्




पीठादौ रचिते सर्वतो भद्रमण्डले मंडूकादिपरतत्त्वांतपीठदेवताः संस्थाप्य ततः नवपीठशक्तीः पूजयेत् । तथा च पूर्वादिक्रमेण जयायै, विजयायै, अजितायै, अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै मध्ये - मंगलायै इति पूजयेत् । ततः मंत्रमूर्ति वा संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः संपूज्य आवरणपूजां कुर्यात् । तद्यथा षट्कोणकेसरेषु आग्नेय्यादिचतुर्दिक्षु मध्ये दिक्षु च

ओं हृदयाय नमः - हृदयश्रीपादुकांपूजयामि तर्पयामि नमः इति सर्वत्र ऐं ह्रीं शिरसे स्वाहा श्रीं क्लीं शिखायै वषट् ओं कवचाय हुं मणिकर्णिके नेत्रत्रयाय वौषट्, नमः अस्त्राय फट् इति षडंगानि पूजयेत् । मूलमुच्चार्य — अभीष्टसिद्धिं — प्रथमावरणार्चनम् ।

द्वितीयावरणम् - ततः अष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण ओं रुद्राय नमः ओं विष्णवे नमः ओं ब्रह्मणे नमः ओं सूर्याय नमः ओं हिमाचलाय नमः ओं मैनाकाय नमः ओं भगीरथाय

नमः ओं उमापतये नमः इत्यष्टौ देवताः पूजयित्वा पुष्पांजलिं दद्यात् —

तृतीयावरणम् - ततः अष्टदलाग्रेषु रुद्रादिसमीपे ओं मीनाय ओं कूर्माय ओं मंडूकाय ओं मकराय ओं हंसाय ओं चक्रवाकाय ओं बकाय ओं सारसाय। इत्यष्टौ देवताः पूजयित्वा पुष्पांजलिं च दद्यात्। इति तृतीयावरणार्चनम्। चतुर्थपंचमावरणे ततो भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत्। अस्य पुरश्चरणम् त्रिलक्षजपः तद्दशांशतो होमः।

—

## स्वप्नेश्वरीपूजनयन्त्रम्




पीठादौ सर्वतो भद्रमंडले मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः तदुपरि नवपीठशक्तीः पूजयेत्। जयादिस्वप्नवाराहीमन्त्रोक्तवत् संपूज्य। तदुपरि शुद्धीकृत मूर्तिं यन्त्रं वा संस्थाप्य ओं स्वप्नेश्वरी योगपीठात्मने नमः इति पुष्पाद्यासनं दत्वा प्रतिष्ठाप्य पुनर्ध्यात्वा मूलेन आवाहनादिपुष्पांतैरुपचारैः

संपूज्य आवरणपूजां आरभेत्। षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च

| | | |
|---|---|---|
| ओं श्रीं | हृदयशक्ति | श्री |
| स्वप्नेश्वरी | शिरश्शक्ति | " |
| कार्यं | शिखाशक्ति | " |
| मे | कवचशक्ति | " |
| वद | नेत्रशक्ति | " |
| स्वाहा | अस्त्रशक्ति | " |

इति पूजयेत् — अभीष्टसिद्धिं ... प्रथमावरणार्चनम्।

द्वितीयावरणम् — भूपुरे इन्द्रादीन् ततः वज्राद्यायुधानि च पूजयेत्। अस्य रात्रौ लक्षं जपेत् — दशांशेन बिल्वपत्रेण होमः। तत्तद्दशांशेन तर्पण-मार्जनब्राह्मणभोजनानि कुर्यात्।

—

# स्वप्नेश्वरीवाराहीपूजनयन्त्रम्



पीठादौ सर्वतो भद्रमण्डले मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः नव पीठशक्तीः पूजयेत् । जयायै विजयायै अजितायै अपराजितायै नित्यायै विलासिन्यै दोग्ध्र्यै अघोरायै - मध्ये मङ्गलायै नमः । तदुपरि शुद्धीकृतमूर्तिं यन्त्रं वा संस्थाप्य ओं ह्लीं वाराहीयोगपीठायै नमः इति पुष्पाद्यासनं दत्त्वा प्रतिष्ठां कृत्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः देव्याज्ञां गृहीत्वा आवरणपूजां आरभेत् ।

षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च

| | | |
|---|---|---|
| ओं ह्लीं | हृदयशक्ति | श्री |
| नमो वाराहि | शिरश्शक्ति | " |
| घोरे | शिखाशक्ति | " |
| स्वप्नं | कवचशक्ति | " |
| ट ट: | नेत्रशक्ति | " |
| स्वाहा | अस्त्रशक्ति | " |

इति पूजयेत् । मूलं अभीष्टसिद्धिं ··· प्रथमावरणार्चनम् ।

द्वितीयावरणम् — षोडशदलेषु - पूज्यपूजकयोरंतरालं प्राचीः तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन

ओं उच्चाटिनी श्री
" उच्चाटिनीश्वरी "
" षोषिणी "
" षोषिणीश्वरी "
" मारिणी "
" मारिणीश्वरी "
" भीषणी "
" भीषणीश्वरी "
" हासिनी "
" हासिनीश्वरी "
" कम्पिनी "
" कम्पिनीश्वरी "
" आज्ञावर्धनी "
" आज्ञावर्धनीश्वरी "
" वस्तुजातेश्वरी "
" सर्वसम्पत्प्रदायिनी "

इति पूजयेत् — मूलं अभीष्टसिद्धिं …द्वितीयावरणार्चनम्।

तृतीयावरणम् — ततोऽष्टदले वामावर्तेन

ब्राह्मी श्री, माहेश्वरी श्री, कौमारी श्री, वैष्णवी श्री वाराही श्रीः इन्द्राणी श्री, चामुण्डा श्री, महालक्ष्मी श्री इति पूजयेत् । अभीष्टसिद्धिं …तृतीयावरणार्चनम्

चतुर्थावरणम् - अष्टदलाग्रेषु प्राचीक्रमेण दक्षिणावर्तेन

असिताङ्गभैरवी श्री
रुरुभैरवी "
चण्डभैरवी "
क्रोधभैरवी "
उन्मत्तभैरवी "
कपालभैरवी "
भीषणभैरवी "
संहारभैरवी "

इति पूजयेत् । अभीष्टसिद्धिं…चतुर्थावरणार्चनम् ।

पंचमषष्ठावरणे - भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् - ततः वज्राद्यायुधानि च पूजयेत् । अस्य पुरश्चरणं एकलक्षजपः । तिलमिश्रिति नीलपद्मेन दशांशतो होमः - तद्दशांशेन ब्राह्मणभोजनं कुर्यात् ।

---

# वटयक्षिणीपूजनयंत्रम्




सर्वतो भद्रमण्डले मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः ततः नवपीठशक्ती. पूजयेत् । पूर्वादिक्रमेण ओं कामदायै नमः मानदायै नमः नक्तायै नमः मधुरायै नमः मधुराङ्गनायै नमः नर्मदायै नमः भोगदायै नमः नन्दायै नमः मध्ये प्राणदायै नमः इति पूजयेत् ।

पीठमध्ये शुद्धीकृतमूर्तिं यन्त्रं वा संस्थाप्य ओं मनोहरयक्षिणीयोगपीठाय नमः इति संपूज्य प्रतिष्ठां कृत्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् । षट्कोणकेसरेषु आग्नेय्यादि-

चतुर्दिक्षु मध्ये दिक्षु च ऐह्येहि हृदयशक्ति श्री, यक्षि यक्षि शिरश्शक्ति श्री, महायक्षि शिखाशक्ति श्री वटयक्षनिवासिनि कवच शक्ति श्री, शीघ्रं मे सर्वसौख्यं नेत्र शक्ति श्री, कुरु कुरु स्वाहा अस्त्रशक्ति श्री, इति पूजयेत् - अभीष्टसिद्धिं... प्रथमावरणार्चनम्

द्वितीयावरणम् — अष्टदले पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य प्राचीक्रमेण वामावर्तेन सुनन्दा श्री, चन्द्रिका श्री, हासा श्री, सुलापा श्री, महाविह्वला श्री, आमोदा श्री, प्रमोदा श्री, वसुधा श्री, इति पूजयेत् — अभीष्टसिद्धिं ... द्वितीयावरणार्चनम्

तृतीयचतुर्थावरणे — भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् - ततः वज्राद्यायुधानि च पूजयेत् । अस्य पुरश्चरणं द्विलक्षजपः बन्धूकपुष्पैः दशांशतो होमः । तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनानि कुर्यात् -पुरश्चरणानन्तरं मन्त्री वटाधः प्रतिदिनं सहस्रं जपेत् । तथा सप्तदिनान्तरे सिद्धो भवति ।

—

# प्रमदायक्षिणीपूजनयन्त्रम्




सर्वतो भद्रमंडले आधारशक्त्यादिपरतत्वांत पीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । ओं जयायै नमः विजयायै अजितायै अपराजितायै नित्यायै विलासिन्यै दोग्ध्र्यै अघोरायै मध्ये मंगलायै नमः । ततः शुद्धीकृतमूर्ति यन्त्रं वा संस्थाप्य ओं सर्वबुद्धिप्रदे वर्णनिभे सर्वसिद्धिप्रदे च तडाकिनीये प्रमदे एह्येहि नमः" इति पुष्पाद्यासनं दत्त्वा प्रतिष्ठां च कृत्वा पुनर्ध्यात्त्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादिपुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् । षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च

ओं ह्रां ह्रीं हृदयशक्ति श्री

" फ्रं शिरश्शक्ति "

ह्रूं मं शिखाशक्ति "

ह्रैं दें कवचशक्ति "

ह्रौं स्वां नेत्रशक्ति "

ओं ह्रः ह्रां अस्त्रशक्ति " इति पूजयेत् । मूलेन अभीष्ट-सिद्धिं...प्रथमावरणार्चनम् ।

द्वितीयावरणम् — ततः अष्टदले पूज्यपूजकयोर्मध्ये प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन

ओं सुनन्दा श्री
" चन्द्रिका "
" हासा "
" सुलापा "
" मदविह्वला "
" आमोदा "
" प्रमोदा "
" वसुदंन्यका "

इति पूजयेत् । अभीष्टसिद्धिं ... द्वितीयावरणार्चनम् ।

तृतीयचतुर्थावरणे भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । मूलेन । अभीष्टसिद्धिं ... तृतीयावरणार्चनम् । अस्य पुरश्चरणं षट्लक्षजपः तद्दशांशघृतहोमः सिद्धे मन्त्रे पुनः निर्जने कानने रात्रौ प्रतिदिनं अयुतं जपेत् — पायसेन प्रतिदिनं दशांशतो होमः ।

# रतिप्रियाऽनङ्गयक्षिणीपूजनयन्त्रम्



सर्वतो भद्रमण्डले ओं ह्लीं आधारशक्त्यै नमः इति संपूज्य मूर्तिं वा चन्दनेन यन्त्रं विलिख्य ओं ह्लीं सर्वशक्तिकमलासनाय नमः इति पुष्पाद्यासनं पीठमध्ये संस्थाप्य प्रतिष्ठाप्य पुनर्ध्यात्वा मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् । षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च श्रां हृदयशक्ति श्री, श्रीं, शिरश्शक्ति श्री, श्रूं शिखाशक्ति श्री, श्रैं कवचशक्ति श्री, श्रौं नेत्रशक्ति श्री, श्रः अस्त्रशक्ति श्री इति पूजयेत् - मूलं - अभीष्टसिद्धिं ... प्रथमावरणार्चनम् ।

द्वितीयावरणम् - दशदले पूज्यपूजकयोरंतराले प्राचीं तदनुसारेण अन्याःदिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन ओं महालक्ष्मी श्री, पद्मा श्री, श्री श्री, हरिप्रिया श्री, हरा श्री, पद्मप्रिया श्री, कमला श्री, अब्जा श्री, चञ्चला श्री, लोला श्री, इति पूजयेत् — मूलं अभीष्टसिद्धिं ... — द्वितीयावरणार्चनम् । तृतीयचतुर्थावरणार्चनम् — ततो भूपुरे इन्द्रादीन् दशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । मूलं अभीष्टसिद्धिं ... तृतीयावरणार्चनम् । प्रवालमालां आदाय

एकाग्रचित्तो मन्त्रार्थं स्मरन् जपं कुर्यात् - पुरश्चरणं लक्षजपः । दशांशतो घृत-मधु शर्करादिभिः होमः । तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनादीनि कुर्यात् ।

—

## बंदीपूजनयन्त्रम्




सर्वतो भद्रमंडले आधारशक्त्यादिकल्पान्तपीठदेवताभ्यो नमः इति संपूज्य ततः नवपीठशक्तीः पूजयेत् । ओं जयायै नमः विजयायै अजितायै अपराजितायै, नित्यायै विलासिन्यै दोग्ध्र्यै अघोरायै - मध्ये मङ्गलायै नमः इति पूजयेत् - ततः शुद्धीकृतमूर्तिं यन्त्रं वा संस्थाप्य । ओं सर्वबुद्धि प्रदे डाकिनिये बन्दि ऐह्येहि नमः इति पुष्पाद्यासनं दत्त्वा प्रतिष्ठां च कृत्वा मूलेन मूर्तिं प्रकल्प्य पुनर्ध्यात्वा पाद्यादिपुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् । षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च ।

| | | |
|---|---|---|
| ओं | हृदयशक्ति | श्री |
| ह्रीं | शिरश्शक्ति | ” |
| ” | शिखाशक्ति | ” |
| बन्दी | कवचशक्ति | ” |
| देव्यै | नेत्रशक्ति | ” |
| स्वाहा | अस्त्रशक्ति | ” |

इति पूजयेत् - मूलं अभीष्टसिद्धिं … प्रथमावरणार्चनम् ।

द्वितीयावरणम् -अष्टदले पूज्यपूजकयोर्मध्ये प्राचीं प्रकल्प्य प्राचीक्रमेण वामावर्तेन

| | | |
|---|---|---|
| ओं | काली | श्री |
| ” | द्वारा | ” |
| ” | भगवती | ” |
| ” | कुब्जा | ” |
| ” | शीतला | ” |
| ” | त्रिपुरा | ” |
| ” | मातृका | ” |
| ” | लक्ष्मी | ” |

इति पूजयेत् मूलं - अभीष्ट…द्वितीयावरणार्चनम् ।

तृतीयचतुर्थावरणे - भूपुरे पूर्व दिक्क्रमेण इन्द्रादीन् दशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । मूलं -अभीष्टसिद्धिं…तृतीयावरणार्चनम् । पुरश्चरणं द्विलक्षजपः - पायसान्नेन दशांशतो होमः । तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ।

# विश्वलोचन हनुमान् यन्त्रम्




सर्वतो भद्रमंडले लिंगतो भद्रमंडले वा विष्णुपीठे रुद्रपीठे वा ओं मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नव पीठशक्तीः पूजयेत्- ओं विमलायै नमः उत्कर्षिण्यै, ज्ञानायै, क्रियायै, योगायै, प्रह्वायै, सत्यायै, ईशानायै मध्ये अनुग्रहायै नमः इति पूजयेत् । ओं नमो भगवते रुद्राय सर्व-मूर्त्यात्मने हनुमते सर्वात्मसंयोगपद्मपीठात्मने नमः इति मन्त्रेण पुष्पाद्यासनं दत्वा पीठमध्ये मूर्तिं यन्त्रं वा संस्थाप्य प्रतिष्ठां कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पान्तैरुपचारैः संपूज्य देवाज्ञां गृहीत्वा आवरणपूजां कुर्यात् । त्रिकोणमध्ये

ओं रां रामाय नमः राम श्री
पूर्वे हां हनुमते ,,
ऐशान्ये सं सुग्रीवाय ,,
अग्निकोणे लं लक्ष्मणाय ,,

इति पूजयेत् । मूलं अभीष्टसिद्धिं — प्रथमावरणार्चनम् ।

द्वितीयावरणम् – ततो अष्टदले पूजकपूजकयोरन्तरालं प्राचीं तदनुसारेण अन्याः दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन

ओं अणिमा श्री
" महिमा "
" गरिमा "
" लघिमा "
" प्राप्ति "
" प्राकाम्य "
" इशिता "
" वशिता "

इति पूजयेत् - मूलं अभीष्टसिद्धिं द्वितीयावरणार्चनम् ।

तृतीयावरणम् – ततः षोडशदले दक्षिणावर्तेन

विजयध्वजा श्री
सिंहध्वजा "
हलध्वजा "
सुषेण "
भद्रसेन "
जयसेन "
विजयसेन "
गोमुख "
दधिमुख "
जटा लाङ्गूल "
महीलाङ्गूल "
काल "
महाकल "
वज्र सार "
महासार "
मकरध्वज "

इति पूजयेत्- मूलं अभीष्टसिद्धिं··· तृतीयावरणार्चनम् ।

ततो मण्डले वर्तुलद्वयमध्ये दक्षिणावर्तेन अकारादि षकारान्तंमातृकां संपूजयेत् । चतुर्थपंचमावरणे –भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । अस्य पुरश्चरणं एकलक्षजपः बदरघृतैः दशांशतो होमः - तत्दशांशेन गन्धवारिभिः मार्जनं — तद्दशांशेन मोदकैः पायसेन वा ब्राह्मणभोजनम् ।

# प्रत्यंगिरापूजनयन्त्रम्




सर्वतो भद्रमण्डले मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । ओं जयायै नमः, विजयायै नमः, अजितायै नमः, अपराजितायै नमः, नित्यायै नमः, विलासिन्यै नमः, दोग्ध्र्यै नमः, अघोरायै नमः, मध्ये - मंगलायै नमः, इति संपूज्य, ततः ओं ह्रीं प्रत्यंगिरे पद्मासनाय नमः इति मंत्रेण शुद्धीकृतयन्त्रं मूर्ति वा पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठाप्य मूलेन मूर्ति प्रकल्प्य पाद्यादिपुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम् - षट्कोणकेसरेषु - आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च ओं ह्रीं यां कल्पयन्ति नोऽरयः हृदयशक्ति श्री ओं ह्रीं क्रूरां कृत्यां शिरश्शक्ति श्री वधूमिव शिखाशक्ति श्री, ओं ह्रीं ह्रीं ब्राह्मण कवच शक्ति श्री, ओं ह्रीं अपनिर्धमः नेत्रशक्ति श्री, ओं ह्रीं प्रत्यक्कर्तारमृच्छ अस्त्रशक्ति श्री, इति पूजयेत् - मूलेन अभीष्टसिद्धिं ··· प्रथमावरणार्चनम् ।

द्वितीयावरणम् - भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् —

स्वस्व मन्त्रेण माषभक्तबलिं दद्यात् — मूलेन — अभीष्टसिद्धिं — द्वितीय-तृतीयावरणार्चनम् । अस्य पुरश्चरणं अयुत जपः । दशांशतो अपामार्ग समित् आज्य हर्विभिः होमः । तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ।

—

# मधुमतीपूजनयंत्रम्




सर्वतो भद्रमंडले ओं आधारशक्त्यादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । ओं जयायै नमः विजयायै, अजितायै, अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै - मध्ये मंगलायै नमः ततः शुद्धीकृतयन्त्रं मूर्तिं वा पीठमध्ये संस्थाप्य ओं सर्वबुद्धिप्रदे डाकिनीये, मधुमति ऐह्येहि नमः । इति पुष्पाद्यासनं दत्वा प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरण-पूजां कुर्यात्

प्रथमावरणम् - षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च ।

" आं हृदयशक्ति श्री
" ह्रीं शिरश्शक्ति "
" क्रों शिखाशक्ति "
" क्रीं कवचशक्ति "
" हुं नेत्रशक्ति "
" ओं स्वाहा अस्त्रशक्ति "

इति पूजयेत् । अभीष्टसिद्धिं ...प्रथमावरणार्चनम् ।

द्वितीयावरणम् - अष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन ।

ओं निद्रा श्री
" छाया "
" क्षमा "
" तृष्णा "
" कान्ति "
" आर्या "
" श्रुति "
" स्मृति "

इति पूजयेत् । मूलेन — अभीष्टसिद्धिं ...द्वितीयावरणार्चनम् ।

तृतीयचतुर्थावरणे — भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । पुरश्चरणं अष्ट लक्षजपः । बिल्वपत्रैः दशांशतो होमः तद्दशांशेन तर्पण मार्जन-ब्राह्मणभोजनादीनि कुर्यात् ।

—

# पंच वाणेशीपूजनयंत्रम्

पीठादौ सर्वतो भद्रमण्डले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः इति संपूज्य नवपीठशक्तीः पूजयेत् । ओं मोहिन्यै नमः क्षोभिण्यै, त्रास्यै, स्तम्भिन्यै, कर्षिण्यै, द्राविण्यै, ह्लादिन्यै, क्लिन्नायै मध्ये क्लेदिन्यै नमः, ओं द्रां द्रीं क्लीं ब्लूं सः वाणेशीयोगपीठाय नमः इति पुष्पाद्यासनं दत्त्वा पीठमध्ये शुद्धीकृत मूर्तिं यन्त्रं वा संस्थाप्य प्रतिष्ठां कृत्वा मूलेन मूर्तिं प्रकल्प्य पुनर्ध्यात्वा पाद्यादिपुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम् - देव्यग्रे आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च ।

| | | |
|---|---|---|
| द्रां | हृदयशक्तिः | श्री |
| द्रीं | शिरश्शक्ति | ,, |
| क्लीं | शिखाशक्ति | ,, |
| ब्लूं | कवचशक्ति | ,, |
| सः | नेत्रशक्ति | ,, |
| द्रां द्रीं क्लीं ब्लूं सः अस्त्रशक्ति | | ,, |

इति षडंगानि पूजयित्वा दिक्षु द्रां द्राविणी मुखी श्री, द्रीं क्षोभिणी मुखी श्री इति पूजयेत् । अभीष्टसिद्धिं ··· प्रथमावरणार्चनम् ।

द्वितीयावरणम् — अष्टदले पूज्यपूजकयोरतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण । अनंगरूपा श्री, अनंगमदना श्री, अनङ्गमन्मथा श्री, अनग कुसुमा श्री, अनंगमदनपरा श्री, अनंगशिशिरा श्री, अनंगमेखला श्री, अनंग-दीपिका श्री, इति पूजयेत् । मूलं अभीष्टसिद्धिं - द्वितीया - वरणार्चनम् ।

तृतीयचतुर्थावरणे - भूपुरे - इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् । मूलं अभीष्ट - तृतीयचतुर्थावरणार्चनम् - अस्य पुरश्चरणं पंचलक्षजपः तद्दशांशेन हवन तर्पण मार्जन ब्राह्मणभोजनानि कुर्यात् ।

सर्वतो भद्रमंडले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः संपूज्य ततः नवपीठशक्तीः पूजयेत् । ओं मोहिन्यै नमः क्षोभिण्यै, त्रास्यै, स्तम्भिन्यै कर्षिण्यै, द्राविण्यै, ह्लादिन्यै, क्लिन्नायै, मध्ये क्लेदिन्यै नमः इति पूजयेत् । ततः शुद्धीकृत मूर्तिं आदाय ह्रीं क्लीं ऐं ब्लूं श्रीं कामेशीयोगपीठाय नमः इति मन्त्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये सस्थाप्य प्रतिष्ठाप्य पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां देव्यग्रे आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च ।

| | | |
|---|---|---|
| ह्रीं | हृदयशक्ति | श्री |
| क्लीं | शिरश्शक्ति | ,, |
| ऐं | शिखाशक्ति | ,, |
| ब्लूं | कवचशक्ति | ,, |
| श्रीं | नेत्रशक्ति | ,, |

ह्रीं क्लीं ऐं ब्लूं श्रीं अस्त्रशक्ति ,,

इति मूलेन ... अभीष्टसिद्धिं ...... प्रथमावरणार्चनम् ।

द्वितीयावरणम् - पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण चतुर्दिक्षु । ओं मकरध्वजशक्ति श्री, गन्धर्व श्री, मन्मथ श्री, कामदेव श्री इति पूजयेत् । मूलेन अभीष्टसिद्धिं ... द्वितीयावरणार्चनम् ।

तृतीयावरणम् - अष्टदले प्राचीक्रमेण वामावर्तेन । अनंगरूपा श्री, अनङ्गमदना श्री, अनंगमन्मथा श्री, अनंगकुसुमा श्री, अनंगमदनपरा श्री, अनंगशिशिरा श्री, अनंगमेखला श्री, अनंगदीपिका श्री इति पूजयेत् । मूलं अभीष्टसिद्धिं... तृतीयावरणार्चनम् ।

चतुर्थपंचमावरणे - ततः भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानिच पूजयेत् । मूलं अभीष्टसिद्धिं ... चतुर्थपंचमावरणार्चनम् - अस्य पुरश्चरणं पंचलक्षजपः । पालाशकुसुमैः दशांशतो होमः । तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनानि कुर्यात् ।

...

# नित्यापूजनयन्त्रम्




सर्वतो भद्रमण्डले मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति संपूज्य ततः नवपीठशक्तीः पूजयेत् । ओं जयायै नमः, विजयायै नमः, अजितायै नमः, अपराजितायै नमः, नित्यायै नमः, विलासिन्यै नमः, दोग्ध्र्यै नमः, अघोरायै नमः, मध्ये मंगलायै नमः, ततः शुद्धीकृतमूर्तिं मन्त्रं वा ओं ह्रीं सर्वशक्ति-कमलासनाय नमः इति पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्राणप्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादिपुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम् — षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च

ओं ऐं हृदयशक्ति श्री
" " शिरश्शक्ति "
" " शिखाशक्ति "
" " कवचशक्ति "
" " नेत्रशक्ति "

" " अस्त्रशक्ति "

इति पूजयेत्। मूलेन अभीष्टसिद्धिं ... प्रथमावरणार्चनम्।

द्वितीयावरणम् — ततः अष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन

ओं नित्या श्री

" निरञ्जना "

" क्लिन्ना "

" क्लेदिनी "

" मदनातुरा "

" द्राविणी "

" आकर्षिणी "

इति पूजयेत्। मूलं — अभीष्टसिद्धिं ... द्वितीयावरणार्चनम्।

तृतीयावरणम् — भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत् —पुरश्चरणं चतुर्लक्षजपः। मधुवर्त्यैः मधूकपुष्पैः अयुतहोमः। तद्दशांशेन तर्पण मार्जन ब्राह्मणभोजनं कुर्यात्।

—

# त्रैलोक्यमोहनगौरीपूजनयन्त्रम्




सर्वतो भद्रमण्डले मं मंडूकादिपरतत्त्वांतपीठदेवताभ्यो नमः इति संपूज्य ततः नवपीठशक्तीः पूजयेत् । ओं जयायै नमः, विजयायै नमः, अजितायै नमः, अपराजितायै नमः, नित्यायै नमः, विलासिन्यै नमः, दोग्ध्र्यै नमः, अघोरायै नमः, मध्ये मंगलायै नमः ततः शुद्धीकृतयन्त्रं मूर्तिं वा ओं ह्रीं गौरी त्रैलोक्य मोहिनी पद्मासनाय नमः इति पुष्पाद्यासनं दत्त्वा पीठमध्येसंस्थाप्य प्रतिष्ठां च कृत्वा, मूर्तिं प्रकल्प्य पाद्यादिपुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।

प्रथमावरणम् — षट्कोणकेसरेषु आग्नेय्यादि चतुर्दिक्षु मध्ये दिक्षु च ह्रीं नमो ब्रह्मासि राजसे, राजपूजिते

ह्रीं हृदयशक्ति श्री
" जयविजये गौरी गोदावर्यौ शिरश्शक्ति श्री
" त्रिभुवनवशंकरी शिखाशक्ति श्री

ओं सर्वलोकवशंकरी कवचशक्ति श्री

" सर्वस्त्रीपुरुषवशंकरी नेत्र " "

" सु सु दु दू खे खे वा वा ह्रीं स्वाहा अस्त्रशक्ति"

इति पूजयेत् — मूलं अभीष्टसिद्धिं ... प्रथमावरणार्चनम् ।

द्वितीयावरणम् — ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्याः दिशः प्रकल्प्य वामावर्तेन ओं ब्राह्मी श्री, माहेश्वरी श्री, कौमारी श्री, वैष्णवी श्री, वाराही श्री, इन्द्राणी श्री, चामुण्डा श्री, महालक्ष्मी श्री, इति पूजयेत् — अभीष्टसिद्धिं ... द्वितीयावरणार्चनम् ।

तृतीयावरणम् — ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् — वज्राद्यायुधानि च पूजयेत् । मूलं अभीष्टसिद्धिं — तृतीयावरणार्चनम् । अस्य पुरश्चरणम् अयुत जपः । घृतमिश्रितपायसान्नेन दशांशतो होमः । तद्दशांशेन तर्पणमार्जन ब्राह्मण भोजनं कुर्यात् ।

—

# वज्रप्रस्तारिणीपूजनयन्त्रम्






पीठादौ सर्वतो भद्रमंडले "ओं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमः" इति पीठदेवताः संपूज्य नव पीठशक्तीः पूजयेत् । तथा च पूर्वादिक्रमेण ओं जयायै नमः विजयायै नमः अजितायै अपराजितायै, नित्यायै विलासिन्यै दोग्ध्र्यै अघोरायै मध्ये मंगलायै नमः इति पूजयेत् । ततः यन्त्रं मूर्तिं वा प्रकल्प्य "ओं ह्रीं आधारशक्ति कमलासनाय नमः इति मन्त्रेण पुष्पाद्यासनं दत्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् । ततः क्रमः षट्कोणकेसरेषु अग्निकोणे ओं ऐं हृदयाय नमः निर्ऋतिकोणे ओं ऐं शिरसे स्वाहा वायुकोणे ओं ऐं शिखायै वषट् ऐशान्ये ओं ऐं कवचाय हुम् पूज्यपूजकयोर्मध्ये ओं ऐं नेत्रत्रयाय वौषट् देव्याः पश्चिमे ओं ऐं अस्त्राय फट् इति षडंगानि पूजयेत् । इति प्रथमावरणम् ।

द्वितीयावरणम् - ततः द्वादशदले प्राच्यादिक्रमेण

 

ओं हृल्लखायै नमः
" क्लेदिन्यै "
" क्लिन्नायै "
" क्षोभिण्यै "
" मदनातुरायै "
" निरंजनायै "
" रागवत्यै "
" मदनावत्यै "
" मेखलायै "
" द्राविण्यै "
" वेगवत्यै "
" स्मरायै "

इति शक्तीः पूजयेत् - इति द्वितीयावरणार्चनम् ।

तृतीयावरणम् - ततो भूपुराभ्यन्तरे दिग्विदिक्षु च पूर्वे ओं ब्राह्मयै नमः, दक्षिणे ओं माहेश्वर्यै पश्चिमे ओं कौमार्यै उत्तरे ओं वैष्णव्यै अग्निकोणे ओं वाराह्यै निर्ऋतिकोणे ओं इन्द्राण्यै वायुकोणे ओं चामुण्डायै ईशानकोणे ओं महालक्ष्म्यै इत्यष्टौ मातृकाः पूजयेत् - इति तृतीयावरणार्चनम् ।

चतुर्थपंचमावरणार्चनम् - ततः भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् - वज्राद्यायुधानि च पूजयेत् । इति चतुर्थपंचमावरणार्चनम् । अस्य पुरश्चरणं लक्ष जपः । तद्दशांशेन तर्पणमार्जनब्राह्मणभोजनं कुर्यात् ।

—

# शत्रुदमनार्णवपूजनम्यन्त्र




सर्वतो भद्रमंडले मं मंडूकादिपरतत्वांतपीठदेवताभ्यो नमःइति पूजयेत् । ततः नवपीठशक्तीः पूजयेत् । ओं जयायै नमः विजयायै, अजितायै अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै, अघोरायै - मध्ये मंगलायै ततः शुद्धीकृत यन्त्रं मूर्तिं वा संस्थाप्य ओं ह्रीं सर्वशक्ति पद्मासनाय नमः इति पुष्पाद्यासनं दत्त्वा प्रतिष्ठाप्य मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देवाज्ञां गृहीत्वा आवरण पूजां कुर्यात् ।

प्रथमावरणम् – षट्कोणकेसरेषु मध्ये दिक्षु च । ओं हृदयशक्ति श्री, ह्रीं शिरश्शक्ति श्री, ह्रीं शिखाशक्ति श्री, ह्रीं कवचशक्ति श्री, ह्रीं नेत्रशक्ति श्री, ह्रीं अस्त्रशक्ति श्री इति पूजयेत् -मूलं अभीष्टसिद्धिं...प्रथमावरणार्चनम् ।

द्वितीयावरणम् तृतीयावरणम् च – भूपुरे पूर्वादि इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयेत । अस्य पुरश्चरणं षोडशसहस्रजपः । षट् द्रव्यैः दशांशतो होमः । तद्दशांशेन तर्पणमार्जन ब्राह्मणभोजनं कुर्यात् ।

षट्द्रव्याणि = व्रीहयस्तण्डुला आज्यं सर्षपाश्च यवा तिलाः, एतैर्हुत्वा सता भागं पीठे पूर्वोदिते यजेत् ।

यथा भागं = सप्तषष्ठ्यादिकं शतद्वयम् प्रत्यहम् । —

# भद्रेश्वरयंत्रम्

भद्रेश्वरयन्त्रम्

पूर्व

| | | | | |
|---|---|---|---|---|
| ईशान्या | 8 | 1 | 6 | आग्नेय |
| उत्तर | 3 | 5 | 7 | दक्षिण |
| वायव्य | 4 | 9 | 2 | नैऋति |

भद्रेश्वरन्यासं कृत्वा भद्रेश्वरं ध्यात्वा ओं भद्रेश्वर भद्रं पूरय पूरय स्वाहा इति अष्टोत्तरशतवारं जपेत् । एकाद्यङ्गक्रमेण नवदुर्गा नवग्रहान् इन्द्रादीन् वज्राद्रींश्च संपूजयेत् ।

नवदुर्गा शैलपुत्र्यै नमः ब्रह्मचारिण्यै, चन्द्रखण्डायै, कूष्माण्डायै, स्कन्दमात्रे, कात्यायिन्यै, कालरात्र्यै, महागौर्यै, सिद्धिदात्र्यै

आदित्याय नमः, चन्द्रमसे, भौमाय, बुधाय, जीवाय, शुक्राय, शनैश्चराय राहवे केतवे ।। ततः दशदिक्षु इन्द्रादीन् वज्रादींश्च पूजयेत् । ओं भद्रेश्वराय नमः इति संपूज्य कृष्णागरुधूपं दत्त्वा सुगन्धतैलेन घृतेन वा दीपं प्रज्वाल्य गुडान्नेन नैवेद्यं समर्प्य नमस्कारं कुर्यात् । पूजान्ते एतत् यन्त्रं कागदे भूर्जपत्रे वा लिखित्वा तदग्रे मूलमंन्त्रं पंचदश सहस्रं जपेत् । तद्दशांशेन करवीरपुष्पहोमः । तद्दशांशेन तर्पण मार्जन ब्राह्मणभोजनादीनि कुर्यात्

# स्वयंवरकलापूजनयन्त्रम्

पीठादौ रचिते सर्वतो भद्रमण्डले आधारशक्त्यादिपरतत्त्वांतपीठदेवताः संस्थाप्य "ओं आं आधारशक्त्यादिपरतत्त्वांतपीठदेवताभ्यो नमः इति पीठ-देवताः संपूज्य नवपीठशक्ती पूजयेत् तद्यथा- पूर्वादिक्रमेण अष्टसु दिक्षु - ओं जयायै नमः, विजयायै नमः, अजितायै नमः, अपराजितायै नमः, नित्यायै नमः विलासिन्यै नमः, दोग्ध्र्यै नमः, अघोरायै नमः, मध्ये मंगलायै नमः, इति पूजयेत् । ततस्त्रिकोण चतुरस्रषट्कोणाष्टदलद्वि द्विग्दलं षोडशद्वात्रिंशचतुः षष्ठिदलं च तद्बाह्ये वृत्तत्रयं त्रिरेखात्मक भूपुरं च स्वर्णादिपात्रे मंत्रं निर्माय ताम्रपात्रे संस्थाप्य घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छ-वस्त्रेण संशोध्य" ओं सर्ववृद्धिप्रदे वर्णनीये सर्वसिद्धिप्रदे डाकिनीये स्वयंवरे एह्येहि नमः इति मंत्रेण पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादिपुष्पांतैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरण–पूजां कुर्यात् । तद्यथा पुष्पांजलिमादाय "ओं संविन्मय इति मन्त्रेण – वदेत् । इत्याज्ञां गृहीत्वा आवरणपूजां कुर्यात् ॥ तत्र क्रमः – त्रिकोणे ओं पार्वत्यै नमः ततः पुष्पांजलिमादाय मूलेन अभीष्टसिद्धिं ... प्रथमावरणार्चनम् ।

द्वितीयावरणम् — ततः पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण चतुष्कोणे ओं मेधायै नमः ओं विद्यायै नमः ओं लक्ष्म्यै नमः ओं महालक्ष्म्यै नमः इति पूजयेत् । मूलेन अभीष्टसिद्धिं...द्वितीयावरणार्चनम् ।

तृतीयावरणम् — ततः षट्कोणकेसरेषु आग्नेय्यादिचतुर्दिक्षु मध्ये दिक्षु च

| | | | |
|---|---|---|---|
| ओं | ह्रीं | जगत्त्रयवश्यमोहिन्यै | हृदयाय नमः |
| " | " | त्रैलोक्यवश्यमोहिन्यै | शिरसे स्वाहा |
| " | " | उरगवश्यमोहिन्यै | शिखायै वषट् |
| " | " | सर्वराजवश्यमोहिन्यै | कवचाय हुं |
| " | " | सर्वस्त्रीपुरुषवश्यमोहिन्यै | नेत्रत्रयाय वौषट् |
| " | " | सर्ववश्यमोहिन्यै | अस्त्राय फट् इति षडंगानि |

पूजयित्वा पुष्पांजलिं दद्यात् । मूलेन अभीष्टसिद्धिं तृतीयावरणार्चनम् ।

चतुर्थावरणम् — ततः अष्टदले प्राचीक्रमेण ओं अं आं नमः ओं इं ईं नमः ओं

उं ऊं नमः ओं ऋं ॠं नमः ओं लृं ॡं नमः ओं एं ऐं नमः ओं ओं औं नमः ओं अं अः नमः इति स्वरान् संपूज्य पुष्पांजलिं पद्यात् । मूलेन अभीष्टसिद्धिं ... चतुर्थावरणार्चनम् ।

पंचमावरणम् — प्रथमदिग्दले इन्द्रादिदशदिक्पालान् द्वितीयदिग्दले वज्राद्यायुधानि च पूजयेत् मूलेन अभीष्टसिद्धिं ... पंचमावरणार्चनम् :

षष्ठावरणम् — ततः षोडशदले ओं श्रीं रमायै नमः रमा श्री पादुके पूजयामि तर्पयामि नमः इति षोडशदले एवमेव पूजयेत् - मूलेन - अभीष्टसिद्धिं षष्ठावरणार्चनम् ।

सप्तमावरणम् — द्वात्रिंशत् दले ओं ह्रीं क्रों शिवायै नमः शिवा श्री पादुके पूजयामि तर्पयामि नमः इति एवमेव पूजयेत् । मूलेन अभीष्टसिद्धि ... सप्तमा वरणार्चनम् ।

अष्टमावरणम् — ततो चतुषष्टिदले ओं श्रीं ह्रीं क्लीं त्रिपुरायै नमः त्रिपुरा श्री पादुकानि पूजयामि तर्पयामि नमः इति एवमेव पूजयेत् - मूलेन अभीष्टसिद्धिं ... अष्टमावरणार्चनम् ।

नवमावरणम् — ततो वृत्तत्रये प्रथमवृत्ते ओं महालक्ष्म्यै नमः द्वितीयवृत्ते भवान्यै नमः भवानी श्री पा - पू - त - नमः तृतीयवृत्ते ओं पुष्पसायकायै नमः पुष्पसायका श्री - पा - पू - त - नमः इति पूजयेत् । मूलेन अभीष्टसिद्धिं... नवमावरणार्चनम् ।

दशमावरणम् — भूपुरे चतुस्थावारे पूर्वादिक्रमेण ओं विघ्नेशाय नमः विघ्नेश श्री ओं क्षेत्रपालकाय नमः क्षेत्रपालक श्री, ओं भैरवाय नमः, भैरव श्री, ओं योगिन्यै नमः योगिनी श्री, इति संपूजयेत् - मूलं अभीष्टसिद्धिं पथमावरणार्चनम् ।

अस्य पुरश्चरणं चतुर्लक्षजपः - पायसान्नेन दशांशतो होमः । तद्दशांशेन तर्पण मार्जन ब्राह्मणभोजनानि कुर्यात् ।

...

॥अथ वरुण पूजन यंत्रम्॥






पश्य पृष्ठम् १८३

अथ चंद्र पूजन यंत्रम्




पश्य पृष्ठम् १८६

## ।तारा पूजन यन्त्रम्।





पश्यपृष्ठम् २१४

## ।ताराधारण यंत्रम्।



पश्य पृष्ठम् २१६

पूजन यन्त्रम् ॥




पश्य पृष्ठम् २२४

## ॥ सरस्वती दशाक्षरमंत्र पूजनम् ॥




पश्य पृष्ठम् २२५



पश्य पृष्ठम् २३७

।श्री त्रिपुरभैरवी यन्त्रम् ।



पश्य पृष्ठम् २३९

॥ धूमावती पूजन यंत्रम् ॥



पश्य पृष्ठम् २४२

बगलामुखी पूजनयन्त्रम्



पश्य पृष्ठम् २४३

## लक्ष्म्येकाक्षरबीजमन्त्रपूजनयन्त्रम्






पश्य पृष्ठम् २५३

## लक्ष्मीदशाक्षरमन्त्र यन्त्रम्




पश्य पृष्ठम् २५४

